यदि लौकिक वैदिक शब्दों के स्फोटार्थ ज्ञान में शब्दानुशासन का उपयोग प्रक्रिया द्वारा हो तभी स्वर्ग और लोक (समाज) मैं प्रतिष्ठा (पुण्य) का लाभ हो सकता है। अतः 'शास्त्र प्रक्रया स्मरण पूर्वक प्रयोगे धर्मः' कहा गया है। प्रक्रिया को फलवती होनी चाहिये। वन्ध्या नहीं। तभी धर्म (पुण्य) सम्भव है। शब्दों पर प्रक्रिया का अनुशासन ही शब्दानुशासन है सुत्रानुशासन का अधिकार केवल महर्षियों को होना चाहिए सूत्र, भाष्य, कौमुदी आदि में सामयिक दृष्टाना उदाहरण प्रत्युदाहरण मिलते है जिसमें लोकोपयोगिता परोपकार निहित है। 'पाणिनीयं काणादञ्च 'सर्वशास्त्रोपकारकम्' सभी शास्त्र तथा समाज की भलाई है। यह शब्दानुशासन से हो सम्भव है कोरा सूत्रानुशासन से नहीं। व्याकरण शास्त्र को सभी शास्त्रों का अध्यक्ष (सर्व वेद पारिषदं हीदं शास्त्रं) माना जाता है। यह अध्यक्षता और उपकारकता कों उदार बनाना चाहिए। कोरी प्रक्रिया के शास्त्रार्थ की अपेक्षा प्रमेयांश (स्फोट, शक्ति, धात्वर्थ, समास) आदि के विषय में पचासों कोटियाँ है, शास्त्रार्थ में उदारता सर्वोपकारकता अध्यक्षता जहाँ फलवती होती है। महर्षियों की भाषा दृष्टान्त, उपदेश तीनों सर्वदा ताजे हैं। उसका अनुकरण अत्यावश्यक है। व्याकरणत्व विहीन कल्पना लौकिक वैदिक शिष्यों के लिये विकसित ज्ञान रहित है। पाणिनि पतञ्जलि भट्टोजिदीक्षि भर्तृहरि नागेश ही वास्तविक वैयाकरण है अन्य टीकाकार काल्पनिक युगीन तथा अनुकूलित प्रयास है। क्या जीवन शास्त्र के अनुकूल हो या शास्त्र जीवनोपयोगी हो। क्या था क्या रहे पणिनि पतञ्चलि भर्तृ हरि भटोजो प्राचीनों ने अन्ध विश्वास, कूपमण्डूकता क्रिष्टता प्रयास बहुलता। सर्वान्धता व पसन्द नहीं किये, वे केवल देवदत्त, घट मठ गौ, पचति उदाहरण का अधिक अभ्यासी नही दीखते किन्तु देश, काल, समाज इतिहास, समीक्षा नीति धर्मा विज्ञान के अनुभूति पुरः सर पूर्ण वेत्ता थे। लौकिक वैदिक शब्दों को व्युत्पत्ति (शब्द-अर्थ-सम्बन्ध-फल) के पूर्ण ज्ञाता थे। अतः उन्हों ने वेद शास्त्र की रक्षा कर शास्त्र को समाज में सार्थक बनाते थे। देश विदेश में विख्यात थे। वही अनुकरण आधुनिक विद्वानों को करना चाहिए।

# स्फोटविचारः

स्फुटति=शाब्द बोध विषयो भवत्यर्थोऽस्माद्रिति स्फोट शब्दः। तस्य अर्थेन सह सम्बन्धोऽपि नियतः। तेषामेकात्मना फलं धर्मः पुण्यश्च परिणामभूतम्। अतः शब्दार्थे सम्बध फलानां समवायव्यङ्ग्यः स्फोटात्मकश्शब्दः। तेनैव स्फुटयते=वृत्याऽर्थः प्रकाद्यते फलश्च जन्यते। व्याकरस्य सम्पूर्ण प्रक्रिया तादृश स्फोटार्थ स्फोरयति। वै० लौकिकानां शब्दानामर्थः सम्बन्धात्मना प्रकाशः स्यादित्यभिप्रेत्य नव्यव्याकरणे सूत्रं, भाष्यं, प्रकरणानि, परिभाषाः वचनानि, व्याख्यानादि कञ्च विभज्य प्रस्तावित्ताः सन्ति। 'स्फोट साधनं व्याकरणम्' सर्वेषामनुशासनीय योग्यता सम्बन्धनां शब्दानां स्फुटार्थ सुप्रयोगश्च बुद्धयेरन्नित्यध्येयं व्याकरणं साधनत्वात् यद्वा स्फुटति प्रमेयभूतमात्मानं ज्ञायपति। वा स्फुटति=अवगुण्ठनवतीं पतिव्रतामिवार्थं सम्बन्धरूपमात्मानं प्रवोधयति वैयाकाणायेति स्फोटः। पश्यन्ती, मध्यमा वा वाक्। तादृशश्शब्दो जगत्कारणीभूतः सगुणब्रह्म इव नित्यो, व्याकरण व्युत्पति बोध विषयो व्यापकश्च। तादृशश्शब्दो नियोऽनित्यो वेति विचारे मतभेद पुरःसरं नित्यमनित्यत्वं पृथक्-पृथक् प्रदर्श्यते—

शब्दोऽनित्य इति नैयायिकाः। तत्र प्रमाणं 'गौतमसूत्रम्' आदिमत्वात्, ऐन्द्रियत्वात्–कृतकत्वात्, उपचाराच्च। आदिः आरम्भः, कारणं, योनिः, अस्त्यस्य, 'वा' आदीयते=उत्पाद्यतेऽस्मात् आदिमान् तस्य भावस्तत्वात् आदिमत्वात्=प्रादुर्भावः, आरम्भः उत्पत्तिः, कारणता, कृतत्व सत्वात् शब्दोऽनित्यः। संयोगजश्च भेर्दादावनित्यः, विभागजश्च शब्दो वंशफलके चटचटादावनित्यः। नच संयोगविभागौ उत्पद्येतेऽभिव्यज्येते वा तत्र शब्दस्योत्पत्ति रभिव्यक्तिर्वेति शङ्का? यतोहिं अभिव्यंक्तिः=प्राकट्यं नित्यस्य, उत्पत्तिरनित्यस्य भवति। नैया० मते शब्दस्य यतो जन्यत्वमुत्पत्तिर्वाऽतोऽनित्यत्वम्। न च ते अभिव्यक्तिं=प्रकाश्यत्वं तस्य कथन्न मन्यन्ते येन शब्दस्य नित्यता सिद्ध्येत् तदाह–ऐन्द्रियत्वात् शब्दः श्रावण प्रत्यक्षः श्रवणेन्द्रियजन्य ज्ञान विषयत्वात्। यत्र-यत्र श्रोत्रेन्द्रियजन्य संयोग विषयता तत्र-तत्र अनित्यत्वम्। अतः शब्दोऽनित्य इन्द्रिय ग्राह्यत्वात् रूपवत्।

यदि शब्दस्यानि त्यत्वे इन्द्रियजन्यज्ञानविषयत्वं कारणं मन्यसे तर्हि येन येनेन्द्रियेण या व्यक्ति गृंह्यते तेन तस्यास्तद्गतजातेस्तद्भावस्यापि ग्रहणं जायते। अतश्शब्दस्य श्रवणेन्द्रियजन्यज्ञानविषयतया जातेरप्यनित्यता संभवेत्। यस्याः नित्यमनेकानुगतं सामान्यमितिलक्षणं विरुध्येत्। अतो जातिर-

सिध्यत्वं मा सिद्धतु अत आह कृतकत्वादिति । उच्चरितध्वंसत्वाद् व्यवहाराच्च तीव्रः मन्दो वेत्यादौ शब्दस्यानित्यत्वदर्शनात् । वैशेषिकमते शब्दोऽप्याशुविनश्यति कर्म्मणः साधर्म्यात् तेन सोऽनित्यः । सतो लिङ्गाभावात् शब्दस्य नित्यत्वे प्रमाणं नास्ति अत शब्दोऽनित्य आशुविनाशित्वात् ।

शब्दो नित्यः शाश्वतस्थायित्वात् । अध्ययनेअध्यापने, शब्दनेऽभ्यसने प्रत्यभिज्ञाने च नित्यता दर्शनात् । यदा शब्दः स्थिरो भवेत्तदातस्य दानम्, स्थिरस्य स्वरूपस्याभ्यासो जायते । दशकृत्वा ( दशवारम् ) अधीतोऽनुवाकः, इति दशवाराभ्यसनं शब्दस्य स्थैर्यें प्रमाणम् । यस्य स्थैर्यं सिद्धं तस्य विनाशो नोपलभ्यते ( तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति ) इति न्यायाच्छब्दो नित्यः । नित्याः शब्दार्थसम्बन्धाः समाम्नाताः महर्षिभिरिति वाक्यपदीयाच्च ।

मीमांसा, वेदान्त, साङ्ख्ययोगसिद्धान्तेऽपि शब्दानां नित्यत्वं संस्तुतं वर्त्तते । गौरित्युच्चारणे वर्णः शब्द इति प्रतीयते । वर्णानामर्थेन सह सम्बन्धस्तु शक्तिरूपः । ते स्फोटं नाङ्गीकुर्वन्ति ब्रुवन्ति च वर्णपदवाक्यातिरिक्तः कश्चन अर्थो बुद्धौ न प्रतिभासते । एतेन तन्मते स्फोटाभावः स्फुटति । अर्थ प्रतीत्या कार्येण च स्फोटस्य सिद्धि न वक्तुं शक्यतेऽन्योन्याश्रयसंभवात्, यथा-स्फोटरूपकारणसिद्धचनन्तरमेवार्थप्रतीतिरूपं कार्यं सिध्यति, अर्थप्रतीति कार्यसिद्धचन्तरमेव यौगिकस्फोटसिद्धिः । अतो गौरित्यत्रग औविसर्जनीयोच्चारणरूपश्रोत्रग्राह्यः शब्दः लोके श्रोत्रग्राह्ये विषये च व्यवह्रियते । वस्तुतः वर्णाः परमाणुवन्निरवयवा अभिन्नाश्च भवन्ति, तत्र अ इ उ इत्यादौ अत्व-इत्व-उत्वादिधर्माः न भासन्ते, तेन सोऽयमकारः इतिप्रत्यभिज्ञाऽपि संगच्छते । यद्यपि निरवयवेषु वर्णेषु ह्रस्वदीर्घादयो न तिष्ठन्ति, किन्तु ते ध्वनिधर्माः केवलं वर्णेषु भासन्ते, एवं पदेवाक्येऽप्यनुसन्धेया ।

स्फोटस्तु नैवास्तीति विरुद्धवादीन् दार्शनिकान् प्रति स्फोटवादिनो वैयाकरणाः ब्रुवते—अनित्यवादिमते वर्णानामानन्त्यं वर्णध्वंसः प्रागभावकल्पना च पदादीनां सिद्धचर्थं वर्णजनकसंस्कारस्मृतिकल्पने महद्गौरवमस्ति । मीमांसकमतेऽपि वर्णानां विभुत्वनित्यस्वीकारे यद्यप्यनन्त वर्णानां ध्वंसे प्रागभावकल्पनापेक्षया लाघवमस्ति, तथापि स्वराणां व्यञ्जनानाञ्च नित्यत्वस्वीकारे सकलवर्णानामर्थबोधप्रसङ्गः, वर्णसमूहबोधे च व्यञ्जनाख्यसंस्कारकल्पने गौरवम् । अतस्तन्मतं चिन्त्यम् सर्वानुभवासिद्धपदवाक्येषु मिथ्यात्वकल्पनाचिन्त्यैव । अतो वर्णस्यात्व कत्वादिधर्मवन्तो ध्वनयोऽर्थबोधजनकं स्वनिरूपितकालत्रयबाधरहितं शब्द ब्रह्मैव व्यञ्जयन्ति, तदेव स्फोट इत्युच्यते । स्फुटति बोधविषयो भवत्यस्मादिति विग्रहेणाभिधालक्षणाव्यञ्जनामामा

श्रयः स्फोटात्मकः शब्दो वाचकः। अत्वकत्वादिवर्णातिरिक्तो वर्णानुभवसहचरितान्तिमवर्णानुभवव्यङ्ग्यशाब्द बोधजनको यः शब्दः स स्फोट इत्युच्यते। तेषु घटपदादिष्वर्थेषु निष्ठा या बोधविषयता तन्निरूपिका या शक्तिस्तादृशशक्तिमत्वं स्फोटत्वम्, तत्र प्रत्येक वर्णानुभवजन्य संस्कार संहृतानेकवर्ण विषया स्मृतिः र्जायते, तद्गतैकत्वमादायासति वाधके एकं वाक्यमेक पदमिति सुष्पस्टानुभवे मिथ्यात्वस्य शंकालेशोऽपि न जायते।

न च शब्दः श्रोत्रेन्द्रियजन्य प्रत्यक्षप्रमाणग्राह्यः, तदा वर्णातिरिक्तशब्दः श्रवणविषयो नास्ति, तर्हि स्फोटस्य सत्तायां किं प्रमाणमितिचेच्छृणु गौरित्येकं पदम्, शुक्लांगामानयेत्येकं वाक्यम्। तत्रैकत्वानुभवस्य सोऽयंगकार सोयमकार इत्यादिपरिचयवचनदर्शनेन प्रमाणं सिद्धयति। एवं सम्पूर्णपदवाक्येषु किञ्चिदेकत्वानुमावकं वस्त्वस्ति, तत्स्फोट एवेति ध्वन्यते। वर्णपदवाक्येषु चरमवर्णव्यङ्ग्यः सः। एवमनुपाधिकोऽबाधितश्च तेष्वेकत्वप्रत्यायकं वर्णव्यतिरिक्तं न भवितुमर्हति। एतादृशबोधविषयः स्फोटः स्वीकार्यं एव। मी० मतेऽपि प्रत्येकवर्णाभिव्यक्तेन स्फोटेनार्थो बोध्यते. तेन वर्णसमुदायेन व्यञ्जितः स्फोटो वाच्यस्तर्हि समुदायस्म वाचकत्वमावश्य न चेद् वर्णसमुदायेनैवार्थप्रतीतिसिद्धौ स्फोटो न स्वीकार्यस्तन्न, प्रत्येकवर्णसमुदायेनार्थबोधो न दृश्यते व्यभिचारात्। रत्नपरीक्षणन्यायेन यथा-रत्नानां परिचयो बहुवारश्चाक्षुस्त्वक्च प्रत्यक्षे कृते सतिजायते एवं पूर्वपूर्ववर्णजनितसंस्कारेण बहुकालपर्यन्तं चित्तदेशेऽन्तिमवर्णेनार्थप्रतीतिस्तदाश्रयः स्फोटो बोधं जनयति।

स्फोटस्य-प्रामाणिकता भाष्यतोऽपिलभ्यते यथा—उभयतः स्फोटमात्रन्निर्दिश्यते, रश्रुतेर्लंश्रुतिर्भवति, ऋकारेण लकारोऽप स्फुट्यते सावर्ण्यात्। तपरसूत्रेऽपि—एनं तर्हि स्फोटः शब्द ध्वनिः शब्दगुणः ( शब्दव्यंजकत्वेनोपकारकः )।

भेर्याधातस्थले तस्या ध्वनिरल्पक्षेत्रगामी दूरदेश गामी च भवति।
एवं स्फोटस्तदेव केवलं ध्वनिरल्पो महान् वा भवति॥
तदुक्तं ध्वनिः स्फोटश्च शब्दानां, ध्वनिस्तु खलु लक्ष्यते।
अल्पो महाँश्च केषाञ्चिदुभयं तत्स्वभावतः॥
शब्दशक्तिस्वभावादित्यर्थं। स्फोटस्यार्थं प्रकाशकोध्वनिः।
शब्दमात्र परिचायकः, व्यङ्ग्यः स्फोटः, व्यञ्जको ध्वनिः॥

एकरसवतामभिन्नकालानां स्फोटात्मकशब्दानां व्यञ्जकत्वेनोपस्थितो ध्वनिरल्पो महाँश्च वोध्यः।

स्फोटस्य व्यञ्जको ध्वनिः। सद्विविधः प्राकृतो, वैकृतश्च। शब्दार्थ-स्वरूपात्मनि जगति क्रियात्मकव्यवहारो दृश्यते। प्रागभाव प्रतियोगि कार्यम्। सर्वं कार्यं कारण सापेक्षं समवाय्यसमवायि निमित्त भेदेन त्रिविधं कारणम्। एवं परब्रह्म स्फोट रूपस्तस्मिन् शब्दरूप ब्रह्मणि एकोऽहं बहुस्य-मिति सिसृक्षात्मिका माया जायते। तथा सहब्रह्मणः संयोगे सति तदेव स्फोटरूप शब्दब्रह्माण्डात्मकजगदाकार रूपेण परिवर्त्तते।

तदेवार्थ समवन्धाभ्यां संवलिता सगुण ब्रह्मस्वरूपा पश्यन्ती वागुच्यते। सा वर्ण पद वाक्यसंवलिता मनः प्रत्यक्षयोग्या चेत् मध्यमा वागुच्यते। सा परश्रवण योग्या काण्ठ तात्वादि स्थानैः स्फुटः वैखरी रूपेण विवर्त्तते। ततोऽर्थात्मक जगद्विवर्तते शब्दार्थोभयात्मक संसारो व्यवहार विषयो भवति। कस्यापि वस्तुन उत्पत्तौ किमपि मूलं कारणं भवति। एवं जगतः स्थितौ कारणं विद्यते। प्रलय काले जगतः पर्यवसानं सद्रूप ब्रह्मणि जायते। एवं शब्दात्मकार्थात्मक जगतः प्रलयः स्फोटात्मक शब्द ब्रह्मणि जायते। अनया रीत्या सर्वस्य मूलमेकोनित्योव्यापकोऽबाधितश्च स्फोटः ज्ञान वृत्ति-कोऽनेक रूपेण भासमानो चरमवर्णव्यङ्ग्यो ध्वनि रूपः। वैखरी वाक् वर्ण पद वाक्य रूप ध्वनि शब्देन व्यवह्रियते। ध्वनेः तिस्रो व्युत्पत्तयः।

ध्वनयति वर्ण पद वाक्य महावाक्य स्वरूपं व्यञ्जयति इति व्यञ्जको ध्वनिः। ध्वन्यते अर्थो व्यज्यते ऽसौ ध्वनिः व्यङ्ग्योऽर्थः। अथवा ध्वननं ध्वनिः व्यञ्जनाव्यापार एवं पृथिवी शब्दोच्चारणे उच्चरितो वर्णः संस्कार रूपेणात्मनि तिष्ठति। ततः प् ऋ थ् इ व् ई इत्यत्रान्तिम वर्णोच्चारण पर्यन्त पूर्व वर्णानामनुभव जन्य संस्कार साहाय्येन ध्वनिरभिव्यज्यते। ध्वनि गत व्यञ्जनाव्यापारेण स्फोटोऽभिव्यक्तो भवति। तस्मिन्व्याप रे तिस्रः वृत्तय आविर्भवन्ति। ततः स्थावर जंगमात्मक जगत न्नुपतिष्ठते संसर्गावगाहि शाब्दबोधों जायते। अनया रीत्या स स्फोटः प्राकृतः ( स्वाभाविक ) ध्वनि-रूच्यते। कत्वह्रस्वत्वोदातत्व शब्दत्व धर्मविशिष्टो ध्वनिः वैकृत इत्युच्यते। यद्यपि स्फोटो नित्यो व्यापक एकश्चास्ति तथाऽपि जपा कुसुमोपरक्त स्फटिक न्यायेन यथा स्फटिकमणिः श्वेत हरित रक्त कपिश नील पुष्प संसर्गात् राग भेदान्नाना रूपो भवति एवमेकएवस्फोटः ध्वनि भेदेनानेक ज्ञान वृत्तिकः सन् अनेक रूपेण भासमानः अन्तिम वर्णेन व्यक्तः नाना भवति। स्फोटस्याभिधावृत्या वाच्यार्थस्य बोधः लक्षणावृत्या।लक्ष्यार्थस्य व्यञ्जनया व्यङ्ग्यार्थस्य बोधो जायते। प्राकृत स्फोटः पद वाक्याभ्यां वर्णस्य ( प्रकृतिप्रत्यय ) ध्वनिः स्वाभाविको भवति तेन केचनाचार्या वर्ण स्फोटं प्राकृत ध्वनिरिति ब्रुवन्ति। अतः वर्णरूपेणाक्रान्तस्फोटः

पृथङ् न प्रतीयते। असूक्ष्म दर्शकाः नैयायिकाः स्फोटस्य सत्तां न स्वीकुर्वा-अत एवैकस्मिन् वर्णे द्रुता मध्या विलम्बिता तिस्रो वृत्ति भेद सन्नपि वर्णे-कत्व व्यवहारः सङ्गच्छते। यथा—

अभ्यासार्थे द्रुता वृत्तिर्मध्या वै चिन्तने स्मृता।
शिष्याणामुपदेशार्थं वृत्तिरिष्ठा विलम्बिता॥

भाष्ये ध्वनि कृता वृद्धिः वैकृत ध्वनि कृतो भेदः केचविद्वांसः पद वाक्ययोरपेक्षया वणे स्वाभाविकः स्फोट अतः वर्णोऽपि प्राकृत ध्वनिः। सूक्ष्म विवेक शून्यो नैयायिकाः स्फोटस्य सत्तान्न स्वीकुर्वन्ति। एवं परावागेव वायु प्रेरितासति पश्यन्ती स्वरूपेण विवर्तते या सगुण रूपा योगिनां गम्या दिव्य दृष्ट्या प्रत्यक्षविषया "पश्यन्ति" शब्देन सा वायू प्रेरितो हृदयस्था मध्यमा वागुच्यते। सा वायु प्रेरिता तत्तत् कण्ठ—तात्वादिषु प्रयत्न प्रेरिताऽविभूता वैखरीत्युच्यते। विशिष्टं रवं विखं ( विशिष्टाऽकाशे रातीति विखरम् मुखं ) विखरे भवा वैखरी। आस्य वहिर्भूताऽकाश समवेता श्रवण-गोचरी वागियमनया रीत्या यथा कात्र्चन कन्या क्वचित्पूत्री क्वचित्वधू यूवती माता प्रमाता वृद्धाद्यनेक व्यवहारं लभते। तथैव परा वाक् "पश्यन्त्यादि रूपं लभते। नैयायिकाः मीमांसकाश्च ये विरूद्ध वादिनः तेषांमत खण्डनाय स्वमत संस्थापनायाह—सिद्धान्त निष्कर्ष इति—नैयायिकाः पदेषु शक्ति स्वीकुर्वन्ति। न तु वाक्ये यतः शक्तं पदं, पद समुदायो वाक्यम्। समुदायश्च आकाङ्क्षा योग्यताऽऽसत्तिः तात्पर्यज्ञानपूर्वकं वाक्यमुच्यते। तन्मते पच् इति पदम्। तीत्यपि पदं तयोः समुदायः पचतीति वाक्यम्। पद्यते—गम्यते अर्थोऽनेनेति पदम्। पच् धातुना पाकार्थो गम्यते। तिपा कृत्यर्थो गम्यते तेन उभयं पदं वाक शब्दस्य "ति" प्रत्यार्थं कृतौ जनकता सम्बन्धेनान्वयः। पाकानुकुल कृत्याश्रयः पचतीति वाक्येन बुद्धयते। मीमांसक मते वाक्ये लक्षणा। अस्यमते पद समुदाय रूप वाक्ये—शक्तिर्नास्ति तेन शक्य सम्वन्ध रूपाऽसंभवा। अतः स्वज्ञाप्य सम्बन्धो लक्षणा सर्वत्रैव हिवाक्यार्थो लक्ष्य एवेति च स्थितम् इति मन्यते। तत् सर्वं खण्डयितुमाह—अथवा—

उपायाः शिक्षमाणानां वालानामुप लालना।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते। इति।

प्रकृति, प्रत्यय धातु, प्रातिपदिकादि प्रकृया व्युत्पादानं=व्याख्यान-मुपायः। असत्या, आरोपिता वा-कल्पना, तस्याः विवेचनं प्रस्तुतीकृत्य सत्यं स्फोटरूपं ब्रह्म सम्यक प्रत्यक्षीक्रियते।

॥ श्री गणेशाय नमः ॥

# प्रभाकरीटीकाभ्यामुल्लसितो वैयाकरणभूषणसारः ।

## अथ मंगला चरणम्

**त्रिमूर्तिसारम् गुरुज्ञानगम्यं, पितामहं श्री शुभकर्णमादौ ।**
**हरिप्रसादं पितरम् प्रणम्य, प्रभाकरीं भावकरीं करोमि**

आस्तिक ग्रन्थकर्तृणामियं शैली, यत् विघ्नध्वंसकामः, समाप्तिकामो वा मङ्गलमाचरेदिति श्रुत्या प्रकृतिप्रत्ययार्थप्रदर्शकस्य, पदवाक्यर्थनिर्णायिकस्यास्य ग्रन्थस्यारम्भनदशायां सकलविघ्नध्वंसपूर्वकसमाप्तिः सम्प्रचारश्च स्याताम्, अतो मङ्गलमाचरणीयमिति। यत एकस्मिन्नपिप्रतिबन्धके (प्रत्यूहें) समुपस्थिते सति शरीरे व्रणमिव पर्णशालायां स्फुलिङ्ग इव लघुसर्पइव, इष्टमनिष्टे परिणमयितुं प्रभवेदिति। अतः समस्तप्रत्यूहोन्मूलयितुं प्रारभ्यमाणप्रकरणकग्रन्थादौ मङ्गलमाचरति कौण्डभट्टः। यतोहि मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते (प्रशस्तानि भवन्तीति भाष्यकारः)। तथा च तानि शास्त्राणि वीरपुरुषकाणि च भवन्ति। वि=विशिष्टं लोके (समाजे) बोधजनकमर्थमीरयन्ति प्रेरयन्तीति वीराः प्रसिद्धार्थप्रेरकाः पुरुषाः, अध्येतृत्वेन, अध्यापकत्वेन प्रचारकत्वेन, च भवन्ति चेषु शास्त्रेषु तानि वीरपुरुषकाणि=प्रशस्तार्थबोधकानि शास्त्राणि भवन्ति तथा च लोकेऽर्थविषयकवोधजनकत्वेन ( समाजोपकारकत्वेन ) आयुरस्ति जायते वर्धते येषान्ते आयुष्मन्तः पुरुषा येषु शास्त्रेषु तानि शस्त्राणि आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहार-(आचरण ) कालेन आयुष्मत्पुरुषकाणि भवन्ति। शिष्टकृतानां ग्रन्थानामध्येतारोऽध्यापकाश्च शास्त्राणां लोकोपयोगिव्याख्यानस्य प्रेरकाः भवन्तु। ते च वृद्धियुक्ताः स्युरिति। वृद्धिस्तावत् 'समाजः शास्त्रमयो भवतु' इत्युद्देश्यिका। यथा भोजनं प्राणरक्षार्थम्, एवं शास्त्रमपि समाजस्य कल्याणार्थं विज्ञेयम्। शास्त्रं समाजोपकारकं स्यादत एव मङ्गलमाचरणीयमिति, भाष्याभिप्रायमवलम्ब्य तथा प्राचीनमते विघ्नध्वंसकामो मङ्गलमाचरेदिति, अविगीत (अनिन्दित) शिष्टाचारेण मङ्गलमाचर्यते। अतो मङ्गलं श्रुतिबोधितकर्तव्यताकं (श्रुत्याबोधिता आदिष्टा ) अग्निष्टोमादि सन्ध्या-

वन्दनादि, (कर्तव्यता यस्य तम्) अविगीत शिष्टाचारविषयत्वात्। यत्र यत्र अविगीतम् = अविगर्हितंमनिन्दितं प्रशस्तं शिष्टाचारविषयत्वं तत्र तत्र शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकत्वम् = म्लेच्छैरनुपदिष्टं शिष्टैरुपदिष्टं तत्'। अत्र व्याप्त्यनुगृहीत परामर्शश्च-मङ्गलं श्रुतिबोधितकर्तव्यताकत्वव्याप्य शिष्टाचार-विषयत्ववदिति परामर्शोत्तरम् मङ्गलं श्रुतिबोधितकर्तव्यताकमित्यनुमिति र्जायते।

उक्तञ्च— आचारात्तु स्मृतिंज्ञात्वा श्रुतिं विज्ञायते ततः।
आचारस्तु स्मृतिमूलकः स्मृतिश्च श्रुतिमूलिका॥

श्रुतेरिवार्थं स्मृतिरन्वगच्छत्। शिष्टाचारेण स्मृति, र्ज्ञायते स्मृत्याच श्रुतिरनुमीयते।

मङ्गलस्य फलन्तु, विघ्नध्वंसः। समाप्तिश्च। अथवा मङ्गलं विघ्नध्वंस-द्वारा समाप्ति प्रतिकारणम्। अत्र द्वारत्वञ्च तज्जन्यत्वेसति तज्जन्यजनकत्वम् : मङ्गल जन्यत्वे सति मङ्गल जन्या या समाप्तिः तस्याः जनको विघ्नध्वंसः। स मङ्गलं प्रतिकारणं फलन्तु, समाप्तिरेवेति लक्षणसमन्वयः।

## हिन्दी टीका

**त्रिमुनि सुहृद गुरुवर्य को बारम्बार प्रणामकर।**
**श्री प्रभाकर मिश्र से निर्मित हुई प्राभाकरी॥**

सनातन शैली है कि ग्रन्थ समाप्ति का अभिलाषी विघ्नध्वंस का इच्छुक मङ्गलाचरण करें। एक भी विघ्न, रोग, पाप, अग्नि आदि के अंश की तरह अभीष्ट को अनिष्ट में परिवर्तित कर देता है। अतः कौण्ड भट्ट ने निर्विघ्न ग्रन्थ समाप्ति के लिए मङ्गलाचरण किया, क्योंकि नमस्कारात्मक, आशीर्वादात्मक, वस्तुनिर्देशात्मक मङ्गल प्रारम्भ में किये जायें, तो शास्त्र माङ्गलिक एवं लोकप्रिय होता है। उसके अध्येता एवं अध्यापक वीर ( शास्त्र के लोकप्रिय अर्थ के प्रेरक ) होते हैं। आयुष्मान् होते हुए शास्त्र के समाजोपयोगी व्याख्यान से समाज के सुधारक होते हैं। आयु, विद्या, यश व बल की वृद्धि भी करते हैं। जैसे—भोजन शरीर रक्षार्थ है; शरीर भोजनार्थ नहीं। ऐसे ही शास्त्र समाज कल्याणार्थ है। वेद मर्यादित कर्त्तव्य का बोधक है। वेद का संरक्षक हित-अहित का उद्बोधक शास्त्र है।

यद्यपि नास्तिक मङ्गल के प्रति मूढ़ एवं अश्रद्धालु होते हैं और ग्रन्थ की परिपूर्णता, बिना मङ्गल के भी देखी जाती है। तथापि वहाँ जन्मान्तरीय मङ्गल का अनुमान लगाना चाहिए। यथा—स्थूल पुरुष यदि दिन में आहार न करता हो, तो रात्रि में अवश्य गुप्त भोजन का अनुमान लगाया जाता है। यद्यपि मन में मङ्गल किया जा

**श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।**
**स्फोटरूपं यतः सर्वं जगदेतद्विवर्तते ॥ १ ।**

o

नच मङ्गलाचरणं विनाऽपि नास्तिकादिग्रन्थानां समाप्तिदर्शनात् व्यतिरेकि व्यभिचारोऽनुभूयते तत्र, अयं नास्तिकग्रन्थ, जन्मान्तरीयमङ्गलवान् समाप्तिमत्वात् । यन्नैवं तन्नैवमिति । यथा दिने भोजनाभावेऽपि पीनत्वेन तत्र रात्रिभोजनमर्थापत्तिप्रमाणेन कल्प्यते । एवं यत्र मङ्गलाभावेऽपि समाप्तिदर्शनं तत्र जन्मान्तरीयमङ्गलमर्थापत्या कल्प्यते । इत्थं सम्यग्विविच्य ग्रन्थस्यारभामाणः कौण्डभट्टः सामाप्तिफलकंमङ्गलं कृतवान् । न च मनसि मंङ्गलं विधीयतां कथं ग्रन्थघटकीकृतमिति वाच्यं, शिष्य शिक्षार्थं तत्करणात् । मद् गुरुवो मङ्गलमाचरितवन्त इति मयाऽपि मङ्गलमाचरणीयमिति, बुध्या ग्रन्थघटकी कृतवान् । अन्यथा सनातन मङ्गलस्य विलोपापत्तिः स्यात् । अतः समस्तप्रत्यूहोपशमनाय निर्विघ्नतासिद्धयर्थं समाप्तिफलकं भगवत्स्तुति रूपं मङ्गलमाचरन्नाह ग्रन्थ कारः श्री लक्ष्मी रमणमिति—

इदं भट्टोजिदीक्षित कृतमङ्गलम् । अस्यार्थः=गौरी रमणरूपिणं= पार्वतीपतिसदृशं श्री लक्ष्मीरमणं=चलाचलसम्पत्तिप्रतीकाभ्यां भूदेवि-लक्ष्मीभ्यां सहितं=सशक्तिकं विष्णुं नौमि । यतः=यस्मात् श्री लक्ष्मीरमणात् उपादानकारणादेतत् पुरोवर्त्तमानं सर्वं स्फोटरुपं=शब्दात्मकमर्थात्मकञ्च जगत् विवर्त्तते=अन्यथा जायते । शब्दएवार्थरूपेण=दुग्धस्य दधीव विपरिण-मते=विकारात्मना परिवर्त्तते । सशक्तिको विष्णुः हिरण्यगर्भस्वरूपेण जगद्-रूपेण परिणमते । उक्तञ्च हिरण्यगर्भः समवर्त्तताग्रे," इति । अग्रे=प्रथमं हिरण्यगर्भः=विराड् ब्रह्मसमवर्तत=कारणात्मना आसीत् । अतात्विकोऽन्य-थाभावो विवर्तश्चेत् रज्जौ अहिरिव प्रतीयते । व्याख्या→श्री लक्ष्मीरमण-मिति, श्रयति=धारयति लोकानिति श्रीः=भूदेवी, लक्षयति=भाग्यवत्पुरूषं परिचाययतीति लक्ष्मीः, "लक्ष्येर्मुट ई च । अथवा लक्षयति पुरुषार्थचतुष्टयं संम्पादयतीति लक्ष्मीः=आद्या शक्तिः, श्रीश्च लक्ष्मीश्च भगवतः विष्णोः पत्न्यौः (शक्ति स्वरूपे) स्तः । अत्र प्रमाणं श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे "इति श्रुतिस्ताभ्यां सहितो रमणः=विष्णुस्तम् । यद्वा श्रिया=अलौकिक-

सकता है; लिखित क्यों ? तथापि शिष्यों में मङ्गल के प्रति धारणा सुदृढ़ हो, कि मेरे पूज्य गुरुजन मङ्गल करते थे । अन्यथा मङ्गल की परम्परा ही अप्रत्यक्ष ( लुप्त ) हो जायेगी । अतः निर्विघ्नतापूर्वक ग्रन्थ समाप्ति के उद्देश्य से मङ्गलाचरण प्रस्तुत करते हैं ।

शोभया सहिता लक्ष्मीः=सम्पूर्णसम्पत्तिस्वामिनी देवता तस्याः रमणः= मनोविनोदाश्रयस्तम्। यद्वा रमन्ते जगन्ति यस्मिन् सच्चिदानन्दे भगवति स रमणः, श्रीः=ज्ञानस्वरूपा चिच्छक्तिः लक्ष्मीः=सम्पत्तेर्जडत्वात् अविद्या-स्वरूपा अचिच्छक्तिः, एवं चिदचित् शक्तिद्वयविशिष्टः श्री लक्ष्मीरमणो विष्णुरिति विशिष्टाद्वैत मते। यद्वा अविद्यायाः द्वे शक्ती स्तः श्रीः=आवरण शक्तिः, लक्ष्मीः=विक्षेपशक्तिस्ताभ्यां युक्तो रमणः=सविकल्पकं ब्रह्म। अथवा श्री=सर्वाश्रया लक्ष्मीः=शक्तिस्तया सहितः सशीक्तिको रमणः। यद्वा श्रयति हरिमिति श्रीः, सा चासौ लक्ष्मीश्च तस्याःरमणस्तं नौमि। ग्रन्थनिर्माणशक्तिसुलभार्थं सर्वोत्कृष्टगुणकस्य विष्णोः शरणमाश्रयामि। कथं भूतं लक्ष्मीः रमणं? गौरी रमणरूपिणं, गृणाति=जगत् प्रलयकाले स्व कुक्षिगतं करोति या सा गौरी। यद्वा गृणाति=वांलानां मनोभिलषितं साधयति ज्ञान शक्तिं वा प्रबोधयति यासा। यद्वा गौरी=प्रकृतिः सा रमते =स्वविलासं प्रदर्शयत्यस्मिन्निति योऽसौ, अथवा गौरी=गौरवर्णा सत्व-प्रधाना देवी तस्यां रमते योऽसौ गौरीरमणः शिवः, तस्य रूपं गौरीरमण-रूपमिवंरूपमस्त्यस्य (विष्णोः) अस्मिन वा तं गौरीरमणरूपिणं पार्वतीपति-सदृशं) विष्णुं नौमि।

ननु समासवृत्तितद्धितवृत्तिद्वयाश्रयणं न युक्तं, यतः न कर्मधारया-न्मत्वर्थीयो वहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकरः। अत्र गौरी रमणस्य रूपं= स्वरूपं यस्येति वहुव्रीहिणैव तदर्थः प्रतिपद्यते, तन्न, असुब्बत इति भाष्य प्रयोगात् क्वचिल्लाधवोऽनाद्रियत इति तदुपपत्तेः।

ननु विष्णुः देवतास्येति वैष्णवः, तस्यभावो वैष्णवता, सा पर्याप्ति धर्मावच्छिन्ना, तत्र परिपूर्णता परिलक्ष्यते। पुनः गौरीपतेरभेदेन, स्मरणा-भिप्रायस्तु कः, इति चेच्छृणु, ज्ञानन्तु, शङ्करादिच्छेदित्याप्तोक्त्या ज्ञान-मूलिका ग्रन्थरचना। शिवस्मरणं ज्ञानजनकम्। अतः शिवरूपो यो विष्णु भगवाँस्तं, तं नौमि=अल्पगुणवानहमुत्कृष्टगुणवतो भगवतश्शरणं गच्छामि। किमर्थः ग्रन्थरचनाशक्तिसुलभार्थं, निर्विघ्नतापूर्वकसमाप्तिफललाभार्थञ्च।

श्री=शोभा सम्वलित लौकिक अलौकिक सौन्दर्य माधुर्य परिपूर्ण, लक्ष्मी=सम्पूर्ण ऐश्वर्य एवं सम्पत्ति की स्वामिनी देबी का, रमंण=मनोविनोद का आश्रयः जिसमें सारा विश्व विचरण करे, उसे रमण कहते हैं। अथवा, श्री=भूदेवी, लक्ष्मी=लक्ष्य-भूत पुरुषार्थ चतुष्टय की प्रापयित्री ये दोनों विष्णु भगवान् की पत्नी हैं। (श्रीश्चते लक्ष्मीश्च पत्न्यौ इति श्रुतिः) दोनों की शक्ति से विशिष्ट विष्णु का (ग्रन्थ समाँप्त्यर्थ) शरण ग्रहण करता हूँ। अथवा, श्री=सर्वाश्र, लक्ष्मी=शक्ति, उससे विशिष्ट

ननु विष्णोः गौरीरमणरूपत्वं न लोके ( व्यवहारे ) प्रसिद्धम् शैववैष्णवयोर्भेदेन शिवविष्णोर्भेदस्य सर्वतन्त्रसिद्धत्वात् । एवञ्च शिवस्य स्तुतिकर्मता न सिद्ध्यति । तत्र शिवाय विष्णुरुपाय विष्णवे शिवरूपिणे इतिवचनादुभयोः तादात्म्यापन्नत्वेनाभेददर्शनात् । उक्तञ्च–हरिहरभेदं कलयतिमूढो विना शास्त्रम् ।[3] उभयोः प्रकृतिरेका ( हृञ् हरणे ) प्रत्यय-(विश्वास) भेदात् भेदोऽस्ति तयोः कर्मभेदात् भेदः, ननु पारमार्थिको भेदः । अतः शिवे स्तुतिकर्मता नानुत्पन्ना । 'हरति पापानि' इति व्युत्पत्तिरप्येकैव ।

नन्वेकस्य ब्रह्मणोऽनेकरूपत्वे किं गमकम्, तत्र 'एकोऽहं वहुस्याम्, एकः सन् वहुधा व्यजायत' इति श्रुतिर्मानम् । यदा इच्छा शक्तिर्जागर्ति तदा ईश्वर एकाकी सन् वहुभवितुं वाञ्छति, यदा मायाशक्तिः प्रादुर्भवति तदा स वहुधा=विविध प्रकारेण व्यजायत=सृष्टयादि विभिन्नकार्य संसिद्ध्यं वह्मविष्णु शिवादिरुपेणानेकधा प्रादुरभवत् । अतो रमणशब्दः 'सत्यंज्ञान मनन्तं व्रह्म' इति श्रुत्या आह्लादप्रवोधकः, यस्मादिष्टलाभः सूच्यते । तं नौमि ।

स्तुत्यर्थक नु धात्वर्थस्तु नमस्कर्तरि निष्ठा या अल्पगुणवत्ता तन्निरूपिता या नमस्कार्यनिष्ठा उत्कृष्टवहुशंसितगुणवत्ता तद्विशिष्टं यज्ज्ञा तदनुकूलः करः शिरः संयोगरूपोव्यापारः । तत्र करः शिरसंयोगस्तूपलक्षणीभूतः । स्वनिष्ठापकृष्टत्वप्रकारक वोधानुकूलव्यापार एव तद्धात्वर्थः । यथा मण्डलाधीशः प्रधानमन्त्रिणं नौति । मण्डलाधीशे विद्यमाना मण्डलमात्रपरिच्छिन्ना (अधीशत्वरूपालपक्षेत्रव्याप्यगुणवत्ता तस्याः परिचायिका प्रधानमन्त्रिनिष्ठाऽधिकदेशवृत्तित्वरूपव्यापकगुणवत्ता, अत्र व्याप्यव्यापकगुण–विशिष्ट ज्ञानन्तु–अहं (मण्डलाधीश) प्रधानमन्त्र्यपेक्षया अल्पगुणवान्, अयञ्च–मदपेक्षया उत्कृष्टव्यापकगुणवान्, इत्याकारकं यज्ज्ञानं तनदनुकूलो वद्धाञ्जलिशिरः संयोगरूपो 'नौमि' इत्युच्चारणरुपो व्यापरः, तदाश्रयो मण्डलाधीशः । नमस्कर्ये तु 'अहमेतदपेक्षया उत्कृष्टः,

( शक्ति सहित ) विष्णु को नमस्कार करता हूँ । वे भगवान् कैसे हैं ? गौरी रमण रूप हैं । गौरी=प्रकृतिः माया, विलासंभूत जगत् का प्रदर्शन करे, जिसमें ऐसे रमण शिव या गौरी=गौरवर्ण वाली सती गुण सम्पन्ना, उसमें जो रमण करे । या गौरी रमण शंकर भगवान उनके रूप की तरह स्वरूप है जिसका ऐसे विष्णु की स्तुति करता हूँ । श्री विष्णु को शिवरूप मानने का तात्पर्य है कि शंकरजी से "ज्ञान की इच्छा करे" ज्ञान ही ग्रन्थ का मूल है । शिवजी ज्ञान के दाताजनक हैं । अतः विष्णु में शिव की अनुभूति आवश्यक हो गयी है । हरति पापानि इस व्युत्पत्ति से भी दोनों में साम्य

यतोहि अयंमां नमस्करोति, इतिज्ञानरूपं फलं जायते। फलाश्रयः प्रधानमन्त्री। अत एव=फलाश्रयत्वात् कर्म संज्ञा द्वितीया च। तेन स्वनिष्ठापकर्षप्रकारक-नमस्कार्यनिष्ठोत्कर्ष विशिष्ट बोधानुकूलो व्यापारो नुधात्वर्थः।

प्रसङ्गे, तु कौण्ऽभट्टनिष्ठा या अल्पगुणवत्ता एवं लक्ष्मी रमण निष्ठोत्कृष्टगुणवत्ता च तद्विशिष्टज्ञानानकूलोव्यापारोनुपदार्थः। यद्यपि ईश्वर-गुरुपित्रादिषु उत्कर्ष पुरस्सरं श्रेष्ठत्वज्ञानं स्वभावसुलभम् न प्रयासजन्यम्। तथापि तत्र हर्षोल्लासप्रबोधकः स्वाभीष्टसाधक आशीर्वचनानुकूलव्यापारो नु धात्वर्थः। सच नमनद्योतकं हस्तसम्पुटीकरणं शिरोनमनञ्चेत्यादिरूपम्।

इदानीं नमस्क्रियायां नमस्कार्ये च यदुत्कृष्ट विशिष्टज्ञानं तमाविष्करोति–स्फोटरुपमिति—

यतः=यस्मात् श्री लक्ष्मीरमणात्, मायोपाधिविशिष्टात्, उपादानकारणात् भगवतः श्रीमन्नारायणात् (एतेन सशक्तिकस्य परमात्मनः कारणत्वं व्यज्यते) पुरोदृश्यमानं स्थावरजङ्गमात्मकं स्फोटरूपं सर्वं जगत् विवर्तते। शब्दपक्षे तु–यत=यस्मात् सशक्तिकाच्छब्दात् श्रीः=शक्तिः (सम्बन्धः, सामर्थ्यम्बा) लक्ष्मीः–अर्थः, ताभ्यां सह रमन्ते=कार्य कुशलिनो–(शब्दमूलको व्यवहारस्तत्र) भवन्त्यनेनेति रमणशब्दः, तस्मात्-शब्दार्थसम्बन्ध-फलसहितात् शब्दब्रह्मणः, प्रत्यक्षे विद्यमानं शब्दात्मकमर्थात्मकं जगत् प्रादुर्भवति। एवं ग्रन्थादौ शब्दाद्वैतवादः प्रकीर्तितोऽन्ते स्फोट स्यैव निरुपणत्वात्।

कारिकायां स्फोटरूपमिति भगवतो जगतश्च विशेषणम्। भगवत्पक्षे–स्फुटति=आविर्भवति पृथिव्यप्तेजोवाय्वाकाशकालदिगादिजगद्रूपोऽर्थो यस्मात् (अपादाने घञ्) तम्। शब्दपक्षे तु–स्फुटति=लोके बोधविषयतां प्राप्नोत्यर्थोऽस्मादसौ स्फोटश्शब्दः, रूप्यते इति रूपं बोध्योऽर्थः, तयोः

की अभिव्यञ्जना होती हैं। नौमि का अर्थ = अल्प गुणवान् नमस्कर्त्ता और अधिक गुणवान् नमस्कार्य है। ऐसे ज्ञान के अनुकूल जो प्रणाम प्रक्रिया है; सिर का नमन, हाथ का सम्पुटीकरण, साष्टाङ्ग दण्डवत् आदि, जैसे—शिष्य गुरु को प्रणाम करता है। शिष्य में न्यून गुण गुरु में विशेष गुण की दोनों में अनुभूति होने पर नमस्कार आशिष क्रमं प्रारम्भ होता है।

ग्रन्थकार विष्णु के नमस्कार में विद्यमान् जगत के आविर्भावात्मक उत्कृष्ट गुणों का आविष्कार कहते हैं। स्फोटरूपं यतः सर्वमिति—

जिससे अर्थ स्फुटित (विकसित) हो, उसे स्फोट कहते हैं। शब्द से अर्थ व्यक्त या विकसित होता है। शब्द ही स्फोटात्मक है। यतः=जिस शक्ति सहित विष्णु

वाच्यवाचकभावसम्बन्धश्च:, स्फोटश्च रूपश्चानयो: समाहार: (तत्र नपुंसकमेकवचनम्) स्फोटरुपम् = शब्दार्थस्वरूपं ब्रह्म। तदेव "गच्छतीति जगत्" तस्योपादानकारणम्। एवं स्फोट एव रूपं = स्वरूपं यस्य तत्। शब्दात्मकमर्थात्मकञ्च यावदर्थस्वरूपं तत्सर्वं सुसिद्धम्। अत्र प्रमाणं 'नामरूपे व्याकरवाणीति' श्रुति:। नाम इति शब्द: रूपमित्यर्थ:। स 'भू:' इति नाम प्रथमं व्याहरत ततो भुवमित्यर्थोऽजायता भट्टोजिदीक्षित: कौमुदीति व्याहरत तत: कौमुदीमित्यसृजत।

स्तुतावुत्कर्षश्च जगत्कतृत्वादिरूपो अविद्योपाधिकस्य मायासम्वलितस्य परमात्मनो जगत्कारणत्वञ्च। एवं माया = शक्ति: (सम्बन्ध:) वोधकता रूपा व्यावहारिकता। वाच्यवाचकभावरूपा योग्यता तत्सहितात् शब्दात् सर्वोऽर्थो विवर्त्तते अत्र श्रुति:प्रमाणं, "यतो वा इमानि भूतानि जायन्ते, येन थातानि जीवन्ति यत् प्रयन्ति = लीयन्ते, अभिसंविशन्ति। ब्रह्मणि जगत: स्थितिर्लयोऽपि जायन्ते। आत्मन आकाश: सम्भूत:, आकाशाद् वायु: वायोरग्निरग्नेराप:, अद्भ्य: पृथ्वीत्यादिरपि मानम्। इत्थं ब्रह्मण उपादानता। न्यायादिमते तु निमित्तकारणताऽपि दृश्यते यथा "द्यावाभूमी जनयन् देव एक: (एवास्ते) विश्वस्य कर्त्ता भुवनस्य गोप्ता" इति श्रुति:। स्वप्रधानतयोपादानकारणता स्वशक्तिप्रधानतया निमित्तकारणताऽपि।

ननु विवर्त्तस्य जगत: कारणत्वे युगपदुपादाननिमित्तयो: कारणयो: स्थितिर्नसम्भवति। कथं? तयो: समन्वय:, यतो हि 'सदेव सोम्येदमग्र आसीत्, हे सौम्य इदं जगत् अग्रे = प्रथमं सत् एव आसीत्। इति श्रुत्या सम्पूर्णस्याकाशादिप्रपञ्चस्य नित्यता निश्चीयते, कथं परमात्मन उपादान कारणत्वं, निमित्त कारणत्वम्वा सङ्गच्छते। यन्नित्यं तत्कार्यं न, अजन्यत्वात्। अत ईश्वरजगतो: (शब्दार्थयो:) न कार्यं कारण भावोऽनादि

भगवान् से स्थावर जङ्गात्मक जगत् आविर्भूत होता है। वहां जगत् कार्य है; भगवान् कारण हैं, ऐसे ही श्री = ज्ञान, में कारण लक्ष्मी = शक्ति: (सम्बन्ध) सहित रमण: = शब्द: अर्थात् स्फोट रूप शब्द से अर्थ की अभिव्यञ्जना होती है। शब्द, अर्थ, सम्बन्ध फल रूप में परिणामी शब्द ब्रह्म अर्थात्मक जगत के रूप में विवर्तते = परिणामी होकर प्रत्यक्ष होता है और ज्ञान का विषय बनता है। "स: 'भू:' इति व्याहरत' भू शब्द का उच्चारण किया, तब 'भूवम् असृजत्' अर्थभूत जगत् का सृजन हुआ। विवर्तते शब्द में वि उपसर्ग का विशिष्ट और विरोधाभास दो अर्थ है। अत: विवर्तते का सतात्विक = व्यावहारिक परिणाम दर्शनीय है। जैसे—दूध ही तत्वों के साथ दधि रूप में परिणत

त्वात् । अत आह जगदिति–गच्छति = विनाशं प्राप्नोति जगत् यद्यद्विनाशि तत्तज् जन्यमिति नियमेन जगतो जन्यत्वं सिद्धम् । अथवा गच्छति = कारणे लीयते इति व्युत्पत्त्याऽपि जन्यत्वबोधे न बाधकम् । न च जगतः कार्यत्व-स्वीकारे सदेव सोम्येदमिति श्रुतेः का गतिः कथंच्च विरोध परिहारः ? साङ्ख्य मते गच्छति = तिरोधत्ते इत्यर्थः । यस्तिरोधत्ते स आविर्भवति । एतेन पदार्थस्य सत्ता न नश्यतीति ध्वन्यते । सत्ता मात्रेण जगतो नित्यत्वं, नामरूपोपाधिनाऽनित्यत्वमित्थं विरोध परिहारः कर्त्तव्यः ।

विवर्त्तत इति शब्दो व्यावहारिकाव्यावहारिकार्थपरः । तत्र "वि" इति विशिष्टार्थद्योतकः विरोधाभासार्थकश्च, तस्मात् द्विविधो विवर्त्तः । सतात्त्विका ( व्यावहारिका ) न्यथा भावः प्रथमो विवर्त्तः । यथा दुग्धस्य दधि परिणामः । मृत्तिकायाः पाषाणलौहसुवर्णादि विकारः । तत्र दधि दुग्धादीनां भोजनादौ व्यवहारविषयता । एवं शब्द एवार्थरूपेण विपरि-णमते भगवतो नारायणस्य परिणामभूतविराडिव । अत्र तत्त्वं करणम् अन्यथा भावेन = कार्यरूपेण विकृतरूपेणविवर्त्तते । अत्र कार्यकारण-श्चोभयं व्यवहारविषयः । अतात्त्विकोऽन्यथा भावोविरुद्धाभासार्थको विवर्त्तः यथा रज्वां सर्पः, सूक्तौ रजतम्, मृगमरीचिकायां जलम् । अत्रा-धिष्ठानं रज्जू सूक्तिः मृगमरीचिका च । एते व्यवहार विषयाः सन्तु नाम किन्तु तत्राधिष्ठितानां सर्प–रजत–जलानां प्रतीतिमात्रमेव, न तु व्यावहा-रोपयोगितेति । अत एव 'सर्वं खल्विदं ब्रह्म नेह नानास्ती किञ्चन', 'तमेव भान्तमनुभाति सर्वम्' इत्यादि श्रुतयो सङ्गच्छन्ते । यथा–शुक्तौ रजतस्य सत्ता नास्ति, किन्तु शुक्तिसत्तैव, रज्जावहेः सत्ता नास्ति किन्तु रज्जु-सत्तैव । एवं भ्रमजन्यस्यार्थात्मकप्रपञ्चस्य सत्ता नास्ति किन्तु ब्रह्म सत्तैव । एवं शब्दस्यैव सत्ता सार्वत्रिकी वास्तविकी च । तत्र भासमाना अर्थ सत्ता नास्त्येव । यथा यावत् शुक्ति र्न प्रतीयते, तावत्, रजतम्, एवं यावद्ब्रह्म न

होता हैं। यहाँ कार्य दधि, कारण दूध दोनों व्यावहारिक हैं सतात्त्विक हैं। अतात्त्विक = अव्यावहारिक अन्यथा भाव; विरुद्धाभास विवर्त का अर्थ है । रस्सी में सर्प को, शुक्ति में चाँदी, यहाँ सर्प चाँदी अव्यावहारिक हैं । सर्प भ्रम निवृत्ति के पश्चात् रस्सी भी अव्यावहारिक है । भ्रम मिटने पर उसकी उपयोगिता भी मिट जाती है । ऐसे ही शब्द में विरुद्ध अर्थ भासमान् है । अज्ञान दूर होने पर सब कुछ वही है । शब्द ब्रह्म—सियाराम मय सब जग जानी । सर्वं खल्विदं ब्रह्म—ब्रह्म की प्रतीति से जगत की सत्ता है । जासु सत्यता ते जड़ माया । भास सत्य इव मोह सहाया । शिवस्वरूप विष्णु भगवान की ही शब्द रूप ब्रह्म है । उन्हीं से अर्थ ( जगत ) की सृष्टि होती है ।

अशेषफल[1]दातारम् भवाब्धितरणे तरिम् ।
शेषाशेषार्थलाभार्थं प्रार्थये शेषभूषणम् ।।२।।

प्रतीयते तावत्प्रपञ्चः । अतो ब्रह्माणि नामरुपात्मकं जगत् विवर्तभावं प्राप्तमित्यर्थः । इत्यद्वैते, द्वैतेतु शब्दार्थसम्बन्धानां नित्यत्वं प्रतिपादितं वर्तते । यथा 'नित्याः शब्दार्थ-सम्बन्धाः समाम्नाताः महर्षिभिरिति वाक्यपदीये । किन्तु अर्थसम्बन्धयोः नित्यता प्रलयं यावत्तिष्ठति, या व्यावहारिकीति व्यपदिष्टा । अतो यस्मादीश्वरात् ( शब्दात् ) पुरोवर्तमानं शब्दार्थस्वरूप स्फोटरूप-जगद् विवर्तते = अन्यथा जायते । तं गोरीरमणरुपादभिन्नरूपं लोकोत्तरश्रियया युक्तं भगवन्तं विष्णुं नौमि ।।१।। इति दीक्षितकृत कारिकायां मङ्गलम् । अथ ग्रन्थकारकृतं मङ्गलम्

जगदुपादानकरणं मोक्षसाधनं, ज्ञानस्वरुपं विष्णुं स्तुवन् कौण्डभट्टो निखिलसाधुत्वकारणकारणं शब्दानुशासनस्याधारभूतं चतुर्दशसूत्रोपदेशकं मङ्गलवन्तं भगवन्तं शिवं प्रार्थयते । अशेष इतिशेषं = अनन्तं मर्यङ्कत्वेन भूषयति योऽसौ शेषविभूषणस्तं, वाशेषो = शेषनागः स शय्यात्वेन भूषणं यस्य सः = विष्णुस्तम् । यदि शेषनागः विभूषणं = कण्ठाभरणं यस्य 'वा' विशिष्टं भूषणं यस्य तं शिवं प्रार्थये = अभीष्ट सिद्धयर्थमाश्रये । शिवाधीनश्शेषः । शेषस्य (पज्जलेः) महाभाष्यार्थ लाभाय, शिवप्रीतिः (भक्तिः) अवश्यमभीष्टसाधिका । एतदर्थंप्रार्थये ।

क्रिया में प्रवृति का प्रयोजक फल है । सम्पूर्ण फल को देनेवाले अर्थात् जिस लोभ से कर्त्तव्य-पालन में रुचि हो, उसे फल कहते हैं । इस लोक और परलोक के सम्पूर्ण फल ( धर्म, अर्थ, काम, मोक्ष ) को अर्पण करनेवाले भवब्धि तरणे तरिम् = संसाररूपी समुद्र को पार करने के लिए नौका ( तरण का साधन ) आदि के समान, जैसे—समुद्र गम्भीर भयानक देखने में असीम मत्स्य ग्राह आदि से आक्रान्त हैं । ऐसे संसार काम-क्रोध, लोभादि से व्याप्त है । चूंकि भव दुस्तर है, इसलिए समुद्र से उपमित किया गया । ऐसे संसार सागर को पार करने के लिए साधन शिव या विष्णु हैं । "नाम लेत भव सिन्धु सुखाहीं" ।

शेषाशेषार्थ लाभार्थम्—शेषावतार होने से भगवान् पतञ्जलि ही शेष हैं । उनका जो अशेष = सम्पूर्ण अर्थः ( महाभाष्य में प्रतिपादित सिद्धान्त ) उसके लाभ के लिए, प्रार्थयेशेषभूषणम् = शेष है शय्या रूप से भूषण जिसका, अथवा शेष है विभूषण = कण्ठाभरण जिसके उन विष्णु या शिव को प्रार्थये = अभीष्ट सिद्धि के लिए शरण ग्रहण करता हूँ । शेष शिवाधीन है । अतः शिव प्रीति से शेष ( पतञ्जलि की प्रीति ) सुतरां सिद्ध है । अतः पतञ्जलिकृत ग्रन्थों का ज्ञान शिव के आधीन है ।

कथं भूतं शिवम्: अशेषफलदातारं यमुदिश्य प्रवृत्तिर्जायते तत्फलम् फलानाभियत्ता (परिमितिः) तां निरस्यन्नाह–नशेषाणि = अवशिष्टानि लोकेषु परलोकेषु वा फलानि (एतेन अपवर्गमोक्ष) रूपं फलमपि कुक्षीकृत मितिध्वन्यते) तेषां दातारं वरदानेनाशीर्विचनेन चार्पयितारं (शिवं) प्रार्थये । अत्र समास निषेधः शङ्क्यते, किं दातृशब्दः तृन्नन्तास्तृजन्तोवा । यदि तृन्नन्तस्तर्हि 'न लोकेति' निषेधः यदि तृजन्तस्तर्हि तृजकाभ्यां कर्तरीति समास निषेधः तन्न, द्वयोः व्याकरणषष्ठयामेव निषेधो नतु शेषषष्ट्याम् । अतस्तयो र्नात्र प्रवृत्तिः ।

नचाष्टमिद्धयो, नवनिधयः, ऐहलौकिकभोगादयश्च भवाभ्यन्तर एव लभ्यन्ते मोक्षस्तु आत्यन्तिकदुःखनिवृत्तिरूपोऽविद्यानिवृत्तिरूपो वा । स भवाभ्यन्तरे न सम्भवति-तदाह पुनः कथं भूतं भवाब्धि तरणेतरिमिति–– भवः = संसारः स एवाब्धिः = समुद्र इति रूपकम् । यथा–समुद्रो ग्राहमकर तिमिङ्गिलाद्याकान्तः । एवं भवोऽपि–क्रोधलोभेर्ष्याद्वेषरागमदमोहमारादिभिः सङ्क्रान्तः । यतो दुस्तरो भवः, अतो समुद्र साध्श्यम् । तस्य तरणं = पूर्वतटात् पारतटगमनम् । यदि भवोब्धिरेव तदा पारतीरं = मोक्षस्वरुपं, नित्यलोकावाप्तिः जीवो ब्रह्मैव नापरः । 'सोऽहं' 'तत्वमसि' इत्यादि स्वस्वरुपावाप्तिश्च एतदेव तरणम् । अथवा भवरूपस्य अब्धेः तरणं = नाशः निवृत्तिर्वा धातूनामनेकार्थत्वात् । नाम लेते भवसिन्धु सुखाहीं इति मानसे । मोक्ष एव फलन्तु । भावरूपं, ज्ञानविरोधि, यदज्ञानं तन्निवृत्तिरुपम् । जन्मनोरभावः, दुखाभावः, बन्धनाभावश्चैतन्मोक्षस्वरुपम् । तत्र तरि = तरण साधनं, मुक्तिसाधनं, ज्ञानविषयः शिवः । यद्यपि तरन्त्यनयेति = व्युत्पत्था जल तरणसाधनमेवार्थः । सोऽर्थश्च सन्निहितपदघटकतरणशब्देनैव लभ्यते तथापि विशेषणवाचकपदसन्निधाने विशेष्यवाचक पदस्य प्राधान्यम् । इति न्यायेन तरिशब्दस्य साधनमात्रमेवार्थः । अतो मोक्ष साधनीभूताज्ञाननिवृत्तिपूर्वक तत्वज्ञानविषयं शेषभूणं प्रार्थये । किमर्थम् ?

शेषाशेषलाभार्थम्––शेषः = पतञ्जलिः, शेषावतारत्वात् । यद्वाशेष श्री कृष्ण गुरुः तस्य योऽशेषः = सम्पूर्णोऽर्थः, महाभाष्ये प्रतिपादित सकल शब्दानु शासन सिद्धान्त भूतोऽर्थ तस्य व्याकरणशास्त्रसिद्धान्तभूत निखिल निर्णयस्य लाभाय शेषो भूषणमलङ्कारो यस्य तं शिवं प्रार्थये । एतेन शिवाधीनश्शेषः इतिध्वन्यते । शिवप्रीत्याऽभीष्टलाभो भवत्येव । लोके स्वामिनः प्रीत्यां सेवकोऽनिच्छन्नपि फलं प्राप्नोत्येव । साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः ।

पाणिन्यादिमुनीन् प्रणम्य पितरम् रङ्गोजिभट्टाभिधं
द्वैतध्वान्तनिवारणादिफलिकां पुम्भाववाग्देवताम् ।
ढुंण्ढ गौतम-जैमिनीय-वचनव्याख्यातृभिर्दूषितान्
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये (१) ॥३॥

शिवप्रीतेः फलन्तु, वागदेवी यस्य जिह्वाग्रे नरीनर्ति सदामुदा ।
भट्टोजीदीक्षितमहं पितृव्यं नौमिसिद्धये ॥

पितातु सरस्वत्यवतार एवेत्यग्रे वक्ष्यते । २ ।

ग्रन्थ रचनायां प्रेक्षापूर्वक प्रवृत्तये व्याकरणशास्त्रे मुनित्रयस्य प्राधान्यात् "आचार्यदेवो भव' इतिश्रुत्या मुनित्रयस्य नमस्कारात्मकं मङ्गलमाचरन्, ततो मातृदेवोभव, पितृदेवोभव इत्यनया स्वाभिष्टिसंसिद्धये आशीर्वचनोपलब्ध्यर्थं देवतास्वरुपौ पितरौ प्रणम्य, विघ्नध्वंसकं मङ्गलप्रदं गणेशञ्च प्रणमन्, ग्रन्थनिर्माणेप्रवृतिप्रयोजकमिदं "मदिष्ट साधनं, मत्कृति साध्यं, वलवदनिष्टाननु-वन्धि" इत्यादिज्ञानं, प्रवृत्तिप्रवोधकमनुवन्ध चतुष्टयं यथा ।

विषयश्चाधिकारी च सम्बन्धश्च प्रयोजनम् ।
विनानुवन्धं ग्रन्थादौ मङ्गलं नैव शस्यते ॥

एषु=अधिकारि, विषय, सम्बन्ध, प्रयोजनेषु विषयस्य प्राधान्यात् विषय वोधानन्तरमेवान्येषां ज्ञानं जायते। अतोऽस्य ग्रन्थास्य प्रतिपाद्यविषयं प्रदर्शयन्नाह पाणिन्यादिति—

पणिनि–कात्यायन–पतञ्जलीन् (सूत्रवार्तिक भाष्यकारान्) प्रणम्य= प्रतिपाद्यविषयज्ञानसुलभायाशीर्वचनमुपलभ्य, रङ्गोजिभट्टभिद्यं=अभिधीयते

इस श्लोक में महर्षियों, पिता और गणेशजी को प्रणामपूर्वक ग्रन्थ का प्रतिपाद्य विषय प्रस्तावित करते हैं। पाणिन्यादिति=व्याकरण के प्रारम्भिक प्रणेता पाणिनि, कात्यायन और पतञ्जलि को प्रणाम करके (ऋषियों को प्रणाम ज्ञान रूप विषय बोध का वर्द्धक है)। रङ्गोजी भट्ट नामक पिता को प्रणाम करके (माता-पिता के प्रणाम से परम्परागत शक्ति की उपलब्धि के लिए) जो द्वैत=चेतन और अचेतन दोनों के धर्म से ज्ञान रूप विषय द्वैत है। या, जीव माया ब्रह्म आदि दो या उनसे सम्बन्धित नाना प्रपञ्च द्वैत है। वही ध्वान्त=अन्धकार है जो शंसयात्मक ज्ञान है। राग-द्वेष, चिन्ता, शोक क्लेश का जन्मदाता है। उस द्वैत रूप अन्धकार की निवृत्ति है फलं=जिसका ऐसे पुंभाव वाग्देवता=पुरुष स्वरूप है। वाग्देवता=(सरस्वती)

=वाच्यार्थः यनिराचते अभिधा=नाम रङ्गोजिभट्ट इत्यभिधा=नाम यस्य तं पितरं प्रणम्य=मातापितृप्रभावजन्यशक्त्युपलब्धये तयोराशीर्वचनं सम्प्राप्य, कथं भूतं पितरं ? तदाह द्वैतेति--द्वाभ्यां चेतनत्वाचेतनत्वाभ्यां धर्माभ्यामितो ज्ञातः, "एकमेवाद्वितीयं ब्रह्म, नेहनानास्ति किञ्चन इति। श्रुत्याऽवगतं शब्दब्रह्म, द्वितम्। तत्र भवं=आवरणविक्षेपादिना भासमानं द्वैतम्=अज्ञानम् तच्च विषयरूपेण वर्तमानमिथ्याभूतं भावरूपमज्ञानं तदेव ध्वान्तम्=तमः=संशयात्मकं ज्ञानं भ्रमसाधकं रागद्वेषचिन्ताक्लेश जन्यदुःखत्रयरूपम्। तन्निवारणमेव फलं यस्या सा तां द्वैतध्वान्त निवारणादि फलिकाम्, अर्थान्निकभ्रमवारणेन शब्द ब्रह्ममात्रमेवावशिष्यते। यद्वा द्वयोरनेकस्य वा भावोद्विता। नाना प्रपञ्चः तत्संबन्धिज्ञानं द्वैतम् तन्निवारणं फलं यस्याःसा। परमार्थदशायामद्वयं ब्रह्म स्वीक्रियते, प्रपञ्च दशायामन्तः करणवृत्तिविशेषं मिथ्याज्ञानमेव ध्वान्तं तन्निवारम्=अध्यारोपापवादाभ्यां, भजनपूजनाभ्यां, योगाभ्यामाभ्यां, एकोऽहं बहुस्यामित्यारभ्य, सर्वं खल्विदं ब्रह्म, इत्यनुभवाभ्यामविद्यानिवृत्तिः स्वस्वरूपावाप्तिश्च मुख्यं फलं यस्यास्तां पुंभाववागदेवताम्=(इति पितुर्विशेषणम्) पुंसः=पुरुषस्य भावः=लिङ्गस्वरूपविशिष्टोगुणो नराकृतिः यस्या वाग्देवताया सा ताम्, यद्वा 'पुंस्त्वं' भावयते इति पुंभावा सा चासौ वागदेवताच, अथवा आविष्कृतपुरुषशरीरां सरस्वतीं (एतेन पुंसः शरीरधारिणी सरस्वत्येव रङ्गोजिभट्टः) तं (तां) प्रणम्य. ढुण्ढिं=ढुण्ढति विघ्नान् अन्विष्यान्विष्य विनाशयतीति ढुण्ढि गणेशस्तम्। यद्यपि पित्रादि नमस्कारानन्तरं गणपतिप्रणामोऽनुचितः मन्यसे तर्हि गणेशावतारं गणपतिस्वरूपं मङ्गलमूर्तिं प्रतिभया वैदुष्येण वा सरस्वतीस्वरूपं पितरं प्रणम्येत्यर्थः।

स्वग्रन्थस्यान्य ग्रन्थेभ्यः श्रेष्ठत्वं संसाध यन्नाह–गौतमेति–ब्रह्मपुत्रो गोतमः तस्य गोत्रापत्यं गौतमः न्याय सूत्रकर्ता। जैमिनिः=पूर्वमीमांसा सूत्रकर्त्ता व्यासान्ते वासी तयोरिमानि गौतम जैमिनीयानि, न्यायसूत्र मीमांसा

को अर्थात् सरस्वती ही पुरुष का लिंग (चिह्न) विशेष गुणों को धारण की हों, ऐसी प्रतिभा वैदुष्य से सम्पन्न सरस्वती के अवतार मूर्ति पिता को प्रणाम करके, ढुन्ढि=खोज-खोज करके विघ्न विनाश करने वाले गणेश उनको प्रणाम करके कौण्डभट्ट अपने ग्रन्थ की श्रेष्ठता प्रतिपादिन करने के लिए बोले कि गौतम=(ब्रह्मा के पुत्र, न्याय सूत्रकर्त्ता) जैमिनी (मीमांसा सूत्रकर्त्ता) के वचन (प्रणीत सूत्रात्मक ग्रन्थ) की व्याख्या (विश्लेषण) करने वाले शबर स्वामी कुमारिल भट्ट आदि से दूषित=दोष रूप में प्रदर्शित सिद्धान्तों को निरस्त करने के लिए महाभाष्यादि ग्रन्थों में सिद्ध

**नत्वा गणेशपादाब्जं गुरूनथ सरस्वतीम्**
**श्री कौण्डभट्टः कुर्वेऽहं वैयाकरणभूषणम्**

०

सूत्ररूपाणि वचनानि तेषां व्याख्यातरः=वात्स्यायनः तदुत्तरं प्राचीननव्य नैयायिकाः शवरस्वामी तदुत्तरं कुमारिलभट्टादयश्च तैः दूषितान्=दोष-रूपेण प्रदर्शितान् वैयाकरणसिद्धान्तान्। भाष्यकारादिसिद्धनिर्णयान्) उपपत्तिभिः=सिद्धान्तसाधकयुक्तयुक्तिभिः प्रकटये=सत्यतां समर्थये। तथाच तेषां=स्वतन्त्रव्याख्यातॄणां (निरङ्कुशानां दोषयुक्तं वचः दूषये= सदोषान् विरुद्धसिद्धान्तान् प्रामाणिकयुक्तिभिः निरस्ये।

अत्र व्याकरण शास्त्रसिद्धान्तो विषयः, तस्य ज्ञानं प्रयोजनम्, तज्जिज्ञासुरधिकारी साध्यसाधकभावः सम्बन्धः इति ॥३॥

मङ्गलस्य दृढ़ीकरणाय पुनः गणपतिनतिकर्मकमङ्गलमाह-नत्वेति-गणेशपादाब्जं=गणानां=प्रमथादिशिवगणानाम् ईशः=स्वामी, नियन्त्रकः यद्वा गणानां=असङ्ख्यात विघ्नसमुदायानां ईम्=लक्ष्मीं, श्री, स्वरूपम्वा तश्यति नूकरोतीति गणेशः। अथवा गणानां=भक्तसमुदायानां ईं=कामा-दिशक्ति श्यति=समापयति रागद्वेषादिविकारान् छीणीकरोतीति गणेशः तस्य पादाब्जं=चरणकमलं तथा गुरुन्=गृणाति=शिष्याणामज्ञानान्धानां ज्ञानाञ्जनशलाकया चक्षुरुन्मीलयति रहस्यभूतार्थोपदेशेनावरणं वृश्चति। गुरुः गुशब्दस्त्वन्धकारः स्याद् रुशब्दस्तन्निरोधकः तान् (नत्वा) सरस्वतीञ्च=सरो=ज्ञानं तदस्त्यस्यामिति यद्वा सरः=प्रशस्तं पानीयमस्त्यस्यां अथवा सरोऽमृतकुण्डः (विद्ययाऽमृतमश्नुते) ज्ञानामृतमस्यामिति सरस्वती। तां नत्वा=आशीर्वचनेनाभीष्टलाभं लब्ध्वाऽहं कौण्डभट्टः, (यद्यपि आत्म-नाम गुरोर्नाम नामाति कृपणस्य च।

(निर्णीत) उपपत्ति=युक्तियों एवं उपायों से उन निरंकुश पण्डितमन्य स्वतन्त्र व्याख्यान करने वालों के, वचः=वचन (व्याख्यान) को दूषये=दूषित करता हूँ। अर्थात् दोषयुक्त व्याख्यानों को युक्तियों से निरस्त करता हूँ।

नत्वेति—मङ्गल को मस्त (सुदृढ़) करने के लिए पुनः गणेश, गुरु और सरस्वती को प्रणाम करते हैं। प्रथमादि गुणों के स्वामी भगवान् गणेशजी के चरणकमल को, अज्ञान रूप अन्धकार दूर करने वाले गुरु को, ज्ञानमयी सरस्वती को नमस्कार करके, मैं (कौण्ड भट्ट) वैयाकरण भूषण सार विविध अर्थ का प्रतिपादक और व्युत्पत्ति ज्ञान लाभ के लिए भूषण उपयोगी ज्ञानवर्द्धक तत्वभरा ग्रन्थ की रचना करता हूँ।

**प्रारीप्सितप्रतिबन्धकव्यूहोपशमनाय कृतं श्रीपतञ्जलिस्मरणरूपं मङ्गलं शिष्यशिक्षार्थं निबध्नंश्चिकीर्षितं प्रतिजानीते—**

श्रेयस्कामो न गृह्णीयात् जेष्ठापत्य कलत्रयो, ।। इति स्वनाम ग्रहणं स्मृतिविरुद्धम् । नथापि वैखरीवाण्यां स्वनामग्रहणे स्मृतिविरोधः, नतु लेखने । यद्यपि रामो द्विर्नाभिभाषते, गोनर्दीयस्त्वाह, शतातपोऽब्रवीत्, इत्यादौ वैखरी विषयत्वेन स्वनामोच्यारणमसङ्गतं प्रांतभाति, तथापि कर्तव्यार्थक विषयवोधस्थले उत्कर्षादि यशोलाभाय स्वनामोच्चारणेऽपि न दोषः । अत आह मनुः अभिवादे (नमस्कारकाले) 'असौनामाहं त्वामभिवादये, स्वनाम कीर्तयेदिति । एतेन अत्यावश्यक स्थले न प्रत्यवायः) वैयाकरणभूषणं = वैयाकरणानां-र्विविधार्थप्रतिपादकव्युत्पत्तिज्ञानवतां भूष्यतेऽनेनेति भूषणं तदहं कुर्वे = विविधगुणविशिष्टं करोमि । अतएवायं ग्रन्थो व्याकरणस्य श्रीरस्ति ।।४।।

पूर्वं कृतस्य समात्प्यर्थंकमङ्गलस्य प्रयोजनमाह प्रारिप्सित इतिप्रारिप्सितस्य = प्रारब्धुमिष्टस्य, प्रारम्भ निष्ठा या विषयता तद्बोधिका या इच्छा तस्याः विषयतया आश्रयस्यास्य यानि प्रतिबन्धकानि-विघ्नादीनि तेषां = सम्भावित विघ्नाना मुपशमनाय = दमनाय, समाप्तये वा कृतं = वितृस्तं फणि स्मरणरूपं = शेषाख्यं धामभामकमिति व्यासवचनात् फणिः = शेषः, तदवतारः पजञ्जलि तस्य स्मरणरूपं मङ्गलं शिष्यशिक्षार्थं = मद्गुरवो मङ्गल माचरितवन्त इति मयाऽपि मङ्गलमाचरणीयमिति निबध्नन् = ग्रन्थ घटकीकुर्वन्, चिकीर्षितं = वोधयति फणिभांषित इति—

निर्विघ्न समाप्ति के उद्देश्य से किये हुए मङ्गल का प्रयोजन प्रस्तुत करते हैं। प्रारीप्सित इति—ग्रन्थ निर्माण के प्रारम्भपूर्वक समाप्ति की अभिलाषा का प्रतिबन्धक = सभी प्रकार के सम्भावित विघ्न उनके उपशमन = उन्मूलन के लिए किया हुआ श्री = श्रीलक्ष्मीरमणं नौमि, फणि = अशेष फलदातारम् । शेष भूषणमित्यादि स्मरण रूप मङ्गल शिष्यों की शिक्षा के लिए ( कि मेरे गुरुजन मङ्गल करते थे, मुझे भी मङ्गल करना चाहिए ) निबन्धन् = ग्रन्थ से सम्बद्ध करते हुए चिकीर्षितं = कर्त्तव्य अर्थ के अभिलषित ज्ञान को प्रतिज्ञा रूप में प्रतिपादन कर रहे हैं। फणिभाषित = इत्यादि । फणि = पतञ्जलि से भाषित = प्रतिपादित महाभाष्य ही समुद्र है । जैसे— देव-दानव द्वारा समुद्र के मन्थन से कौस्तुभ मणि का आविर्भाव हुआ, वैसे ही महाभाष्य के मन्थन से भट्टोजिदीक्षित द्वारा शब्द कौस्तुभ नामक ग्रन्थ उधृत = प्रकट हुआ । इस शब्द कौस्तुभ ग्रन्थ से निर्णीत अर्थ को संक्षेप से इस ग्रन्थ का प्रतिपादन

³फणिभाषितभाष्याब्धेः⁴ शब्दकौस्तुभ उद्धृतः ।
तत्र निर्णीत एवार्थः संक्षेपेणेह⁵ कथ्यते ॥१॥

उद्धृत इति । अत्र अस्माभिरिति शेषः । भाष्याब्धेः शब्दकौस्तुभ उद्धृत इत्युक्तिस्तु शब्दकौस्तुभोक्तानामर्थानामाधुनिकोत्प्रेक्षितत्वनिरासाय । अन्यथा तन्मूलकस्यास्य ग्रन्थस्याप्याधुनिकोत्प्रेक्षितसारत्वापत्तौ पाणिनीयानामनुपादेयतापत्तेः । तत्र निर्णीत इत्युक्तिरितोऽप्यधिकं जिज्ञासुभिः शब्दकौस्तुभे द्रष्टव्यमिति ध्वनयितुम् ॥१॥

०

फणिना = पतञ्जलिना भाषितं = परश्रवणगोचरीकृतं चेद्भाष्यं—

सूत्रस्थपदमादाय वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदोविदुः ॥

तदेवाब्धिः तस्मात् महाभाष्यरूपसमुद्रात् शब्द रूपः कौस्तुभः = शब्दकौस्तुभनामाख्यो ग्रन्थो, मणिश्च उद्धृतः = निष्कसितः, प्रकटीकृतः । पृथक्कृतो वा । कुं = भूमण्डलं स्तुभ्नाति = व्याप्नोति संचालयतीति कुस्तुभो = विष्णुः, समुद्रश्च । तत्रभवो मणिः कौस्तुभः, 'कुस्तुभोमहतेजा सूर्यकोटिसमप्रभः" । यथा-मन्थनाश्रयात् समुद्रान्निष्कासितः कौस्तुभः, सर्वार्थप्रकाशकः । एवं महाभाष्यान्निष्कासितो भट्टोजिदीक्षितकृत शब्दकौस्तुभनामाख्यो ग्रन्थो व्याकरणशास्त्रस्य सिद्धान्तभूतसर्वार्थ प्रकाशक = इति व्यज्यते । तत्र = शब्दकौस्तुभे निर्णीतः = प्रमाणैः ( वस्तु तत्वावधारणी ) कृतः तद्विषयीभूत एवार्थः = धात्वर्थः, नामार्थः, समासार्थः, शक्त्यर्थः निपातार्थादि, प्रकृतिप्रत्ययाद्यर्थश्च, इह = अस्मिन्ग्रन्थे, संङ्क्षेपेण लघुनोपायेन अस्माभिः = कोण्डभट्टैः कथ्यते = हर्यादिनिबद्धकारिकाभिः प्रति पाद्यते ।

किया जाता है । अर्थात् धातु का अर्थ लकारार्थ, नामार्थ, समासार्थ शक्त्यर्थ निपात-नार्थादि स्फोटार्थ का विषय विवेचन किया गया है । अस्माभिः = भट्टोजी दीक्षितैः ।

महाभाष्यरूपी समुद्र से शब्द कौस्तुभ ग्रन्थ आविर्भूत हुआ है । इस कथन से शब्द कौस्तुभ में प्रतिपादित अर्थों की आधुनिक (नवीन सिद्धान्त का ग्रन्थ) ऐसी उत्प्रेक्षा = सम्भावना को निरस्त करने के लिए अन्यथा = यदि उक्त उदाहरण न होता तो महाभाष्यमूलक इस ग्रन्थ के भी नवोन सिद्धान्तकता की सम्भावना का सारांश = निचोड़ इस ग्रन्थ में है । यह आपत्ति होती तो पाणिनीय शास्त्र के अध्येताओं के लिए अनुपयोगी सिद्ध होता । तत्र निर्णीत = शब्द कौंस्तुभ में निर्णीत इस कथन का तात्पर्य यह है कि भूषण सार से अधिक जिज्ञासुओं के लिए शब्द कौस्तुभ ग्रन्थ देखना चाहिए ।

कारिकायां भाष्याब्धेः शब्दकौस्तुभउद्घृत इत्युक्तं, तेन शब्दकौस्तुभ नामाख्ये ग्रन्थे ये विषयाः प्रतिपादिताः सन्ति तेषामाधुनिकोत्प्रेक्षितत्व-निरासाय = 'आधुनिकोऽयंग्रन्थः' एतादृशी या उत्प्रेक्षा = सम्भावना तस्या अपाकारणाय उक्तमिति शेषः। तेन नायमाधुनिक ग्रन्थः, किन्तु प्राचीन भाष्यादि ग्रन्थ सारभूतः प्रामाणिकार्थविशिष्टश्च। अन्यथा = भाष्याब्धेरिति विशेषणाभावे भाष्यमूलकस्य = पातञ्जलभाष्याधारकस्यास्य भूषण-सारनामाख्यग्रन्थस्य "आधुनिकोऽयंग्रन्थः" इत्युत्पेक्षा = सभावनासम्भवात् असारत्वापत्तौ = नायं व्याकरणसार इति। संशये जाते सति पाणिनीयानां = पाणिनिप्रियच्छत्राणां कृते अनुपादेयतापत्तेः। अनुपयोगितायः दोष आपति-व्यति। तत्र निर्णीत इति कथनेन यस्य जिज्ञासा अधिकमेधते तेन अस्माद् ग्रन्थादधिकजिज्ञासा शब्दकौस्तुभग्रन्थादुपशमपितव्यइति ध्वनयितुं = व्यञ्ज-यितुं कारिकाया उपयोगित्वमनुसन्धेयम् ॥ १ ॥

( अथ धात्वर्थनिर्णयः )

अथ = मङ्गलाचरणानन्तरं धातोरर्थः सिद्धान्तयिष्यते। यतोहि वैयाकरणमते स्फोट एवार्थबोधजनकः, स्फुटति = प्रकाशते, विकसति–शाब्द-बोधविषयोभवत्यर्थोऽस्मादिति स्फोटः अथवा परावागेव स्फुटति = पश्यन्ती-मध्यमा-वैखरीरूपेण विकसतीति स्फोटः परावाग्रूपः। परमार्थतस्तु वाक्य-स्फोट एवार्थवान्, "वाक्यस्फोटोऽति निष्कर्षे तिष्ठतीति मतस्थितिः।" अति-निष्कर्षे = अत्यन्तनिश्च्यूतपरिणामे परमार्थतः = समाजेऽर्थ बोधजनकदशायां वाक्यस्फोटे एवार्थबोधजनकता तिष्ठति। मञ्जूषायान्तु प्रतिवाक्ये शक्ति ग्रहोऽसम्भवः। लधुनोपायेन वाक्यस्य व्याख्यानं कर्तुमशक्यं, तस्मात्तत्र पदानि पृथक्कृत्य पदे प्रकृतीः प्रत्ययाँश्च प्रविभज्य, कल्पिताभ्यां प्रकृतिप्रत्य-याभ्यांमन्वयव्यतिरेकाभ्यां प्रकृत्यर्थप्रत्ययार्थविभागं शास्त्रमात्रविषयः

समाज में अर्थ की वास्तविक बोधजनक शक्ति वाक्यरूप स्फोट है। जिससे अर्थ स्फुटित ( विकसित ) हो उसे शब्द कहते हैं। यानी शब्द ही अर्थ रूप में कमल की तरह खिलता है। शब्द-अर्थ दोनों का सम्बन्ध और फल = परिणाम परिस्फुरित हो। ऐसा शब्द लोक में अर्थ का वाचक होता है। शब्द से पूर्णतया ज्ञान का प्रस्फुरण होता है। पदों के इस समुदाय को वाक्य कहते हैं। जिसमें एक क्रिया प्रधान हो, अन्य कर्म, संख्या, काल, अन्य क्रिया-विशेषण हों। उसी निर्गुण क्रिया का वाचक धातु कहाता है। सगुण ( लिंग संख्यायुक्त ) क्रिया प्रत्यय में रहती है। धातु में नहीं। आख्यात = तिङन्त स्थल में क्रिया प्रधान होती है। शाब्दबोध = शब्दोच्चारण से जन्य ज्ञान में धात्वर्थ क्रिया का प्राधान्य महर्षि यास्क वचन ( भावप्रधानं ) में प्रमाणित है। सभी प्रातिपदिक का मूल धातुएँ हैं। अतः स्वभाव से धातु के अर्थ की आकांक्षा जागृत हुई।

[1]प्रतिज्ञातमाह—फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ २ ॥

कल्पयन्तिस्म आचार्याः । 'विभाषा सुप' इति सूत्रे कैयटः, अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययानामिह शास्त्रेऽर्थवत्ताकल्पनं, तत्तदवयवानां तत्तदर्थंवोधनेन समुदायस्य तत्तत्पदरूपसमुदायार्थंवोधनेन वाक्यार्थंवोधने तात्पर्यं ऋषीणाम्" तेषाम्मूलं स्फोट एव वर्ण-पद-वाक्य तज्जातिः तदखण्डाद्युपाधिभेदेन (ध्वनिरूपव्यञ्जकभेदेन) अष्टधाविभज्यते । मुख्यवाचकता वाक्यस्फोटे, अन्येषु तु शास्त्रीयकार्यंमात्रनिर्वाहकता वोध्या । प्रकृतिसत्वेप्रकृत्यर्थंसत्वमन्वयः तदभावे तदभावो व्यतिरेकः । एवं प्रत्ययेऽपि, तावन्वयव्यतिरेकिसाहाय्येनार्थवन्तौ भवतः । तथाच पदसमूहो वाक्यमर्थसमाप्तौ समर्थम् । अस्य ग्रन्थस्य आरोहक्रमानुसारेण प्रथमं पदस्फोटोऽभीप्सितः । पदञ्च सुबन्तं तिङन्तञ्चेति ग्रन्थकाराभिमतम् । व्यापारप्रधानशाब्दबोधश्चाभीप्सितः । सच व्यापारो धात्वर्थः, एकतिङन्तार्थमुख्यविशेष्यकबोधजनकता च । शाब्दबोधे प्राधान्येन धातुजन्यव्यापारार्थबोधः कारणम् । यद्यपि धातोरधिकारे द्वौ प्रत्ययौ स्तः । कौ ? तिङ्कृतौ । तत्र कृत्स्थले प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोः प्रत्ययार्थस्यैव प्राधान्यमिति न्यायः प्रचलति । तिङ्स्थले भावप्रधानमाख्यातं सत्वप्रधानानि-नामानीति महर्षि यास्कवचनं प्रभवति । "भूवादयो धातव" इति सूत्रेभाष्ये 'पचति, भवति' इति वाक्ये एकत्व-(सङ्ख्या) विशिष्टाश्रयवृत्ति वर्त्तमानकालिकविक्लित्यनुकूलोव्यापारः । इत्यादौ व्यापारप्राधान्यवोधकशाब्दबोध दर्शनात् धातुजन्योपस्थितिरपि कारणमुक्त वर्तते । उणादयो बहुलमितिसूत्रे "अर्थवत्सूत्रसार्थक्याय, अव्युत्पन्नान्यपिप्रातिपदिकानि नूनं स्वीकरणीयानि तथाच "नाम च धातुजमाह" व्याकरणे 'शकटस्य तोक' (अपत्य) मिति मते सर्वेषां प्रातिपदिकानां व्युत्पन्नत्वंस्वीकर्त्तव्यमेव । तेषां मूलं=प्रकृतिः धातुरेवेति निश्चित्य, 'धातुजन्नाम' इति भाष्य प्रामाण्याच्च सर्वपदमूलप्रकृतिधात्वर्थ एव, सर्वाणि प्रातिपदिकानि धातुजान्येव । वाक्यार्थबोधे धात्वर्थंव्यापारस्य प्राधान्यं तत्रैव शाब्दबोधीयाविशेष्यता । तन्निरूपणमावश्यकमिति आचार्यो धात्वर्थनिरूपणमारभते ।

धात्वर्थ निर्णस्य या प्रतिज्ञा कृता तां स्फुटं ब्रूते-फलव्यपारयोरिति तत्र 'ओस्' विभक्तेः कोऽर्थ ? "द्योतिकाः वाचिकाः वा स्युः द्वित्वादीनां विभक्तयः"[2]

धात्वर्थ निर्णय की हुई प्रतिज्ञा ( संकल्प ) का व्याख्यान प्रारम्भ करते हैं ।

फलव्यापारयोरिति—ओस् विभक्ति का वाचक अर्थ है । फल और व्यापार

इति हरिवचनात् वाचिकापक्षे वाचकोऽर्थः। अतः लफव्यापारवाचकोधातु। फलव्यापारनिष्ठवाच्यतानिरूपितवाचकतावान् धातुः। धातुनिष्ठवाचकतानिरूपितवाच्यतावन्तौ फलव्यापारौ, वाच्यवाचकावः सम्बन्धः फलितः। द्योतिकापक्षे-ओस् विभक्तिः अधिकरणकारकस्य द्योतिका। अनुभवेन फलव्यापारौ आधेयौ स्तः। तत्र अधिकरणत्वं न सम्भवति कथमोस् इति। अतो वैषयिकाधिकरण सप्तमी मन्तव्या फलव्यापारौ विषयौ विषयिज्ञानं तत्रज्ञापकोधातुः। सम्बन्धता च वाच्यवाचकभावरूपा। यदि अभिव्यापकाधिकरण सप्तमी स्वीक्रियते यथा तिलेषु=तिलमात्रवयवेषु अभिव्यापकं=सर्वावयव व्याप्तं तैलम्। एवं धातुषु धातुमात्रावयवेषु व्याप्तौ फलव्यापारौ, यतोहि दधाति अर्थाविति धातुः तदर्थश्च फलव्यापाररूपः। यथा तिलविशिष्टं तैलं तथा तयोर्विशिष्टो धातुरिति तदा व्याप्यव्यापक सम्बन्धः फलति। कदाचिद् धातुभेदेन फलव्यापारयोर्भेदेन च व्याप्यव्यापक भावसम्बन्धोऽपि सफलयितव्यः। अथवा-यथा शब्देऽर्थबोधकतानिरूपित कारणता, कार्यता च, एवमर्थेऽपिकार्यता कारणता च तिष्ठति। अत्र

प्रमाणम्— शब्दः कारणमर्थस्य सहि तेनेवोपजन्यते।
बुद्धिविषयादर्थाच्छब्दः प्रतिपद्यते॥

शब्दोच्चारणानन्तरमेवार्थो जन्यते। बुद्धिविषयीभूतो यादृशोऽर्थः तदनुकूलश्शब्द उच्चार्यते। उभयत्र कार्यता कारणता च। एवं फलव्यापारयोरित्यत्रापि आधेयताअधिकरणताच यथावसरं ज्ञेया। अतएव धातुत्वञ्च, क्रियात्वञ्च धतुत्वञ्चेति, क्रियार्थता, अन्योन्यसंश्रयः स्पष्टः तस्मादस्तु यथाकरम्। सम्बन्धश्च जन्यजनकभावरूपः। अथवा आरोपिताधिकरणं सप्तम्यर्थः। देवदत्तः ग्रामेतिष्ठति, ग्रामोदेवदत्ताधीनस्तन्नायकत्वात्। ग्रामे

( क्रिया ) का वाचक धातु है। उसका अर्थ फल व्यापार हुआ। धातु शरीर है। तो फल व्यापार प्राण है। ये धातु के सर्वावयव में व्याप्त हैं। फल और व्यापार को आश्रय की अपेक्षा है। फलाश्रय व्यापाराश्रय कौन हो। उसके लिए तिङ्का स्मरण किया जाता है। तिङ्का अर्थकर्त्ता कर्म है। व्यापार का आश्रयकर्त्ता, फल का आश्रयकर्म होते हैं। धातु के सर्वस्व फल-व्यापार में व्यापार का प्राधान्य है। क्योंकि फल जन्य है, व्यापार जनक है। तिङर्थ=कर्त्ता, कर्म, संख्या, काल सभी व्यापार (क्रिया) में विशेषण है। पचति कहने पर सभी अर्थ की प्रतीति होती है। दो धात्वर्थ ( फल-व्यापार ) चार तिङर्थ ( कर्त्ता, कर्म, संख्या, काल ) पचति के शाब्दबोध में यथायोग्य समानासमान है। व्यापार उनमें मुख्य है। अन्य गौण हैं। विशेषण हैं।

वास्तविकमधिकरणम्, देवदत्ते आरोपितम् । यद्वा प्राणाधारश्शरीरः शरीराधारः प्राणः । उभयत्र आधारताऽधिकरणता च दृश्यते । फलव्यापारौ प्राणः, धातुश्शरीरम् । प्राणं बिना शरीरं व्यर्थं, तौ बिना धातुरपि । सर्वत्र वाच्यवाचकभाव उपलक्षणीभूतः ।

फलव्यापारयोरित्यत्र द्विवचननिर्देशेन ( द्वन्द्वनिर्देशाद्वा ) फलबोधिका व्यापारप्रबोधिका च शक्तिः पृथगस्तीति सूच्यते । पृथक् शक्तिस्वीकारे 'स्तोकं पचति' अत्र फलस्यपदार्थत्वादेव स्तोकस्याभेदेनान्वयः । इषद्धसतीत्यत्र ह्रास्यरूपफले इषदिति अभेदेनान्वेति । ग्रामस्य संयोगरूपे फले भेदेन ( वृत्तित्व=आधाराधेयभाव ) सम्बन्धेनान्वय इति प्राञ्चः । ननु पृथक्शक्तिस्वीकारे फलव्यापारयोरुद्देश्यविधेयभावेनान्वयोऽपि सम्भविष्यति । यतोऽन्वयस्य प्रयोजिका पृथगुपस्थितिरिति, पुत्र इष्यते इति फलप्रधानबोधकभाष्यञ्चविरुद्धयते, तस्माद्विशिष्टे शक्तिः स्वीकर्त्तव्या । नव्यमतेतु कर्तरिप्रत्ययेसति फलविशिष्टेव्यापारे शक्तिः । कर्मणि प्रत्ययेतु व्यापारविशिष्टे फले शक्तिः । "चैत्रेण तण्डुलः पच्यते" इत्यत्र तृतीयार्थैकत्वसंख्याविशिष्टचैत्राभिन्नाश्रयवृत्तिवर्त्तमानकालिको यो व्यापारः तज्जन्या तण्डुलाभिन्नैकत्वविशिष्टाश्रयवृत्ति विक्लित्तिः । इति फलप्रधानज्ञानदर्शनात् । अतएव "सुप् आत्मनः क्यच्" सूत्रे भाष्ये 'आत्मनः पुत्रमिच्छतीति' तात्पर्येण पुत्रीयतीति रूपं जायते । 'आत्मनः पुत्र इष्यते' इति तात्पर्येण पुत्रीयतीति रूपं न भवति । कथं ? भिन्नार्थत्वात् । सा च भिन्नार्थता फलव्यापारयोः विशेषणविशेष्यभावव्यत्यासप्रयुक्ता । व्यत्यासेतु फलं विशेष्यं व्यापारश्च विशेषणम् । पदार्थान्तरत्वकल्पनायां विक्कित्यनुकूलो व्यापारः, व्यापारजन्या विक्लित्तिरिति च पृथक् पदार्थान्तरत्वम् ।

यदि प्राचीनैरुभयत्र व्यापारमुख्यविशेष्यकबोधोऽङ्गीक्रियते तदा निरुक्तं भाष्यं निरभिप्रायकं स्यात् । तन्मा भूदिति फलप्रधान शाब्दबोधो नव्यैः प्रमेयत्वेन स्वीक्रियते । भाष्यसम्मतत्वात् नवीनमतं न्याय्यम् । यथोत्तरं मुनीनां प्रामाण्यात् । एकपदजन्ययोरुद्देश्यविधेयभावोऽपि नोचितः । तस्मात् विशिष्टे शक्तिः ।

ननु फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले शक्तिस्वीकारे ग्रामं गच्छतीत्यत्र संयोग रूपेफले ग्रामस्यभेदेन (वृत्तित्व सम्बन्धेन ), स्तोकं हसतीत्यत्र स्तोक पदार्थस्य अह्लादरुपे फलेऽभेदान्वयो न स्यात् । यतो विशिष्ट शक्तिवादे फलं पदार्थैक देशोभवति, पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशे' इति न्यायो विरुद्धयते । यदि न्यायो नाङ्गीक्रियसे तदा नित्योघट इत्यत्र नित्यपदार्थस्य घटनिष्ठघटत्वेरुपे पदार्थैकदेशेऽन्वयसम्भवात् । तदापि

शुद्धं स्यात्। अतो न्यायो मन्तव्यः। तेन घटत्वस्य पदार्थैकदेशतया तत्र नित्य पदार्थस्यानन्वयेन तद्वावयस्याप्रामाण्यं सङ्गच्छते। अतो न विशिष्टे शक्तिः, यदि घटपदस्य घटत्वे लक्षणां कृत्वा नित्योघट इति निर्वक्तुं शक्यसे तर्हि तन्न, प्रायिकत्वात् अप्रसिद्धत्वाच्च। यत्र विभिन्नपदजन्या उपस्थितिः तत्र सम्बन्धो आकाङ्क्षाभाष्यः। प्रसङ्गे तु धातुनैव फलव्यापारयोरूप पस्थितौ विभिन्नपदजन्योपस्थितित्वाभावेन उभयोराकाङ्क्षाभाष्यत्वं न स्यात्। न च तिङ्पदात् एककालावच्छेदेनकर्तृ कर्म संख्या कालादीनां वोधो न स्यात् विभिन्नाभिः शक्तिभिरुपस्थिते पदार्थे सकृदुच्चरितन्यायस्य प्रवर्तनात्। कारिकायां द्वन्द्वनिर्देशाच्च एकधर्मावच्छिन्नस्यैकधर्मा वच्छिन्नेऽन्वयरुपसाहित्यन्न संगच्छते। अतो न विशिष्टे शक्तिः। न च पृथक पृथक् शक्तिः। एक वृन्तगतफलद्वयन्यायेन खण्डशः शक्तिः। परन्तु धातु निष्ठाशक्तिः खण्डशोदृश्यते तिङुपस्थिता शक्तिरेकैव तेन न कश्चन दोषः।

फलव्यापारयो : धात्वर्थत्वे किं मानम्? भूवादयो धातव इति सूत्रम। तत्र 'भू' आदिषु वा सादृश्यं क्रियावाचकत्वेन गृह्यते। यथाभूश्च वाश्च भूवौ; इति द्वन्दः, आदिश्च आदिश्च आदी, एकशेषः, एक आदिशब्दः प्रकारवाची, अपर आदिशव्दः प्रभृत्तिवाची। भूशब्दस्य प्रभृतिवाचिनि "आदि' शब्देऽन्वयः वाशब्दस्य प्रकारवाचिन्यादिशंब्देऽन्वयः, भूप्रभृतयो वासदृशाः धातवः। सादृश्यंञ्च क्रियावाचकत्वेन गृह्यते। अत्र नियामकम्। सादृश्य प्रतियोगितावच्छेदकीं भूतो यो धर्मः तद्धर्मव्यापकी भूतो यो धर्मस्तेनैव धर्मेण सादृश्यं गृह्यते यथा चन्द्रवन्मुखमित्यत्र सादृश्य प्रतियोगी चन्द्र, प्रतियोगितावच्छेदकी भुतोधर्मः चन्द्रत्वं तद्व्यापको धर्म आह्लादकत्वंम्, तेनैव धर्मेणसादृश्यं गृह्यते। एवं सादृश्य प्रतियोगी वा तद्धर्मो वात्वं तद्व्यापको धर्मः क्रियावाचकत्वम्। अतः क्रियावाचिनो भ्वादयो धातुसंज्ञकाः (तेन क्रियार्थको धातु रितिलब्धः फलवाचकत्वप्रतिपादनप्रक्रिया तु वा प्रभृतयो भुसदृशाः धातव इति विपरीतरतिः सादृश्यञ्च फलत्वेन ग्राह्यम्)। भू सत्तायामिति धात्वर्थनिर्देशः प्रमाणम्। सत्ता भू धातोः फलम्। एवं सर्वेषां धातूनांमर्थनिर्देशः फलस्य वाच्यत्वे मानम्। स्वरितेतानां ञितांञ्च धातूनां क्रियाफले कर्तारमभिप्रैतस्तदा आत्मनेपदं भवति शुद्ध इत्यपि मानम्।

॥ आश्रयेतु तिङः स्मृताः ॥

एवं धातुना स्मृतौ फलव्यापारौ निराश्रयो न तिष्ठतः। कस्तयोराश्रय इत्याकाङ्क्षायामाह आश्रय इति–अत्र सप्तमी जनकार्थिका। आश्रयता वाचकतान्तस्तिङः स्मरणविषयाः। अथवा तिङ्शब्दस्य तिङर्थेलक्षणा। अर्थश्च कर्तृ कर्मरुपः। यद्वा तिङः तिप्तस्झीत्यादयः, यतोहि सर्वे प्रत्ययाः

कर्तृ कर्मवाचकाः। अतस्ते फलव्यापारयोराश्रयत्वेन स्मर्यंते। व्यापाराश्रयः कर्ता फलाश्रय कर्म इति, यथा मन्त्रिणः लोकसभां गच्छन्ति। संयोगानुकूलव्यापारो गमधात्वर्थः। संयोगरुपफलाश्रयः लोकसभा, तदनकूलव्यापाराश्रयो मन्त्रिण इति। 'दत्तः तण्डुलपचति' बिक्लित्यनुकूलव्यापारो पचधात्वर्थः। विक्लित्याश्रयत्वात्तण्डुले कर्मता। तण्डुलंपदार्थस्य वृतित्वसम्बन्धेन विक्लित्त्यावन्वयः। विक्लित्तिश्च तण्डुलस्यावयवानां शिक्षिलीभवनम्। शैथिल्यञ्च तप्तमुदकं तज्जनितं वाष्पं तत्कृतं तण्डुलस्यावयवानां मृदुलत्वं। तादृश विक्लित्तिमानपदार्थ एव ओदनमभिधीयते। एवंमुदकस्य तापः। वाष्पणं प्रस्वेदनं शिथिलीभवनं मृदुलत्वादि फलसमुदायो विक्लित्तिः। यथा फलजनको व्यापारः. अग्निकाष्ठ सयोगः फूत्कारः प्रज्वालनं, अधिष्ठापनादिः, अधिश्रयणान्त क्रियाकालापो व्यापार इत्युव्यते। तेन विक्लेदनं मृदुलत्व प्रापणं विक्लत्ति तदाश्रयः कर्म = तण्डुलमिति। व्यापाराश्रयो देवदत्त इति कर्ता च स्मृति विषयो जातः।

ननु धातुना स्मृतयोः फलव्यापारयोः कस्य प्राधान्यंम् तन्निर्वक्तुमाह 'फलेप्रधानं व्यारस्तिङर्थस्तु विशेषम्।'

फले = इति (वैषयिका सप्तमी) फलविषये उत्पादकत्वेन व्यापारः स्मर्यते। यतः फलजनको व्यापारोऽतस्तस्य प्राधान्यम्। यथा नेतारः दीनानुद्धरान्ति। अत्र नेत्र्यभिन्नैककर्तृको दीनकर्मको वर्तमानकालिक उद्धरणानुकूलव्यापार इति बोधः। अत्र दीनोद्धरणं फलं तस्य जनकस्तदनुकूलव्यापारस्तस्य प्राधान्यम्। नेतार इति कर्ता, दीन इति कर्म। व्यापारस्य प्राधान्ये प्रमाणन्तु। 'भावप्रधानमाख्यतं सत्वप्रधानानि नामानि' इति महर्षि यास्कवचनम्। भावस्तु = भावना, ईहा, चेष्टादिना बोध्यः आख्यातं = तिङन्तघटितं वाक्यं क्रिया प्रधानं भवतीत्यर्थः। नामानि (प्रातिपदिकानि) द्रव्यप्रधानं भवति। लिङ्गसंख्यान्वितं द्रव्यम्। तदिति परामर्शयोग्यं विशेष्यभूतं वा। एवं वैयाकरणमते 'कर्तृकर्मसंख्याकालाः' एतत्सर्वं धात्वर्थं व्यापारस्य विशेषणानि भवन्ति। यथा 'पचति' इत्युच्चारणेन षडर्थाः गम्यन्ते। चत्वारस्तिङर्थः = कर्तृकर्मसंख्याकालाः। द्वौ धात्वर्थौ फलं तदनुकूलव्यापारश्च। तेन कर्तृकर्मसंख्याकालफलव्यापाराः 'पचति' इत्यस्य शाब्दबोधे भासन्ते। तेषु व्यापारस्य प्राधान्यमन्येषां तिङर्थानां विशेषणत्वम्।

धातुरिति। अत्र स्मृत इति वचनविपरिणामेनान्वयः। फलं विक्लित्त्यादि[२]।

०

ननु धातुः स्मृताः इति विशेषणं न युक्तम्।, समानवचनकत्वनियमात्। उक्तञ्च—या विशेष्येषु दृश्यन्ते लिङ्गसङ्ख्या विभक्तयः।
प्रायस्ता एव कर्तव्या, समानार्थे विशेषणे॥

तदनुकूलयितुमाह वचनेति—वचनस्य=वहुवचनस्य विपरिणामेन= एक वचने परिवृत्य सम्वन्धः समन्नयितव्यः। अर्थात् एवचनं कृत्वान्वयो विधेयः। यत्र विशेष्यवाचकपदोत्तरविद्यमाना या विभक्तिः तद्योतिता या सङ्ख्या, सैव विशेषणे विवक्षिता तद्विरुद्धसंख्या अविवक्षिता चेत्तत्र समान वचन कत्व नियमः। यन्नैवम् तन्नेवं। अत्र विशेष्यवाचकपदं धातुः। तदुत्तर विभक्तिः 'सु' इति तत्तात्पर्यसङ्ख्या एकत्वसंख्या तद्विरुद्धसंङ्ख्या द्वित्वं वहुत्वञ्च, तयोरविवक्षायां समानवचनकत्वसाधनार्थं वचनविपरिणामः कर्तव्यः। वेदाः प्रमाणमित्यादौ तु न तथा। एतन्मुखसुखार्थं वाग्विलासार्थम्वेत्युक्तम्। वस्तुतस्तु-वचन विपरिणामो न कर्तव्यः। यतोहि वहुद्रव्यसत्वे एकस्य द्विकस्य वा क्रपणार्हं वस्तु एकेन द्विकेन वा रुप्यकेण सम्बद्धयते। एवं यस्य यन्मूल्यं तस्य तेन समन्वयितव्यम्, नतु सर्वम्।

धातु में एकवचन है स्मृताः में बहुवचन। दोनों में समान विभक्ति न होने से सम्बन्ध साधु नहीं बैठता है। अतः वचन का विपरिणाम ( परिवर्त्तन ) करके अन्वय करते हैं। धातुः स्मृतः। वस्तुतः वचन विपरिणाम की भी आवश्यकता नहीं है। स्मृत का बहुवचन एकवचन का भी बोध करायेगा। दस रुपये वाला एक रुपये की भी वस्तु खरीद सकता है। अनेक रुपये की भी। ऐसे ही बहुवचन में एकवचन भी प्रयोग हो सकता है। एकवचन में बहुवचन का प्रयोग नहीं हो सकता। इतनी विशेषता अवश्य है।

फलंविक्लित्ति—फल का अर्थ समझाते हैं। जिस वस्तु के लाभ के लिए क्रिया-कलाप में प्रवृत्ति ( रुचि ) होती है। उसे फल कहते हैं। विक्लित्ति भात कोमलता ( काठिन्य के लिए पाक क्रिया में प्रवृत्ति होती है। वही फल है। अध्ययन क्रिया में ज्ञान फल है। नेवृत्व में समाज कल्याण फल है। भोजन का भूख निवृत्ति फल है। शास्त्र पढ़ने में हित अनहित का ज्ञान फल है।

यह फल पारिभाषिक है। लोक में प्रसिद्ध आम-अमरूदादि नहीं। लक्षण—जो धातु का अर्थ हो, और धात्वर्थ क्रिया से जन्य हो, उसे फल कहते हैं। जैसे—गुरुः पाठयति, ज्ञान प्रापण फल है। वह पठ् धातु का अर्थ है और पठ् धात्वर्थ क्रिया से जन्यमी है। ऐसे सर्वत्र समझिए।

'स्मृता' इति वहुवचने एक वचनमपि वर्तते। यत्र एक वचनस्य प्रयोजनं तत्र तदेव सम्वद्धयते। धातुरेक वचनेन सह सम्बन्धयिष्यते। यत्र विचिकित्सा तत्रैवायं नियमः न तु सर्वत्र ( न वहुवचनान्तता )।

........................फलं विक्लित्तिः ........................

कर्मणि प्रवृत्तिप्रयोजकं फलम्'। इष्टसाधनत्वात्, कृतिसाध्यत्वात्, वलवदनिष्टाननुवन्धित्वाच्च। अन्यथा सा (प्रवृत्तिः) जलताडनवन्निष्फला। यद्वा यमुद्दिश्य श्रुतेः लोकतो वा प्रवृत्तिर्जायते तत्फलम्। प्रासङ्गिकन्तु– धात्वर्थ क्रियायां यल्लाभाय प्रवृत्तिर्जायते तद्धात्वर्थं फलम्। अतः किं फलं किं विधानञ्च कृतं केनैव तद्व्रतमिति शौनकस्य प्रेक्षापूर्वक प्रवृत्तिर्दृष्टा। यथा स्वर्गमुदिश्य यागे प्रवृत्तिर्दृष्टा, तत्र स्वर्ग फलम्, अध्ययनक्रियायां प्रवृत्तौ ज्ञानं फलम्, नेतृत्वे समाजकल्याणं फलम्, भोजने प्रवृत्तिदृष्टा तत्र क्षुन्निवृत्तिः फलम्। शास्त्राध्ययने हिताहितज्ञानं फलम्। आत्मनेपदलाभार्थकर्तु रुद्देश्यकं क्रियाजन्यं फलम्। अतएव भाष्ये–साधीयो यत्र क्रियाफलं कर्तारमयिप्रैति। इदं फलं पारिभाषिकं ज्ञेयम्। ननु लोके प्रसिद्धं श्रीफलादिकम् रुढ्या तादृशार्थोपस्थापकमाम्रादिकञ्च। शास्त्रे पारिभाषिकार्थपरतयैव फलस्वीकारे सकर्मकाऽकर्मकौ विभज्येते फलव्यापारयोरेकाधिकरण्यमकर्मकः, भेदाधिकरण्यं सकर्मकः, अन्यथा तयोः व्यवस्था उच्छिद्येत्। पारिभाषिक फलत्वञ्च धात्वर्थत्वे सति धात्वर्थव्यापार जन्योपस्थितिविषयत्वं ग्राह्यम्। यथा–कमलापतिः द्राक्षां भुङ्क्ते। तृप्त्यनुकूलव्यापारः क्षुन्निवृत्युनुकूलव्यापारोवा भुज धात्वर्थत्वे सति तृप्तिरूपं फलं भुजधात्वर्थः तज्जन्योपस्थितिविषयता क्षुन्निवृत्तेः। अतएवतयोः जन्य जनक भावसम्वन्धः सर्वसम्मतः। तेन फलस्य धात्वर्थव्यापारजन्यत्वेसति धात्वर्थता पारिभाषिकता च सिद्ध्यति धात्वर्थं फलाश्रयस्यैव कर्म संज्ञाविधानादाह्–फलं विक्लित्तिरिति—

उक्तञ्च— यस्यार्थस्य (फलस्य) प्रसिद्धचर्थमारन्भते पचादयः।
तत्प्रधानं फलं तेषां न लाभादिः प्रयोजनम्॥

धात्वर्थं फलातिरिक्तं यत् द्रव्यादिलाभरूपं फलं तन्नेत्यर्थः। यथा— यागस्य स्वर्गः फलम्। वपेः धान्योत्पत्तिः फलम्; पाकस्य रूपान्तरत्वं फलम् तण्डुलेऽवयवशिथिलीभवनं फलम्। यदि फलत्वमन्येच्छानधीनेच्छाविषयत्वरूपं गृह्यते, तर्हिसुखदुःखादावेव तद्व्याप्नोति। धात्वर्थंफले न व्याप्नोति। यदि फल साधनत्वारोपः क्रियते तर्हि व्यापारेऽपि फलत्वापत्तिः स्यात्। अतः पूर्वोक्तं लक्षणं न्याय्यम्। एवं धात्वर्थ फलस्य विक्लित्तित्वादिरूपेण वाच्यता ननु फलत्वेनरूपेण। धातूनां तत्तत्फलं पृथक-पृथक दृश्यतेऽतो

व्यापारस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया। उक्तञ्च वाक्यपदीये— यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ।। इति।

०

न लौकिकं फलं धातु वाच्यम्। विशिष्ट लक्षणं कर्तृ प्रत्ययसमभिव्याहारे तद्धात्वर्थजन्योपस्थिति विषयत्वे सति तद्धात्वर्थनिष्ठविशेष्यता निरूपित-प्रकारताश्रयत्वं फलत्वम् यथां चैत्रस्तण्डुलं पचतीत्यत्र चैत्रपदार्थस्य अभेद सम्बन्धेन तिबर्थाश्रये कर्तरि अन्वयः, तत्रैव संख्यायाः समवायेनान्वयः, कर्तुः वृत्तित्वसम्बन्धेन धात्वर्थव्यापारेऽन्वयः, तिबर्थवर्तमानकालस्य परिच्छेद्य परिच्छेदकभावेन व्यापारेऽन्वयः। अमर्थाश्रयस्य वृत्तित्व ( विद्यमानत्व ) सम्बन्धेन फले फलस्यानुकूलत्वसम्बन्धेन व्यापारेऽन्वयः। चैत्राभिन्नैकत्वविशिष्टाश्रयवृत्ति वर्तमानकालिक तण्डुलाभिन्नैकत्वविशिष्टाश्रयवृत्ति विक्लित्यनुकूलोव्यापारः। अत्र कर्तरि प्रत्ययः 'ति' इति। तत्समभिव्याहारे पच धातुजन्योपस्थितिविषयताविक्लित्तौ। सा पचधात्वर्थ व्यापार निष्ठ विशेष्यतानिरूपिताप्रकारताश्रयास्ति। इत्युक्तलक्षणसमन्वयः।

तिङर्थो "भावना" इति मीमांसकमतं निरस्यन्नाह व्यापारस्त्विति—

व्यापारः, भावना, अभिधा, साध्यत्वेनाभिधीयमाना क्रिया, एते चत्वारः समानार्थकाः पर्यायवाचिनश्च। प्रसङ्गतः कः व्यापारः किञ्च तस्य लक्षणम्। व्यापिपर्ति फलं पूरयति जनयति वा व्यापारः, भावयति फल-

व्यापार का परिचय प्रस्तुत करते हैं। व्यापार ही भावना ( फल की जननी ) अभिधा (फल की जननी) यह साध्यत्वेन साध्या क्रिया रूप से कही जाती है। अतः भावना का पर्यायवाची है। साध्यत्व उस क्रिया का धर्म है। अभिधान का विषय हो, धातु जन्य हो उसे व्यापार कहते हैं। यह लक्षण सिद्धा में नहीं घटेगा। उक्तञ्च = उक्त व्यापार की प्रामाणिकता वाक्यपदीय कारिका से करते हैं। यावत् = कालरूप परिमाण ( समय ) में फलं सिद्धं = फल सम्पन्न हो, और समाप्त है क्रिया जिसकी। तथा असिद्धं = अनिष्पन्न फल हुआ, और समाप्त न हो क्रिया जिसकी ऐसा वर्तमान-कालिक या भविष्यकालिक फल जो साध्यत्वेन = साध्या = धातु का अर्थभूत व्यापार से अभिधीयते = कहा जाता है। यहाँ रूढ़ी क्रिया का लक्षण है। यौगिक क्रिया तो जिस धातु में अनेक क्रियायें एक प्रतीत होती हों। जैसे—पच् धातु में आश्रितं = व्यवहृत है। क्रमरूप = काष्ठादि कासंयोग फूंकना, चूल्हे पर चढ़ाना, यत्न करना, उतारना आदि क्रम है जिसमें, उसे यौगिक क्रिया कहते हैं।

मुत्पादयति, भाव्यतेऽर्थोऽनयेति वा भावना, भाव्यत इत्यस्य जन्यते, उत्पाद्यते, प्रेर्यते इत्यादिरर्थः। अभिदधाति फलं भावयतीति अभिधाव्यापारः। या क्रिया लिङ्गसंङ्ख्याकारकानन्वयित्वेनोक्ता सा साध्या। इति—समानार्थकत्वम्। अथवा व्यापारो लक्ष्यः भावनादिकं लक्षणम्। साध्यत्वेनाभिधीयमाना क्रिया, भावना, अभिधा सर्वं व्यापार एव। फलजनकत्वं व्यापारत्वं, जनकता च साक्षान्निष्ठा, केषाञ्चिन्मतेफल प्रयोजकत्वं व्यापारत्वं, प्रयोजकता च जन्यजन्यसाधारिणी, साक्षात् परम्परया वा गृह्यते। कर्तरिप्रत्यये सति असाध्यमेन फलस्य जनको व्यापारः, अन्यत्र माध्यमेन, परम्परया फलप्रयोजको व्यापारः, यथा 'रामेण वाणेन हतो रावण' अत्र कर्तृव्यापारः करणव्यापारद्वारा माध्यमेन फलं जनयतिस्म। यदा रामो वाणविमोचनरूपं व्यापारमकार्षीत्, तदा वाणो रावणशरीरं प्रविश्य प्राणवियोगरूपं फलं जनयतिस्म, परम्परया फलजनकोऽभूदित्यर्थः।

यदि परम्परया व्यापारे फलजनकता गृह्यते तर्हि तण्डुलक्रयणेऽपि परम्परया फलजनकतायाः सत्वेन क्रयणदशायामपि क्रयणस्य पच् धात्वर्थतापत्तिः देवदत्तः पचतीति प्रयोगापत्तिश्च। अतो व्यापारस्य विलक्षणं लक्षणमुच्यते। भावनाऽपरपर्यायत्वे सति साध्यत्वप्रकारकाभिधान—विषयत्वं क्रियात्वम्। परन्त्वेतल्लक्षणे साध्या, सिद्धा इति च द्विविध—विभागजभेदो न स्यात्। अत उभयसाधारणं लक्षणमुच्यते। रूपरसादि गुणानाश्रयत्वेसति विभागाऽसमवायिकारणत्वं व्यापारत्वम्। क्रियायां गुणत्वं नास्ति। विभागोऽपि नास्ति। वंशफलकद्वये सति कुठारे विभागजो व्यापारः तन्तु संयोगे पटभेदेन संयोगजो व्यापारो गुणाश्रयः। एतल्लक्षणम्—सिद्धसाध्योभयक्रियासाधारणम्। यदि व्यापार पदशक्यतावच्छेदकत्वंव्यापारत्वं तदा आत्माश्रयदोषः, व्यापारलक्षणे तल्लक्षणापेक्षितत्वात्। अतस्तज्जन्यत्वे सति तज्जन्य जनकत्वं वाच्यम्। स्वयं धातु जन्यत्वे सति धातुजन्य फलस्य जनको व्यापारः। यौगिक व्यापारस्थले अग्निकाष्ठसंयोगादारभ्य अधः श्रयणपर्यन्तं यावत् क्रियाकलापं सर्वं मिलित्वाऽनुगतीभूय व्यापार इत्युच्यते। अथवा 'भावनामभिधत्ते' इति भावनाभिधा, सा साध्यत्वेनाभिधीयमाना चेत् व्यापार इत्युच्यते। मीमांसकमते—शाब्दी भावना लकारवाच्या, आर्थीभावनालिङ् वाच्या, शाब्दिकानाम्नये आर्थीभावना व्यापार इति प्रच्छन्नाभि प्रायः।

इयं क्रिया द्विविधा, रूढ़ा, यौगिकी च। वाक्यपदीयश्लोकस्तेन प्रमाणयति। यावत्सिद्धमिति—कारिकायाः पूर्वार्धेन रूढ़ा, उत्तरार्धेन यौगिकी च

प्रमाण
न च साध्यत्वेनाभिधाने मानाभावः। 'पचति, पाकः, करोति, कृतिः' इत्यादौ धात्वर्थावगमाविशेषेऽपि क्रियान्तराऽऽकाङ्क्षाऽनाकाङ्क्षयोर्दर्शनस्यैव मानत्वात्। तथा च क्रियान्तराऽऽकाङ्क्षानुत्थापकतावच्छेदकरूपं साध्यत्वम्। तद्रूपवत्त्वमसत्त्वभूतत्वम्। एतदेवादाय—

असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते।

इति वाक्यपदीयमिति द्रष्टव्यम्।

o

सङ्गमय्यते। यत्राभिधीयमाना एका क्रिया तत्र रुढ़िः। यत्रोपलक्षणीभूताः क्रियाः प्रतीयन्ते तत्र यौगिकी। रुढ़िस्तावत्—

भूतकालरूपपरिमाणे, वर्तमान भविष्यद्भिन्ने, काले निष्पन्नं फलं सिद्धं =समाप्तक्रियं (समाप्ताक्रिया यस्य तत्) सकलं फलं विद्यमानध्वंसप्रतियोगि भूतकालावच्छिन्नमुच्यते, अपाक्षीत्, अत्याक्षीदित्यादावनुभूयते। असिद्धम्= असमाप्तक्रियमनिष्पन्नं वर्तमानकालविशिष्टं प्रचलितभावनं (प्रचलिता भावनायस्य तत्) भविष्यत्कालावच्छिन्नं भविक्रियं भूतभिन्नं तादृश प्रागभावप्रतियोगि=यावत्फलं नोत्पन्नं तावत् प्रागभावप्रतियोगि वर्तते। तत्फलं पचति पक्ष्यति पठति पठिष्यतीत्यादावनुभूयते। सिद्धमसिद्धमित्यनयोः पदयोः भूतवर्तमानभविष्यकालिकं फलं लक्ष्यते। यस्य जनको व्यापार एव। योगरुढ़िशक्तम्या एकभावनात्मिका साध्या क्रियेत्युच्यते। क्रियते फलं जायते यया सा क्रिया साध्यत्वेन=धातुवाच्यत्वेन अभि= धीयते= प्रत्याय्यते, व्यवहारविषयीक्रियते। इयं क्रिया रुढ़िशक्त्या स्पर्धते, अपाक्षीत्-नङ्क्ष्यतीत्यादौ यत्रैक एव व्यापारः, तेन रूपेणानुगम्यते। व्यापारेऽस्मिन् पचतीव क्रियाणां समूहस्याभावो ज्ञेयः।

यौगिकी क्रिया तु आश्रितक्रमरूपत्वाद बोध्या। यत्र नाना क्रियाऽवगम्यते यथा पचतीत्यादौ। अतएव आश्रितक्रमरुपत्वात् साक्रियेत्यभिधीयते। आश्रितं=व्यवहृतम्, अग्निकाष्ठ-संयोगत्व, फूत्कारत्व, चुल्हिकोपरिधारणत्व, अधः स्थापनत्व, द्विदल-संस्कारकत्वादि, क्रमरूपं यस्या सा, तस्याः भावः "त्वेच' इति ह्रस्वे, तस्मादाश्रितक्रमरूपत्वात्। विभिन्नोपलक्षणीभूतव्यापाराणां पूर्वापरीभूतावयवकत्वात्। पचतीत्यादौ तथैवानुभूयते।

यहाँ साध्य क्रिया ही व्यापार है। सिद्ध नहीं, इसकी पुष्टि के लिए न च—से शंका? न कहिए साध्या रूप से व्यापार के व्यवहार में मानाभावः=प्रमाण का अभाव है। समाधान—पचति, करोति, तिङन्तस्थल में साध्या क्रिया मानी जाती है।

न च क्रियायाः साध्यत्वेनाभिधाने मानाभावः, धात्वर्थक्रियैव साध्यत्वेन प्रत्याय्यते, न सिद्धा, इत्यत्रैकतर पक्ष पातिनी युक्तिः का ? धात्वर्थव्यापारः साध्यैव न सिद्धा इत्यत्र किं मानम्। अत्र प्रमाणरूपेण सिद्धा साध्या च उदाह्रियेते, लक्षणेन बुभूष्येते च। तदाह न चेति-पचति, पाकः करोति, कृतिरित्यादौ तिङर्थःकर्त्ता, स आश्रयो यस्याः सा तिङर्थाश्रयिका भावना साध्या। पचति, करोतीत्यादौ तथैवानुभूयर्थ। प्रत्ययाते-व्यापारविशिष्टा-भावना सिद्धा। पाकः कृतिरित्यादौ 'भावे घञ्' स्त्रियामक्तिन्निति प्रत्यया-भ्यां सा बुध्यते, प्रत्यार्थव्यापाराश्रयत्वात्। उक्तञ्च—

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सिद्धभावस्तु यस्तस्याः सघञादि निबन्धनः।

यद्यपि धात्वर्थावगमा विशेषेऽपि=पच् धात्वर्थ विक्लित्यनुकूलव्यापारस्य 'कृ' धात्वर्थ उत्पत्यनुकूल व्यापारस्य च पचति, पाकं करोति, कृतिरित्या-दाववगमे=बोधे अविशेषः=नास्ति भेद इत्यर्थः। अपि=तथापि, पचति, करोतीत्यादौ तिङन्तस्थले क्रियान्तरस्य=अन्यस्याः क्रियाया। अनाकाङ्क्षा= अपेक्षाविरहः, आवश्यकता नापेक्ष्यते। अतस्तत्र साध्या। पाकः कृतिरित्या-दौतु क्रियान्तरस्य=अपेक्षा जायते। किं ? पाकोऽभूत्, भवति भविष्यति वा, किं' कृतिः (यत्नः) याता, याति, यास्यति वा। अत्र सिद्धा। क्रियान्तरस्या-काङ्क्षानाकाङ्क्षयोर्दर्शनमेव भेदे विनिगमकम्। अतएव स्तोकस्य साध्या याः विशेषणे सति स्तोकं पाकः, सिद्धायाः विशेषणे सति स्तोकः पाक इत्येवं भवति।

पाकः कृति इत्यादि कृदन्त स्थल में सिद्धा स्वीकृत है। यद्यपि पचति पाकः इन दोनों प्रयोगों में पच् धातु के अर्थबोध में अविशेषेऽपि=कोई भेद नहीं है, तो भी पचति में क्रियान्तर (अन्य क्रिया) की आकाङ्क्षा अदृष्ट हैं। पाकः में अन्य क्रिया अपेक्षित हैं। जैसे—पाक हुआ कि होगा। ऐसी अपेक्षा पचति में नहीं है। अर्थात् तिङर्थ कारकरूप आश्रय में रहने वाली क्रिया साध्या है। करोति कृति में भी यही अन्तर समझना चाहिए। और भी क्रियान्तर की जो अनुत्थापकता=आकाङ्क्षा का अभाव उसका अवच्छेदक=व्यावर्तक (भेदक) धर्म को साध्यत्व कहते हैं। तद्रूपकत्वं=साध्यत्व रूपवाली निरूपाधिका लिङ्ग संख्या शून्य असत्त्वभूतत्वं=वही असत्त्व भूत क्रिया है। जिसमें लिङ्ग संख्या का अन्वय हो उसे सत्त्व (द्रव्य) कहते है। जैसे—'पाकः कृतिः से भिन्न लिङ्ग संख्या शून्य क्रिया को असत्त्व भूत कहते हैं। जैसे—पचति-करोति, एतदेव=यही पूर्वोक्त विचार समझ कर वाक्यपदीय से प्रमाणित करते हैं। जो ः सत्त्व भूते भाव (साध्य व्यापार) है, वह तिङ पद से (पचति करोति से) अभिव्यञ्जित होता (। पद्यते=जिससे अर्थ बोध हो उसे पद कहते हैं।

अयञ्च व्यापारः फूत्कारत्वाऽधः सन्तापनत्व–यत्नत्वादितत्तद्रूपेण वाच्यः। पचतीत्यादौ तत्तत्प्रकारकबोधस्यानुभवसिद्धत्वात्।

सिद्धायाः लक्षणमुच्यते तथाचेति अन्या क्रिया क्रियान्तरम्। धातूपस्थापिता या क्रिया तस्याः यज्ज्ञानं तन्निष्ठा या क्रियान्तरस्य=अन्यक्रियायाः आकाङ्क्षा=तस्या अनुत्थापकता=अनपेक्षता, अन्य क्रियायाः आकांक्षाविरहादनु पस्थितिः। अर्थात् 'अस्यान्वयिनी का क्रिया ? इतीच्छा न जागर्ति। तदवच्छेदको=भेदको धर्मः साध्यत्वम्=धातु जन्य क्रियात्वम्। तद्रूपवत्वम् अत्र तत्पदेन बुद्धिविषयीभूतोऽर्थो गृह्यते। तस्याः=साध्यायाः रूपत्वं=क्रियान्तराकांक्षाया अनुत्थापको धर्मः तदेव असत्वभूतत्वम्=न सत्वं लिङ्गसङ्ख्यान्वयो यत्र तत्, असत्वं भूतम्=जातं तस्यभावस्तत्वम्। असत्वभूतत्वं साध्यत्वम्। तेन रूपेणोपस्थितये शाब्दिक वृद्धानुभवो मानम्। यत्र लिङ्गसङ्ख्यान्वयिरूपसिद्धत्वप्रकारकमुख्यविशेष्यताकपाकयत्नयोरूपस्थितिस्तत्र क्रियान्तरस्याकांक्षा उदेति। तत्रावच्छेदको धर्मः सिद्धत्वरूपः।

एतदेवादाय=साध्यत्वरूपक्रियात्वमादाय वाक्यपदीये उक्तम्—असत्वेति-तिङ्पदं येषु ते तिङ्पदास्तैः (अतद्गुण संविज्ञानो बहु व्रीहिः) तिङ्प्रकृतिभिः धातुभिरसत्वं=न सत्वं लिंग संख्यान्वयो यस्य तत्तस्य भावः=साध्यत्वरूपो व्यापारोऽभिधियते=अभिव्यज्यते, प्रकाश्यते। यथा नामभिः=प्रातिपदिकैः सत्वस्वभावं=लिङ्गसंख्यान्वयरूपमापन्ना=प्राप्ता व्यक्तिः=क्रिया उच्यते=बोध्यते। —भेदश्रेणिका

| सिद्धा | साध्या |
|---|---|
| प्रत्ययवाच्या | धातु वाच्या |
| क्रियान्तरापेक्षिता, | क्रियान्तरानाकांक्षिता |
| लिङ्गसंख्यान्वयिनी, | अलिङ्ग संख्यान्वयिनी, |
| कारकरूपा | क्रियारूपा |
| सत्वप्रधाना. | भावप्रधाना |
| घञादिवाच्या, | तिङ् प्रकृति वाच्या |

अयं=सद्यः प्रतिपादितो व्यापारः=धातु वाच्यः, साध्या क्रियारूपेण प्रतीयमानः कीदृशः ? केन रूपेण प्रतीतिविषयो वाच्यो वा भवतीति प्रश्नः।

अयञ्च=यह साध्या (व्यापार) अर्थात् पचति में पाक रूप फल का जनक व्यापार की प्रतीति इस प्रकार होती है। जैसे फूंकना, अग्नि जलाना पात्र का स्थापना, प्रयत्न, चेष्टा, आदि तत्तद्रूपेण—पचति की प्रक्रिया में अवयव भूत (सहायक) क्रियाओं का समूह रूप से ज्ञान होता है और पचति (पकाता है) इत्यादि में सहायक क्रियाओं फूत्कारादि का विशेषण (सहायक) रूप से बोध अनुभव सिद्ध है।—प्रत्येक व्यक्ति को भवन में, पाक शाला में सहायक क्रियाओं के साथ मुख्य क्रिया विक्लित्त्यनुकूल व्यापार अनुभूत है। यहाँ फूत्कार शब्द अग्नि प्रज्वालन के लिये सभी साधान

परिसीमक न च [1]नानार्थताऽऽपत्तिः। तदादिन्यायेन बुद्धिविशेषादेः शक्यतावच्छेदकानामनुगमकस्य सत्त्वात्। आख्याते क्रियैकत्व व्यवस्थाऽपि अवच्छेदकबुद्धिविशेषैक्यमादायैव। उक्तञ्च वाक्यपदीये— उसका अर्थ

गुणभूतैरवयवैः समूहः क्रमजन्मनाम्।
बुद्धया प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥इति॥

o

स व्यापारः पचतीत्यादौ फूत्कारत्व=मुखात् वायुवेगरूपत्व, अधः संतापनत्व=नीच्चैः स्थापनत्व, यत्नत्व=कृतित्व, चेष्टात्वादिक्रिया कलापेन तत्तद्रूपेणावयवभूतक्रियासमूहरूपेण शक्यार्थौ (वाच्यो) भवति। यतः पचतीत्यादिप्रयोगे तत्तत् प्रकारक बोधस्य=फूत्कारत्व, अग्निप्रज्वालनत्व, चेष्टात्वादि विशेषणक=प्रकारक बोधस्य=ज्ञानस्यानुभव सिद्धत्वात्=स्वस्व गृहे महानसादौ सर्वेषामनुभवस्य सुस्पष्टत्वात्। तेनोक्ता वाच्यार्थव्यवस्था सिद्धयति। अत्र फूत्कारत्वं पाकोपलक्षितवायुकरणकसर्वसाधनस्योवलक्षणम्। पाकार्थयावन्ति वायुसाधनानि तेषां सर्वेषां बोधकम्। अत एव पाककाले व्यजनादि प्रयोगेऽपि न क्षतिः।

पचधातावनेकक्रिया सत्त्वे नानार्थतापत्तिराशङ्क्यते। पच्धातुप्रयोगेऽधिश्रयणात् चूल्हि कोपरि धारणादारभ्य, अधः स्थापनपर्यन्तं यावत्यः क्रिया, अग्निप्रज्वालनफूत्कारादयस्ताः दृष्ट्वा नाना व्यापारवान्, पच धातु रनेकक्रियार्थकोऽनेकार्थवाचकश्च। ततो वहुक्रिया सत्त्वे नानार्थतापत्तिः सन्दिह्यते। यतो यत्र नानाधर्मस्तत्र नानार्थता। यथा—हरिशव्दस्य वाच्याश्चतुर्दशार्थाः, शक्यतावच्छेदका ( वाच्यार्थे विशेषणीभूताः ) धर्माः। यथा क्वचित् कपित्वं, क्वचित् सूर्यत्वं, हरित्वं, विष्णुत्वमित्यादिभिन्नाः धर्मा अवच्छेदकाः भवन्ति। पृथक्पृथक् स्थलेषु पृथगर्थाः पृथग्धर्माः पृथक्शक्तयश्च प्रतीयन्ते। परन्तु यत्र-यत्र हरिपदं तत्र सर्वत्र सर्वेऽर्थाः धर्माः शक्तयश्च। किन्त्वेकैवार्थो धर्मः शक्तिश्च यत्र प्रतीयते, तेन तत्र नानार्थता, नाना शक्तय, आश्रयाश्च बोधविषयिणो नैकत्र भवन्ति। नाना धर्मविशिष्टा या शक्तिः=फूत्कारादिविशिष्ट पच्धातुशक्तिः, तस्याः परिचायको=अवच्छेदको विशेषणीभूतो धर्मः। तद् विशिष्टः पच् धातुः नाना—

का उपलक्षण ( बोधक ) है। अतः पंखे की हवा भी पाकानुकूल क्रिया में सहायिका है।

पच् धातु में नाना अर्थ की सम्भावना, उद्भावना और समाधान—नचेति नानार्थतापत्तिः=पच् धातु में अनेक क्रियाओं से नाना अर्थ की प्रतीति होने से फूत्कार,-

 

र्थकः। अस्यां स्थितौ नानार्थनिरूपितं नानाशक्त्याश्रयत्वं नानार्थत्वमिति लक्षणं सङ्गच्छते। यत्र नानार्थः नाना शक्तिः नानाऽऽश्रयस्तत्र नानार्थता। एवं फूत्कारत्व, यत्नत्व, द्विदलसंस्कारकत्वपिष्टान्नमर्दनत्वादि शक्यतावच्छेदकभेदेन भिन्नाः धर्माः पच्धातुवाच्याः। अतो नानाधर्मावच्छिन्न शक्तिनिरूपकतावच्छेदकैकधर्मवत्वं नानार्थत्वमिति संशय मूलम्। एवं संशयः शक्तिः कारकं शक्तिमत्कारकमिति पक्षे च बोधव्यः।

प्रज्वालन, तण्डुल प्रक्षालन इत्यादि के दर्शन से पच् धातु में नाना अर्थ की आपत्ति सन्दिग्ध हुई। जिस शब्द में अनेक अर्थ धर्म, अनेक शक्ति हो उसे नानार्थक कहते हैं। जैसे—हरि शब्द के १४ अर्थ धर्म शक्ति है। सूर्य, सिंह, हरि, वानर, विष्णु इत्यादि। नाना शक्ति का आश्रय हरि शब्द के होने से नानार्थक सुस्पष्ट है। वैसे पच् में भी नाना धर्म विशिष्ट अर्थ की शक्ति है। फूत्कार आदि से विशिष्ट पच् धातु में शक्ति उनका विशेषणीभूत धर्म फूत्कारत्वादि धर्म उससे विशिष्ट पच धातु नानार्थक हुआ। समाधान—तदादिन्यायेन = जैसे—तद् यद् इदम्, अदस्, इत्यादि के सर्वनाम होने से ये सर्वार्थ के वाचक, सारा संसार इनका वाच्य है। परन्तु बुद्धिस्थ अर्थ के परामर्शक हैं। अतः बुद्धि विशेषादेः = अन्तः करण में जो अर्थ अभिप्रेत है, वही तत्पद का वाच्य है। बुद्धि में जो अर्थ उपस्थित होता है। उसी के लिये तत् का प्रयोग होता है। जैसे—वे शत्रु स्वर्ग गये। यहां तत्पद शत्रु का परामर्शक (वाचक) है। सभी जगत का नहीं वही चित में अनुगत (स्पष्ट ज्ञान का विषय) है। इसी प्रकार शक्यता वच्छेदकानां = बुद्धि में शब्द की शक्ति से उपस्थित भेदक (व्यावर्तक) धर्मों (फूत्कारत्वादि) का अनुगमकस्य सत्वात् = सुनिश्चित एक रूप से ज्ञान उपस्थित होता है। अर्थात् एक धर्म (विक्लित्ति का जनक व्यापारत्व) मुख्य है। अन्य फूत्कारादि धर्म उपलक्षित होते हैं। प्रसङ्ग से प्रतीत है। अतः अनुगत = अनेक क्रियायें (फूत्कारादि) एक रूप (पचति) से प्रतीयमान हो, वहाँ नानार्थता नहीं होती। पच् में अनेक क्रियायें एक रूप से ज्ञान का विषय बन रही है अतः नानार्थ नहीं है। हरि शब्द में तो नानार्थकता शक्ति एक स्थल में प्रतीयमान नहीं है वहीं नानार्थता है ही अनेक क्रियाओं का अनुगम एक स्थल में होने पर भी आख्यात = धातु में एक क्रिया को व्यवस्था कैसे? आख्याते = धातु में अवच्छेदको (फूत्कारत्व यत्नत्वादि) धर्मों का अन्तःकरण में ऐक्य = पाक जनक व्यापार मात्र रूप फल में सहायक व्यापारों की एकता स्वीकार कर एक पंचति क्रिया की व्यवस्था होती है।

अनेक क्रियाओं में एकता की व्यवस्था वाक्यपदीय कारिका से प्रमाणित करते हैं कि—"गुणभूतैः = अप्रधान (विशेषण) बने हुये (अवयवों फूत्कारादि सहायक क्रियाओं के क्रमशः = पूर्वपरभाव से जन्यत = उत्पत्ति, प्रादुर्भाव है। जिन फूत्कारादि क्रियाओं का समुदाय ही एकत्व है पचति रूप है। उसके उपलक्षित क्रियाओं का सङ्कलन बुद्धि में एक रूप (पचति) से होने के कारण अभेद प्रकल्पित = सिद्ध है उसी में क्रिया का व्यवहार होता है।

यथा व्यापारविषये नानार्थता सन्दिह्यते, एवं फलविषयेऽपि सन्दिह्यताम्। यथा तण्डुले विक्लित्तिर्जायते, तदा उदकस्य उष्णीभवनं, प्रस्वेदनम्, वाष्पणम् विक्लेदनम् अवयवानां शिथिलीभवनमादिफलान्यपि भासन्ते प्रस्फुरन्ति च। अत्र नानाफलदर्शनात् फलेऽपि नानार्थता सम्भवा। नानाफलार्थनिरूपिनाः शक्त्योऽपि सन्ति। द्वयोः फलव्यापारयोः नानार्थविषयकयोः प्रश्नयोरेकं समाधानं दीयते। तदादीति।—

कीदृशस्तदादिन्यायः ? स आदिर्यस्य तद् तदादिः। सचासौ न्यायश्चेति। तद्, यद् इदम्, अदस्, इत्यादि त्यदादयः सर्वनामानः सर्वार्थवाचकाः। तेषामर्थो नानाजगत् वर्तते जड़चेतनं, स्थावरजंगमात्मकम्, देवादिकीटान्तं सर्वं तदादिपदवाच्यम्। किन्तु बुद्धिविशेषादेः=बुद्धौ=अन्तःकरणे विशेषः=वोश्रनायाभिप्रेतोऽर्थस्तदादिपदवाच्यः। यतोहि तच्छब्दो बुद्धिस्थपरामर्शकः, पूर्वपरामर्शकश्च। यदाअर्थाकाराकारिताचित्तवृत्तिर्जायते, यदबोधनार्थं तद् यदादि सर्वनामानः प्रयुज्यन्ते। प्रयोग काले योऽर्थो मनसि कृत्वा व्यवहारविषयीक्रियते, स बुद्धिविशेषविषयतयोपलक्षितो भवति। ज्ञानविषयो भवतीति। बुद्धिस्थविषयाणां धर्माः बुद्धिस्थाः भवन्ति। चित्तस्थे वस्तुनि तद्गत तत्तद्धर्म विशिष्टेशक्तिः सर्वं सम्मता न तु सर्वत्र। यथा स सञ्जयो–दिवंगतः। अत्र तत् पदं बुद्धौ सञ्जयोपलक्षकम्। (बोधकम्) तच्च सर्वार्थवाचकं सदपि सञ्जयमेव बोधयति, न तु सर्वार्थान्। अस्यां स्थितौ शक्त्या भेदको धर्म एक एव। अनुगतैकाकाररूपेण प्रतीतो भवति। अतो न नानार्थता। यथा तत् पदे न नानार्थता, एवं पच् धातौ व्यापारे व्यापाराणां फले फलानाञ्चैकाकाररूपेण ज्ञानसम्भवान्न नानार्थता। तत्र वृन्ताकन्यायेन शक्तिरेकैव। यथा आम्रमञ्जरी एकफलवती, द्विफलवती, बहुफलवती च दृश्यते। एवमनेकफलसत्त्वेऽपि आश्रयरूपा मञ्जरी एकैव। तस्यां शक्तौ सर्वेऽर्थाः लम्बन्ते। तेषामाश्रयभूता शक्तिरेकैव, अनुगतैव। एवं शक्यतावच्छेदकानां=बुद्धौ फूत्कारत्वादिवाच्यार्थभेदकानामनेकधर्मविशिष्टानां, तथैवोष्णत्ववाष्पणत्व शैथिल्यत्वादिविशिष्टानेकधर्मावच्छिन्नानां=विक्लित्तित्वादीनां पाकजनकाग्निप्रज्वलनादीनामन्तः करणे बोधविषयतयोपलक्षितानां धर्माणाम् अनुगमकस्य सत्वात्=बुद्धि विषयत्वेन रूपेणैकाकारप्रतीत्योपस्थितत्वात्। एकं कृत्वोपलक्षणमितिन्यायेन=अनेकधर्मस्थले एकंधर्मंमुख्य मत्वाऽन्यं धर्ममुपलक्षणं कृत्वा नानार्थता निवारणीया। यथा व्यापारत्वं मुख्योधर्मः, फूत्कारादयोपलक्षिताः धर्माः न तु वाच्याः। एवमोदनत्वं मुख्यो धर्मः

तप्तोदकत्वं प्रस्वेदनत्वंशिथिलत्वाद्युपलक्षिताः धर्माः। न तु वाच्यार्थाः। तेन फूत्कारादिविशिष्टे व्यापारे पच् धातोः शक्तिः।

नन्वेवं हरि शब्देऽप्येकं कृत्वोपलक्षणमिति न्यायेन बुद्धौ (अन्तःकरणे) एकमर्थं मुख्यं कृत्वाऽपरान् अर्थानुपलक्षिणीकृत्य नानार्थत्वं न सम्भवेत्। अत आह टीकायाम्—अननुगत नानाधर्मावच्छिन्नशक्ति निरूपकतावच्छेदकैकधर्मवत्वं नानार्थत्वमिति। प्रयोग काले न अनुगतः=एकत्र ज्ञानविषयी कृतो नानाधर्मः (हर्यादौ नानार्थकस्थले सिंहत्व सूर्यत्व सर्पत्व विष्णुत्वादि रूपेणार्थाः एकस्थले नानुगम्यन्ते) तदवच्छिन्ना (धर्म विशिष्टा) शक्तिस्तन्निरूपकतावच्छेदकं=तत्वबोधकतावच्छेदकमेकधर्मवत्वं नानार्थत्वम्।

हरि शब्द एकस्थले एकार्थधर्मप्रतिपादकः, अन्य स्थलेऽन्यार्थबोधकः। सर्वेषामर्थानां धर्माणाञ्च–स्वावच्छिन्ने विज्ञान स्थले पृथक्-पृथक् शक्तिः। तेषामेक त्रानुगमो (बोधो) न जायते तत्रास्तु नानार्थता। विक्लित्त्यनुकूल व्यापारे तु फूत्कारत्वादीनां धर्माणामेकत्र 'पचति' स्थलेऽनुगमः सुनिश्चितं ज्ञानं भवत्येव, तत्र न नानार्थता। आदि पदम् अवच्छेदक धर्मस्मरणार्थकम्।

नन्वनेक क्रियाणामेकत्र बोधेसत्यपि क्रियाया एकत्व व्यवस्था न सम्भवति। अत आह–आख्यात इति—अत्राख्यातपदेन धातोरेव ग्रहणं न तु तिङ्तिङन्तस्य वा। धातूपस्थाप्या क्रिया–आख्यात पदवाच्या। यद्यपि कर्तृ-कर्मणोराख्यातार्थत्वे किं मानम्? इत्यत्र आख्यात पदेन तिङो ग्रहणं, क्वचित्तिङन्तस्यापि, यथा आख्यातमाख्यातेन इत्यादौ। तथापि आख्यायते सर्वप्रधानी भूतार्थो प्रत्याय्यतेऽनेनेत्याख्यातं=धातुः। यत्र तिङ् तिङन्तस्य धातोर्वा प्राधान्येन ग्रहणं तत्र तस्यैव बोधः। अतएव 'नामाख्यातोसर्ग-निपाताः' इत्यादावप्याख्यातपदं धातुवाचकं, तत्र नानाव्यापार प्रतीतिस्त्व-स्त्येव। तत्र क्रियैकत्व व्यवस्था तु=अनेकक्रिया=प्रतीतिसम्भवे एक क्रिया व्यवस्था सन्दिहयते अथवा फूत्कारादयो न पूर्वापरिभूतावयवाः प्रथम क्षण उत्पद्यन्ते तृतीय क्षणे नश्यन्ति, तेषामेकत्राभावात्। 'एका क्रिया च,' इति प्रशंसायां मतुप सूत्रस्थ भाष्यवचनञ्च न सङ्गच्छते। अत आख्यातेऽवच्छेदकबुद्धिविशेषैकमादायैव = धातार्वच्छेदकानां = भेदकानां फूत्कारादिनां बुद्धि विशेषे=चित्तस्थलेऽन्तः करणे पचतीत्यादावैक्य मेकभावरूपतां विक्लित्यनुकुलव्यापाररूपामेकतामादाय=गृहीत्वा क्रियायाः एकत्व व्यवस्था सिद्धयति।

उक्तञ्च वाक्यपदीये—एकदेशे समुहेवा व्यापाराणां पचादयः।
स्वभावतः प्रवर्त्तन्ते तुल्यरूपं पचादयः॥

**धात्वर्थं निरूप्य तिङर्थमाह—आश्रयेत्विति। फलाश्रये, व्यापाराश्रये त्वर्थः। फलाश्रयः कर्म्म। व्यापाराश्रयः कर्त्ता। तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तिङस्तदंशे शक्तिः, अन्यलभ्यत्वात्। शक्यतावच्छेदकं चाऽऽश्रयत्वं तत्तच्छक्तिविशेषरूपमिति सुबर्थनिर्णये वक्ष्यते।** अथ तिङ्

०

अतः धातुत्वेन सकलधातुवाच्येति कौमुद्याम्। "भूवादयो धातवः" इति सूत्रे क्रिया सामान्यवाचकं धातुपदम्। क्रियाया एकत्व व्यवस्था वाक्यपदीयात् समर्थ्यते। गुणभूतैरिति–अप्रधानीभूतैरवयवैः = विशेषणी भूतैरङ्गैः क्रम जन्मनां = क्रमेण पूर्वापरिभावेन जन्म = उत्पत्तिः प्राकट्यं येषां (फूत्कारादिव्यापाराणाम्) तेषां समुदाये–एकत्वम्। तस्मिन्समुदाये विशेषणीभूतैः फूत्कारादिभिरवयवैरुपलक्षितास्ते संकलनात्मना बुद्धावेकीभावेन अभेद प्रकल्पितः, तादृशीक्रिया–एकेति व्यपदिष्यते = व्यवहृयते।

'नासङ्गतं प्रयुञ्जीत' इति संगति साधनार्थं धात्वर्थौ = फलव्यापारौ निरूप्य = बोधयित्वा (निपूर्वक रूपधातोः) बोधानुकुल व्यापारोऽर्थः) तिङर्थाः निरूप्यन्ते–बोधविषयीक्रियन्ते (तत्र सङ्गतिः यत् फलव्यापारौ निराश्रयौ न तिष्ठतः। यद्वा धातुः प्रत्ययमाकांङ्क्षते। प्रकृतिप्रत्ययौ सहार्थंब्रूत इत्यनु रोधात् प्रकृतिः धातुः तदर्थौ फलव्यापारौ तावाश्रयावपेक्ष्येते। प्रत्ययस्तिङ

धात्वर्थ = धातु के अर्थ (फलव्यापार) का निरूपण करके उनके आश्रय भूत तिङर्थ का बोध कराते हैं। आधार की सबको आवश्यकता है। निर्गुण भगवान भी सगुण बनने के लिये अपनी प्रकृति का आश्रय लेते हैं। फल व्यापार तो निराश्रय रह ही नहीं सकते। आश्रय के लिये (तिङस्मृताः) कर्ता कर्म स्मृत हैं। फल का आश्रय कर्म है व्यापार का आश्रय कर्त्ता है। न च फल व्यापार तिङ के अर्थ हो जाँय ? नहीं। वे तो धातु के अर्थ है। तिङ की शक्ति न फलांश, न व्यापारांश में है। वह किसी शब्द का अर्थ नहीं होता है जो किसी अन्य शब्द से उपलब्ध हों। (जो धातु से लब्ध है। वह तिङ का अर्थ नहीं हो सकता।

आश्रय अनन्त हैं जितने फल व्यापार हैं। उतने आश्रय। समस्त आश्रय का एक साथ ज्ञान नहीं हो सकता। आनंन्त्य दोप निवारणार्थ शक्यतावच्छेदकं = शब्द शक्ति से उपस्थित निरूपाधिक धर्म (विशेषण) आश्रयत्व होगा जो सभी आश्रय में रहेगा। उसमें किसी आश्रय की उपाधि नहीं होगी। जैसे — हिन्दुत्व हिन्दु मात्र में है वह ब्राह्मणत्व क्षत्रियत्वादि उपाधि से मुक्त है, अखण्ड भाव से सभी हिन्दुओं में विद्यमान है। तत् २ शक्ति = सभी आश्रय में विशेष = सामान्य धर्म (हिन्दुत्व की तरह) होकर सभी जाति में रहता है इस सम्बन्ध में सुबर्थनिर्णय में अधिक कहा जायेगा।

तदर्थौ कर्मकर्त्तारौ तयोराश्रयौ भवितुमर्हतः। अत आह–आश्रये तु तिङ स्मृता इति।

परमात्मानं विहाय न कोऽपि निराश्रयस्तिष्ठति। सगुणभगवानपि स्वां प्रकृतिमधिष्ठाय सम्भवाम्यात्ममाययेति, गीता वचनेनाश्रयमाश्रयते। अतः फलाश्रयव्यापाराश्रयविषये तिङ् स्मर्यते। तिङ् वाच्ये कर्तृकमर्णी स्तः। फलाश्रयः कर्म व्यापाराश्रयः कर्तेति। न च फलव्यापारयोर्मध्ये व्यापारस्य प्राधान्यात् कथं प्रथमं फलोपादानं कृतं, "लः कर्मणीति" सूत्रे प्रथमं कर्मण एवोपादानात्।

न च फलव्यापारौ तिङ वाच्यावभूतां कथं धातौ तयोश्शक्तिः कल्प्यते तदाह—फलव्यापारयोर्धातुलभ्यत्वात्।

यतः धातुना लभ्यौ फलव्यापारौ, अतः फलांशे व्यापारांशे वा तिङ्-पदस्य न शक्तिः। यतोहि अनन्यलभ्यः शब्दार्थः = न अन्येन = अन्यप्रमाणेन लभ्यः = लब्धुं शक्यः सोऽर्थः। फलव्यापारौ त्वन्येन प्रमाणेन (धातुना) लभ्यौस्तः अतो न तिङस्तदंशे = फलांशे व्यापारांशे वा शक्तिः। एवमाश्रयस्य वाच्यार्थे तिङ शक्तिः, न तु धातावनन्यलभ्यत्वात्। आश्रयरूपोऽर्थः तिङा-लभ्यः। तत्र धातोः शक्तिरिति कल्पयितुं न शक्यते।

यद्यपि तिङ आश्रयार्थे स्मरणं वरम्, परञ्च अनन्तो हि आश्रयाः। यतो यावान् धातुः तावन्तौ फल व्यापारौ, तावन्त आश्रयाश्च, तेषामानन्त्याश्रयधर्माणां निरूपकत्वादिनाशक्तीनाञ्च भेदात्, अनन्ततां न कोऽपि वारयिष्यति। नानासम्बन्धविशिष्टतया नानात्वात् आश्रयाणामनुगमः = इदमित्थं रूपेण निश्चयो न भवितुमर्हति। तदाह–शक्यतावच्छेदकञ्चा-श्रयत्वमिति वाच्यर्थे विशेषणीभूतो निरूपाधिको धर्मं आश्रयत्वम्। तच्चाश्रयादितरेष्वनाश्रयेषु अवृत्तित्वेसति (अविद्यमानत्वे) सकलाश्रय वृत्तित्वं शक्तेः स्वरूपम्। एवं सम्पूर्णं जगत् आधारः तत्रा धारत्व शक्ति स्वीकारे सा एकेत्यनुगम्यते। अयम्भावः? आधारनिरूपकाः (बोधकाः धातवः) आधेया, फलानि व्यापारश्च विभिन्ना, एवमाधेय परिचायका आधाराः (आश्रयाः) विभिन्नाः सन्ति। फलाश्रयस्यानन्त्ये व्यापाराश्रये चानेकदोषसम्भवात् कर्तृणां कर्मणाञ्च भेदे सत्याश्रयभेदः सर्वानुभव सिद्धः। तदा आनन्त्यदोष वारणार्थं सुनिश्चितरूतेण बोधार्थमाह–तत्तच्छक्तिविशेष रूपमिति–तत्तदर्थ = कर्त्ता कर्मरूपार्थनिरुपिता या शक्तिः। यद्वा तासु–तासु शक्तिषु विशेषं = व्यापकम् अखण्डम् एकं रूपं ज्ञानं यस्य तदाश्रयवं एवं सामान्य धर्मवती निरूपाधिका निर्विशेषा अखण्ड रूपाशक्तिः न, त्वस्यशक्तिस्तस्य शक्तिर्वा। अतोऽखण्डोपाधिरखण्डधर्मं

**नन्वनयोराख्यातार्थत्वे किं मानम्, प्रतीतेः—लक्षणया, आक्षेपात्, प्रथमान्तपदाद् वा सम्भवादिति चेत् ?**

o

विशेषः। सोऽखण्डरूपेण सर्वस्मिन्नाश्रये तिष्ठति। तेन सर्वाश्रयेऽनुगता एका शक्तिर्बोध्या। यथा हिन्दुत्वं हिन्दु मात्रं व्याप्नोति, तत्र ब्राह्मणत्व शूद्रत्वादि धर्मं सत्यप्येकमखण्डं हिन्दुत्वं भाषते। यथा अखण्डायां सत्तायां जातौ सर्वाः जातयोऽन्तर्हिताः भवन्ति। एवमखण्डाश्रयत्वधर्मे सकलमौपाधिकमाश्रयत्वं कर्तृत्व कर्मत्वादिकमन्तर्हितं भवति। उपर्युक्त व्याख्यानेन शक्तिरेका, अवच्छेदिका, सर्वाश्रयभेदिका च बोध्या। एवं द्वितीयातृतीया सप्तमीनामाश्रयत्वं पूर्वोक्तानुसारेणानुभूयताम्। तत् सुवर्थ निर्णये वक्ष्यते।

आश्रये तु तिङ स्मृताः, तिङर्थश्च कर्त्ता कर्म। तयोराख्यातार्थत्वे=तिङर्थत्वे किं मानम् ? किं शब्दो जिज्ञासाबोजकः प्रश्नः। समाधाने मीमांसकाः नैयायिकाः वैयाकरणाश्च प्रयतन्ते। आदौ मीमांसकमतमनुसन्धाय समाधत्ते। यद्यपि येन शब्देन यस्यार्थस्य प्रतीतिर्जायते, तत्तस्यार्थ इति नियमः। तिङसत्वेकर्तृकर्मप्रतीतिः, तदभावे तदभावइत्यन्वयव्यतिरेकाभ्यां तिङः कर्तृकर्मणोः प्रतीतिरेव मानम्। परन्त्वयं प्रतीतिर्लक्षणया। अत आह लक्षणया प्रतीतेः—(अनुभवस्य) सम्भवात्। मीमांसकमते फल

नन्वनयोः=कर्ता कर्म को आख्यातार्थं=तिङर्थ होने में क्या प्रमाण है ? यहां मीमांक नैयायिका—वैयाकरण स्व—स्वमत प्रस्तुत करते हैं। मीमांसक मत में तिप् का अर्थ भावना है लक्षणा से कर्त्ता—कर्म की प्रतीति (ज्ञान) सम्भव है। क्योंकि इस मत में प्रत्ययार्थ प्रधान शाब्दबोध होता है। ति प्रत्यय का अर्थ भावना है भावना का मुख्यरूप से बोध होता है वह निराश्रय नहीं रह सकती। अतः भावनाश्रय में लक्षणा करते हैं। वह आश्रय कर्त्ता है। फल का फलाश्रय में लक्षण जिसे कर्म कहते हैं। इस प्रकार कर्त्ता—कर्म की प्रतीति है।

यदि भावना की आश्रय में लक्षणा करेंगे तो भावना की शक्ति आश्रय अर्थ में समाप्त हो जायेगी। तो उसका प्राधान्य नहीं होगा। अतः आक्षेपात कहा आक्षेप से कर्त्ता कर्म की उपस्थिति सम्भव है जैसे—भोजन के बिना स्थूलता असङ्गत है ऐसे कर्त्ता के बिना भावना निराधार है।

परन्तु शाब्द बोध में शब्द की शक्ति से उपस्थित ज्ञान कारण है आक्षिप्त ज्ञान नहीं। अतः प्रथमान्तपदात्—कहा।

वाक्य में प्रथमान्त पद से कर्त्ता—कर्म की प्रतीति सम्भव है इन मतों का प्रमाण से निराकरण करते हैं—

मात्रं—धात्वर्थः, तिबर्थो भावना, कर्तृ कर्मणो र्लक्षणयाप्रतीतेः। यत्र तिङ् तत्र कर्त्ता कर्मैतदन्यतरस्य प्रतीतिर्जायते। अतः प्रतीतिरूपप्रत्यक्षप्रमाणेन लक्षणया आख्यातार्थः कर्त्ता कर्म, इति निश्चीयते तत्र कर्तृ कर्मणोः प्रतीतौ किं मूलम्। तदाह लक्षणयेति–भावना निराश्रया न तिष्ठति अतस्तस्याः स्वाश्रये लक्षणा करिष्यते। यतोहि यत्र वाच्यार्थबाधोऽनुपपत्तिसन्धानं वा तत्रैव लक्षण जायते। फलव्यापारौ तु स्वाश्रयं विनाअनुपपन्नौ स्तः तस्मा-दाश्रये लक्षणा क्रियते।

न चमीमांसकमते प्रत्ययार्थप्रधानशाब्दबोधसिद्धान्तात् भावनायाः प्राधान्येन-शाब्दबोधे भानमावश्यकम्। तदर्थं तत्र (तिङि) भावनायाः शक्तिः कल्पनीयैव। तिङर्थायाः स्वाश्रये कर्त्तरि लक्षणा चेत् मीमांसक-सम्मता तस्याः प्राधान्यप्रतीति र्न स्यात्। लक्षणयार्थबोधनेन क्षीणशक्ति-कत्वात्। यद्याख्यातस्य भावनायां शक्तिरेवोच्यते तर्हि, आश्रयेलक्षणा न स्यात्। युगपत् वृत्तिद्वयविरोधात्, लक्षणाया असम्भवाच्च। यतोहि लक्षणायां वाच्यार्थस्यानुपपत्तिरनुसन्धानमावश्यकम्। तदैव सा भवति। अत्र तु वाच्यार्थो नानुपपन्नः। तस्माल्लक्षणा न संघटते। किन्त्वाश्रयार्थभानार्थं लक्षणाज्ञानमावश्यकं, तस्मात् स्वज्ञाप्यसम्बन्धस्य लक्षणात्वेनमीमांसक मते लक्षणेष्टा।

केचिन्तु युगपद्वृत्तिर्द्वय विरोधान्न लक्षणा, परन्त्वाख्यातस्यैकया वृत्त्या-भावनायां शक्तिः। तस्या एवाश्रये लक्षणेति बोधोदयान्न वृत्तिद्वय विरोध इत्युक्तवन्तः। तथापि लक्षणया भावनायाः बोधे शक्तिसमाप्तौ तस्या प्राधान्यं न स्यात्। प्रत्ययार्थप्राधान्यन्यायोऽपि विरुद्धेत्। अत आह–आक्षेपादिति—आक्षेपात् कर्तृ कर्मणोर्ज्ञानसम्भवात्। अत्राक्षेपोऽर्थापत्तिरिति मीमासकाः, अनुमानमिति नैयायिकाः 'येन विना यदनुपपन्नं तत् तेनाक्षिप्यते' यथा—भोजनं विना स्थौल्यमनुपपन्नम्। अतः स्थौल्येन भोजनमाक्षिप्यते। दिवा भोजनं न चेत् रात्रौ तत् कल्प्यते। एवं कर्त्तारं विना भावना-अनुपपन्ना। अतो भावनया कर्त्ता आक्षिप्यते। यथा फलेन फलाश्रयः कर्म—आक्षिप्यते।

न्यायमतेऽपि आक्षेपोऽनुमानम्, तदित्थं कृतिः क्वचिदाश्रिता, विशेषण-तया गृहीतशक्तिकत्वात् घटत्ववत्। प्राचीन मते स्पन्दोव्यापारः धात्वर्थः फलं द्वितीयार्थः नवीन मते फलव्यापारौ धात्वर्थौ। तिङर्थो यत्नः। तथा च कृतिः तिङ्पदबोध्या, प्रत्ययार्थत्वेन गृहीतशक्तिकत्वात् रूपादिवत्। यत्र-यत्र प्रत्ययार्थत्वेन गृहीतशक्तिकत्वं तत्र-तत्र तिङ्पदवाचकत्वं यथा घटत्वं घटरूप-माश्रयमनुमिनोति। एव कृतिरपि विशेषणत्वेन गृहीतशक्तिका। तेन हेतुना

अत्रोच्यते—"लः कर्मणि च भावे चाकर्म्मकेभ्यः" इति सूत्रमेव मानम्। अत्र हि चकारात् "कर्त्तरि कृत्" इति सूत्रोक्तं कर्त्तरीत्यनुकृष्यते। बोधकतारूपां तिबादिोक्तं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्म्मणि, कर्त्तरि चानेन विधीयन्ते। नकारविसर्गादिनिष्ठां कर्म्मकरणादिबोधकताशक्तिमादाय शसादिविधानवत्

o

आख्यातपदबोध्या कृतिः ( वृत्तिः ) क्वचिदाश्रिता, सा यत्राश्रिता स कर्त्तैव भवितुमर्हति। एवं कर्माख्यातस्थले फलं क्वचिदाश्रितं विशेषणत्वेन गृहीत शक्तिकं, तेन हेतुना धातुपदबोध्यं फलं क्वचिदाश्रितं, यत्राश्रितं तत्–कर्मैव भवितुमर्हति। अयमाशयः, शाब्दबोधे, आक्षिप्तस्य कर्त्तुर्विशेष्यत्वेन उपस्थितेरभावात्। तस्य प्राधान्येन शाब्दबोधविषयता न स्यात्। यतो हि पदनिष्टशक्तिज्ञानाधीनोपस्थितिविषयः शाब्दबोधे भाषते–इति नियमः। आक्षिप्ते ( कर्त्तरि ) पदनिष्टवृत्तिज्ञानाधीनोपस्थित्यभावान्न शाब्दबोध विषयता।

एवमनुमानहेतुभूतव्याप्तिपक्षधर्मतादिज्ञानं विनाऽपि फलाश्रयः व्यापाराश्रयश्च परिज्ञायते। तत्र नाक्षेपो नानुमानं वा हेतुरित्यरूचेराह–प्रथमान्त पदाद्वेति। वाक्ये प्रथमान्त पदात् कर्त्तृकर्मणो प्रतीतिसंभवात् देवदत्तः पचतीत्यत्र पचति शब्द सम्बन्धेन–प्रथमान्तपदार्थे कर्त्तृत्वेनान्वितो देवदत्तः प्रथमान्त–पदेनैव लभ्यते। एवं तण्डुलः प्रच्यते इत्पत्र कर्त्तृकर्मरूपार्थयोर्लाभे एव कर्त्तृकर्मणोराख्यातार्थत्वे किंमानम्? नैयायिक मते प्रथमान्तार्थस्य मुख्यविशेष्यतया शाब्दबोधो जायते। यथा "राष्ट्रपतिः लोकसभां गच्छति" इत्यादौ प्रथमान्तार्थत्वमेव कृतेराश्रयत्वम्, व्रजनरूप क्रियाश्रयः कर्त्ता राष्ट्रपतिरेव परसमवेत ( यस्य कर्मत्वं चिकीर्षितं–तदपेक्षया परः कर्त्ता तत्समवेतो धात्वर्थो व्यापारः ) धात्वर्थतावच्छेदक

कर्त्ता कर्म के तिङर्थ होने में लःकर्मणि सूत्र प्रमाण हैं। यहाँ चकार से "कर्त्तरि कृत्" सूत्र से कर्त्ता का अनुकर्षण करते हैं कर्त्ता कर्म अर्थ में लकार का विभान होना ही कर्त्ता कर्म के आख्यातार्थ होने में प्रमाण है।

बोधकता = लोक व्यवहार में अर्थ का बोध कराने की शक्ति 'ति' में है, लकार में नहीं। तथापि तिङ की बोधकता शक्ति को विङ् का स्थानी लकार में विधान किया गया जैसे—नकार विसर्गादि = रामान् के न में, रामैः के विसर्ग में, रहने वाली; व्यवहारिक बोधकता शक्ति (कर्म और करण को स्वीकार कर शस्भिस् आदि का विधान होता है।

फलशालिकर्मत्वस्य नैयायिकैरङ्गीकृतत्वात्। तन्मते लोकसभाऽपेक्षया अन्यः ( राष्ट्रपतिः कर्त्ता ) धात्वर्थंता वच्छेदकः = धात्वर्थो व्यापारः तन्निष्ठा या धात्वर्थता तादृश धात्वर्थंताया अवच्छेदकीभूतं फलमुत्तरदेशसंयोगरूपं, तस्याश्रयः लोकसभा इति। तेन तस्याः कर्मत्वम्। एवञ्च लोकसभानिष्ठोत्तर-देशसंयोगानुकूलव्यापारानुकूलकृतिमान् एकत्व ( संख्या ) विशिष्टो राष्ट्रपतिः। एवं राष्ट्रपतेः प्रथमान्तपदबोध्यत्वेन कर्त्तुर्लाभात् कथमाख्याते कर्त्तृ कर्मणोः शक्तिरूच्यते एवं पूर्वोक्तव्याख्यानेन लक्षणया आक्षेपात् प्रथमान्त पदाद्वा कर्त्तृ कर्मणोः प्रतीतिरस्तुनामं किन्तु प्रबलप्रमाणेन वैया-करणैः स्वमतं व्यवस्थापयितुं कर्त्तृ कर्मणोराख्यातार्थत्वे प्रमाणमुच्यते।

यथा धातुः फलव्यापाररूपार्थवाचकः, एवं तिङपि कर्त्तृकर्मान्यतर-वाचकः। यतोहि तिबादयो 'लादेशा भवन्ति'। लादयश्च कर्त्तरि कर्मणि वा विधीयन्ते। अत्र प्रमाणं-'लः कर्मणि' इति सूत्रम्। लकाराः सकर्मकेभ्यः कर्त्तरि कर्मणि च, अकर्मकेभ्यो भावे कर्त्तरि च भवति। तेन-लकारे कर्त्तुः कर्मणश्च शक्तिर्बध्यतेः। स्थानिनोऽर्थाभिधाने समर्थस्यैव आदेशता। यत् यदर्थबोधक तत्तस्यार्थ इति न्यायेन-आख्यातार्थो लकारवाच्यः। यतो लकारः कर्त्तृ-कर्मवाचकः, अतस्तत्तस्यार्थः। तत्स्थानापन्नस्तद्धर्मं लभते। लकार स्थानापन्नस्तिप् लकारधर्मं लभते। सूत्रे-कर्त्तृ पदं 'कर्त्तरिकृत' इति सूत्राल्लभ्यते = अनुकृष्यते।

ननु कर्त्तृकर्मार्थाभिधायी लकार इति सुप्रसिद्ध;। सूत्रे तु लकारार्थत्वेन प्रतिपादिते कर्त्तृ कर्मणी, कथमाख्यातार्थे भवतस्तदाह-बोधकतारूपामिति-'उच्चरित्तः शब्दः प्रत्यायको भवति नानुच्चरित' इति न्यायेन उच्चरिते तिङि लोक प्रसिद्धा, बोधकतारूपा शक्तिर्ज्ञायते। सैव वास्तविकी। लकारादौ तु काल्पनिकी शक्तिः। लोके-"ति" पदेन बोधो जायते-लकारास्तु वर्णस्फोटाः, शास्त्रप्रक्रियामात्रनिर्वाहकाः, न तु लोकोपयोगिनः। पिबती-त्यादौ "ति" पदेन कर्त्तरि शक्तिरिति सर्वैरवगम्यते, न तु तिप्, ल्, इत्यलौ-किकेन। लोके अर्थविषयकबोधनकत्वमर्थवत्वभित्युद्घोषितं वर्त्तते। लोके बोध जनकता शक्तिस्तु तिप् निष्ठा, योहि यदर्थाभिधानसमर्थः स तस्यादेश इति। एवं लोकेऽर्थं विषयक बोधजनकतारूपां तिबादिशक्तिं तत्स्था-नित्वेन = लकारे तिपः स्थानि रूपेण कल्प्यते। शास्त्रकारैरनुमिते लकारे प्रकल्प्य = बुद्धौ आरोप्य वा आदिना = आदेशागमादिष्वपि बोध्या।

यथा पाचकादौ पच् धातुरस्ति, ण्वुल प्रत्ययोऽस्ति। लोके "अक्" निष्ठा बोधजनकता शक्ति नं तु ण्वुलनिष्ठा वर्णस्फोटत्वात्। एवं पठतीत्यत्र तिपि निष्ठा लोकप्रसिद्धा स्वाभाविकी शक्तिः। सा तिपः स्थानिरूपेण कल्पिते

न्याय पक्ष दोष                                                                                    दोष - कृति

**न च सूत्रे कर्तृकर्मपदे कर्तृत्वकर्मत्वपरे। तथा च कर्तृत्वं कृतिः, कर्म्मत्वञ्च फलमेवार्थोऽस्तु, इति शङ्क्यम्, फलव्यापारयोर्धातुलभ्यत्वेन लकारस्य पुनस्तत्र शक्तिकल्पनाऽयोगात्।**

o

लकारे आरोपिता बोध्या। एवं तिबादिषु या शक्तिः तस्याः बोधे सत्येव लकारा कर्मणि कर्त्तरि वाऽनुभूयन्ते। अतो बोधजनकता शक्तिः श्रूयमाणे वर्णे एव प्रामाणिकैः व्यवस्थापिता नत्वश्रूययाणे लकारादौ। अत्र दृष्टान्तं प्रस्तोतुमाह–नकारविसर्गादि–निष्ठामिति="रामान्" इत्यत्र कर्मणि द्वितीया, कर्मणो बोधकता शक्तिः नकारनिष्ठा, लोकेप्रसिद्धत्वात्, न तुतत्स्थानिरूपेण कलिपते शसि। तस्यालोकतान्त्रिकत्वात्। एवं रामैरित्यत्र विसर्गेण करणशक्तिर्बुध्यते, व्यवहारप्रसिद्धत्वात्, न तु राम-भिस् इत्यनेन्, अलौकिकत्वात्। अतो नकारविसर्गादिनिष्ठां समाजेऽर्थंवि षयकबोध जनकतां मौलिकीं कर्मकरणादिबोधकताशक्तिमादाय=अनुभूय स्व-स्व कल्पिते स्थानिनि समारोप्य शसादिविधानवत्=यथा शस्, भिस् इत्यादयो विधीयन्ते तद्वत् कर्तृकर्मणोराख्यातार्थत्वं विज्ञेयम्। आख्यातनिष्ठा बोधकतारूपा या शक्तिः, सा लकारे प्रकल्प्य तत्तादर्थाः बुध्यन्ते। इति पाणिनिप्रयुक्तं प्रमाणप्रवल्यं मानम्।

नैयायिकाः स्वानुसारं "लकर्मणीति" सूत्रं व्याख्यान्ति सूत्रे कर्तृ कर्म पदे लाक्षणिके स्त इति ब्रुवन्ति। अत आकृतिवाद पक्षे, भावप्रधान निर्देशे च कर्तृत्वकर्मत्वप रेगृह्यते। प्रकृतिजन्यबोधे प्रकारीभूतो भाव इति नियमेन त्वप्रत्यस्य विशेषणमर्थः। '-कर्तृ इति प्रकृति=तत्र विशेषणं कृतिः, भावना वा मतभेदेन बोध्या। एवं कर्मत्वं=कर्म विशेषणं फलमेव भवितुमर्हति। एवञ्च कर्तृत्वं कृतिः कर्मत्वं फलमिति रीत्या कृतिरेव आख्यातार्थः, फलमेव आख्यातार्थः। यतो हि कर्तृपदजन्यबोधे प्रकारीभूता कृतिरेव। कर्मपदजन्यबोधे प्रकारीभूतं फलमेव। वाजप्यायनमते पदानां जातौ शक्तिः जातिरूपोऽर्थो वाच्यः। आकृतेः (जातेः) प्रथमज्ञानात् तस्या एवाभिधेयता' नामार्थ निरूपणावसरे जातेः प्रथमं स्मरणम्। कर्त्ते-

न कह्यिे सूत्र में कर्त्ता-कर्म एक कर्तृत्व (कर्त्ता का विशेषणकृति व्यापार कर्मत्व (कर्म का विशेषण) फल परक अर्थ है। कर्तृत्व—कृति (यत्न) और कर्मत्व से फलरूप अर्थ होने की आशङ्का हो तो नहीं? फल व्यापार अर्थ धातु से लब्ध है। पुनः लकार में कर्त्ता-कर्म के स्थान में व्यापार और फल अर्थ के शक्ति की कल्पना का अयोगात्=असम्भव है। जो अर्थ धातु से लब्ध है वह लकारार्थ नहीं हो सकता है।

**अथ दर्शनान्तरीयरीत्या व्यापारस्य धात्वर्थत्वाभावात्तत्र लकारविधिः स्यादिति चेत् ? तर्हि कृत्तामपि कर्तृकर्म्मादिवाचित्वं न सिद्ध्येत् । "कर्त्तरि कृत्" इति च "लः कर्म्मणि" इत्यनेन तुल्ययोगक्षेमम् ।**

o

त्यत्र प्रकारी भूता कृतिरेव । "त्व" प्रत्ययस्य फलमर्थः । फलाश्रयः कर्मैव कृत्याश्रयः कर्त्तैव, भवितुमर्हति । अथवा कर्मशब्दः फलाश्रये पारिभाषिकः, यद् धात्वर्थफलं तस्यैव आश्रयः कर्म इति । कृतौ ज्ञक्तिस्वीकारे सति शक्यतावच्छेदकेलाधवम् । कर्तृत्वं शक्यतावच्छेदकमिति विमता नामाशङ्कां निर्मूलयितुमाह–फलव्यापारयोरिति–फलव्यापारौ धातुलभ्यौ स्तः । न तु लकारार्थौ शब्दार्थस्यानन्यलभ्त्वात् । अन्येन लभ्योऽर्थो न शब्दार्थः । लकारे कर्तृकर्मणोः शक्तिकल्पनभयोग्यता द्योतकम् । एतेन कर्तृकर्मबोधे आख्यातशक्तिः नैसर्गिकी ।

अथेति शंकाप्रदर्शनपरम् । दर्शनं हिताहितोपदेशकमध्यात्मज्ञानोपायभूतं वा शास्त्रम् । अन्यदर्शनं न्यायशास्त्राद् भिन्नं शास्त्रं दर्शनान्तरं= मीमांसाशास्त्रं तत्रभवा रीतिः दर्शनान्तरीया । तद्रीत्या=मीमांसक व्युत्पत्त्यनुसारं, तद्यथा भजतीत्यस्थ भजनं करोतीति विवरणम् । भज् धातोः भजनं । (प्रीतिरेवार्थः) "ति" इत्यस्य विवरणं करोति । तेन धातोः फलमात्रमर्थः तिबर्थो भावनेति मीमांसकाः मन्यन्ते । तन्मते तु व्यापारो न धातु लभ्यः । अतो लकारस्य कर्तृत्व रूपव्यापारे शक्तिकल्पने न किञ्चित् बाधकम् । अनन्य लभ्यस्य शब्दार्थत्वात् अत आह–व्यापारस्य धात्वर्थत्वाभावादिति–तत्र व्यापारे लकारविधिः=लकारस्य शक्तिः यदि सम्भवेत् । तर्हिलकारस्य व्यापारे शक्तिसिद्धावपि कर्त्तरि कर्मण्यर्थे लकारस्य विधानं कृतं स्यात् । तथाप्यभिधानानभिधान (उक्तानुक्त) व्यवस्थार्थं तदप्यावश्यकम् । कर्त्तरि कर्मणि वा लकारविधानमावश्यकमिति । द्वैधामानं कथञ्चित्परिहरणीयम् । एकस्य पदार्थस्य वारद्वयमानं द्वेधा भानम् ।

यदि दर्शनान्तरीय (मीमांसा शास्त्र) की रीति=पद्धति से कहते हो कि व्यापार तो धातु का अर्थ होता ही नहीं वह तो ति का अर्थ है । तत्र=व्यापार अर्थ में लकार का विधान सम्भव है । भावना ति शब्द का शब्दार्थ बन सकती है; तो कृतामपि= कृदन्त स्थल में भी कृतप्रत्यय=ण्वुलतृचौ आदि की कर्त्ता–कर्म रूप अर्थ में वाचकता नहीं सिद्ध होगी । क्योंकि जहाँ से कर्त्ता की अनुवृत्ति आयी है वहाँ भी कर्त्ता का व्यापार अर्थ होना चाहिये । लः कर्मणि सूत्र में अनुकृष्ट कर्त्ता का तुल्ययोगक्षेम (अलब्ध का लाभ योग है और लब्ध के स्वरूप का संरक्षण क्षेम है)—होना चाहिये । कर्मत्व का फल अर्थ नहीं ।

**अपि च मीमांसकानां कृतामिवाख्यातानामपि कर्तृवाचित्वमस्तु, भावनाया एवाक्षेपेण कृदादिवत्प्रतीतिसम्भवे वाच्यत्वं माऽस्तु।**

०

मन्येऽकर्तृ पदं कर्तृत्व (व्यापार) परमेवसिद्धं, परन्तु तन्न रोचते शाब्दिकाय। यतो हि धर्मरूप व्यापारबोधकं भविष्यति, तर्हि यतः कर्तृ पदमनुकृष्टं वर्त्तते,, तत्रापि भावप्रधानं धर्मं परमेवार्थोऽस्तु। तत्रापि कर्तृ कर्मादि वाचित्वंमास्तु। "कर्त्तरि कृत्" इति सूत्रे कर्तृपदं धर्म (व्यापार) परमस्तु। तत्र कर्मा-(कर्त्ता) परं न स्यात्। एवं पाठको देवदत्त इत्यादौ कर्त्तरि प्रत्ययो न स्यात। व्यापारार्थकत्वात्। इष्यते तु कर्त्रर्येव स्वाध्यायानुकुल भावनाश्रयाभिन्नो देवदत्त इति बोधानुरोधात्। एवं तृजादीनामपि व्यापार मात्रमर्थः संम्भवेत्। अतः कर्तृपदं कर्तृत्व परं नाङ्गीकरणीयम्।

न च "कर्त्तरि कृत्" इति सूत्रे "कर्त्तरि" इत्युच्चारणसामर्थ्यात् तत्र कर्त्तरि शक्तिः कल्पनीया वाच्यम्। तस्मादेवात्र कर्त्तरीत्यनुकृष्यते। यथा तत्र कर्तृ पदं धर्मि (कर्तृ) परं न धर्म (व्यापार) परम् एवं लः कर्मणीति" सूत्रेऽपि धर्मि परतयैव बोध्यम्। यद्यत्र भाव निर्देशस्तत्रापि तथास्तु। यदि तत्र धर्मिपरमत्रापि तथास्तु तदेवाह—तुल्य योगक्षेममिति। अलब्धस्य लाभोयोगः, लब्धस्य रक्षणं क्षेम इति। योगश्च क्षेमश्च अनयोः समाहारः योगक्षेमम्। तुल्यं यी गक्षेमं यस्य तत्। "लः कर्मणी" ति सूत्रे दृष्टस्य कर्तृपदस्य धर्मि (कर्तृ) परत्वेन 'कर्त्तरिकृत' सूत्राल्लाभो योगः। तत्रापि यथा लब्धस्य धर्मिणः (कर्तृः) तेनैव रूपेण रक्षणं क्षेम इति। यदि लकारस्य भावना कृतिर्वा अर्थोऽभीव्यात् तर्हि कृत्स्वर्थः तथास्तु। यन्नैवं तन्नैवम्।

न च सूत्रे धर्मिपरत्वेनानुकर्षणेऽपि यदि शब्दाधिकारमाश्रयते तदा शब्दमात्रस्यानुवृत्तिभवति तदा धर्म परत्व (व्यापार मात्रार्थ) स्वीकारे न किञ्चिद् बाधकम्। परन्तु शब्दाधिकारस्तत्रैव प्रवर्तते, यत्र काचिद् विनिगमना वर्त्तते। अत्र कर्तृत्वार्थकत्वे न किञ्चिन्मानम्। तथापि शास्त्रे

**और भी जैसे मीमांसक ण्वुल तृजादि का कर्त्ता अर्थ मानते हैं वैसे आख्यात= (तिङ्) का भी अर्थ कर्त्ता मानना चाहिये। भावना का आक्षेप करना चाहिये जैसे— कृदादिवत्=कृदन्त में पाचक इत्यादि में तवमते=पच का फल अक का कर्त्ता अर्थ है, भावना का आक्षेप किया जाता है। ऐसे ही तिङन्ते स्थल में भी भावना का आक्षेप हो जाय! वाच्यार्थ न माना जाय, वाच्यार्थ कर्त्ता ही रहे।**

तथा सति प्राधान्यं तस्या न स्यादिति चेत् ? न, 'घटमानय' इत्यादावाक्षिप्तव्यक्तेरपि प्राधान्यवदुपपत्तेः । 'पचति' इत्यादौ 'पाकं करोति' इति भावनाया विवरणदर्शनाद् वाच्यत्वमिति चेत् ? पाकानुकूलव्यापारवतः कर्तुरपि विवरणविषयत्वाविशेषात् ।

o

पक्ष द्वयं सुप्रसिद्धं, शक्तिः कारकं, शक्तिमत् कारकञ्च । निरुभिप्रायेण शक्ति कारकं, कृदभिप्रायेगा शक्तिमत्कारकमिति । शक्तिपक्षे 'सप्तमी पञ्चम्यौ कारक मध्ये' इति सूत्रं, शक्तिमत् पक्षेस्वतन्त्रः कर्त्तेति प्रमाणम् । यदि शास्त्र सम्मतौ पक्षौ स्तः तर्हि पक्षे कर्तृपदं कर्तृत्व परमस्तु । पक्षस्य तिङ् कृतोर्भेदेन व्यवस्थितत्वात् । भावनार्थे मानमिति चेन्न, एतादृशोऽभिप्रायः कदाल कल्पितोऽस्ति । नहि 'गोधा सर्पन्ती अहिर्भवनीति' उभयत्र तुल्यार्थता आवश्यकी । अतोऽर्थाधिकाराश्रयणे धर्मि परत्वेन उपयोगस्य लाभस्य चौचित्यात् ।

अत आहापि च । अयम्भावः मीमांसक मते कृताभिव=यथा कृत्स्थले कृत्संज्ञकानां ण्वुलतृजादि प्रत्ययानां कर्त्तृवाचकता, तथाख्यातानामपि=तिङामपि कर्त्तृवाचित्वमस्तु, कर्त्तैवाख्यातार्थो भवतु ।

न चाख्यातस्य कर्त्तरि शक्तिस्वीकारे मीमांसकसम्मततिबर्थ भावनायाः प्रतीति र्नस्यात् । अत आह–भावनाया एवाक्षेपेण=कृदन्ते भावना आक्षिप्यतेऽर्था पत्तिप्रमाणेन परस्परविरुद्धत्वेनावभासमानहेतुद्वय–घटितसाध्यानुमितिरर्थापत्तिः । यथा "अध्यापक इत्यादौ कर्त्तरि ण्वुलि कृते" "इङ्" धातोः मीमांसकमते ज्ञानरूपफलमात्रार्थकत्वेन भावना आक्षिप्यते । एवमाख्यातेऽपि कर्त्तृवाचित्वमस्तु, तत्र भावना आक्षिप्यताम् । तदेव प्रमाणयितुमाह कृदादिवदिति–तत्र तस्येवेति–इवार्थे वतिः । कृदादिरिवेति तस्यार्थः । यथा कृदन्ते वाचक इत्यादौ वच् धातोरुच्चारणमर्थः ण्वुल्–प्रत्यार्थः कर्त्तेति । व्यापारस्तु न प्रकृतेरर्थो न च प्रत्यय स्यार्थः, कस्यार्थो भवितुमर्हतीति तत्राक्षेप एवशरणं नान्यत् । एवमादिपदात् कर्त्तरि विहित इन्यादितद्धितादावपि–आक्षेप एव शरणम् । अथ च आख्याते=तिङि कर्त्तृवाचकतास्तु भावनायाः वाचकता मास्तु यथा कृदन्तेआक्षिप्तायाः भावनाया इवाख्यातेऽपितस्याः बोध विषयतास्यात् । प्रत्यार्थो मास्तु ।

तथा सति=कृत्स्थले कृत्प्रत्ययार्थस्य कर्त्तुः प्राधान्यं व्यापारस्या प्राधान्यञ्च, यथा भवति तथा यद्याख्यातस्थलेऽपि आक्षेपः स्यातर्हि व्यापारस्य प्राधान्याभाव सिद्धान्तसिद्धव्यापारमुख्यविशेष्यक शाब्दबोधो न स्यात् ।

यथा च कृतस्थल इव तिङन्त स्थलेऽप्याक्षिप्तायाः भावनायास्तिङर्थत्वाभावेन प्रत्ययार्थत्वाभावात् प्रकृतिप्रत्ययार्थयो मध्ये प्रत्ययार्थस्य प्राधान्यबोधको न्यायो विरुद्ध्येत् । अतो न्यायस्य सम्मानार्थं प्रत्यायार्थं भावनाङ्गीकर्त्तव्येति चेत् तदपि न, आक्षिप्तस्य-प्राधान्यं प्रमाणयितुमाह घटमानयेति-मीमांसक मते जातौ शक्तिः ( वाच्यता ) घटमानयेत्यत्र वटपदस्य घटत्वरूपार्थे शक्तिः तस्य मुख्यविशेष्यतया आनयनक्रियायामन्वयश्चासम्भवः । अतो नान्तरीयकतया जात्या व्यक्तिराक्षिप्यते । तत्र आक्षिप्त व्यक्तेरपि प्राधान्यवत् = व्यक्तेः वाच्यार्थत्वाभावेऽपि प्रधानमिव ( विशेष्य इव ) उपपत्तेः = उपस्थिति विषयता जायते । महावैयाकरण-वाजप्यायन मतेऽपिसर्वेषां पदानां जातिरेवार्थः । साऽऽश्रयं विनाऽनुपपन्ना । यथा पात्रं विना अग्नेरानयनमसम्भवम् । अतः स्वाश्रयां व्यक्तिमधिष्ठाय तस्याः शाब्दबोध विषयता । एवं घटशब्दस्य घटत्वेशक्तिः । घटत्वं स्वाश्रयां व्यक्तिं परिकल्प्य शाब्दबोधविषयतावद् भवति । यदि व्यक्तौ शक्तिश्चेत् व्यक्तीनामानन्त्यात्, अनित्यत्वाच्च शब्दार्थसम्बन्धानामनित्यत्वं स्यात्, सिद्धान्ते तु-'औत्पत्तिकः ( नित्यः ) शब्दस्यार्थेन सह सम्बन्धः' । अतो न व्यक्तौ शक्तिः । एवमाक्षिप्तायाः व्यक्तेरानयनक्रियायामन्वये न काचिद्-विप्रतिपत्तिः संशयो वा । एवमाख्यातेऽपि, आक्षिप्तायाः भावनायाः प्राधाप्यं न क्षीपते । अतो न न्यायविरोधः एवं त्वयाऽपि भावनाऽक्षिप्यताम् ।

इदानीं पचतीत्यस्य विवरणं (समानार्थकेनान्य शब्देन तदर्थकथनं विवरणम्) समुपस्थाप्य भावनायाः वाच्य त्वं प्रमाणयितुं यतते पचतीत्यादाविति शक्ति ग्रहं व्याकरणोपमानेत्यादि प्रसिद्धं तत्र व्युत्पत्ति साधनं शक्तिग्राहकं व्याकरणम् । व्युत्पत्तिः विवरणमेव, विव्रीयमाणस्य पचतीत्यस्य विवरणं पाकं करोतीति । विव्रीयमाण समानार्थ बोधकंसमानशक्ति ग्रहो वा विवरणम् । विवरणविव्रीयमाणौ समानार्थकौ स्यातामित्यावश्यकम् । पच धातोर्विवरणं पाक मिति "ति" इत्यस्य विवरणं करोति (भावनेति) स्यात

तथा सति = यदि यह कहिये कि भावना के आक्षेप से भावना का प्राधान्य न होगा । आक्षिप्त ज्ञान शाब्दबोध में कारण नहीं होता है और भावना विषयक शाब्द-बोध नहीं होगा । तो ऐसा नहीं कह सकते । क्योंकि घटमानय "में जाति में शक्ति, व्यक्ति का आक्षेप किया जाता है, घटत्व जाति का आनयन क्रिया सम्भव नहीं, अगंत्या व्यक्ति का आक्षेप करते हैं । उस आक्षिप्त का अन्वय क्रिया में होता ही है । प्राधान्यपत् = वहाँ पर आक्षिप्त व्यक्ति के प्राधान्य की तरह आक्षिप्त भावना भी प्राधान्य प्राप्त करेगी ।

मीमांसक

**न च कर्तु विवरणं, तात्पर्यार्थविवरणं, 'पाकं करोति' इति अशब्दार्थ-कर्म्मत्वविवरणवत्, इतरेतरयोगद्वन्द्वे समुच्चयांशविवरणवद्वा न तदर्थ-निर्णायकमिति वाच्यम्, भावनायामपि तुल्यत्वात् ॥**

०

तिबर्थो भावनेति ध्वन्यते। तेन साऽऽख्यात वाच्येति चेन्न, विवरणस्यार्थ-निर्णायकत्वे न मानम्। करोतीत्यत्र कृञा यत्नार्थस्यतिपा यत्नाश्रयस्य कर्त्तुरपि विवरणे विषमता दृश्यते। अत आह पाकानुकूल व्यापारवत इति = पाकानुकूलव्यापारोऽस्त्यस्मिन्निति व्यापारवान् कर्त्ता। तस्य व्यापार-वतः कर्त्तुः ज्ञानमावश्यकम्। यतोहि विवरणं स्व-स्व बोधानुसारि भवति। पच्शब्देन पाकस्य बोधः "ति" शब्देन भावनाया" इत्थं निर्णयो न दातुं शक्यते। कर्त्तुरपि विवरणस्य = शाब्दबोधस्यविषयत्वे अविशेषात् = नास्ति कश्चन भेदः। अत एव एक कर्तृका पचि क्रियेति वास्तविकं विवरणम्। विवरणेकर्त्तुः प्रतीतिर्भवत्येव। तत्र भावनाया इव कर्त्तु व्याख्यानमावश्-यकम्। एतेन कर्त्तुर्वाच्यत्वमपि सिद्धम्। यदितिपः भावनायां शक्तिः कर्त्तरि वा शक्तिरिति सन्देहस्तर्हि एकतरपक्ष पातिनियुक्त्यभावात् द्वयो र्विवरण-विषयता सिद्धयति। एवं पचतीत्यत्र त्रयाणां (फलव्यापाराश्रयाणाम्) बोधः सुसिद्धः।

नन्वेककर्तृका पचिक्रियेति विवरणे कर्त्तुर्वाच्यार्थता नास्ति, किन्तु तात्पर्य ग्राहकता तत्र ज्ञेया। तदेव प्रमाणयितुमाह न चेति कर्त्तुविवरणं =

**यदि पचति में पच का विवरण (समान अर्थ वाला) शब्द (पाक्) ति का 'करोति' अर्थ होने से भावना का विवरण दर्शनीय है। अतः भावना ही ति का वाच्यार्थ हो? तन्न, पाक-रूप-फल में अनुकूल व्यापार वाला कर्त्ता भी विवरण का विषय है। अतः कर्त्ता को विवरण (शब्दार्थ) का विषय होने में अविशेषात् = कोई अन्तर नहीं है। अतः कर्त्ता भी शब्दार्थ है। यदि यह सन्देह हो कि ति में भावना की शक्ति है या कर्त्ता की, तो इसमें पक्षपात पूर्ण प्रमाण नहीं है। यदि ति का भावना ही अर्थ मानेंगे तो कर्त्ता का कैसे अर्थ लब्ध होगा। यहाँ भी कहते हैं कि कर्तृ-विवरणं = कर्त्ता का विवरण = बोध तात्पर्यार्थ विवरणम् = अर्थापत्ति से है जैसे भावना को आश्रय की आकांक्षा है वह कर्त्ता ही होता है। इस तात्पर्य से कर्त्तारूप अर्थ का ज्ञान होगा। कर्त्ता तात्पर्यार्थ है शब्दार्थ नहीं। अशब्दार्थ विवरण में दृष्टान्त—पचति का 'पाकं करोति विवरण के पाकं अंश में 'अम्' विभक्ति का कर्म अर्थ है उसका तात्पर्य से बोध होता है वह न प्रकृति का अर्थ है न प्रत्ययार्थ ही है। अतः द्वितीया का विवरण अशब्दार्थ समुच्चयांश का बोध कराने वाला च शब्द अनुक्त है तथापि**

कर्त्तरि शक्तिग्रहतात्पर्यार्थंविवरणम् अर्थापत्यालाभः (परस्पर विरुद्धत्वेना वभासमान हेतुद्वय घटित. साध्यानुमितिरर्थापत्तिः) यथा भावना स्वाश्रय-माकाङ्क्षते, तस्याः क आश्रयः ? कर्त्तैव तेन भावनाया, आश्रयतात्पर्येण कर्त्तु विवरणमर्थतोलभ्यते न शब्दार्थ इति।

अशब्दार्थविवरणस्य शाब्दबोधे ज्ञानपरकदृष्टान्तमाह–पाकं करोतीत्यादावपि, अशब्दार्थकर्मत्वविवरणवत्=पाकमित्यत्र "अम्" विभक्त्यर्थ कर्मत्व विवरणं तात्पर्यार्थविवरणं न शब्दार्थस्तत्र 'पच्' धातोः पाकोऽर्थः "ति" प्रत्ययः करोतीत्यर्थकः। अम् विभक्त्यर्थ कर्मत्वं न कस्याप्यर्थः, परन्तु कर्मत्वप्रतीति र्भवत्येव। तेन पाकमित्यत्र द्वितीयाः विवरणमशब्दार्थ इत्युच्यते। तस्मात् कर्त्तु र्विवरणमपि अशब्दार्थविवरणस्वीकारे न काचन विप्रतिपत्तिः। अशब्दार्थस्यापि कर्मत्वस्य निरूपकत्वसम्बन्धेन ज्ञानं भवत्येव।

अशब्दार्थ विवरणस्यापरमुदाहरणमाह–इतरेतर योग इति–इतरस्य इतरस्मिन् योगः। स विवक्षितसम्बन्ध एतादृश द्वन्द्वसमासे यत्रैकधर्मावच्छिन्नेन एकधर्मावच्छिन्नेऽन्वयः साहित्यम्।

तत्र समुच्यांश विवरणं तात्पर्यार्थविवरणं न शब्दार्थः। विव्रीयमाणे घटपटावित्यत्र समुच्यांशस्य बोधो भवति। तत्र समुच्चयवोधकश्च शब्दोऽनुक्तः। तथापि तात्पर्यवशात् समुच्च्यांशस्य वोधो जायते। अतोऽशब्दार्थस्य समुच्च्यांशस्य घटश्च पटश्चेति विवरणेऽशब्दार्थप्रतीतिवत् प्रसंगे पचतीत्यादावपि कर्त्तुर्लाभो न तदर्थनिर्णायकमिति–आख्यातस्य कर्त्तुर्वाच्यत्वं न निर्णीयते। भावनाया अनुरोधेन कर्त्तुबोधो आवश्यकः। अतोऽर्थतः कर्तृदोधो जायते। विवरणं न निर्णायकमिति तदर्थः। भावनायामपि तुल्यत्वात्। पूर्वोक्तरीत्या भावनाया अपि विवरणं तात्पर्यार्थे विवरणं भवितुमर्हति स्वस्वबोधानुसारि विवरणं न सार्वजनीनमर्थ-निर्णायकम्। अतो भावनायाः विवरणमिव कर्त्तुरपि विवरणं निश्चप्रचम्। इदमपि कर्तृकर्मणोराख्यातार्थत्वे मानम्।

समुच्चय अंश का बोध होता है वह तात्पर्यार्थक होता है शब्दार्थ नहीं। ऐसे ही कर्त्ता अर्थ तात्पर्य से लब्ध होगा। न तदर्थनिर्णायकम्—कर्त्ता ति शब्दार्थ है, इसका निर्णय नहीं हो सकेगा। ऐसा नहीं कह सकते, क्योंकि भावनायां अपितुल्यत्वात्—भावना अर्थ भी तात्पर्यार्थक हो सकता है। अतः दोनों के तात्पर्यार्थक होने में साम्य है। अंतः विवरण सार्वजनीन सर्वकालीन निर्णायक नहीं हो सकता।

**किञ्च 'पचति देवदत्तः' इत्यत्राभेदान्वयदर्शनात्, तदनुरोधेन कर्तुर्वाच्यत्वमावश्यकम्, पक्ता देवदत्तः' इतिवत्। न चाभेदबोधे समानविभक्तिकत्वं नियामकम्, तच्च तत्र नास्तीति वाच्यम्, 'सोमेन[1] यजेत' 'स्तोकं[2] पचति' '[3]राजपुरुषः' इत्यादावप्यभेदबोधानपत्तेः।**

०

नन्वाख्यातस्य कर्त्तरि शक्ति स्वीकारे आक्षिप्तायाः भावनायाः प्राधान्यं न स्यात् जात्याक्षिप्तव्यक्तेप्राधान्यदृष्टान्तस्तु न प्रसंगानुकुलम्। प्रसंगे तु कर्त्रा भावनाया आक्षेपः क्रियते। यतो हि भावनां विना क्रियाश्र यत्वा भावेन कर्तृत्वासम्भवात्। तत्र भावना=धर्मः कर्त्ता=धर्मी (आश्रयः) धर्मि ग्राहकमान सिद्धगुणत्वेन स्वभावतः भावनायाः प्राधान्यं न सम्भवति। यथा कृदन्ते पाचकादौ भावनायाः प्राधान्यं न जायते। दृष्टान्ते तु जातिः-परिच्छेदिका तयाऽवगतस्याश्रयस्य (द्रव्यस्य) आक्षेपात् तस्य प्राधान्येन भाने नास्ति कश्चनावरोधस्तथापि लाघवानुरोधेनभावनैव=कृतिरेव वा आख्यात वाच्या न तु कर्त्ता। एतत् खण्डनार्थमाह किञ्चेति "लः कर्मणी" त्यनुरोधेन आख्यातस्य कर्त्तरि शक्तिः। तत्र लौकिकं प्रायोगिकं वा प्रमाणं प्रस्तौति–पचति देवदत्त इति। अस्मिन्वाक्ये पदयोरभेदान्वयदर्शनात्= तिबर्थस्य कर्त्तु देवंदत्तेन सहाभेदान्वयो भवति। अत एव देवदत्ताभिन्नैककर्तृको विक्लित्यनुकुलव्यापार इति शाब्दबोधदर्शनानुरोधेन अर्थात् तिबर्थकर्तृ देवदत्तयोरभेदान्वय दर्शनानुशासनेन कर्त्तु र्वाच्यत्वम्=आख्यातस्य कर्त्तरि शक्तिस्वीकार आवश्यकः। यदि कर्त्ता वाच्यार्थो न स्यात् तर्हि, उक्तोऽनुभूयमानश्च शाब्दबोधो न स्यात्। अभेद बोधनार्थं कर्त्तरि शक्तिरावश्यकी। एतत् प्रमाणयितुं दृष्टान्तमाह–पक्ता देवदत्त इति वदिति=तत्र पक्तृ पदार्थस्य देवदत्तपदार्थेन सहाभेदान्वयो दृश्यते। कर्त्तरि तृच्प्रत्ययस्याभेदेनान्वयात्। अतो विक्लित्यनुकुलव्यापारवान् देवदत्त इति बोधः। तथा देवदत्तपदार्थस्य तिबर्थकर्त्तर्यभेदान्वयानुरोधेन कर्त्तुर्वाच्यता आवश्यकी। एतेनाख्यातार्थः कर्त्तेति गम्यते।

न चाभेदबोध इति–तत्रैवाभेद बोधो जायते, यत्र सामानाधिकरण्यम्। तच्च समानविक्तिकत्वाधीनम्। तत्रोभयत्र "सु" विभक्ति (समान विभक्ति) रस्ति। एतेनाभेदबोधे समानविभक्तिकत्वंनियामकमिति ध्वन्यते। तत्राभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताकशाब्दबोधं प्रति नीलोघट इत्यादाविव समानविभक्तिकपदजन्योपस्थितिः कारणम्। अतो यद्विभक्त्यन्तप्रातिपदिकार्थस्तद्विभक्त्यन्तपदजन्योपस्थितिराव-

श्यकी। यदि प्रथमा विभक्त्यन्तप्रातिपदिकार्थस्तत्राभेदबोधे प्रथमात्वेनोपस्थिनि: कारणम्। पक्ता देवदत्त इत्यत्र प्रथमात्वेन सुत्वेन वा समान वचनकत्वं विभक्तिकत्वं वा ग्राह्यम्। तच्चात्र नास्ति=पचति देवदत्त इत्यत्र समान विभक्तिकत्वं नास्ति। प्रथमायाः तिङ्विभक्तेश्चैकैक रूपेण साजात्येन (तिङ्त्वेन सुत्वेन वा) प्रतीतिरपि नास्ति। साजात्यञ्च=विभक्तिविभाजकप्रथमात्वादिनाऽपि ग्राह्यम्। एवमभेदान्वयनियमस्य समन्वयाभावात् कथं तदनुरोधेन कर्त्तुर्वाच्यत्वमुच्यते:। तन्न व्यभिचरितोऽयं समान वचनकत्व नियमः समान विभक्तिकत्वं वा। अन्यथा सोमेन यजेत्, स्तोकं पचति, राजपुरुष इत्यादावभेद बोधो न स्यात्। समान विभक्तिकत्वाभावात्।

सोमेन यजेदित्यत्र सोमपदस्य सोमवति लक्षणेति मीमांसकास्तैस्तत्र सोमवत्पदार्थस्य यज् धात्वर्थयागेऽभेदेनान्वयः, यागस्य च करणत्वेन लिङर्थे भावनायामन्वयः सोमवदभिन्ना यागकरणिका इष्टोद्भावनेति शाब्दबोध सम्भवः यद्यभेदबोधे सामानविभक्ति कत्वं नियामकं तर्हिउक्त प्रयोगे मीमांसकाभिमताभेदान्वयो न स्यात्। सोमवता यागेन इष्टं-स्वर्गं पुण्यं पुत्रं वित्तम् यशो वा भावयेत्। अत्र समानविभक्त्यभावेऽभेद बोधो जायते। तत्रक्व समान विभक्तिर्लभ्यते। एवं पचतीत्यादावपि समानविभकिकत्वाभावेऽप्यभेदान्वयबाधदर्शनेन कर्त्तुर्वाच्यत्वभावश्यकम्। तस्मात् सोमेन यागेनेति वक्तुं न शक्यते, अतो वाक्यभेद निवृत्त्यर्थमुक्तन्याये व्यभिचार सिद्धयर्थम्-असमानविभक्तिकेऽपि अभेद बोधनार्थं सोमपदस्य मत्वर्थीये लक्षणाऽपरिहार्या। सोमेन शीतलेन दयार्द्र स्वभावेन यागेत्-लोकं सेवेदित्यर्थः। अत्र सोमः सद् गुणानां प्रतिनिधिः।

एवं स्तोकं=पचतीत्यत्र पच् धात्वर्थ विक्लित्तिरूपे फले स्तोकपदार्थस्य अभेदान्वयः। स्तोकं=स्वल्पं विक्लित्यनूकुला भावेनत्यर्थः। अत्र समान विभक्त्यभावेऽपि अभेदान्वय बोधो जायते अतः समानविभक्तिकत्वनियम-

यदि शाब्दबोध में भावना के प्रत्ययार्थ प्राधान्यानुरोध से 'ति' का भावना ही अर्थ होना चाहिये, कर्त्ता नहीं। इस शंका के समाधान में बोले, "किञ्च=देवदत्तः पचति" इस वाक्य में ति के अर्थ (कर्त्ता) का देवदत्त के साथ अभेद (अभिन्न) सम्बन्ध होता है। इस अनुरोध से कर्त्ता ही वाच्य (ति का अर्थ) होना आवश्यक है। दृष्टान्त—पक्ता देवदत्तः इतिवत—यहाँ तृच् प्रत्यय का अर्थ कर्त्ता है। उसका देवदत्त के साथ अभेद अन्वय है। इसी प्रकार दार्ष्टान्त भी समझें।

नेष्टः। तथा सति पचति भजतीत्यादावभेदान्वय दर्शनेन कर्त्तुर्वाच्यत्वमावश्यकम्।

यद्यपि पूर्वोक्तौ दृष्टान्तौ पर्याप्तावास्तां किन्तु कथं तृतीयो 'राजपुरूष' इति दृष्टान्तः। अत्रोच्यतेऽभेदबोधे समान विभक्तिकनियमव्यभिचार प्रदर्शने सोमेन यजेत स्तोकं पचतिति दृष्टान्तावप्रासाङ्गिकावास्ताम्। यतो नामार्थयोरभेदान्वय इति नियमः। तत्र नामार्थश्च-नामार्थश्चेति नामार्थौ तयोः नामार्थयोः। तत्र द्विवचनोच्चारणेन द्वयोः नामार्थयोरेवा भेदान्वय व्यस्थापितो निश्चयते। प्रसङ्ग=अनुयोगि प्रतियोगिनोः=विशेष्य विशेषणयोरूभयो नानार्थत्वाभावेननियमस्य प्रसंग एव नास्ति। तस्मात् अभेदान्वयबोधेऽसमान विभक्तिकयो नामार्थयोरूदाहरणंराजपुरूष इति। अत्रोभयोः नामार्थत्वे सति समान विभक्तेरभावेऽप्यभेद बोधो जायते अत उक्तन्याये व्यभिचार इत्यभिप्रायेणाह राजपुरुष इति। मीमांसक मते राजपदस्य राजसम्वन्धिनि लक्षणाक्रियते। सम्वन्धस्य पुरुषपदार्थेन सहाभेदान्वयो भवति। राज सम्वन्ध्यभिन्नः पुरुष इति समासार्थः। अत्र समान विभक्तिं विनाऽप्यभेद बोधो जायते। एवं सोमेन यगेत्, स्तोकं पचतीव, देवदत्तः पचतीत्यत्रापि समान विभक्त्यभावेसत्यभेदान्वय दर्शनेनाख्यातस्य कर्त्तृवाचित्वं सिद्धम्। आख्यातशक्त्या देवदत्तेनसहाभेदान्वयोऽपि जायते। तेन देवदत्ताभिन्नैक कृत्तर्तृका पाकानुकुला भावनेति शाब्दः।

परन्तु पूर्वोक्ताविचारणा न्यायमीमांसा शास्त्रसम्मताः। तन्मते व्यपेक्षा वादः, पूर्व पदार्थे, उत्तरपदार्थे वा शक्त्या लक्षणया वा सम्बन्धो युक्तः। मम शाब्दिक नये तु नैवं वक्तुं शक्यते, जहत्स्वार्थानुरोधात्। तस्या वृतौ पूर्वोत्तर पदार्थयोः प्रसङ्ग एव नास्ति। तत्र राजाभिन्नः पुरुष इत्यर्थेशक्तिरेव। तत्र क्वसमानविभक्तिकत्व नियमावसरः।

न च=न कहिये अभेद बोध में समान विभक्ति अनुशासिका है। जैसे—"पक्ता देवदत्तः में दोनों शब्दों में सुविभक्ति ही समान विभक्ति है, समान वचन भी। इससे अभेद बोध होता है। तच्च=वह समान विभक्ति; अत्र="देवदत्तः पचति"; यहाँ पर नहीं है। तन्न, अभेद बोध में समानवचन का नियम व्यभिचरित है। क्योंकि सोमेनयजेत् (सोम से अभिन्न याग) स्तोकं पचति=पच् धात्वर्थ विक्लित्ति रूप फल में स्तोक पदार्थ का अभेद सम्बन्ध होता है, असमान विभक्ति का दृष्टान्त— "राजपुरुषः" में भी राजा से अभिन्न पुरुष का बोध होता है। यदि समान वचन को अभेद बोध में कारण मानेंगे तो उक्त दृष्टान्तों में अभेद बोध न हो पायेगा। अतः देवदत्तः पचति में समान विभक्ति तथा समान वचन के बिना भी अभेद बोध के लिए ति का कर्त्ता अर्थ मानना चाहिये।

**न च लक्षणया कर्तु रुक्तत्वात् सामानाधिकरण्यम्, पिङ्गाक्ष्यादियौगिकामामपि द्रव्यवाचित्वानापत्तेः। एवं वैश्वदेवीत्यादितद्धितानामपि, "अनेकमन्यपदार्थे" "साऽस्य देवता" इत्यनुशासनेन पिङ्गे अक्षिणी यस्याः, विश्वेदेवा देवता अस्या इति विग्रहदर्शनात्प्रधानषष्ठचर्थे एव अनुशासनलाभात्।**

o

मीमासकाः लक्षणया कर्त्तरि शक्तिरिति साधयितुं यतन्तेः न चेति–तैः पचति देवदत्त इत्यादौ सामानाधिकरण्य संसिद्धये तिङः व्यापारे शक्तिः कर्त्तरि लक्षणा च क्रियते। लक्षणा=स्वज्ञाप्यसम्बन्ध रूपा। स्वं = तिङ् तज्ज्ञाच्या = बोध्या भावना तस्याः सम्बन्धी = कर्त्ता। एवं लक्षणया प्रतीयमानस्य कर्त्तु रूक्तत्वात् देवदत्तेन सहाभेदान्वयाच्च सामानाधिकरण्यम्, एकाधिकरणवृत्तित्वम्, एकार्थाभिधायित्वमभिन्नत्वं वा वोध्यम्।

प्रासङ्गिक लक्षणाखण्डनम्-यदिस्वज्ञाप्य लक्षणाऽङ्गीक्रियते, तर्हि यत्र-यत्र स्वज्ञाप्यत्वं तत्र-तत्र-लक्षणेति साहचर्यनियमाक्रान्तः स्यात्। परिणामतः पिङ्गाक्ष्यादि यौगिकानामपि = मीमांसासम्मतद्रव्यवाचकशब्दानां द्रव्य वाचित्वम् = आश्रयार्थकत्वन्न स्यात, लक्षणयैव द्रव्यरूपार्थस्य प्रतीतेः। अर्थात् पिङ्गेऽक्षिणी यस्या इति समासेऽवयवयशक्तिदर्शनाद्-योगशक्त्या प्रवृत्तानां पिङ्गाक्ष्यादि शब्दानां द्रव्यरूपार्थो न स्यात्। विशेष्यत्वेन प्राधान्यं न स्यात। यतोहि लक्षणयैव स्पज्ञाप्यसम्बन्धेन स्वामिनः प्रतोतिसम्भवा। स्वज्ञाप्यं पिंगाक्षीति, तत्सम्बन्धीकश्चन स्वामी (द्रव्यम्) एवं सम्बन्धस्यैव प्राधान्यं न तु सम्बन्धिनः। पिङ्गाक्षादीनां गुणत्वात् क्रयण क्रियायामन्वयासम्भवात्। अतोऽशरणं लक्षणाकरणम्। एवं वैश्वदेवीत्यादितद्धितानामपि। तथाहि विश्वदेवो देवता अस्या इति विग्रहे "अण्" प्रत्ययस्य देवताविशिष्टदेयं द्रव्यमर्थः। विश्वदेव सम्बन्धिन्यामिक्षेति वाच्यार्थो न तु लक्ष्यार्थः। उक्तञ्च,-अमिक्षां देवता युक्तां वदत्येवेष तद्धितः। एष तद्धितप्रत्ययोऽण् देवतायुक्तामामिक्षां वदति विश्वदेवसम्बन्ध्याभिक्षा द्रव्यं प्रतीयते। यदि स्वज्ञाप्य सम्बन्धे लक्षणा

न च—न कहिये भावना का भावनाश्रय में लक्षणा की ही जाती है। अतः लक्षणा के द्वारा कर्त्ता के उक्त होने से कर्त्ता का देवदत्त के साथ सामानाधिकरण्यं = अभेद सम्बन्ध वन जायेगा। तन्न—यदि लक्षणा से कर्त्ता को उक्त करेंगे तो लक्षणा का प्रभाव अन्यत्र भी पड़ेगा। जैसे—पिङ्गाक्षी एक हायनी; अरुणा आदि यौगिक शब्दों को बहुव्रीहि समास होने से द्रव्यवाचक माना गया है। यहाँ भी लक्षणा से द्रव्य अर्थ का लाभ सम्भव था। तो पिङ्गाक्ष्यादि शब्दों को योगार्थ से द्रव्यार्थक क्यों

क्रियते, तर्हि वैश्वदेवीपद ज्ञाप्या (बोध्या) अमिक्षा लक्षणयैव सम्बन्धिनो बोध सम्भवे, पुनस्तत्र "वैश्वदेवी" आमिक्षे त्यादौ मीमांसकाभिमतं द्रव्यवाचित्वप्रदर्शनमनुपपन्नंस्यात्। अतो लक्षणाऽनावश्यकी यदि प्रत्ययार्थस्य द्रव्यवाचित्वं न स्यात् तर्हि बलाबलाधिकरणोच्छेदापत्तिः स्यात्। यथा 'तपते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वांजिभ्यां वाजिन इतिश्रूयते "तत्र उष्णे दुग्धेदधिनिक्षेपे सति विदीर्णे पयसि स्थूलांश आमिक्षा, जलीयांस वाजित इति च उभे कर्मणी स्तः। तदाह देवताभिन्नं तत्तत्करणद्वयं पृथक-पृथक विधीयते वैश्वदेव्यामिक्षे त्यत्राण्प्रत्ययस्य विश्वेदेवरूपदेवता विशिष्ट सम्बन्धिनोद्रव्यस्य ( अमिक्षायाः ) विश्वदेवेन सह श्रौतः ( उच्चारणगुणविशिष्टः ) सम्बन्धो जायते। वाजिनमिति अन्यस्याः कर्म। अतो वाजिभ्य इत्यनेन अपूर्वदेवताया विधानं कल्प्यते। एतेन तद्धितस्य मम्बन्धिनि शक्तिः न तु सम्न्धे। यदि सम्बन्धे शक्तिस्तर्हि वाजिनाभिक्षयोः (जलीयांस स्थूलांशयोः) समानरूपेण वाक्यीयसम्बन्धः स्यात्। परन्तु वाक्यसम्बन्धेन श्रुतसम्बन्धो बलीयान् भवति। अत्र प्रमाणं श्रुति लिङ्ग वाक्य प्रकरणस्थान समाख्यानां पार दौर्बल्यमर्थविप्रकर्षति। तस्मात् सम्बन्धिनि शक्तिः। तेन तद्धितानां पिङ्गाक्षादीनाञ्च द्रव्यार्थकथनं सार्थकं भवति। लक्षणया द्रव्यबोधे तु तयैव निर्वाहे निरुक्तस्थले द्रव्यबाचित्वकल्पनं मुधैव स्यात्। प्रधाने शक्ति प्रकाशकंप्रमाणं प्रस्तौति कौण्डभट्टः "अनेकमन्य पदार्थे" इति। सूत्रेऽन्यपदार्थे वर्त्तमानमनेकं सुबन्तं समस्यत इतीत्थमनुशास्ति। तत्र षष्ठ्यर्थस्य अन्य पदार्थस्य प्राधान्ये सत्येव समासानुशासनम्। लक्षणयातु समासार्थस्य षष्ठ्-

मानें ? अतः लक्षणा से पिङ्गाक्ष्यादि शब्द की साक्षात् द्रव्यवाचित्वकी अनापत्तेः = असिद्धि होगी। एवं = ऐसे ही वैश्वदेवी इत्यादि तद्धित प्रत्ययों अरुणादि का भी द्रव्यवाची अर्थ नहीं होना चाहिये। वहाँ भी लक्षणा से द्रव्य अर्थ हो सकता है। अतः उक्त प्रमाणों से लक्षणा नहीं होनी चाहिये। इससे कर्त्ता अर्थ का ज्ञान अव्यवहारिक एवं अप्रामाणिक है और भी "अनेकमन्य पदार्थे" सूत्र अनेकों सुबन्तों के अन्य पदार्थ में वर्तमान रहने पर बहुव्रीहि समास का अनुशासन करता है। जैसे—पिङ्गे अक्षिणी यस्यासा यहाँ प्रधान षष्ठयर्थ का द्रव्यपरक अनुशासन है। ऐसे ही "सास्य देवता" सूत्र षष्ठयर्थ प्रधान पदार्थ में अण् का अनुशासन करता है। जैसे—विश्वेदेवा देवता अस्या ( आमिक्षायाः इस विग्रह में प्रधान षष्ठी का अर्थ विश्वदेव सम्बन्धिनी आमिक्षा ( द्रव्य ) है। इन अनुशासनों से सिद्ध होता है कि द्रव्य ( कर्त्ता ) अर्थ के लिए लक्षणा नहीं होगी। अन्यथा लक्षणा से ही द्रव्यार्थ का बोध हो जाता, द्रव्यार्थक अनुशासन अननुकूल है !

**तथा च "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" इति वाक्ये द्रव्यानुक्तेरारुण्यस्य स्ववाक्योपात्तद्रव्ये एवान्वयप्रतिपादकारुणाधिकरणोच्छेदापत्तिः, द्रव्यवाचकत्वसाधकमूलयुक्तेः सामानाधिकरण्यस्योक्तरीत्योपपत्तेरिति प्रपञ्चितं विस्तरेण बृहद्वैयाकरणभूषणे ।**

o

यर्थसम्बन्धस्य च प्राधान्यं न स्यात् । लक्षणया निर्वाहे तु त्वदभिप्रायोऽस्फुटः-स्यात । अतो लक्षणा अनावश्यकी ।

एव "सास्यदेवता" इतिसूत्रे देवतीदेश्यकस्यास्येति द्रव्यवाचकस्य षष्ठ्यर्थस्य प्राधान्ये सत्येव "अण्" अनुशिष्यते । लक्षणया निर्वाहे तु द्रव्यवाचित्वपर्यन्तानुधावनमवहेलितं स्यात् । अनुशिष्यन्तेऽनेनेत्यनुशासनमिति व्युत्पत्त्या बहूब्रीहीणां तद्धितानाञ्च प्रधानषष्ठ्यर्थेऽनुशासनात् । अनुशिष्टिरनुशासनं, विधानं तस्य लाभात् । लक्षणास्वीकारे उचितद्रव्यस्योपस्थापनं न स्यात् । एवं लक्षणया प्रधानानुशासनविरोधस्त्वस्त्येव, युक्ति विरोधोऽप्युपलक्षितः । तद्यथा—दण्डीत्यत्र "इन्" प्रत्ययस्य दण्डसम्बन्धवानित्यर्थः, न तु सम्बन्धमात्रम् । अतएव—दण्डसम्बन्धवान् इति प्रतीतिः सर्वसम्मता । द्रव्य एव इन्प्रत्ययस्य तात्पर्यं वर्त्तते लक्षणया तु तात्पर्यभङ्गः स्यात् । अर्थात् "अनेकमन्य पदार्थे" सास्य देवता अनयोः सूत्रयोरनुशासनेन पिङ्गे अक्षिणी अस्याः विश्वेदेवो देवता अस्या इति विग्रहप्रदर्शने प्रधानषष्ठयर्थे बहूब्रीहिकरणे (लक्षणया) शाब्दबोधो न स्यात् । अतोऽन्य पदार्थेऽण् पदार्थश्च द्रव्यवाचिनावनुशासितौ स्तः । यदिलक्षणाश्रेयस्करी स्यात्तर्हि तयैव द्रव्यवाच्यर्थेलाभे सति कथं तयोः शक्त्या द्रव्यं वाच्यमनुशासितम् । लक्षणा तु जघन्या वृत्तिरस्ति, तया सामानाधिकरण्यं न सम्भवति । तदर्थं ग्रन्थकारेण कर्त्तरि शक्तिरित्युक्तम् ।

मीमांसक मते षष्ठ्यर्थप्राधान्ये । यदि—प्रवृत्तिनिमित्तं गुणमात्रं शक्यार्थस्तर्हि, अरूण, एकहायन, पिङ्गाक्षादिगुणमात्रेण सोमस्य क्रीणाति क्रयायामन्वयो न भवितुमर्हति । क्रीणातौ मूर्तिमान् दव्यमेवान्वेति न तु गुणमात्रम् । अतएवारुण्यादीनां द्रव्यवाचकत्वं तैरङ्गीकृतम् । यदिलक्षणा स्वीक्रियतै तर्हि द्रव्यवाचित्वपरमाधिकरण्यमुन्मुलितं स्यात् । तदाह तथाचेति—

मीमांसाया अरूणाधिकरणस्यैकं सूत्रमुपस्थापितम् "अरुणया पिङ्गाक्ष्यैक हायन्या सोमं क्रीणातीति श्रूयते" ।

तत्र अरूणः—आरूण्य गुणोऽस्त्यस्य इत्यरूणा, द्रव्य प्रधानबोधे टाप् ( गौः ) पिङ्गेऽक्षिणी यस्या सा पिङ्गाक्षीत्यत्र व्यक्ति प्रधानबोधे बहुब्रीहिः,

एवमेकं हायनं=वर्षोऽस्याः सा–एकहायनीति। अत्र तथा त्रयाणां द्रव्य (व्यक्ति) वाचकनां वाक्य उपादानात्, अरूणाधिकारे स्ववाक्योपात्तद्रव्य एवान्वयनियमः। एवमरूणादिवाक्यं तत्रोक्तमुपात्तं, गृहीतं यद् द्रव्यं (व्यक्तिः) तत्रैव पदार्थानामन्वयः। अरूणादिगुणानां स्ववाक्येगृहीत द्रव्याणामेव क्रियायामन्वयः। अतएव अरूणादि गुणविशिष्टसाधनिका सोम-कर्मिका, आदानप्रदानानुकुला भावनेति सिद्धान्तसिद्धो बोधः। लक्षणया तु स्वज्ञाप्य सम्बन्धस्य प्रतीतिरिति नियमः। स्वाः—अरूणादयः तैः ज्ञाप्ये बोधनीये यः सम्वन्धः=द्विनिष्ठो धर्मः, तेन ज्ञाप्यो धर्मी, गुणी, गौः तस्य वाक्येऽनुच्चारणात् व्यक्तेरनुक्तत्वेनाग्रहणात् सिद्धान्तविरोधः सम्भवि। आरूण्यादीनां विशेषणत्वं तदा यदा–आरूण्यादि घटिते वाक्ये विशेष्यरूपं द्रव्यमुच्चारयेत्। वाक्ये द्रव्यस्यानुक्तत्वात् लक्षणया अरूणाधिकरणोच्छेदा-पत्तिः। अर्थात् पचतिपदघटकस्य "ति" प्रत्ययस्य भावनायां शक्तिः कर्त्तरि च लक्षणा स्वीक्रियते तथा सति देवदत्तादिभिः सम सामानाधिकरण्यम् (अभेदान्वयः) उपपाद्यते। तदा "अरूणया पिङ्गाक्ष्या" इति श्रुति वाक्येऽपि पिङ्गाक्षी पदस्यैव=ज्ञाप्यसम्बन्धरूपलक्षणया एवं गोरूप व्यक्तेः बोधः क्रियताम्। तस्मिन् गवात्मके द्रव्ये आरूण्यादीनां तादात्म्येनान्वयो-विधीयताम् अरूणादिपदानां गोरूपद्रव्ये शक्तिस्वीकारो व्यर्थैव स्यात्, तस्माल्लक्षणा नास्ति श्रेयसी। अर्थात् अरूणाधिकरणे शक्तिः (एकार्थी भावरूपा) स्वीक्रियते, एवं तिङ्प्रत्ययेऽपि–सामानाधिकरण्यार्थं कर्त्तरि शक्तिः स्वीक्रियताम्। आरूण्यादीनां द्रव्य वाचकत्वमूलयुक्तेः=भवन्मते लक्षणया व्यक्ति वाचकत्व कथनं मूलयुक्तिरस्ति। अतो लक्षणया सामानाधि-करण्यस्य=अभेदबोधस्य उक्त रीत्या=लक्षणा रीत्या उपपत्तेः।

तथा च=देवदत्तः पचति में लक्षणा से ति का कर्त्ता अर्थ मानकर उसका देवदत्त के साथ सामानाधिकरण्यं (अभेद सम्बन्ध) करेंगे, तो अरुणा अधिकरण ही उच्छिन्न हो जायेगा। यथा—अरुणा=लाल रङ्ग वाली, पीली आँख वाली, एक वर्ष की (बछड़ी से) सोमरस खरीदते हैं। इस वाक्य में द्रव्य—जिससे सोमरस खरीदा जायेगा। वह (बछड़ी) अनुक्त (अनुच्चारित) है। अरुण आदि गुणवाची है। उनका स्ववाक्ये=अभिव्यक्त वाक्य में उपात्तद्रव्ये=गृहीत क्रयणार्ह वस्तु (द्रव्य) में अन्वय=सम्बन्ध का प्रतिपादक अरुणाधिकरण उच्छिन्न हो जायेगा। अतः लक्षणा द्रव्यार्थ का बोधक नहीं होगी। अन्यथा—अरुणादि द्रव्य अर्थ के वाचक हैं। इसमें इसके सिद्ध की मूल युक्ति=सामानाधिकरण्यं (अभेद सम्बन्ध) लक्षणा से ही हो जाती है। अरुणादि को द्रव्यवाचक क्यों माना, इत्यादि वृहद् वैयाकरण भूषणसार में विस्तृत व्याख्यान किया गया है।

**तिङ इति। बोधकतारूपाशक्तिस्तिङ्क्ष्वेवेत्यभिप्रेत्येदम्। पदार्थं निरूप्य वाक्यार्थं निरूपयति—फलेत्यादि। विक्लित्त्यादि फलं प्रति। तिङर्थःकर्तृ—कर्म्म—संख्या—कालाः। तत्र कर्तृकर्म्मणी फलव्यापारयो-र्विशेषणे, संख्या—कर्तृप्रत्यये कर्त्तारि, कर्मप्रत्यये कर्म्मणि, समानप्रत्ययो-पात्तत्वात्।**

o

अर्थात् लक्षणया द्रव्यवाचकं मत्वा सामानाधिकरण्यं नोपपादितम्। तेन सिद्धयति यल्लक्षणा जघन्येति। इतोऽधिकं वृहद् वैयाकरणभूषणसारे द्रष्टव्यम्। तत्रत्या संक्षिप्तिः निर्दिश्यते। मीमांसक मते जातौ शक्तिः। "नाग्रहीत विशेषणा बुद्धिः विशिष्टमुपजायते" इति न्यायात् अरूण शब्दोऽरूण गुण परः विशेषणे शक्तिस्वोकारात्, एवं पिङ्गाक्षी शब्दः पिङ्गाक्ष परः, एकहायनी एकहायनार्थकः। अतोऽरूणादिशब्दाः गुण-विषयतया प्रयुज्यमानाः, गुणविशेषार्थवाचकाः। अरूणगुणसत्वे—अरूण शब्दः शक्तो भवति। एवमन्यत्रापि गुणानामभावेऽशक्तः, इत्यन्वयव्यतिरे-काभ्यां विशेषणे शक्तिरिति व्युत्पत्तिः। विशेषणीभूते अरूणादिगुणे करण-तृतीयायाः श्रुत्या क्रीणातिना योगे तेषां क्रयणसाधनत्वं सम्भवति। गुणा अमूर्त्तायाः सन्ति। तैः क्रयणकरणत्वं न सिद्धयति। मूर्त्तिमद् द्रण्येणैव हिरण्यादिना वस्तूनि विक्रियन्त आक्रियन्ते च न तु हिरण्यगतगुण मात्रंण उक्तञ्च—अमूर्त्तत्वात् गुणौ नैव कियां साधयितुं क्षमः।

तस्मात् क्रीणातिनाऽस्य सम्भवत्येकवाक्यता॥

आरूण्यादिगुणाः अमूर्त्तत्वात् क्रयणक्रियां साधयितुम् असमर्थाः भवन्ति। तस्मात् गुणस्य क्रीणातिना सह एकवाक्यतासाधयितुं शक्तिस्वीकार आव-श्यकः न तु लक्षणा। एवं रूपेण क्रीणाति, रसेन क्रीणातीत्यादौ स्वाश्रयद्रव्य द्वाराक्रयणकरणत्वं सिद्धयति। एवम्, आरूण्यस्यापि स्वाश्रयभूतगोरूपद्रव्य-द्वारा सोमस्य क्रयणकरणत्वं संसाध्यताम्।

यस्मिन्नर्थे लकारः स लकारार्थो न तिङर्थः "लः कर्मणि" इति सूत्रेण कर्त्तरि कर्मणि वाऽर्थे लकारोऽनुशिष्यते। एतेन फलव्यापारयोराश्रयार्थ-बोधिताशक्तिर्लकारे सिद्धचति न तु तिङि। कथम् "आश्रयेतुतिङःस्मृता" इत्युच्यते, अतआह—तिङ बोधकता इति।

तिङ् इति यद्यपि लः कर्मणि सूत्र के लकार में कर्त्ता कर्म अर्थ की शक्ति सिद्ध है। आश्रय के लिए तिङ् का स्मरण क्यों? उत्तर—लोक में बोध कराने की शक्ति तिङ् में ही है। अभिप्राय: से 'आश्रये तिङ् स्मृताः'

लोकेऽर्थ विषयक बोधजनकत्वमर्थवत्वं सुप्रसिद्धम्। तेन आश्रयार्थ बोधजनकता शक्तिःतिङ्क्ष्वेव बोध्या। लोकेतिङः कर्त्तरि कर्मणि वा प्रत्यय इति निश्चीयते। यथा बाजपेयी राष्ट्रसंघेहिन्दीभाषामतिष्ठिपत्। अत्र तिङा बोध्यमानेनाश्रयेणाभेदान्वयात् वाजपेयी कर्त्ता, इति सर्वानुभवः। लकारेण तु वैयाकरणैरेवानुगम्यते सोऽपि लोकेऽर्थविषयक बोधजनकत्वसिद्धान्त-विरुद्धः। लकारे त्वारोपाच्छक्तिः।

फलव्यापारयोरिति कारिकायां पूर्वार्धांशेन—पदार्थं निरूप्येदानीं वर्णितानां पदार्थानां परस्परं कस्य केन सह कुत्रान्वयः। केन सम्बन्धेन कस्मिन् पदार्थेऽन्वयः। एतत् प्रतिपादनपरकसम्बन्धावगाहिवाक्यार्थस्य-निरूपणं क्रियते। परमार्थतस्तु वाक्यस्फोट एवार्थवान्' इति सिद्धान्तात् वाक्यादेव लोकोपकारका अर्था स्फुटन्ति। तत्र वाक्यार्थबोधे पदार्थज्ञानस्य कारणत्वात्। धातुपदस्यार्थौ फलव्यापारौ, तिङ् पदार्थाः कर्त्तृ–कर्म–संख्याः काला–पूर्वं निरूपिताः। इत्थं वाक्ये कारणीभूतं–पदार्थं बोधयित्वा तत्कार्यभूतं वाक्यार्थज्ञानं प्रसंगानुकुलम्। प्रसङ्गसङ्गतिसिद्धचर्थमाह पदार्थं निरूप्य वाक्यार्थं निरूपयतीति। फले प्रधानं व्यापारः तिङर्थस्तु विशेषण-मिति। धात्वर्थौ प्रत्ययार्थाश्च मिलित्वा षऽर्था इति गम्यन्ते। षण्णामभावे वाक्यार्थाभावः। तेषु कस्य प्राधान्यमिति विचारे यास्कमुनिवचनात् व्यापा-रस्य—प्राधान्यम्। व्यापिपर्ति फलं जनयति कर्त्तृकर्मादीन् संयोजयतीति व्यापारः। फल जनकत्वे प्रधानं व्यापारः, फल निरूपित प्राधान्य वदभिन्नो व्यापार इत्यर्थः। तिङर्थ इति—अत्रैकवचनं तिङोयोऽर्थस्तत्र कर्त्तृकर्मसंख्या-कालानां तिङःशक्यत्वेन = एकया शक्त्योपस्थितत्वेनानुगमादेकवचनम्। यतः शक्तिरेकैव, अत एकवचनम्। करपात्रिःवेदमुद्धरति–अत्र तिङर्थः, कर्त्ता करपात्रिपदार्थेऽभेदेनान्वेति, तिङर्थः कर्म अभेदेन वेदपक्षर्थेऽन्वेति। तिङर्थ संख्या कर्त्तरि समवायेन युज्यते। एवं तिङर्थकालः शुद्ध संस्कारानुकुले व्यापारे विशेषणम्।

अब पदार्थ का बोध करा कर वाक्यार्थ का बोध करते हैं। 'फले प्रधानं व्यापारः' इत्यादि = विक्लिति ( ओदन ) इत्यादि फल के प्रति व्यापार का प्राधान्य है। तिङ् का अर्थ कर्त्ता कर्म संख्या काल है। तत्तत्वाक्य में कर्त्ता और कर्म फल और व्यापार में क्रम से विशेषण है, संख्या यदि कर्त्ता में प्रत्यय हो तो कर्त्ता में विशेषण, कर्म में प्रत्यय हो तो कर्म का विशेषण बनती है। समान प्रत्यय ( एक ही तिङ् प्रत्यय ) से उपात्वात्—ग्रहण किये गये हैं। कर्त्ता, कर्म और संख्या एक ही प्रत्यय के सन्तान हैं। इसलिए सम्बन्धित हैं।

कारपा त्र्यभिन्नैक कर्त्तृको वर्त्तमानकालिको वेद-कर्मकः शुद्धसंस्कारानुकुल व्यापार इति शाब्दबोधे विषयतया तिङर्था भाषन्ते। तेषां परस्परमन्वयप्रकारं प्रदर्शयति। तत्र कर्त्तृकर्मणींफलव्यापारयोः विशेषणे। कर्त्तृ प्रत्येये कर्त्ता व्यापारे विशेषणम्। यूयं सङ्गच्छध्वमित्यत्र युस्मदभिन्नो वहुकर्त्तृकः संगमनानुकुल व्यापार इत्यत्र कर्त्ता विशेषणं व्यापारस्य प्रधान्यम्। एवं कर्मणि प्रत्यये कर्म फले विशेषणं यथा-हरिणाऽहं रक्ष्ये "अत्र हर्यभिनैककर्त्तृको वर्त्तमानकालिको अस्मन्निष्ठरक्षणानुकुल व्यांपारः। अत्र कर्म विशेष्यम्। नवीन मतेतु फलमुख्यंविशेष्यक शाब्दबोधमनुसृत्य हर्यभिन्नैकत्वं विशिष्टाश्रय वृत्तिव्यापारजन्या अस्मदर्थात्मनिष्ठा रक्षेति।

संख्या तु यस्मिन्प्रत्ययस्तस्मिन्नन्वेति। सोऽपि समवायसम्बन्धेन यथा कुलपतिः गच्छति, कृष्णेन श्रूयत इत्यादौतिबर्थसंख्या कुलपतिमन्वेति। तङर्थ कर्म कृष्णम्। यथा सुबर्थसंख्याया स्वप्रकृतिः, तत्रैव संख्या अभेदेन विशिष्टा भवति। तथैव तिङर्थसंख्यायाः तिङ प्रकृत्यथैं धात्वर्थे एवान्वयोचितः। अथवा तिङर्थ-संख्यायाः कर्त्तरि कर्मणि वाऽन्वये किं कारणमत-आह समानेति-कर्तृ संख्ययोः कर्म संख्ययोर्वा पचति पच्यते इत्यादौ समानः (एकः) प्रत्ययो बोंधकः, उपात्तो=गृहीतः तस्मात् समानप्रत्योपातत्वात् =एकस्तिङप्रत्ययंः समान रूपेण कर्तृकर्म संख्या कालानां वाचकः। तत्राख्यातार्थ संख्या समवायसम्न्धेन कर्तृकर्मान्यन्तरान्वयिनी। कालस्य परिछेद्यपरिछेदकभावेन व्यापारेविशेषणता। यथा वरोऽन्यत्र जायते कन्याचान्यत्र तयोः वैवाहिकः सम्बन्धो भवति। एवं धातुनां फलव्यापारयोः पृथक-पृथक उपस्थितिः। तथैव तिङा कर्त्तृकर्मसंख्याकालानां पृथक् पृथक् जन्म सम्बन्धस्तु कर्त्तुः वृत्तित्व सम्बन्धेन व्यापारे, कर्मणः फले, फलस्य जन्यत्वेन व्यापारे, व्यापारस्थ जनकत्वेन फले, संख्यायाः कर्त्तरि कर्मणि वा, कालस्य भेद्यभेदकभावेन व्यापारेऽन्वयः। एकत्वावच्छिन्न कर्त्तृनिष्ठप्रकारतानिरूपितविक्लित्यनुकूलव्यापार इति बोधः।

संख्यायाः धात्वर्थे फले व्यापारे वाऽन्वयपेक्षया स्वातिशयसमीपस्थे स्वबोधक बोधिते कर्त्रादावन्वयः। अतिसमीपस्थः कर्त्ता न तु व्यापार, एकप्रत्ययार्थत्वात्। स्वसंख्या तद् बोधकः "ति" प्रत्ययः, तद् बोधितः कर्त्ता, तत्रैवान्वयो योग्यः। अत्र प्रमाणं "रूपम्" सूत्रे भाष्ये साधनापेक्ष्यं पचत इत्यादौ द्विवचनम्। सङ्ख्या साधनम् ( कारकम् ) अपेक्ष्य भवति, एवमन्यत्रापि। अथवा 'वाक्यापेक्षयाश्रौतसम्बन्धो बलीयान्' समानाभिधानं श्रुतिः तस्या वलवत्वंशास्त्रे सु प्रसिद्धं, संख्यायाः धात्वर्थं व्यापारे वाक्यीय

तथा चाऽऽख्यातार्थसंख्याप्रकारकबोधं प्रत्याऽऽख्यातजन्यकर्तृकर्म्मोपस्थितिर्हेतुरिति कार्यकारणभावः फलितः। नैयायिकादीनामाख्यातार्थसंख्यायाः प्रथमान्तार्थ एवान्वयादाख्यातार्थसंख्याप्रकारबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्य्यकारणभावो वाच्यः। सोऽपि—चन्द्र इव मुखं दृश्यते, 'देवदत्तो भुक्त्वा व्रजति, इत्यादौ चन्द्रक्त्वाऽर्थयोराख्यातार्थानन्वयाद् इतराविशेषणत्वघटित इत्यतिगौरवम्।

इदमपि कर्तृकर्म्मणोराख्यातार्थत्वे मानमिति स्पष्टं बृहद्भूषणे।

o

सम्बन्ध कर्त्तादौ तु श्रौतः सम्बन्धः। एकप्रत्ययेन गृहीतमर्थविहाय अन्यत्रा (धात्वर्थे) नुधावनमनुचितम्। अक्के चेन्मधुविन्दौ किमर्थं पर्वतंव्रजेत संख्या कारकयोः समानप्रत्ययबोधविषयत्वात्।

यद्यपि, आख्यात जन्यः कालोऽप्यस्ति, तत्र संख्यान्वयो न भवति योग्यताभावात् अल्पवहृतत्वाच्च। संख्यागौणी, कालोऽपि गौणः तयोरन्योन्याश्रयो नास्ति कर्त्रादौत्वस्त्येव। कारकाश्रयको व्यापारः व्यापारान्वयित्वं कारकस्य, एतेन परस्परापेक्षत्वं सुस्पष्टम्। वर्त्तमाने लट् इत्यादिना लकारस्थानिकस्तिङ्कालवाचकः। आख्यातार्थविषयता कालेप्यस्ति। तत्र व्यभिचार वारणाय कर्त्तृत्वेन तांविशनष्टि।

संख्या के आख्यातार्थ कर्ता कर्म के साथ सम्बन्ध होने पर आख्यातार्थ (तिङर्थ) जो संख्या यह हो विशेषण जिसमें ऐसे शाब्द बोध के प्रति तिङ से जन्य कर्ता और कर्म की उपस्थिति कारण है। यह कार्य कारण भाव सफल रहा। संख्या कार्य हैं। कर्ता कर्म की उपस्थिति कारण है।

नैयायिक लोग आख्यातार्थ संख्या का प्रथमान्त पदार्थ में ही अन्वय करते हैं। उनके मत में तिङर्थ संख्या हो विशेषण ऐसे शाब्द बोध रूप कार्य में प्रथमान्त पद जन्य उपस्थिति कारण है। क्योंकि वाक्य के प्रथमान्त पद में संख्या का अन्वय होता है। खण्डन वह भी "चन्द्रइव मुखंदृश्यते" इस वाक्य में तिबर्थ संख्या का मुख्य की तरह चन्द्र में भी अन्वय होने लगेगा जो नहीं होना चाहिये,। ऐसे ही "देवदत्तो भुक्त्वा व्रजति" यहाँ भी तिवर्थ संख्या का देवदत्त की तरह भुक्तवा में भी अन्वय होने लगेगा जो नहीं होता है। इसलिए चन्द्र और क्त्वा के अर्थ में आख्यातार्थ संख्या का अन्वय न होने से उक्तकाय कारण भाव के लक्षण में दो प्रथमान्तार्थो में इतर का अविशेषण संख्या होती है। यह निवेश होने पर अति गौरव होगा। अतः संख्या का प्रथमान्तार्थ में अन्वय व्यभिचरित है। यह उक्ति भी कर्ता कर्म के आख्यातार्थ होने में प्रमाण है। यह बात भूषणमे स्पष्ट रूप से उक्त है।

संख्यायाः समवाय सम्बन्धेन कर्त्तरि कर्मणि वाऽन्वये कार्यकारणभावं प्रदर्शयति तथाचेति-वैयाकरणमते, आख्यातस्य=तिङो योऽर्थो वाच्य स संख्या तस्याः प्रकारतया ( विशेषणतया ) वाक्ये बोधविषयता स्यात्, अतस्तांप्रति आख्यात जन्ययोः=तिङर्थ भूतयोः कर्त्तृ कर्मणोः=व्यापाराश्रय फलाश्रययोरूपस्थितिः समवाय सम्बन्धेन कारणम्। आख्यातार्थभूता या संख्या सा तिङर्थभूते कर्त्तरि कर्मणि वाऽन्वेति।

यत्राख्यातार्थो नास्ति तत्र नान्वेति यथा "प्रवाचको ब्रूते" तत्र तिबर्थः कर्त्ता प्रकृतिप्रत्ययविशिष्टेप्रवाचक पदेऽन्वेति। प्रकृति "प्र" पूर्वक "वच्" धातुः ण्वुल् प्रत्ययः। तयोरेकार्थीभावे सति तत्र संख्यायाः समवायेनान्वयस्तिङर्थत्वात्। तिङर्थःतिङर्थेष्वन्वेति। तिङर्थसंख्याप्रकारकबोधं प्रति तिङर्थजन्योपस्थितिः कारणम्। केवलं प्रवाचकपदघटककर्त्तृवाचकेण्वुलप्रत्यये न कर्त्तरि ण्वुलः शक्तिः तिङर्थत्वाभावात्। तेनतिङर्थ संख्या प्रकारकबोधे तिङर्थकर्त्तृकर्मणोरेवोपरिस्थितिः कारणम् यन्नैव तन्नैवमिति कार्यकारणभावो दृष्टः सोऽपि द्विविधः आत्मनिष्ठ प्रत्यासत्तिको, विषयनिष्ठः प्रत्यासन्तिकश्च। प्रथमः समवाय सम्बन्धेन आत्मनिष्ठ प्रत्यासत्तिको, विषयनिष्ठप्रत्यासत्तिकश्च। प्रथमः समवाय सम्बन्धेन आत्मन्युपतिष्ठते। शाब्दबोधोऽपि तेनैव सन्बन्धेनात्मनि जायते। द्वितीयस्तु विषय उपतिष्ठते शाब्द बोधोऽपि तत्रैव जायते।

पूर्वोक्त कार्यकारणभावविपरीतं नैयायिकमतं निरस्यन्नाह—न्यायमत आख्यातार्थौ (तिङर्थौ) यत्नः=कृतिः न तु कर्त्तृ कर्मणी। किन्तु संङ्ख्याऽऽख्यातार्थैव। आख्यातार्थयोः यत्नसंख्ययोरेकपदबोध्ययोरेकत्रान्वययोग्ययोः व्याकरणे कर्त्तृसङ्ख्ययोरिव नान्वयः, अन्योन्यस्मिनन्योन्य सम्बन्धा भावात् गुणे गुणानङ्गी-काराच्च। पूर्वोक्त कार्यकारण भावो विरूद्धयते। तिङर्थस्य यत्नस्य तिङर्थसङ्ख्यायामन्वयोविरूद्धयते। तस्मात् आख्यातार्था या संख्या सा प्रथमान्तार्थ एवन्वेति। तन्मते कार्यकारणभावान्तरं ज्ञेयम्। तदित्यम् आख्यातार्था या संख्या तस्या विशेषणत्वेन शाब्दबोध विषयत्वे संख्यानिष्ठ प्रकारता निरूपित विशेष्यताक शाब्दबोधं प्रति प्रथमान्तं यत् पदं तज्जन्यस्य=प्राथमन्तपदार्थस्योपस्थितिः कारणम्। व्युत्पत्तिस्तु स्वबोधानुसारिणी भवति। कालस्य प्रकारतया शाब्द बोधे प्रथमान्तपदस्यापेक्षैव नास्ति। परन्तु गौरवमेतन्मते विद्यते, यतोहि एक पदबोध्ययोरर्थयोरेकार्थान्वयित्वस्यौचित्यं विहाय तिङपदार्थाद्भिन्ने प्रथमान्तपदजन्योपस्थितावन्वयप्रयुक्तं गौरवम्। तिङपदबोध्या संख्या तिङर्थएवान्वयनियमः नतु तद् भिन्ने पदार्थे।

अति गौरव प्रदर्शनार्थमाह सोऽपीति चन्द्र इव मुखं दृश्यत इत्यत्र मुखस्यप्राधान्यं, तत्रैव तिङर्थ सख्यान्वेति। चन्द्रस्तु स्वसदृशे मुखे विशेषणं, तत्र तस्या अन्वयो न। नैयायिकसम्मत कार्यकारणभाव स्वीकारेतु चन्द्र शब्दस्यापि प्रथमान्तार्थरूपेणोपस्थिति र्वर्त्तते। तत्रापितिङर्थ संख्याया अन्वय सम्भवात्। इवार्थसादृश्ये विशेषणीभूते चन्द्रेऽन्वयो मा भवतु। एतदर्थं संख्याविशेषणकबोधे इतरविशेषण–स्वरूप विहिनों यः प्रथमान्तार्थः, तस्योपस्थिति कारणम्। इतरस्मिन् निर्विशेषं मुखमेव। चन्द्रस्तु सादृश्यार्थ बोधकं विशेषणं तथा च तत्र शाब्दबोधीयवैलक्षण्यसत्वेऽपि स्वरूपे (स्वारस्ये) बैलक्षण्यं न स्यात्। संख्या प्रकारशाब्दबोध परिहारायेतरविशेषणीभूतार्थवाचकप्रथमान्तपदज्ञन्योपस्थितिः कारणमिति कार्यकारणभाव निवेशे महद् गौरवम्।

न च चन्द्रेऽप्यस्तुनामसङ्ख्याऽन्वयःको दोषः। तथाऽन्वयोऽनुभवविरुद्धः। चन्द्र इव मुखानि दृश्यन्त इत्यादौ चन्द्रे कदाचिदेक वचनमपि स्यात्। शब्दबोधस्तु चन्द्रप्रतियोगिकसादृश्यवत्कृतिजन्यव्यापारजन्य फलवत् एकत्व विशिष्टं मुखमिति। मुखन्तु इतरे विशेषणम्। अतः संख्यायां विद्यमाना या विशेषणता तया निरूपितविशेष्यताकसम्बन्धेन शब्दजन्यज्ञानं प्रति प्रथमान्तपदस्य मुखस्योपस्थितिः कारणम्। चन्द्रस्त्विवार्थसादृश्येविशेषणम्। इतर विशेषणीभूतार्थबाचकः प्रथमान्तेनोपस्थितश्च तत्र संख्याऽन्वयः परिहरणीयः। न च चन्द्र इव मुखं दृश्यत इत्यादौ सति सम्भवे, उपात्त धर्मेणैव गृहीतशक्त्या दर्शनकर्मत्वेनैव सादृश्यग्रहणे चन्द्रेऽपि संख्याऽन्वयः। यदा दर्शनकर्मत्वेनान्वयबोधविवक्षा तदा संख्यायाः चन्द्रेऽप्यन्वये न कश्चन दोषः। अतो नैयायिकसम्मतकार्यकारणभावे दूषणार्थम् अपरो दृष्टान्तः प्रस्तुयते, भूक्त्वा व्रजतीति।

अत्र तिबर्थसंख्याप्राधान्यं देवदत्तमन्वेति। भुक्त्वाइत्यत्र नान्वेति। यतो हि 'भुक्त्वा' इत्यपूर्णकालिकी साध्याक्रिया, तस्यां लिङ्गसंख्या कर्मादीनामन्वयः स्वरूपविरुद्धः। उपात्तधर्मोऽपि वक्तुं न शक्यते। सादृश्यमपिग्राहयितुं न शक्यते। "एकवचन मुत्सर्गतः करिष्यते" इतिभाष्यवचानात् स्वाभाविकमेक वचनं दुर्वारमेव। 'भुक्त्वा' इति पदं स्वसमानकर्तृकत्वे सति स्वाव्यवहितोतरत्वसम्बन्धेन व्रजन्क्रियायां विशेषणम्। इतरविशेषणीभूतार्थवाचकं प्रथमान्तं पदम्। तत्र न संख्यान्वयः। बोध्यबोधक भावे–इपराविशेषणपदनिवेशेऽतिगौरवम्। न च "कृदभिहितो भावो द्रव्यवत्प्रकाशते" क्त्वेति कृदभिहितः तस्य द्रव्यवद्भावात् सिद्धा क्रिया तत्र सिद्धात्वञ्च लिङ्ग

**कालस्तु व्यापारे विशेषणम्। तथा हि—"वर्तमाने लट्" इत्यधिकाराद्धातोरिति लब्धम्। तच्च धात्वर्थं वदत्प्राधान्याद् व्यापारमेव ग्राहयतीति तत्रैव तदन्वयः। न च संख्यावत्कर्तृकर्म्मणोरेवान्वयः शङ्कयः, अतीतभावनाके कर्तरि 'पचति' इत्यापत्तेः, 'अपाक्षीत्' इत्यनापत्तेश्च। पाक्रानारम्भदशायां कर्तृसत्त्वे 'पक्ष्यति' इत्यनापत्तेश्च। नापि फले तदन्वयः फलानुत्पत्तिदशायां व्यापारसत्त्वे 'पचति' इत्यनापत्तेः, 'पक्ष्यति' इत्यापत्तेश्चेत्यवधेयम्।**

o

सङ्ख्यान्वययोग्यत्वम्। अतो भुक्त्वेत्यत्र सङ्ख्यान्वयोऽस्तुनामको दोष? "क्त्वातोसुन्कसुनः" इति प्रमाणेन 'भुक्त्वा इत्यस्याव्ययीभावात् संख्यान्वयाभावः अव्यय इवानुभवविषयत्वात् लिङ्गसङ्ख्याकर्मादिविरहात्। यत्राव्ययकुक्षिगतं कृत्त्वं नास्ति, तत्र कृदभिहितो भावोद्रव्यवत् प्रकाशते। यत्राव्ययकुक्षिगतं कृत्वमस्ति, तत्र द्रव्यवन्न प्रकाशते। तस्मात् भुक्त्वेति व्रजनकर्मत्वेन विवक्षयितुं शक्यते। अत आख्यातार्थसंख्या प्रकारकबोधे प्रथमान्तो यः क्त्वा प्रत्ययान्तस्तद्वाच्यो भुजधात्वर्थक्रियायां संख्याया अन्वयवारणाय नैयायिकोक्त कार्यकारण भावे प्रथमान्तार्थे इतराविशेषणत्वं निवेशनीयम्। इतरस्मिन् विशेषणभावेनेति तात्पर्यस्याविषय इत्यर्थः

प्रसङ्गे चन्द्रशब्द इवार्थसादृश्यार्थमुखनिष्ठविशेष्यता निरूपित विशेषणताश्रयः। तस्या प्रधान्यात् इतराविशेषणीभूतम्, एवमपूर्णकालिकं भुक्त्वापदार्थोभोजनं भोजनोत्तरकालिकव्रजनक्रियायां विशेषणम्। तस्याप्यप्रधान्यात् प्रथमान्तार्थत्वाभावेनसंख्याया अन्वयाभावः। इदमतिगौरवस्वरूपम्।

चतुर्षु तिङर्थेषु कर्त्तृ कर्म सङ्ख्यानामप्राधान्यं विषशेणत्वं वा व्यवस्थाप्य कालस्यापि विशेषणत्वं व्यवस्थापयति कालस्त्विति—सर्वाधारः कालः क्रियां विशिनष्टि। इयं क्रियाधात्वर्थव्यापाररूपा साध्येत्यर्थः।

ननु तिङर्थस्य कालस्य शक्तिविभाजकानि यानि वर्त्तमाने लट्, परोक्षे लिडित्यादीनि सूत्राणि सन्ति तेषु व्यापारवाचकंपद मनुद्धृतं वर्त्तते। तस्मात् कालस्य धात्वर्थंव्यापारे विशेषणत्वकथनमसङ्गतं प्रतिभाति। तदाह-तथाहीति—"वर्त्तमाने लट्" इत्यादीनि सूत्राणि धातोरधिकारे पठितानि,। अतः कालपरिच्छेदकेषु सूत्रेषु धातुपदमधिकाराल्लभ्यते। इदं धातु पदं

**तिङर्थकाल भी क्रिया में विशेषण है। तथाहि "वर्तमाने लट्" इस सूत्र में धातु का अधिकार होने से धातु उपलब्ध होता है। तच्च वह, धातु पद अपना अर्थ कहता**

भूवादिसूत्रप्रामाण्यात्, सत्तायामित्याद्यर्थनिर्देशात् "स्वरित ञित कर्त्रभिप्राये क्रियाफले" इत्यादि सूत्र स्वारस्याच्च फलव्यापारोभय वाचकम्। तच्च धात्वर्थं वदत्=धातुपदं फलव्यापारौ बोधयत् फले प्रधानं व्यापारः, भाव प्रधानमाख्यानमितिवचनद्वयात् फलजनकत्वेन प्राधान्यात् धातुजन्यबोधे विशेष्यतया भासमानत्वाच्च कालोऽव्यापारे एव अन्वेति। विशेषणतया संबोधयति। धात्वर्थं व्यापार एव तिङर्थकालान्वयी इत्यर्थः। मूले व्यापारमेवेत्यत्र "एव" पदमन्योगव्यवच्छेदकम्। फलस्यापिप्राधान्ये तात्पर्यग्राहकं। प्राधान्यादित्युक्तिस्तु यस्य मते कर्मणि प्रत्यये सति फलस्य प्राधान्यं तन्मते कालः फलेऽन्वेतीतिध्वन्यते। गुणानाञ्च परार्थत्वात प्रत्ययार्थस्य स्वप्रकृतिजन्यबोध्येऽन्वय नियमाच्च। कालो गुण रूपः प्रत्ययार्थश्च तस्यस्वप्रकृतौ धात्वर्थे एवान्वयो विदुषां सम्मतः।

ननु समानप्रत्ययोपात्तत्वात्=एकप्रत्ययबोधविषयान्वयनियमात् कर्तृ कर्म संख्या कालाः एकेन तिङ प्रत्ययेन उपात्ताः=बोधविषयमापन्नाः। यथा संख्या स्व वाचक वाच्ये कर्त्तरि कर्मणि वा युज्यते, एवं कालोऽपि स्ववाचक वाच्ये स्वं=कालः तस्य वाचकस्तिङ तद् वाच्यः कर्ता कर्म, तत्रैव संख्यावत् सम्बध्यताम्ः। भिन्न पदार्थे धात्वर्थेऽन्वयो नियमविरुद्ध स्तदाह न चेति संख्याया इव कालस्यपि कर्त्तरि कर्मणि वाऽन्वये कालविभागस्यानुभविकी या व्यवस्था सा विशीर्यते। यथा अतीतभावनाके समाप्त व्यापारके समाप्तः धात्वर्थ व्यापारो यस्यतादृशे ) भूतकालिके कर्त्तरि "अपाक्षीत्" इत्यादौ सामान्यभूत कालिको लुङ् न प्राप्नोति कर्तुरतीतत्वाभावात्=विद्यमानत्वादित्यर्थः। तत्रवर्त्तमाने लट" इत्येव प्राप्नोति। तेन पचतीत्येव भवति न तु अपाक्षीदिति। अन्यच्च लडादि विधायकेषु सूत्रेषु धातोरधिकारात् धात्वर्थव्यापारान्वयित्वे सति कालपरिच्छेदकत्वं सर्वलकाराणमिति व्यवस्था भङ्गापत्तेः। एवं व्यापारस्य

हुआ प्रधान रूप से क्रिया को कहता है। तत्रैव—व्यापार में ही काल का अन्वय होता है। न कहिए संख्या की तरह काल का कर्ता कर्म में ही अन्वय हो जाय इस सङ्का पर समाधान देते हैं। यदि काल का कर्ता में अन्वय करेंगे तो अतीत समाप्त हो गयी है क्रिया जिसमें ऐसे कर्ता के उपस्थित रहने पर 'पचति यह प्रयोग होने लगेगा। और "अपाक्षीत्" यह भूत कालिक प्रयोग नहीं बनेगा। क्योंकि कर्ता वर्तमान है, उसमें काल का अन्वय होने से वर्तमान काल हो जाएगा। ऐसे ही फल में भी काल का अन्वय नहीं होता है। फल की अनुत्पनि दशा में क्रिया के रहते हुए भी पचति यह वर्तमान कालिक प्रयोग असम्भव होगा। और फल के भावी होने से पक्ष्यति यह भविष्य कालिक प्रयोग की आपत्ति होगी। ऐसा निश्चय है।

न चामवातजडीकृतकलेवरस्योत्थानानुकूलयत्नसत्वाद् 'उत्तिष्ठति' इति प्रयोगापत्तिः, परयत्नस्याज्ञानादप्रयोगात् । किंचिच्चेष्टादिनाऽवगतौ च 'अयमुत्तिष्ठति, शक्त्यभावात् फलं तु न जायते' इति लोकप्रतीतेरिष्टत्वात् । एवञ्च तिङर्थो बिशेषणमेव,भावनैव प्रधानम् ।

प्रारम्भेच्छादशायां पाकानारम्भदशायाञ्च कर्त्तुर्विद्यमानत्वात् सर्वदा लडेव भविष्यति । "पक्ष्यति" इत्यत्र भविष्यकालिको लृण्ण प्राप्नोति । यदि प्राप्नोति तह्यंनुभवविरोधः, शास्त्रविरोधश्च । एवं कालास्य फलेऽपि नान्वयः । अन्यथा फलस्य सत्वे भावि, भूते वा, लट्-लृट लङादयो न स्युः । "छात्रमनुशास्ति" इत्यत्रानुशासनाकुलव्यापारसत्वेऽप्यनुशासनरूपंफलं यावन्नोत्पद्यते तावदनुशास्तीति रूपं न स्यात् किन्तु तत्स्थाने लृट् प्राप्नोति तस्मान्न फलेऽन्वयः ।

ननु कालस्य व्यापारेऽन्वयस्वीकारे यत्र ( शरीरे ) फलं न जायते, किन्तु व्यापारो विद्यते केवलं फलानुकुलता नास्ति तत्र कालस्य फलेऽप्यन्वयः कर्तव्यः । अन्यथा "स्तब्धीकृत उत्तिष्ठति" इति प्रयोगोऽपि स्यादित्याशंकां ब्रूते न चेति–आमो = रोगविशेषः तस्य जनको वातः = वायुःतेन जडीकृतं = स्तब्धीकृतंकलेवरं ( कले = शुक्रे वरं श्रेष्ठम् तत्वं शक्तिः तत्कलेवरम् = शरीरं ) यस्य सः स्तब्धी कृतकलेवरः स उत्तिष्ठतीति प्रयोगो न भवति । किन्तु कालस्य व्यापारान्वये सति सम्भति । यतः उत्थानानुकुल यत्न

न कहिए काल फल में विशेषणं नहीं किन्तु व्यापार में हो तो जहां आम बात रोग विशेष ( गँठिया या लकवा ) से जड़ीकृत = जकड़े हुए शरीर वालों का उठने के अनुकूल प्रयत्न = चेष्टा चल रही है, ऐसी स्थिति में वे जड़ीकृत उत्तिष्ठति यह वर्तमान कालिक प्रयोग जो नहीं होना चाहिए वह व्यापार के वर्तमान होने से होने लगेगा । काल फल में अन्वित होगा तो फल अविद्यमान है, अतः उक्त प्रयोग असम्भव होगा । परयत्नरूप = परपुरूष के जड़ीकृत कलेवर में यत्न चेष्टा क्रिया आदि का प्रत्यक्ष न होने से ज्ञान नहीं होता है । अतः क्रिया प्रतीति के विना उक्त प्रयोग असम्भव है । व्यापार में फल की विशेषणता निर्बाध है, यदि कुछ चेष्टा प्रयत्न प्रतीत हो रहा है, यह उठ रहा है, यह वर्तमान काल प्रयोग होता ही है । शक्ति के अभाव से उत्थानरूप फल नहीं होता हो, यहाँ काल व्यापार को विशेषित कर रहा है फल को नहीं । इस प्रकार का लोक व्यवहार इष्ट है; अनिष्ट नहीं । तिङर्थ ( कर्ता कर्म संख्या काल ) हमेशा विशेषण ही रहते हैं । भावना ( क्रिया ) प्रधान ( विशेष्य ) रहती है ।

त्वात्=उसत्थान रूपंयत्फलं तस्य जनको यत्नः ( व्यापारः ) तस्य विद्यमानत्त्वाज्जडीकृत उत्तिष्ठतीति प्रयोगस्य सम्भावनाया आपत्तिरापद्यते। यथेष्टं फलं न जायते किन्तुव्यापारोऽस्त्येव तत्र वर्त्तमानकालस्याप्यन्वय सति स दोषो न भवति। यत उत्थितिरूपं फलं न विद्यते। तव मते तु जायत एव। उत्त्थितिरूपफलस्याभावेऽप्युत्त्थानानुकुल यत्नस्य विद्यमानत्वात् स दोषः तदावस्थ्यः। समाधानं =परय नस्याज्ञानान्नोक्त दोषः। कालस्य यत्नान्वयेऽपि परस्य=भिन्नस्य आमवातेन स्तब्धीकृतशरीरस्य निश्चेष्टदेहस्य यत्नस्य=चेष्टाजनक परवृत्तिगुणस्य ( परस्यात्मनि समवायेन प्रत्यक्षाभावस्य ) अज्ञानात् पत्यक्षविषयत्त्वाभावेनाननुगमादप्रयोगात्। यतो यत्नरूपव्यापारो न दृश्यते, अतो नोक्त दोषः। पर यत्नरूपव्यापारो न दृश्यते, अतो नोक्त दोषः। पर यत्नस्याज्ञानान्न तथा प्रयोगापत्तिः।

न च पर यत्नस्याप्रत्यक्षेऽपि चेष्टादिना तल्लिङ्गज्ञानेनानुमानेन वा ज्ञातेयत्नेऽयमुत्तिष्ठतीति प्रयोगापत्तिः स्यादेव। अत आह किञ्चिच्चेष्टादिना= यत्किञ्चित् देहावयवकम्पनक्रिया हित।हितसंकेतात्मिका शरीरावयवहस्तादिक्रिया=चेष्टा तथा यत्नस्यावगतौ=अनुमितौ यथा परकीय चेष्टा यत्नजन्या चेष्टात्वान्मच्चेष्टावत्। अथवाऽम्युत्थानानुकुल यत्नवानयं विजातीयचेष्टावत्वादहभिव। अनयाऽनुमित्यापरयत्नप्रतीतावयमुत्तिष्ठतीति प्रयोगो भवत्येव, इष्टैव। आमवात्, रोगेण शक्तिर्नष्टा तस्याऽभावात्=असत्वात् उत्थानरूपं फलं न जातते। लोकप्रतीतेः=एतादृश ज्ञानस्य समाजे इष्टवात् =व्यावहारिकत्वाच्च"। उक्तप्रवचनेन परिच्छेद्यपरिच्छेदकभावेन कालो व्यापारेऽन्वेति। एवञ्चवाक्ये तिङर्थो विशेषणभेव=तिङर्थस्य विशेष्यत्वव्यवच्छेदार्थं ( निरासार्थम् ) तिङोऽर्थो विशेषणमप्रधानमेव। अत्र एव पदं प्रकारे दाढ्र्य बोधकं च पदेन कालस्य प्रत्ययार्थत्वेऽपि विशेषणत्वमेवेति ध्वन्यते। भावनैव =धात्वर्थ क्रियाया एव प्राधान्यम्। अत्राप्येव पदं प्रत्ययार्थस्य कर्त्रादेः फलस्य च व्यवच्छेदार्थ बोध्यम्।

शंका=यद्यपि अन्यत्र कृदन्त आदि स्थल में प्रकृति का अर्थ और प्रत्ययार्थ इन दोनों में प्रत्ययार्थ का ही प्राधान्य ( मुख्य विशेष्यता ) देखी गयी है। जैसे— "पाचकः" यहाँ पच् धातु का अवयव शैथिल्यानुकूल व्यापार अर्थ है। अक प्रत्यय का कर्ता यहाँ प्रत्ययार्थकर्ता कीं मुख्यता है। अतः 'भात के अनुकूल क्रियावाला' यह शब्दार्थ हुआ। तो प्रकृत्यर्थ ( धात्वर्थ भावना का )। प्राधान्य कैसे ?

समाधान—महर्षि यास्क का वचन है कि आख्यातम्=तिङन्त स्थल में भाव= क्रिया ( धात्वर्थ ) का प्राधान्य होता है। और नामानि=सत्व ( द्रव्य ) प्रधान

**यद्यपि प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमन्यत्र दृष्टं, तथापि "भावप्रधानमाख्यातं, सत्वप्रधानानि नामानि" इति निरुक्ताद् भूवादि-सूत्रादिस्थक्रियप्राधान्यबोधकभाष्याच्च धात्वर्थभावनाप्राधान्ये तस्य देवदत्तादिभिः सममभेदान्वयोजायते ।**

o

न च धात्वर्थभावनाया आश्रयः कर्त्तैवेत्यनुभूयमाने वाक्ये व्यापारस्य कर्त्तारं प्रति विशेषणत्वापत्तिः स्यात्, व्यापारस्य प्राधान्यञ्च न स्यात् । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यनियमस्य दृष्टत्वाच्च । नियम-स्वीकारे च सङ्ख्याकालयोरपि प्रत्यार्थत्वात् प्राधान्यापत्तिस्तन्न, क्रिया भेदाय कालोऽस्ति संख्या सर्वस्य ( कर्त्तुः कर्मणश्च ) भेदाय विद्यते, इत्यनु-भविनोक्तेः । संख्याकालाभ्यामतिरिक्तस्यप्रत्ययार्थस्यैव ( कर्तृ कर्मणोरेव ) प्राधान्यम् । ततः सर्वत्र प्रत्ययार्थं प्राधान्यमाशङ्क्यामाह—यद्यपीति—अन्यत्र कृदन्तादिस्थले "वक्ता" इत्यादौ तृच् प्रत्ययार्थः कर्त्ता तस्यैव प्राधान्थं दृष्टं=वोधानुकुलव्यापाराश्रय इत्याद्यर्थे प्रत्ययार्थं प्रधान्यमनु-भूतम् । प्रकृत्यर्थव्यापारस्य प्राधान्ये तु न्यायविरोधो वोधानुपपत्तिश्च दृष्टं तथापि=तृजाद्यन्ते प्रत्ययार्थप्राधान्येऽपि महर्षियास्केनोक्तं भाव प्रधान-माख्यातमिति । धातोः तिङन्तस्य वा भाव, काल, कारक, संख्याश्चत्वारो-ऽर्थास्तेषुभावः ( क्रिया ) प्रधानमिति निरूक्तभाष्ये । अर्थात् तिङन्तस्थले क्रिया प्रधानमवगन्तव्यम् । तत्र आख्यातं लक्ष्यं भावप्रधानं लक्षणम् । अत्र भावपदेन फलव्यापारयोरुभयोर्ग्रहणम्, कर्मणि प्रत्यये सति फलस्यापि प्राधान्यात् । क्त्वान्तादिषु लक्षणव्यावृत्यर्थं तिङर्थप्रकारकभावनार्थविशेष्य-कमाख्यातं ग्राह्यम् । तेन काष्ठैः पाक इत्यत्र काष्ठरूपकरणकारकस्य साध्यत्वेन प्रतीयमानक्रियायाः प्राधान्यं तत्रैवान्वयः । पाक इत्यत्र प्रत्ययार्था क्रिया सिद्धेति । तस्यां कारकस्य प्राधान्येनान्वयो न भवितुमर्हति । यतः कारकस्य प्राधन्येनान्वयो न भवितुमर्हति । यतः कारकस्य साध्यत्वेन प्रतीय-मानक्रियामुख्यविशेष्यभूतायामन्वयः । अतः काष्ठैः पाक इत्यत्र नाति प्रसङ्गः । एवं पचति भवतीत्यत्राऽपि यदि प्रत्यार्थ प्रधानं क्रियते, तर्हि पचतीत्यस्य विक्लित्यनुकुलव्यापाराश्रयार्थं सत्त्वे तस्यैव "अस्" धात्वर्थ

होते हैं । लिङ्ग संख्या से सम्बन्धित द्रव्य कहाता है । इस निरुक्त ग्रन्थ का वचन 'प्रकृति प्रत्ययार्थयोः' नियम का अपवाद है । इससे और "भूवादयोधातवः" इस सूत्र के भाष्य में क्रिया का प्राधान्य बोधक पचति, भवति उदाहरण को पाक क्रिया हो रही है, इस अर्थ में धातु के अर्थ स्वरूप व्यापार की मुख्य विशेष्यता निश्चित होती है ।

सत्तायामभिलषितान्वयो न स्यात्। भावनाश्रय प्रधानेऽप्यभीष्टबोधोऽपि न स्यात्। अनन्वय एवाति प्रसङ्गदोषः। तद् वारयति, यत् प्रकृति प्रत्ययार्थयोः प्रत्ययार्थप्राधान्यमित्यस्यापवाद भूतोऽयं 'भाव प्रधानमाख्यातमिति न्यायः। सत्त्व प्रधानानि तु नामानि भवन्ति। सत्त्वं=द्रव्यं, लिङ्ग, संख्यान्वयि, इदं तत् परामर्श योग्यं, विशेष्यं द्रव्यंयेषु तानि नामानि। अथवा विभक्त्यन्तं सत्वम्। भाष्ये तु प्रकृतिप्रत्ययविभक्तिरिति मिलित्वानाम, सत्ता, द्रव्यं, लिङ्ग,, संख्या कारकञ्च नामार्थः। आख्यातं क्रियाप्रधानं भवति यथा-किं करोति ? पचति द्रव्यं पृष्टः कृता आचष्टे। कतरो देवदत्तः यः 'पाचक' इति सत्वं प्रधानम्। सत्वं=द्रव्यप्रधानं यत्र तत्। लिङ्गादि निष्ठप्रकारतापरिचायित विशेष्यार्थ वोधकत्वंनामार्थलक्षणमिति निरूक्तात्= निरूक्त नामाख्ये ग्रन्थे निरूपितत्वात्। धात्वर्थ प्राधान्यस्यापरमुदाहरणं= भूवादीति। "भूवादयो धातवः इति सूत्रे स्थितं यत् क्रियाप्राधान्यं तस्य बोधकं=प्राधान्य प्रतिपादकं भाष्यं तस्मात्। तर्त्तर्हि कथम् इयं वाचो युक्तिः। "पचति" "भवति" एवं पचसि भवसि, पक्ष्यति भवति, सैषा वाचो युक्तिः। पच्यादिक्रिया भवति क्रियायाः कर्त्र्यो भवन्ति। प्रथमस्य पाक कर्तृका भवन क्रिया। द्वितीयस्य त्वदभिन्ना पाकाश्रयवतो भवन क्रिया। तृतीयस्य भविष्यकालिकविक्लित्यनुकुलव्यापारश्रययवती भवनक्रियेति बोध इति भाष्यात्। व्यापारमुख्यत्वे तु न तादृशो बोधः। यदि तिङन्तस्थलेऽपि प्रत्ययार्थप्राधान्यस्य वोधः स्यात् तर्हि पचति भवतीत्यत्र वर्त्तमानकालिकविक्लित्यनुकुलव्यापाराश्रय वृत्तिः सत्तेत्यनिष्टो बोधः स्यात्। उक्त भाष्य प्रमाणेन प्रत्यार्थप्राधान्य बोधो निर्वत्तते। अत उक्तभाष्यादेकत्वविशिष्टाश्रयवृत्तिवर्तमानकालिकबिक्लत्यनुकूलव्यापारकर्तृका एकत्वाश्रयवृति वर्तमान कालिकी सञ्ज्ञेति बोधः।

प्रत्ययार्थ प्राधान्य का खण्डन अपि च—यदि आख्यातार्थ ( कर्ता ) में शाब्द बोधीय प्राधान्य स्वीकार करेंगे तो तस्य=आख्यातार्थकर्ता का देवदत्तः पचति इस वाक्य रूप देवदत्तादि के साथ अभेद ( देवदत्तादि कर्ता ) ऐसा सम्बन्ध सम्भूत होने से प्रथमा विभक्ति जिसके अन्त में है उसी का प्राधान्य हो जायगा तथा च=परिणाम यह निकलेगा कि 'पश्य मृगो धावति' यहाँ पर एक वाक्यता भाष्य से सिद्ध है, वह असम्भव होगी। भाष्य में दर्शन क्रिया में धावन् क्रिया को कर्म सिद्ध किया है। मृग के लम्बी छलाँग को दिखाना है; मृग को नहीं मृग का अभेद सम्बन्ध से धावन क्रिया में अन्वय करना है। तिवर्थ आश्रय ( कर्ता ) का धावन् क्रिया में बृत्तित्व

**अपि च आख्यातार्थप्राधान्ये तस्य देवदत्तादिभि; सममभेदान्वयात्प्रथमान्तस्य प्राधान्यापत्तिः, तथा च 'पश्य मृगो धावति' इत्यत्र भाष्यसिद्धैकवाक्यता न स्यात्, प्रथमान्तमृगस्य धावनक्रियाविशेषस्य दृशिक्रियायां कर्मत्वापत्तौ द्वितीयापत्तेः ।**

o

। मीमांसकमते आख्यातार्थस्य कर्त्तुः शाब्दबोधीयप्राधान्यस्वीकारेऽपरं दूषणं दीयते । आख्यातार्थप्राधान्ये = तिङर्थकर्त्तुः विशेष्यत्वेतस्य तिङर्थकर्त्तुः देवदत्तादिभिः सहाभेदान्वयात् = अभिन्न बोधात् प्रथमान्तस्य = प्रथमान्तार्थविशेष्यकबोधस्य प्राधान्येन मुख्यतया बोधापत्तिरितिः । तथा च प्रथमान्तार्थस्य प्राधान्यात् "पश्यमृगो धावति" इत्यादौ वाक्ये भाष्ये सिद्धा = संम्प्रेरिता या एकवाक्यता सा न स्यात् । यतो हि मृगस्याभेदेन धावतीति तिबर्थेऽन्वयः तिबर्थाश्रयस्य कर्त्तुः वृत्तित्व सम्बन्धेन ( आधेयत्व सम्बन्धेन ) धावन क्रियायामन्वयः धावनस्य कर्मतया "दृश" धात्वर्थं दर्शन क्रियाया मन्वयः तथा चैकत्वसंख्यायुक्तो यो मृगः स एवाश्रयस्तद्वृत्ति धावनकर्मकं त्वत् कर्तृकं दर्शनं मत्प्रेरणा विषयीभूतं चक्षुरिन्द्रियजन्यं ज्ञानमिति शाब्द बोधे एक वाक्यताऽनुभूयते । नैयायिकमते तु नैकवाक्यता । यतस्तन्मतेकृतिरेव तिङर्थस्तस्य समवायसम्थन्धेनाश्रयार्थे मृगे अन्वयः । तथा च धावनानुकूल कृतिमानैकत्वविशिष्टाश्रयो मृगः । मत्प्रेरणां विषयीभूतोदर्शनाश्रयस्त्वमिति वाक्य भेदो न त्वेकवाक्यता । यदि भाष्यसिद्धैकवाक्यताया उपप-

( आधाराधेय ) सम्बन्ध से अन्वय होता है। धावन् क्रिया का कर्मत्व सम्बन्ध से दृश्धात्वर्थ दर्शन क्रिया में अन्वय है। मृग से अभिन्न है एक संङ्ख्या विशिष्ट कर्ता, उसमें रहने वाली धावन क्रिया वह हो कर्म जिसमें ऐसे तत्कर्तृकं = मेरी प्रेरणा का विषय भूतदर्शनं = चक्षुरिन्द्रियसम्बन्धित ज्ञान। इस वाक्यबोध में एक वाक्यता भाष्य सिद्ध है यह नैयायिक के प्रथमान्तविशेष्यक शाब्दबोध में सम्यक नहीं है। दोष इस प्रकार है। "पश्य मृगोधावति' में प्रथमान्त मृग है, नैयायिक मत में धावन् क्रिया विशेषण होगी, मृग विशेष्य ( प्रधान ) । धावन क्रियाजनक यत्न वाला एक संख्या विशिष्ट मृगः इति एकं वाक्यं त्वत्कर्तृकं = तुम हो कर्ता जिसके ऐसी मेरी प्रेरणा का विषयदर्शन क्रिया है। यह दूसरा वाक्य होगा। एक वाक्यता न होगी। यदि एक वाक्यता के लिए मृग को दर्शन क्रिया में कर्म रूप से अन्वय करोगे तो कर्मत्वापत्तौ = मृग कर्म हो जायेगा। द्वितीया विभक्ति होगी, तो "पश्य मृगं" धावन्तम् ऐसा अनिष्ट वाक्य बनेगा। इष्ट तो धावन् क्रिया का दर्शन क्रिया में अन्वय है। मृग नहीं। मृग में कर्म संज्ञा के अतिरिक्त आपत्ति देते है।

न चैवमप्रथमासामानाधिकरण्यात् शतृप्रसङ्गः, एवमपि द्वितीयाया दुर्वारत्वेन 'पश्य मृग' इत्यादिवाक्यस्यैवासंभपत्तेः[1]। न च 'पश्य' इत्यत्र 'तम्' इति कर्माध्याहार्य्यम्, वाक्यभेदप्रसंगात्,[1] उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्म्मतयाऽन्वयस्य प्रतिपिपादयिषितत्वाद्, अध्याहारे अनन्वयापत्तेश्च।

त्यर्थं मृगस्य कर्मत्वेन दर्शनक्रियायामन्वयः करिष्यते तर्हि प्रथमान्तमृगस्य=प्रथमान्त पदेनोपस्थितस्य धावन् क्रियाविशेष्यस्य (नैयायिक सिद्धान्ते मृगो धावन क्रियायां विशेष्यस्तस्य) दृशि क्रियायां कर्मत्वेनान्वयाद् द्वितीया विभक्त्युत्पत्तिः स्यात्। अर्थात् धावनक्रिया जनक यत्नवान् मृगः स कर्म यस्य दर्शनस्य तदाश्रयस्त्वमिति वोधे प्रथमान्त सामानाधिकरण्येन शतृप्रत्यये पश्य मृगं धावति। इत्यशुद्धवाक्यस्यैवसम्भवात्। वैयाकरणमते तु न दितोयायाः सम्भावना। यतो हि दर्शने धावन् क्रियायामेव कर्मत्वं न तु मृगे।

नैयायिक मते तु यदा दृशिक्रियायां मृग कर्मस्यात, तदा न केवलं द्वितीयाविभक्तिरेव किन्तु शतृप्रत्ययोऽपि प्रसज्यते, इत्याशङ्क्याह न चेति

न च—मृग जो कर्म होगा, वह प्रथमा भिन्न प्रथमा सदृश विभक्तित्व धर्म होने से, यानी अप्रथमा का सामानाधिकरण्य सम्भव होगा। तो शतृ प्रत्यय को प्राप्ति भी प्रस्तुत होगी, "धावन्तं मृगं पश्य" यह अधिक अनिष्ट होगा। एवमपि—शतृ प्रत्यय का प्रसंग होने पर भी द्वितीया विभक्ति रूक नहीं सकेगी। पश्य मृगो धावति' यह वाक्य असम्भव होने लगेगा। नैयायिक मत में धावन फल जनक व्यापार जनक यत्न वाला मृग, वह हो कर्म जिसमें ऐसी मेरी इच्छा का विषयभूत दर्शन क्रियाजनक यत्न वाला तुम, शब्द जन्य ज्ञान होंगे।

न च–यदि दर्शन क्रिया में अन्वय के लिए तं का अध्याहार करेगें तत्र वाक्य भेद (धावति मृगः तं पश्य) का प्रसङ्ग होगा, शुद्ध एक वाक्यता नहीं बनेगी। यह एकोदोषः उत्कट (लम्बी छलांग वाली) धावत क्रिया का दर्शन क्रियामे (कर्म तया) अन्वय करना हो भाष्यकारको पुनः पुनः अति शयेन वा प्रति पादन अभीष्ट है। नो नैयायिक मत में सम्भव-न होगा। इयपरो दोषः। तं के अध्याहार करने अनन्वयापत्तेः=धावनक्रिया का दर्शन क्रिया में अन्वय नहीं होगा। अपितु तं से मृग का ही अन्वय होगा। यह तृतोंयो दोषः तीन दोष—१. वाक्यभेद २. धावन का दर्शन क्रिया में कर्म न होना। ३. तं का अध्याहार।

एवञ्च भावनाकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोक्तं नादरणीयम् । किन्तु आख्यातार्थकर्तृ प्रकारकबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणमिति कार्य्यकारणभावो द्रष्टव्यः । भावनाप्रकारकबोधं प्रति तु कृज्जन्योपस्थितिवद् धात्वर्थभावनोपस्थितिरपि हेतुः, 'पश्य मृगो धावति' 'पचति भवति' इत्याद्यनुरोधादिति दिक् ।

•

एवं मृगस्य कर्मत्वे प्रसक्ते द्वितीयाम् अप्रथमायाः = प्रथमाभिन्नप्रथमासदृशद्वितीया विभक्ते सामानाधिकरण्यात् = द्वितीयार्थाश्रयधावनक्रियायाश्च, द्वयोरेकं समानमधिकरणं मृगइति । तत्सम्बन्धे शतृप्रतययः प्राप्नोति । ततो शतृप्रत्ययान्तात द्वितीया भविष्यतीति उक्तभाष्यं प्रयोगानुपपत्तिः शतृप्रसंगेऽपि द्वितीयायाः दुर्वारत्वेन = वारयितुमशक्येन पश्य मृगो धावतीति वाक्यस्यैव नासम्मत्रापतेरपितु धावन्तं मृग पश्येत्यनिष्टं वाक्यमपि स्यादित्यापत्तिः ।

न च तार्किकमते यत्र शुद्धं कर्म तत्रैव द्वितीया भवति । मृगस्तु धावनक्रियाविशिष्टं न तु शुद्धम् । अतो न द्वितीया इति तन्न, विशिष्टं ( क्रियाविशिष्टम् ) शुद्धात् = केवलान्नातिरिच्यते न पृथक् भवतीत्यर्थः । अतो द्वितीया यथावस्थितैव । "जानाभि सीता जनकप्रसूता" इत्यत्र तु आर्षत्वाद् द्वितीयार्थे प्रथमा बोध्या । वस्तुतः = जनाभि सीतां जनक प्रसूताम्' इत्येव पाठो युक्तः इदानीं शतृप्रसंगवारणोपायं ब्रूते–न चेति–पश्य मृगो धावत्तींत्यत्रतं पश्येति, वाक्ये तभित्यध्याहृत्य अप्रथमा सामानाधिकरण्यस्याभावेन शतृप्रत्ययो वारणीयस्तन्न, वाक्यभेदप्रसंगात् । धावनक्रियाजनकक्तिभान्मृग इत्येकं वाक्यं मृगकर्मकदर्शनसम्बन्धी, आश्रयतावाँस्त्वमित्यपरं वाक्यम् । उत्कटधावन्क्रिया = उत्कटाऽधिको त्प्लवनेन वैलक्षण्यविशिष्टा या धावन क्रिया तस्याः विशेषस्यैव = सुदूरकूर्दन रूपस्यैव धावन्क्रियायाः दर्शनकर्मतयाऽन्वयस्य ( सम्बन्धस्य ) प्रतिपिपादयिषितत्वात् = प्रतिपादयितुमभीष्टत्वात् । तमित्स्याध्याहारे कृते सति अनन्वयापत्तेः = धावनक्रियायाः दृशिक्रियायामन्वयो न स्यात् । एक वाक्यताऽपि न स्यात् ।

एवञ्च = पश्य मृगो धावतीत्यत्र भाष्य सिद्धैकवाक्यतानुपपत्तावाख्यतार्थस्य कर्तृवोधस्य धात्वर्थ व्यापारप्रधानवोधस्य च मिद्धौधावनप्रकारक बोधे = क्रियाविशेषणकबोधे प्रथमान्तं यत्पदं तज्जन्या या उपस्थितिः सा शाब्द बोधे कारणमिति तर्किकैरुक्त इति । कार्यकारणभावो नादर्तव्यः । पूर्वोक्त

दोषग्रस्तत्वात् तार्किक मतेऽपि संख्या कालातिरिक्तस्तिङर्थः कृतिरिति तदपि नादर्तव्यम् । वास्तविकसिद्धान्त सुस्पष्टोऽर्थमाह–किन्त्विति आख्यार्थः कर्तृ प्रकार बोधे = तिङर्थो यः कर्त्ता स प्रकारः विशेषणं यस्य तादृश शब्द-जन्यज्ञाने धातुजन्योपस्थितिः = धात्वर्थो यो व्यापारः तस्योपस्थितिः कारम् । धातुजन्यो पस्थितिः फलस्यापि वर्त्तते, तत्र व्यभिचारवारणाय सा ( उपस्थितिः ) भावनात्वावच्छिन्नविषयतया ग्राह्या । भावनात्वं सकल धात्वर्थं भावना निष्ठो धर्मः तद्युक्ता विषयी भूता भावना ग्राह्या । तेन फलादीनां न ग्रहणम् । वस्तुतो बोधे भावनात्वधर्मस्वीकारे सर्वे धातवः पर्यायाः भविष्यन्ति । यतः पर्याये एकधर्मोपस्थितिरावश्यकी, अतस्तत्तद् धर्मेणोपरिस्थतौ तत्तत्फलनिष्ठप्रकारतानिरूपिता या विशेष्यतातत्सन्वन्धेन भावनोपस्थितिः कारणम् । कर्मणि प्रत्ययस्थले तु तिङर्थकर्मनिष्ठप्रकारता-निरूपित विशेष्यतासम्बन्धेनतादृशबोधंप्रति धात्वर्थफलोपस्थितिः कारणम् ।

नमु धात्वर्थक्रिया कृत्प्रत्ययार्थं प्रति विशेषणवती यथा "प्रवक्ता" इत्यत्र प्रपूर्वक वच् धातोः प्रवचनानुकूल व्यापारोऽर्थः, तृच् प्रत्यय आश्रयार्थकः ( कर्त्तेति ) प्रवचनानुकुल व्यापारश्रय इत्यर्थः । अत्र प्रवचनानुकुला क्रिया विशेषणम् आश्रयः कर्त्ता विशेष्यः । एवं 'यश्य मृगो 'धावति' 'पचति, भवति' इत्यादौ क्रियाप्रकारक क्रिया विशेष्यक पूर्वोक्त प्रकारेण वोधो न स्यात् । तदाह भावनेति ।

यथाऽनेकं सुवन्तं तिङन्तस्य विशेषणाम् ( तथा तिङन्तमप्याहुः तिङ-न्तस्यविशेणाम् । इति प्रामाणिकोक्तिः ) भावनाऽस्ति प्रकारः विशेषणं यस्य तादृश ज्ञानं प्रति कृज्जन्योपस्थितिवत् = यथा कृत् प्रत्ययार्थयोः कर्त्तृ कर्मणो-रन्यतरस्य प्राधान्येनोपस्थितिः भावनाप्रकारकबोधं प्रति कारणम् । एवं

एवञ्च दोषत्रय के सिद्ध होने से अथवा आख्यातार्थ के कर्ता और धात्वर्थ व्यापार प्रधान शाब्दबोध सिद्ध होने से भावना ( व्यापार ) हो विशेषण जिसमें ऐसे ज्ञान में प्रथमा हो अन्त में जिसके ऐसे पद जन्य की उपस्थिति करण है । यह नैयायिकोक्त सिद्धान्त वैयाकरणों के लिए अनादरणीय है । तो आदरणीय क्या है ? बोले–किन्तु = आख्यात–( तिङका अर्थ कर्ता हो विशेषण जिसमें ऐसे शाब्द बोध ( शब्द जन्य ज्ञान ) के प्रति धातु से जन्य = जो उपस्थिति वह कारण है वह ( उपस्थिति ) भाव-नात्वावच्छिन्न का विषय जो भावना उसकी उपस्थिति कारण है । धातुजन्य फल भी है । उसकी व्यावृत्ति के लिए घटत्वावच्छिन्न घट को तरह भावनात्वावच्छिन्न वोल रहे हैं । ऐसा कार्य कारण भाव द्रष्टव्य = ( सिद्धान्त सिद्ध ) है ।

व्याकरणानुसार देवदत्त - व्यापार (भावना)

इत्थञ्च 'पचति' इत्यत्र एकाश्रयिका पाकानुकूलाभावना, 'पच्यते' इत्यत्र एकाश्रयिका या विक्लित्तिस्तदनुकूला भावनेति बोधः। देवदत्तादिपदप्रयोगे त्वाख्यातार्थकर्त्रादिभिस्तदर्थस्याभेदान्वयः। 'घटो नश्यती' त्यत्रापि घटाभिन्नाश्रयको नाशानुकूलो व्यापार इति बोधः। स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम्। अतः एव तस्यां सत्यां 'नश्यति', तदत्यये 'नष्टः', तद्भावित्व 'नङ्क्ष्यति' इति प्रयोगः। 'देवदत्तो जानाति, इच्छति' इत्यादौ च देवदत्ताभिन्नाश्रयको ज्ञानेच्छाद्यनुकूलो वर्त्तमानो व्यापार इति बोधः। स चान्ततः आश्रयतैवेति रीत्योह्यम् ॥२॥

o

धात्वर्थभावनोपस्थितिरपि=धात्वर्थाः या क्रिया तस्याःमुख्यरूपेण ज्ञानमपि तत्र कारणम्। पूर्वोक्तकार्यकारणभावेऽनुकूलतैव न प्रातिकुल्यम्। धात्वर्थफलव्यापारयोरन्यतरस्य प्राधान्य बोधे प्रमाणं प्रस्तौति-"पश्यमृगो धावति" इति। मृगकर्तृकं धावनकर्मकं दर्शनमिति भावः। अत्र धावनक्रिया विशेषणकबोधं प्रति विशेष्यतया "दृश" धात्वर्थभावनोस्थितिः कारणमस्ति। पचति भवतीत्यत्रापि पाककर्तृका भवन क्रियेत्यर्थे क्रिया प्रधानवोध दर्शनानुरोधेन भावप्रधानभाख्यातमिति वचनं स्वीकार्यमेव। उक्त कार्यकारणभावानुरोधे बीजमाह दिगिति-दिगर्थं स्त्वेवं रीत्या वाक्यैकवाक्यता प्रतिपादने भाष्यकृतसम्मतपदैकवाक्यताऽपि प्रतिपादनीयेति।

इत्यश्च—संख्या कर्ता या कर्म में, काल व्यापार में फल सहित सबका व्यापार में अन्वय उपपन्न हुआ। सबका पचतित्पयोग में प्रदर्शन करते एक=संख्या विशिष्ट है आश्रय (कर्ता) जिसका ऐसी पाक (फल) की अनुकूला (जन्म देने वाली) भावना यह अर्थ पच्यते पद से प्रकट है। यदि देवदत्तः पचति बोलते हैं तो पद का प्रयोग करते हैं। आख्यात (तिङ) का अर्थ कर्ता का देवदत के साथ अभेद अन्वय होता है। तो देवदत्ता भिन्नैक कर्तृक वर्तमान कालिक पाकानुकूला भावना। 'घठो नश्यति' यहाँ पर घट है अभिन्न आश्रय (आधार) जिसका ऐसा नाश को जन्म देनेवाली क्रिया, यह बोध होता है। वह विनाश के अनुकूल व्यापार कैसा होना चाहिए। (जिसका अभाव हो, उसे प्रतियोगि कहते हैं) प्रतियोगित्व (घटत्व) से विशिष्ट जो नाश सामग्री=दण्ड फूटे घट के टुकड़े इन सबों की स्थिति ही यहाँ व्यापार है। इसलिये दण्ड फूटन आदि के रहते नश्यति यह वर्तमान काल का प्रयोग होता है। वह सामग्री यदि भावी हो, तो भविष्यत्काल नक्ष्यति का प्रयोग तदत्यये=सामग्री समाप्त हो चुकी हो। नष्ट भूतकाल का प्रयोग, देवदत्तो जानाति, इच्छति इत्यादि

इत्थञ्च=फल व्यापारौ धातोरर्थौ, कर्तृकर्म संख्या कालास्तिङर्थाः। तेषु प्रधानं व्यापारः, अन्ये च विशेषणमित्याद्युक्तेः। पूर्वोक्त व्याख्यानस्यायं सारांशोयत् पचतीत्यत्र एकाश्रयिका=एक एव कर्तृरूपाश्रयो यस्या सा पाकानुकूला=विक्लित्तिजनिकाभावना=क्रियेति बोधः। यथा 'दिलीपो गुरूं सेवत' इत्यत्र दिलीप पदार्थस्याभेदसम्बन्धेन तिङर्थरूपाश्रये कर्त्र्यन्वयस्तस्मिन्समवायसम्बन्धेन तिङर्थसंख्याया एकत्वस्यान्वयः, आश्रयस्य (कर्त्तुः) स्ववृत्तित्व—(स्वस्मिन् विद्यमानत्व) सम्बन्धेन क्रियायामन्वयः। अतः कर्तृवृत्तिव्यापार इत्युच्यते। व्यापारे तिङर्थकालस्य परिच्छेद्य परिच्छेदकभावेनान्वयः, एवं गुरुपदोत्तरकर्मरूपोऽर्थः। स च फलाश्रयः। फलं धातु लभ्यम्। आश्रयमात्रं द्वितीयार्थः। गुरुपदस्याभेदेनामर्था श्रयेऽन्वय-। तस्य वृत्तित्वसम्बन्धेन 'सिव' धात्वर्थं परसुखोत्पत्तौ (प्रीतौ) सम्बन्धः तस्य जनकत्व सम्बन्धेन व्यापारेऽन्वयः। यथा च दिलीपाभिन्नैक त्वविशिष्टाश्रय वृत्ति-वर्त्तमानकालिको गुरोरभिन्नोऽमर्थाश्रयवृत्ति (प्रीत्यनुकूलः) व्यापारः। इति कर्त्ता ख्यातस्थलम्। तत्र प्राच्य नव्ययोर्मते साम्यमस्ति।

कर्माख्यात स्थले तु "पच्यत" इत्यत्र एकाश्रया=एकः तण्डुलरूप आश्रयो यस्या सा। एवं भूता या विक्लित्तिः (अवयव शैथिल्यम्) तदनुकूला=तज्जनिका क्रियेति बोधः। यथा 'चैत्रेण तण्डुलः पच्यत' इत्यत्र चैत्रपदोत्तर तृतीयायाः कर्त्तरि विधानात्, तृतीयार्थः कर्त्ता, व्यापाराश्रय स्वरूप एव। अत्र व्यापारो धातु लभ्यः। आश्रय मात्रं तृतीयार्थः। चैत्र पदस्याभेदसम्बन्धेन तृतीयार्थे कर्त्तरि सम्बन्धः। तत्रैव एकत्वसंख्याऽपि सम्बद्ध्यते। तथा च तण्डुला भिन्नैकत्वविशिष्ट, आख्यातार्थाश्रयवृत्तिः विक्लित्त्यनुकूलो वर्त्तमान कालिको व्यापारः। यथा तत्र क्रियायाः जन्यत्वसम्बन्धेन मुख्यविक्लित्तान्वयः। एवञ्च चैत्राभिन्नैकत्वविशिष्टाश्रयवृत्तिः वर्त्तमानकालिक व्यापारजन्यतण्डुलाभिन्नैकत्वसंख्याविशिष्टतिङर्थ कर्मरूपाश्रयवृत्तिर्विक्लित्तिरिति फलमुख्य विशेष्यक शाब्दबोधः। अत एव "सुप आत्मनः

का शाब्द बोध=देवदत्त हैं अभिन्न आश्रय जिसका, ऐसे ज्ञान को जन्म देनेवाला वर्तमानकालिक व्यापार (इच्छा का आविर्भावक व्यापार) इति बोधः। सच=ज्ञानजनक इच्छाजनक व्यापार वह व्यापार आत्ममनः संयोग रूप है। इसका अन्ततः सम्बन्ध नहीं बनता। अतः अन्ततः=अन्ततोगत्वा वह व्यापार ज्ञानानुकूल व्यापार; इच्छानुकूल व्यापार आश्रयता रूप है अखण्ड धर्म रूप है। निरूपाधिक है। उसमें क्रम का ज्ञान नहीं है। क्रमिकत्व आरोपित है। स्वरूप सम्बन्ध विशेष रूप ही है। अनवयव में अवयव का आरोप होने से व्यापार का व्यवहार होता है।

क्यच्" इति भाष्ये, आत्मनः पुत्रमिच्छतीति विग्रहे यथा—पुत्रीयतीति रूपं भवति तथा पुत्र इष्यत इति—विग्रहेऽपि पुत्रीयतीति रूपं कथं न भविष्यति। तत्राह ( भिन्नार्थत्वात् ) इति भिन्नार्थता तदा सेत्स्यति यदा कर्त्तरि प्रत्यये व्यापारस्य मुख्य विशेष्यता स्यात्। अन्यथा भिन्नार्थत्वकथनमसङ्गतं स्यात्। तेन फलप्रधानबोधोऽपि सिद्ध्यति। विशेष्यविशेषणभावव्यत्यासप्रयुक्त-पदार्थान्तरकल्पनाऽपि सिद्ध्यति।

देवदत्तः पचतीत्यादौ देवदत्तस्य तिङर्थ कर्त्रा सहाभेदान्वयः। आख्यातार्थकर्त्रादिभिः = 'तिङर्थो यः कर्त्ता' इत्यादिभिः सह तदर्थस्य = देवदत्तादि पदार्थ स्याभेदान्वयः = अभिन्न प्रतीतिः जायते। देवदत्ता भिन्नैकत्वविशिष्टाश्रयवृत्ति विक्लित्यनुकूलो वर्त्तमानकालिको व्यापार इति बोधः। अत्र विभिन्नविषयतया सामानाधिकरण्यम्। समनियतविषयतयोरभेदान्वयः। समानविभक्ति कयोरेवाभेदान्वयस्तु पूर्वं दूषितः।

सकर्मकाः धातवस्तु फलव्यापारवाचकाः सन्त्येवेति पूर्वोक्त प्रवचनेनाव गम्यते। अकर्मका अप्युभयवाचका इति प्रमाणयितुमाह–घटो नाश्यतीत्यत्र घटाभिन्न आश्रयो यस्य एवं भूतो नाशानुकूलो व्यापारः = अदर्शनजनिका-क्रिया सा प्रतियोगित्वविशिष्टा = यस्याभावः स प्रतियोगी। नाशानुकूल व्यापारे घटस्याभावोऽतो घटः प्रतियोगी तस्य नाशः = दर्शनाभावरूपं फलं तदनुकूल व्यापारश्च द्वयोरेकाधिकरण्यं संजातम्। तेनाकर्मकलक्षणं घटते। यद्यपि नाशमात्रं धात्वर्थस्तथापि "णश्" अदर्शन इत्युक्ते यावान्नाशपरिचायकज्ञानविषयस्तस्य सर्वस्यापि ग्रहणम्। अतो नाशरूपं फलं तादृश सामग्री रूपो व्यापारश्च "णश्" धातोरर्थः। अतएव = नाश सामग्रीसहित धात्वर्थस्य स्वीकारादेव, तत्र प्रमाणं 'निष्ठा' संज्ञा सूत्रस्थ भाष्यम्। कतरत् देवदत्तस्य गृहम्? अदो यत्रासौ काक इति। उत्पतिते काके नष्टम्

न कहिए क्रिया का क्रिया में अन्वय अप्रमाणिक है। तो प्रमाण प्रस्तुत करते हैं। जैसे—भावना ( व्यापार ) हो प्रकार ( विशेषण ) जिसमें शाब्द बोध के प्रति कृदन्ती प्रत्ययजन्य अर्थ की उपस्थिति कारण हैं। वैसे क्रिया विशेषणक ज्ञान के प्रति धातु का अर्थ भूत भावना की उपस्थिति कारण है। इससे क्रिया का क्रिया में अन्वय सिद्ध हुआ। इस तत्व में अनुरोध प्रस्तुत करते हैं "पश्य मृगोधवांत" यहाँ मृगकर्तृक धावन क्रिया कर्मक दर्शन, ऐसा बोध होता है। धावनक्रिया प्रकारक दर्शन क्रिया विशेष्यक बोध प्रामाणिक है। एवं पचति, भवति वाक्य में 'पाकानुकूल क्रिया भवति' इस बोध में पच् धात्वर्थ विक्लित्यनुकूलता व्यापार विशेषण हो, तो वहाँ विशेष्यता सम्बन्ध से भू धातु जन्य भवन क्रिया की उपस्थिति कारण है।

( अज्ञातम् ) गृहमिति । तस्यां = सामग्रीसहित वर्त्तमानकालविशिष्टायां क्रियायां सत्यां 'नश्यति' इति वर्त्तमानकालप्रयोगः । तदत्यये = तादृश साग्रचप्रयोगः । तद् भावित्वे = भविष्यत् सम्पृक्ते काले–नङ्क्ष्यतीति भविष्य-कालिकः प्रयोगः । एवं कालत्रयेऽपि कालस्य व्यापारेऽन्वयः ।

येन सम्बन्धेन फलमाश्रयते कर्म संज्ञा चानुभवसिद्धा । तत्र फलता-वच्छेदक–सम्बन्धः । देवदत्तो घटं जानातीत्यत्र विषयता–सम्बन्धविशिष्टं यत् आधेयतास्वरूपं ज्ञानं तज्जनको व्यापारो "ज्ञा" धात्वर्थः । अत्र घटो ज्ञानविषयः ज्ञानं विषयतासम्बन्धेन घटे तिष्ठति । फलतावच्छेक सम्बन्धेन सञ्जातज्ञानं समवायसम्बन्धेन सर्वस्मिन् कर्त्तरि ( आश्रये ) तिष्ठति । आधेयो ज्ञानम्, आधारो घटः ज्ञानेस्थित आधेयतावच्छेदकसम्बन्धो विषयता-भविष्यति । यो हिं यस्या ( विषयतायाः ) अवच्छेदकः सा तदवच्छिन्नाः । ज्ञाने आधेयताया अवच्छेदकोविषयता सम्बन्धः । एवं विषयता–सम्बन्धेना-धेयता ज्ञाने तिष्ठति । अतो विषयता सम्बन्धावच्छिन्नमाधेयताकं ज्ञानं जातम् । तेन सम्बन्धेन ज्ञानरूपफलाश्रयो घटः । ततश्च कर्म समवाय-सम्बन्धावच्छिन्नाधेयताक व्यापारवाचकत्व रूपं सकर्मकत्वं "ज्ञा" धातौ वर्त्तते । फलतावच्छेदक सम्बन्धेन फलाधिकरणनिरूपितव्यापारतावच्छेदक सम्बन्धावच्छिन्नाधेयताकव्यापारवाचकत्वम कर्मकत्वम् । यथा उत्तिष्ठति = उत्थानानुकूलव्यापार उत् पूर्वक स्था धातोरर्थः । तत्र फलस्वरूपा या उत्थितिः सा समवायसम्बन्धेन चैत्रे तिष्ठति । एवं फलतावच्छेदकसम्बन्धेन फलस्याधिकरणं चैत्र इति । चैत्र निष्ठोयो व्यापार तस्यावच्छेदकः समवाय सम्बन्धः, तद वच्छिन्नार्विशिष्टाधेयतावान् व्यापारः, तस्य वाचकत्वं ज्ञा धातौ वर्त्तते । फलव्यापारयोः सामानाधिकरण्यञ्च ।

ननु नैयायिक मते देवदत्तो घटं जानातीत्यत्र घटस्य कर्मसंज्ञा न प्राप्नोति । यतो हि "ज्ञा" धातोर्ज्ञानमात्रमर्थः फलव्यापारयोः सामानाधि-करण्येनाकर्मकत्वात् । इति नैयायिकमतं निराकरिष्यन् स्वसम्मतं–शाब्दबोधं दर्शयन्ति कौण्डभट्टाः यत्––विषयता सम्बन्धेन ज्ञानानुकूल व्यापारो "ज्ञा" धात्वर्थः । न तु ज्ञान मात्रम् । तत्र देवदत्त पदार्थस्य तिबर्थाश्रयेऽभेदेनान्वयः, देवदत्तएवाभिन्नाश्रयो यस्य स देवदत्ताभिन्नाश्रयकः । तादृश आश्रय वृत्ति-विषयता सम्बन्धावच्छिन्न ज्ञानानुकूलवर्त्तमानकालिको व्यापारः । यथा–चैत्रः–पुत्रमिच्छतीत्यत्र देवदत्ताभिन्नाश्रयकः पुत्रविषयिणी विषयतासम्बन्धा-वच्छिन्ना या इच्छातदनुकूलव्यापार इति शाब्दबोधः । ज्ञानानुकूल व्यापार-श्चान्ततोगत्वाऽऽश्रयता रूपः, अखण्डो निरूपाधिको धर्मरूपो बोध्यः । अतो ज्ञानानुकूल व्यापार आश्रयतारूपः । इच्छानुकूले व्यापारेऽपि आश्रयता

नन्वाख्यातस्य कर्तृकर्मशक्तत्वे 'पचति' इत्यत्रोभयबोधापत्तिः, कर्तृमात्रबोधवत् कर्ममात्रस्याऽपि बोधापत्तिरित्यतस्तात्पर्यग्राहकमाह—

फलव्यापारयोस्तत्र फले तङ्यक्चिणायः ।
व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयाऽन्वयम् ॥३॥

तङादयः फले आश्रयाऽन्वयं द्योतयन्ति । फलान्वय्याश्रयस्य कर्मत्वाद्, तद्द्योतकाः—कर्मद्योतकाः । व्यापारान्वय्याश्रयस्य कर्तृत्वात्, तद्द्योतकाः कर्तृद्योतका इति समुदायार्थ । द्योतयन्ति—तात्पर्यं ग्राहयन्ति ॥३॥

o

रूपवत्त्वम् । आदिना ( यतते ) इत्यादि संग्रहः । केचित्त्वावरणभंगानुकूलो ज्ञानरूपो व्यापारो "ज्ञा" धात्वर्थस्तन्न, अयं बालकः धर्माधर्मौ जानातीत्यत्र कर्म संज्ञा न प्राप्नोति । यतो हि आवरणम्=अज्ञानं तस्य भङ्गे=नाशे सति यज्ज्ञानं जायते तस्य जनको व्यापारो "ज्ञा" धात्वर्थः । आवरणंश्च द्विविधम् ( १ ) असत्वापादकम् न सत्वस्य=सत्ताया अस्तित्वस्य वा आपादकं बोधकम् । यथा—"वन्ध्यापुत्रं जानाति" अत्र—पुत्रस्य सत्ता न बुध्यते तत्रासत्वापादकमावरणम् । ( २ ) आभानापादकञ्च । आभानस्य प्रतितेरापादकं=सम्यग्बोधकमावरणम् । यथा—धूमादग्निमनुभिनोति । धर्माधर्मौ परोक्ष भूतौ स्तः । अन्तःकरणवृत्तिरूपं यज्ज्ञानं तेनासत्वापादकस्य ज्ञानस्य भङ्गेऽपि, आभानापादकस्मावरणस्य भङ्गो न भविष्यति । यतो धर्माधर्मयोरावरणभङ्गो न भवति । यथा 'पर्वतो वह्निमान्' इत्यत्र व्याप्तेराकारोऽन्तःकरणचैतन्ये प्रतिविम्बित् वह्न्यवच्छिन्न चैतन्यरूप परोक्षज्ञानेन वह्नेरसत्वापादको योंऽशस्तस्य भङ्गेऽपि आभानापादकावरणस्याज्ञानस्य निवृत्ति र्न जायते, तस्मादावरण भङ्गो न फलम् । उह्यम्=इच्छती त्यादावनुसन्धेयम् ( २ ) ।

ननु—यदि आख्यात ( तिङ् ) का कर्ता अर्थ में और कर्म अर्थ में बोधकता शक्ति मानेंगे, तो पचति प्रयोग में ति पद से दोनों ( कर्ता-कर्म ) अर्थ बोध ( उक्त ) होने की आपत्ति आयेगी । जैसे—ति से कर्ता मात्र अर्थ का बोध हो रहा है, वैसे कर्म मात्र का भी ज्ञान हो सकता है । इसलिए कर्ता अर्थ का तात्पर्य ग्रासक संकेत कर्म अर्थ का तात्पर्य ग्राहक चिह्न बोलते हैं ।

फल और व्यापार का वाचक धातु है । तत्र=वहां फले=फल का आधार कर्म है । उसका द्योतक=प्रकाशक, तङ्; यक्; चिण् इत्यादि है । जहां ये रहे वहां तिङ् से

नन्वाख्यातस्य = "लः कर्मणि" इति सूत्रेण कर्त्तरि–कर्मण्यर्थे विधीयमानस्य लकार स्थानिकस्यतिङः कर्तृकर्मशक्तत्वे = कर्त्तरि कर्मणि च शक्ति स्वीकारे पचतीत्यत्रोभयबोधापत्तिः। कर्तृकर्मणोरुभयोर्बोधसंभावना। न च सकृदुच्चरितः सकृदर्थं गमयतीति न्यायेन, तिङः एकस्यैवार्थस्य बोधो भविष्यति। अत आह–कर्तृमात्र बोधवदिति–यथा तिपा कर्त्तुर्बोधस्तद्वत् कर्म मात्रस्यापि बोधसंभावना। कर्तृ कर्मणोस्तिङर्थत्वात्। अर्थात् पचतीत्यत्र कर्त्ता इव कर्मणोः बोध संभविना। पच्यत इत्यत्र कर्मण इव कर्त्तुरपि बोध--संभावना। अतो द्वयोर्बोधो मा भूत, तत्र निर्णायकं तात्पर्य ग्राहकं = तात्पर्य कर्त्तुः कर्मणो वाऽभिप्रायं ग्राहयति = व्यञ्जयति तात्पर्य ग्राहकस्तमाह।

फलञ्च व्यापारश्च तौ तयोः फलव्यापारयोरन्यतरस्य प्राधान्यबोधे द्वयोर्मध्ये फले = फलविषये प्राधान्यबोधे तङ् यक् चिणादयः तात्पर्यं ग्राह्यन्ति तङ् = भाव कर्मणोरित्यात्मने पदम्, यक् = कर्मणि प्रत्यय बोधक आगमः चिण् = भावकर्मद्योतकः, एते कर्मरूपाश्रयस्यावश्यं बोधकाः भवन्तु। तथा च आश्रयनिष्ठप्रकारतानिरूपितफलनिष्ठ विशेष्यताकबोधजनकाः भवन्तु। यथा--तण्डुलः पच्यते, अत्र यगागमसमभिव्याहृतस्तङ्, कर्म रूपाश्रयस्य फले सम्बन्धं प्रकटयति।

एवं व्यापारे = व्यापार विषये मुख्यतया बोधे "शप्-श्नम्-श्यन्-श्ना-श्नु" आदयो विकरणाः कर्त्तरि भवन्ति। त आश्रय निष्ठप्रकारतानिरूपितव्यापारनिष्ठ विशेष्यताक बोधजनकाः भवन्तु। तेन तैः कर्त्तुरर्थः निर्णीयते यथा–विष्णुं दीव्यति, अत्र श्यन् प्रत्ययेन ज्ञायते यत् 'ति' प्रत्ययः कर्त्तुर्बोधकः। इत्याद्यभिप्रेत्य भूषणकारः ब्रूते–यत् धातु वाच्ययोः फलव्यापारयोर्मध्ये फले = फल विषये क आश्रय इति जिज्ञासायां कर्मणि तङादयः प्रत्ययाः यक् चिणादि सम्बन्धे कर्मरूपमाधारं (फलाश्रय इति) द्योतयन्ति = व्यञ्जना

कर्म अर्थ समझना चाहिए। व्यापारे = क्रिया का आधार कर्ता है। इस अर्थ के प्रकाशक शप्, श्नम् इत्यादि है। जहाँ ये रहें, वहाँ कर्ता अर्थ समझना चाहिए। इसलिए भूषणकार लिखते हैं कि तङादिक फल में आश्रय के सम्बन्ध का द्योतन करते हैं। क्योंकि फल का अन्वयी ( आधार ) आश्रय ( तण्डुलादि ) को कर्म संज्ञा होती है। तद् द्योतकाः = फलाश्रय के द्योतक = प्रकाशक तङादि कर्म के व्यञ्जक होते हैं। इसी प्रकार व्यापार का अन्वयी ( आधार ) आश्रय ( कर्ता ) को कर्तृ संज्ञा होती है। व्याशार के अन्वयी आश्रय के व्यञ्जक शप्, श्नम् आदि कर्ता के द्योतक है। यह समुदाय का अर्थ हुआ। तात्पर्यं ग्रहण करने वालों को द्योतक कहते हैं ॥३॥

नन्वेवं 'क्रमादमुं नारद इत्यबोधि सः' इत्यादौ 'पच्यते ओदनः स्वयमेव' इत्यादौ च व्यभिचारः, कर्मणः कर्तृत्वविवक्षायां कर्त्तरि लकारे सति 'कर्मवत् कर्मणा तुल्यक्रियः' इत्यतिदेशेन यगात्मनेपदचिण्चिण्वदिटामतिदेशाद्यगादिसत्त्वेऽपि कर्तुरेव बोधाद्, व्यापार एवाऽऽश्रयान्वयाच्च। 'अबोधि' इत्यत्रापि बुध्यतेः कर्त्तरि लुङ्, तस्य 'दीपजन' इति चिण्, 'चिणो लुक्' इति तस्य लुक् इति साधनात्, इत्याशङ्कायामाह—

वृत्त्या बोधयन्ति। न च यत्र तिङ्ङुपतिष्ठते तत्र द्वयोः फलव्यापारयोधारः व्यज्यते। कथं केवलं कर्म द्योतकं तदाह फलान्वयीति = यः फलान्वयी आधारस्तस्यैव तैर्द्योतनं भवति। फलाश्रयस्य कर्मत्वात्। तत्रैव कर्मसंज्ञा जायते यत्र तङ् यक् चिणादयः कर्मरूपार्थं द्योतयन्ति। अतएव तङादयः कर्मद्योतकाः भवन्ति यतः तङादयः कर्मणि भवन्ति अतस्ते कर्मद्योतका इति तङादि समुदायार्थः। व्यापारान्वय्याश्रयस्य = व्यापारस्यान्वयोऽस्त्यस्येति व्यापारान्वयी कर्त्ता। स एवाश्रयः कर्त्तृत्वात्। तद्द्योतका यतः शबादयः कर्त्तरि भवन्ति अतस्ते कर्त्तृद्योतका इति शबादि समुदायार्थः तङादयः कर्मणि प्रत्ययस्य शबादयः कर्त्तरि प्रत्ययस्य च भावं प्रकाशयन्ति॥३॥

यक् चिणादिसत्त्वे प्रायः तिङा फलाश्रयो द्योत्यते। शबादि सत्वे व्यापाराश्रयः कर्त्ता द्योत्यते, इति सामान्यो नियमः। तत्र व्यभिचारमाशङ्कते

उक्त नियम में व्यभिचार ( यक्; चिण् के रहते कर्ता अर्थ बोध होने ) की आशंका और निवारणः ननु इति—"नारद इत्यबोधि" इस वाक्य में चिण् हुआ है। व व्यापाराश्रय कर्ता का द्योतन मर रहा है। फलाश्रय कर्म का न है। इसी प्रकार पच्यते ओदन, वाक्य में यक् भी कर्ता को व्यञ्जित कर रहा है। जो नियमानुसार नहीं करना चाहिए। विवरण—जहाँ सूत्र के सामर्थ्य से कार्य हो रहा हो, वहाँ व्यभिचार नहीं मासा जाता। जैसे—पच्यते ओदनः के कर्म में कर्ता की विवक्षा, वक्ता के सौविध्य से हुई। वहाँ कर्ता में लकार हौता है। जब कर्म कर्ता हो गया, तो कर्मवत्—कर्म के तुल्य = सदृश हैं क्रिया, जिस कर्ता की, उसको कर्मवद् भाव होता है। यह अर्थ है। अर्थात् कर्मणि प्रत्यय होने पर जो-जो यक्, आत्मने पद, चिणादि कार्य होते हैं। वे-वे अति दिष्टकर्ता में भी यक्, आत्मनेपद्, चिण्, चिण्वादिट् का अति देश होने से यक् आदि के रहने पर भी कर्ता का ही बोध होता है और व्यापार विषयक आश्रय ( कर्ता का अन्वय समझना चाहिए।

एवं अबोधि यहाँ भी बुध् धातु से कर्ता अर्थ में लुङ् उसको "दीप जन बुध" सूत्र से चिण् "चिणः लुक्" से चिण् लुक् का साधन = सिद्ध हुआ, इससे व्यभिचार स्पष्ट है कि चिण् की उपस्थिति में कर्ता का बोध कैसे ? समाधानात्मिकाकारिका—

उत्सर्गोऽयं कर्म्मकर्तृविषयादौ विपर्ययात्।
तस्माद्यथोचितं ज्ञेयं द्योतकत्वं यथागमम् ॥ ४ ॥

कर्मकर्तृविषयादौ—'पच्यते ओदनः स्वयमेव' इत्यादौ। अत्र ह्यो-कौदनाभिन्नाश्रयकः पाकानुकूलो व्यापार इति बोधः। 'क्रमात्' इति आदि-पदग्राह्यम्। अत्र सामान्यविशेषज्ञानपूर्वक एकनारदविषयकज्ञानानुकूलः कृष्णाभिन्नाश्रयकोऽतीतो व्यापार इति बोधः। यथोचितमिति। *सकर्मक-धातुसमभिव्याहृतभावसाधारण* विधिविधेयचिण्यगादि कर्मद्योतकमिति भावः ॥ ४ ॥

नन्विति-यगादीनां फलाश्रयस्य द्योतकत्वं चेत तर्हि "क्रमादमुं नारद इत्यबोधि सः "इत्यत्र चिणि सत्यपि फलाश्रयो न बुद्ध्यते, अपितु व्यापाराश्रयो बुद्ध्यते। एवं पच्यते ओदनः स्वयमेवेत्यादौ यकि सत्यपि व्यापारश्रयो बुद्ध्यते (क्रियान्वय्यर्थः कर्त्ताव्यज्यते) न तु फलाश्रयस्तेन पूर्वोक्तनियमे व्यभिचारः सुस्पस्टः। यतः कर्मणि प्रत्यये सति सौकर्यातिशयद्योतनाय यदा यस्य धातोर्वाच्याक्रिया बुद्धिस्था सती विवक्षाविषयता प्राप्नोति तदा तदा-श्रयः कर्त्ता भवति। अतः काष्ठं पचयति, स्थाली पचतीत्यादीनि वाक्यानि सिद्ध्यन्ति। कर्मणः=फलाश्रयस्य कर्तृत्वविक्षायां=कर्मनिष्ठव्यापारप्राधान्य बुबोधयिषायां कर्म, कर्त्ता समजानि। कर्मकर्त्तरि लकारे सति "कर्मवत् कर्मणा तुल्य क्रियः"=तुल्या—कर्म समाना क्रिया=व्यापारो यस्यासौ कर्त्ता कर्मवद्भवति। एवञ्च कर्मणि प्रत्यये सति यानि यानि कार्याणि भवन्ति तानि यक् चिणादीनि कर्मादीनां कर्तृत्वविक्षायायामपि भवन्तु। इत्यतिदेशे न=अन्य धर्मस्य अन्यस्मिन् प्रापपेन, कर्मणि कर्तृत्व. धर्मस्यातिदेशेन, यग् आत्मने पदम् चिणवद्इट एतेषामतिदेशेन कर्त्तु. धर्मस्य कर्मणि प्रापणेन यगादि सत्वे फलश्रयो न द्योत्यते। किन्तु कर्म कर्त्तैवेति परिचाय्यते। तत्र व्यापाराश्रयस्यैव प्रतीतिः यस्मात् तस्मात् व्यापारान्वय्याश्रयो व्यज्यते। एवम् अबोधीत्यत्रापि बुध धातोः कर्त्तरि लुङि कृते तस्मिन् परे सति "दीप जनेति" सूत्रेण चिणि लुकि चेति कृते चिण् समभिव्याहृताख्यातसत्वेऽपि तत्र न फलान्वयिता किन्तु व्यापारान्वयितेति रीत्या व्यभिचारोऽस्त्येव। अर्थात् यक् चिणादिसत्वेऽपि प्रकृतस्थले कर्त्तुरेव बोध-इति प्रश्नाभिप्राय-मवलम्ब्यब्रूत उत्सर्गोऽयमिति।

अयं=तङ्यक् इत्यादि कर्म के प्रकाशक हैं। शप् श्यमादि कर्ता के व्यञ्जक हैं। यह नियम उत्सर्ग=सामान्य नियम है। जहाँ विशेष नियम है। जैसे कर्म ही कर्ता का विषय बन गया हो, वहाँ विषर्ययात्=विपरीत दर्शन हो जाता है। तस्मात्=

इद्यो = तङादयः फलाश्रयस्यद्योतकाः शवादयः व्यापारा श्रयस्य व्यञ्जका इति नियम उत्सर्गः=सामान्यं त्याज्योवा। विशेषनियमदशायान्तु यथा कर्त्तृकर्म विषयादौ=कर्म एव कर्त्ता यत्र एतादृशविषये=वाक्ये पच्यत ओदनः स्वयमेवेत्यादौ विपर्ययात्=विपरीतार्थदर्शनात्। यक् समभिव्याहारेऽपि व्यापार एवान्वयबोधात्। शाब्दबोधस्त्वित्थम्। एकसंख्याविशिष्टमोदनाभिन्नाश्रय वृत्तिर्विक्लेदनम्। (ओदन एवाभिन्नोऽऽश्रयो यस्य) आदिपदेन "कृमादमुं नारद इत्यबोधि सः" इत्यवधेयम्। अत्रापि चिणि सत्यपि व्यापाराश्रयस्य कर्त्तुरेव बोधो दृश्यते यथा-सामान्य ज्ञान पूर्वक= आकाशादाव्रजतो नारदस्य पूर्वंत्विषां चयः=किरणानां समूह इति सामान्येन किञ्चिज्ज्ञानम्। ततोऽयं नारद इति निश्यचयात्मकं ज्ञानम्। एकनारदविषयकं=अयमेव 'नारद' इति विषयकं यज्ज्ञानं तदनुकूलः=तादृशज्ञानजनकः कृष्णादभिन्न आश्रयोयस्य स अतीतो=भूतकालिको व्यापार इति शाब्दबोधः। इत्यादौ विपर्ययात्-बिपरीतार्थदर्शनात्। अयन्नियम उत्सर्गः। उत्स्रष्टुं योग्यः त्याज्य इत्यर्थः। न च कर्त्तरि लुङि कृते नारद इत्यत्र कर्मत्वात् द्वितीया कथन्न प्राप्नोति? निपातेन इति शब्देन कर्मत्वमुक्तम् उक्ते च प्रथमा भवति न द्वितीया।

इसलिए यथागमम्=शास्त्रका उल्लङ्घन न करके, जैसे शास्त्र नियम करे, जैसा बोध होता हो, यथोचित=जहाँ जैसा उचित हो, वहाँ वैसा द्योतकत्व=तात्पर्य ग्राहकता जाननी चाहिए।

कर्म के कर्ता होने का उदाहरण पेंच्यते ओदनः स्वयमेव" है अत्र=यहाँ हि= निश्चयेन एक ओदन है अभिन्नाश्रय जिसका, ऐसा पाक् (फल) उसका जनक व्यापारः ऐसे बोध होता है। विषयादौ में—आदि पद से-क्रमदमु नारदको समझना चाहिए। द्वारका पुरी में श्री कृष्णने आकाश से उतरते हुए नारद को देखा तो, पहले सामान्ये ज्ञान यह कुछ है। पश्चात् ये नारद हैं, यह विशेष ज्ञान हुआ। एक नारद विषयक ज्ञान का जनक व्यापार, जो कृष्ण भिन्नाश्रायक कृष्ण हैं अभिन्न आश्रय जिसका, ऐसा ज्ञान क व्लापार क्रिया। ऐसा बोध यथागमं जैसा शास्त्र विधान करे उसके अनुसार जाने। यथोंचित की द्योतकत्व यथा योग्य ताप्पर्यग्रहण की कल्पना होती है। अतः सकर्मक धातु के समभिव्यवहार (विनाब्यवधान की उपस्थिति) में तङ् यक्, चिलादि कर्म रूप आश्रय का बोधन करते हैं। अकर्मक धातु से भावसाधारण विधि (सूत्र)="चिण् भाव कर्मणोः" "सार्वधातुके यक्" इत्यादि अनसूत्रों से विधेय चिण् यगादि भाव=क्रिया अर्थ के द्योतन की तरह कर्म अर्थ की व्यञ्जना करते है। ऐसे ही अबोधि प्रयोग में (दीपजन बुध) से होने

तस्मात् = विपरीतार्थ दर्शनात् यथागमं = यथायोग्यविधायकं शास्त्रं तदनुसारं यथोचितं = यथा सम्भवं शास्त्रानुसारि = विधानं तेन द्योतकत्वम् = अर्थ प्रकाशकत्वं ज्ञेयं = ज्ञातुं योग्यम्। अकर्मके कर्मणोऽसम्भवात् सकर्मकमुदाहरति। यथोचितमिति—सकर्मकधातुसमभिव्याहृत = सकर्मक धातुयोगे यक् चिणादयः कर्मण आश्रयान्वयं बोधयन्ति। एवं भावसाधारणविधि = धारणया ज्ञानेन सह वर्त्तते, इति साधारणः। भावे = भावार्थकविषये विधानविषयकं साधारणं ( सामान्यम् ) यज्ज्ञानं तेन सह वर्त्तमानो यो विधिः = विधायकं सूत्रं यथा "चिण् भाव कर्मणोः" "सार्वधातुके यक्" इत्यादिभिः सूत्रैः—विधेयः ( विधान विषयः ) चिण् यगादिः कर्मद्योतकम्। ते कर्मण्याश्रयस्य सम्बन्धं बोधयन्ति। "अबोधि" इत्यत्र कर्त्तरि लुङि सति भावसाधारण—विधिःविधेयश्चिण् च नास्ति। किन्तु विशेषविधि रस्ति। अतोऽत्र कर्मणो द्योतकत्वं नास्ति। किन्तु कर्त्तुरेव द्योतकत्वं ज्ञेयम् ॥ ४ ॥

फलव्यापारयोः धातुरिति या प्रतिज्ञा कृता तस्याः—सम्यक्समर्थनं कृत्वा. तयोः धातुवाच्यत्वं प्रसाध्य व्यापारस्य धातोर्वाच्यत्वमस्वीकुर्वद्भिः विरुद्धमतिभिः मीमांसकादिभिः स्वीकृतं मतमनिराकृत्यपूर्वं शब्दार्थकथनं वाक्यार्थवर्णनं शाब्दबोधप्रदर्शनमसङ्गतम्। अत आह—सूची कटाह न्याये-नेति—शब्दार्थवाक्यार्थवर्णनं सूचीति। विरुद्ध बुद्धि निराकरणं कटाह इति। यथा एकस्मिन्काले युगपत् सूचीकटाहयोः निर्मापयितारौ लौहकारसमीपं गतवन्तौ। तत्र एक आह मम सूचीपूर्वं कुरू अपर आह कटाहं मे कुर्विति। युगपदुभयोः कार्यासम्भ–वाञ्छिल्पी, अल्पकाल साध्यां सूचीं प्रथमं निर्मिमीते। बहुसमय सापेक्ष्यं कटाहं पश्चान्निर्माति तथैवाल्पकालसाध्यं फलव्यापारयो र्धातुवाच्यत्वमाश्रयस्य तिङर्थत्वं सोपपत्तिकम् = उपपत्त्या युक्तियुक्ततर्क-सङ्गतेन प्रमाणेन सहितं साभिप्रायकं वाक्यार्थमुपवर्ण्य, परमार्थस्तु वाक्य-स्फोट एवार्थवान्। अतस्तदर्थस्य ( वाक्यार्थस्य ) प्रतिपादनं कृत्वा, यद्यपि निरसनीयं ज्ञानं प्रति प्रथमं शिष्टजिज्ञासोदेति। तस्याः निरूपणमावश्यकं, तथापि विवादो विप्रतिपत्तिश्च बहुकाल साध्यात्वात् पश्चान्निरूपणीयः।

वाला चिण् कर्ता अर्थ में तिवादि के ता पर्य का ग्रहण करता है। कर्ता में प्रत्यय को प्रकाशित करते हैं। यह शास्त्र का विधान है। सामान्यतः वे भाव और कर्म के ही द्योतक हैं। ऐसे "तण्डुलः पच्यते" यहाँ पर कर्म में कर्ता अर्थ के विशेष अतिदेश होने से यगादि कर्ता अर्थ के प्रकाशक हैं। शास्त्र जहाँ जै ा विधान करे, वहाँ वैसा अर्थ समझना चाहिए ॥ ४ ॥

एवं सूचीकटाहन्यायेन सोपपत्तिकं वाक्यार्थमुपवर्ण्य, 'फलव्यापारयोः इति प्रतिज्ञातं धातोर्व्यापारवाचित्वं लडाद्यन्ते भावनाया अवाच्यत्वं वदतः प्राभाकरादीन् प्रति व्यवस्थापयति—

o

अतः फलव्यापारयोरिति प्रतिज्ञया धातो व्यापारार्थप्रतिपादनं कृतम्। लडाद्यन्ते = लट् लिट लुङादयोऽन्ते यस्यासौ लडाद्यन्तो धातुः। अतदगुण संविज्ञानो बहूब्रीहि। तत्र धात्वर्थायाः भावनायाः अवाच्यत्वं = भावना न धातुवाच्येति वदतः = प्रतिपादयतः प्राभाकरादीन् = मीमांसाशास्त्रस्यव्याख्या कर्तॄन् प्रति व्यवस्थापयति। प्राभाकरास्तु धातोः फल मात्रमर्थं ब्रुवन्ति। पचि, त्रजि, त्यजीत्या दीनां विक्लित्ति, संयोग, विभागादिरूप फलमेवार्थः। फलरूपेष्टसाधकपुरुषप्रवृत्तिरूपा ( आर्थीभावना ) चाख्यातार्थः। आख्यातवाच्यस्य कालस्य भावनायामेवान्वयः, समानप्रत्ययेनोपस्थितत्वात्। यत्र भावनाया अभावस्तत्र पचतीति प्रयोगो न जायते। एतेन भावना न धातु वाच्या किन्तु फलमात्रं तदर्थ इति सिद्धयति। आदि पदेन प्राचीननैयायिकादि संग्रहः। मीमांसकमत इव तन्मतेऽपि फलमात्रं धात्वर्थः। आख्यातार्थस्तु कृति रिति। तान्प्रति-व्यवस्थापयति = उपपत्तिरनुपपत्ति—स्वरूपां-व्यवस्थां प्रदर्श यति व्यापारो भावनेति।

यो व्यापारः स एव भावना सैवोत्पादना सैवक्रिया। एताः पर्यायवाचिन्यः। एतेन मीमांसक मत खण्डनं कृतम्। कारिकायां सा इति पदं न शोभते व्यापारस्य-पुल्लिङ्गनिर्देशात्। तथापि यत्रोद्देश्यविधेयभावयो—रैक्यमापादनं तत्र सर्वनामानः तत्तल्लिङ्गभाजोभवन्ति। कदाचिदुद्देश्यलिंग भाजो भवन्ति। कदाचिद् विधेयलिङ्ग भाजो भवन्ति भावनारूपविधेयानुरोधेन तच्छब्दार्थे स्त्रीलिङ्गता ज्ञेया।

इस प्रकार "सूची कटाह" न्याय से ( अल्पसमय साध्य सूची और बहुकाल साध्य कटाह के निर्माण में सूई को प्रथम अवसर दिया जाता है। इसी तरह फल और व्यापार धातु के वाच्य अर्थ है। यह प्रतिज्ञा जो प्रथम की जा चुकी है उसको उपपत्तियों, युक्तियो, तर्कों सहित वर्ण पद वाक्य तत्तदर्थ का वर्णन, शाब्द बोध प्रदर्शन, करके धातु का अर्थ व्यापार है। इसका प्रदर्शन लडाद्यन्ते = लट् लिठ् आदि हो अन्त में जिसके ऐसे धातु का भावना, अर्थ न मानने वाले धुरन्धर मीमासक प्राभाकरादि विद्वानों के प्रति व्यवस्थर प्रस्तुत करते हैं। यहाँ प्रकृति प्रत्ययार्थ पद-वाक्यार्थ का वर्णन सूची है, अल्प समय साध्य है विरूद्ध मत वादियों के मतों का खण्डन कटाह ( बहु समय = साध्य कर्म ) है जिसे आगे प्रदर्शित कर रहे हैं।

मीमांसक मत खण्डन व्यापारो भावना सैवोत्पादना सैव च क्रिया।
नैयायिक मत खण्डन कृञोऽकर्म्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते ॥ ५ ॥

'पचति—पाकमुत्पादयति' 'पाकानुकूला भावना' ,तादृश्युत्पादना' इत्यादिविवरणाद्विन्रियमाणस्यापि तद्वाचकतेति थाव: । व्यापारपदं फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यतां ध्वनयितुमुक्तम् । अत एव 'पचति' इत्यत्राधः—सन्तापनत्व—फूत्कारत्व—चुल्ल्युपरिधारणत्व—यत्नत्वादिभिर्बोधः सर्वसिद्धः ।

ननु क्रिया शव्दो व्यापार पर्याय: "कृ" धातु: यत्नार्थकस्तेन यत्नमात्रं तस्यार्थ इति नैयायिकमतं खण्डयितुमाह—कृञोऽकर्मकतापत्तेरिति कृ धातु र्न यत्नार्थक, अन्यथा "यती" प्रयत्न इव कृ धातुरप्यकर्मक: स्यात् । धातोः क्रिया वाचकत्वविवरणे ग्रन्थकार: स्वानुभूतिं दर्शयितुमाह—पचतीति । तस्य विवरणं=व्याख्यानं पाकमुत्पादयति=विक्लित्तिं जनयतीति । पाकानुकूला=ओदन जनिका भावना=क्रिया तादृश्युत्पादना = अवयव-शैथिल्यजनको व्यापार । इत्यादि विवरणात्=समानार्थकान्यशब्देन प्रतिपादनात् विव्रयमाणस्य = व्याख्याय मानस्य पचतीत्यस्यापि तद् वाचक-तया व्यापार वोधकतया भवितव्यम् । यदि पच् धातो: पाकमात्रमर्थः "ति" प्रत्ययस्य विवरणं करोतिति । तर्हि पाकमुत्पादयतीत्यत्रोत्पादना कस्यार्थो भविष्यति । तेन गम्यने यदुत्पादनाऽपि पच् धातोरेव विवरणमास्ति । एवं तुल्यन्यायेन भावना, उत्पादना, क्रिया, व्यापारश्च सर्वं पच् धातो रेवार्थः ।

[व्यापारी भावना इत्यादि=इस कारिका के पूर्वार्ध से मीमांसकमत खण्डन, उत्तरार्ध भाग से नैयायिक मत खण्डन । कारिकार्थ=व्यापार को ही भावना कहते हैं । इससे मीमांसकों का भ्रम निवृत्त किया गया है । नैयायिको का मत है कि "करोति" में कृ धातु का अर्थ यत्न है । इस भ्रम का निराकरण उत्तरार्थ भाग से करते हैं । यदि "कृञ्" धातु का यत्न अर्थ होगा तो "कृञ्" धातु सकर्मक न होकर अकर्मक हो जायगा । इस आपत्ति की निवृत्ति के लिए कृञ् धातु को यत्नार्थक नहीं मानना चाहिए । व्याख्यात्मक अर्थ "पचति" पद की अर्थ बोधिका व्युत्पत्ति "पाकं करोति" की तरह "पाकमुत्पादयति" पाकानुकूल भावना । चावल में कोमलता की उत्पत्ति ही पाकरूप फल है । उसके अनुकूल भावना व्यापार भी पचति का अर्थ विव्रियमान ( व्याख्येय ) जो "पचति' है उसका उत्पादना रूप अर्थ के विवरण से व्याख्यान के विषय भूत शब्द में तद्=वाचकता=उत्पादना रूप अर्थ किस शब्द का विवरण हो सकता है । इससे सिद्ध होता है कि पाकं और करोति दोनों पच का ही अर्थ है इस प्रकार तुल्यन्याय से जैसे पचति का पाकानुकूला भावना अर्थ माना जाता है वैसे ही पाकामुकूला उप्पादना भी अर्थ मानना चाहिए ।]

शक्य को सीमित करने वाला

नचैवमेषां शक्यतावच्छेदकत्वे गौरवापत्त्या कृतित्वमेव तदवच्छेदकं वाच्यम्, 'रथो गच्छति' 'जानाति' इत्यादौ च व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायिकरीतिः साध्वी, शक्यातावच्छेदकत्वस्यापि लक्ष्यतावच्छेदकत्वद् गुरुणि संभवात्। तयोर्वैषम्ये बीजाभावात्। न च 'पचति-पाकं करोति' इति यत्नार्थककरोतिना विवरणाद्यत्नएवाऽऽख्यातार्थं इति वाच्यम्, 'रथो गमनं करोति' बीजादिना अंकुरः कृतः इति दर्शनात् कृञो यत्नार्थकताया असिद्धेः।

शक्य, लक्षणा।

०

ननु या क्रिया सा भावना सैवोत्पादनाऽपि स्मृता, इति प्रामाणिकोक्त्या क्रिययैव भावनात्व लाभे व्यापार पदं निरर्थकं तदाह—व्यापार पदश्चेति—व्याप्रियतेऽनेनेति करणव्युत्पत्त्या व्यापरणं व्यापार इति भावव्युत्पत्त्या वा। व्यापार पदेन फलजनकानां कृत्स्नानां फूत्काराधिश्रयणादीनां भावनानां लाभाय व्यापारपदोपादानम्। क्रिया पदेन तु कृति पदवत् यत्नमात्रार्थकत्वस्यापि सम्भवेन तन्मात्रस्यैव बोधवारणाय क्रियया सह व्यापारस्य यत्नार्थत्व लाभाय च कारिकायां क्रियेति पदं दत्तम्। व्यापार पदं न चेत् यत्नमात्रमर्थः स्यात्, तर्हि यत्नस्य चेतन निष्ठत्वात् यतः—धातोरिव "कृ" धातोरप्यकर्मकतास्यात्। अतोऽयत्नानां=यत्नार्थं भिन्नानां फूत्कारादीनां फूत्कारत्वादिधर्मरूपेण वाच्यतां=एते फूत्कारादयः पच् धातु वाच्येति ध्वनयितुं व्यापार पदं प्रदत्तम्। अत एव=फूत्कारादीनां पच् वाच्यत्व स्वीकारादेव "पचति" इत्युक्ते चूल्हिकोपरि पात्रस्थापनं जले तण्डुलं प्रक्षाल्य प्रक्षेपोऽग्निवायुसंयोगजननमित्याद्यर्थाः, एकस्यां पचति क्रियायां प्रतीयन्ते। इत्थं बोधः सर्वसिद्धः=सर्वानुभव सिद्धः अर्थनिर्णये प्रबलं प्रमाणन्तु अनुभव एव।

कारिका में यत्न भावना क्रिया शब्द के रहते हुए भी व्यापार पद क्यों दिया। उसका प्रयोजन प्रकाशित करते हैं कि व्यापार पद इस लिए दिया कि, फूत्कार, अग्नि काष्ठ संयोग, चूल्हे पर चढाना इत्यादि क्रियायें जो यत्न नहीं हैं, उनकी वाच्यता फूत्कारत्व धर्म सहित अधः सन्तापनत्व सहित धातु की वाच्यता सिद्ध करने के लिए व्यापार पद दिया इस लिए "पचति" शब्द कहने पर नीचे से सन्तापनं करना, फूत्कार करना, चूल्हिका पर चढ़ाना, प्रयत्न करना इत्यादि क्रियायें त्व (धर्म) के बोध का विषय बनती हैं। ये बात सबके मत में सिद्ध है।

न च=न कहिये पूर्वोक्त रीति से "पचि" में प्रतीयमान अनेक क्रियाओं के शक्यतावच्छेद कत्व में गौरव की आपत्ति होगी। पच् धातु के शक्य (वाच्य)

वैयाकरणमत निराशाय नैयायिकैः स्व सिद्धान्तसाधिका युक्तिः प्रदर्श्यंते न चेति—आख्यातार्थः कर्ता। तत्र विशेषणीभूतव्यापारस्य शक्यतावच्छेदिका वाच्यार्थभेदिकाः फूत्कारादयोरनेके धर्माः भविष्यन्ति। तस्मात् कृतित्वं शक्यतावच्छेदकं बोध्यम् कृतित्वञ्च—प्रकृति जन्य बोधे प्रकारीभूतभाव रूपं, प्रकृतौ विशेषणम्। तत्र कर्तृत्वं कृतिरूपं भविष्यति। यतः कर्तृपदात् "त्व" प्रत्यये सति प्रकृतिः "कर्तृ" इति पदमभवत्। प्रकृति जन्य बोधस्तु नैयायिक मते कृत्याश्रयः, वैयाकरण मते व्यापाराश्रयः, मीमांसक मते भावनाश्रयरूप इति। शाब्दिक मते व्यापारस्यानेकत्वेऽपि अर्थात् एषां= फूत्कारादीनां शक्यतावच्छेदकत्वे=शब्दशक्त्योपस्थितोऽर्थः शक्यः (वाच्यः) तन्निष्ठा या शक्यता तासामवच्छेदकेषु="पच्" धातौ सत्वेषु, भेदकेषु, अग्नि प्रज्वालनत्व यत्न त्वादिष्वनेकेषु धर्मेसु सत्सु गौरवापत्त्या= (अधिक धर्म वहनं गौरवं सैवापत्तिः) तदपेक्षया कृतित्वं शक्यतावच्छेदकमनुगतमेकमेव वाच्यम्। यतो "लः कर्मणि" इति सूत्रे कर्तृ कर्म पदे भाव निर्देश प्रधानं कृत्वा कर्तृत्वं कृतिरूपमेव। तदेव तिङः शक्यार्थः। तन्निष्ठ शक्यतावच्छेदको धर्मः कृतित्वमेव। एतेन आख्यातार्थः कृतिरिति नैयायिक सम्मत लाघवं दुषयितुमाह—"रथो गच्छतीति" कृतिराख्यातार्थ २ चेत्तर्हि—सा चेतनस्या जडेऽननुभूयते। कृतौ शक्ति स्वीकारे रथो गच्छति, जानाति, इच्छति, नश्यति इत्यादौ शाब्द बोधो न जायते। कर्तुरचेतनत्वात्

अर्थ अनेक हैं। उनके अवच्छेदक धर्म जैसे फूत्कारत्व यत्नत्व इत्यादि अनेक है। अधिक धर्म का होना ही गौरव है। जो वैयाकरण सिद्धान्त में स्पष्ट है। इसलिए नैयायिक सम्मत कृतित्व (यत्नत्व) कोही शक्य अर्थ का अवच्छेदक (भेदक) धर्म जो एक है उसी को मानना चाहिए। यदि यह कहिऐ कि कृतित्वकों अर्थ का भेदक धर्म स्वीकार करने से 'रथो गच्छति' इस वाक्य में रथ के अचेतन होने से, उसमें कृतित्व नही घटेगा। तो ति का व्यापार अर्थ में लक्षणा करने से रथ व्यापार का आधार वन सकता है। ऐसे ही रथो जानति में 'ज्ञा' धातु का ज्ञान मात्र अर्थ होने पर भी 'ति' पद का व्यापार में लक्षणा करेंगे तो व्यापारत्व (क्रियार्थ) धर्म हो प्रकार=विशेषण जिसमे ऐसे शब्द-बोध प्रदर्शन प्रक्रिया की सम्भावना से नैयायिकों की उक्त शैली साध्वी=प्रशस्ता होगी। समाधानम्=बैयाकारण वोलते है कि जैसे शक्यता वच्छेदक फूत्कारत्वादि अनेक धर्मों के होने से गौरव की उत्पत्ति मानते हो वैसे ही लक्ष्यता वच्छेदकों के अनेक होने से गौरव की आपत्ति होगी। यहकोई राजाज्ञान ही है कि शक्यार्थ भेदक धर्म गौरव माना जाय लक्ष्यार्थ भेदक धर्म में गौरव न माना जाय। इन दोनों की विषयता में कोई बीज (प्रमाण) नहीं है।

तत्र व्यापारत्वादि प्रकारकं बोधो लक्षणया = व्यापारत्वमादि पदेन आश्रयत्वं प्रतियोगित्वञ्च ग्राह्यम्। एतानि प्रकाराः विशेषणानि येषु बोधेषु तादृश बोधो लक्षणया = आख्यातस्य व्यापारे लक्षणा कृत्वोपपद्यते। रथे यत्नाश्रयता ज्ञाना श्रयता इच्छा श्रयता च नास्ति नाशस्यापि (अदर्शनस्यापि) तत्राभावात्। तस्माल्लक्षणैव शरणम्। आख्यातस्य—व्यापारे लक्षणां कृत्वा संयोगानुकूल व्यापारवान् रथः। इच्छा निरूपित आश्रयता वानूंश्च नाशनिरूपित प्रतियोगितावान् घट इति बोधः। इत्थं नैयायिक सम्मत लक्षणा शैली साध्वी = प्रशस्तेति चेन्न। व्यापारे लक्षणेति वादिमते लक्ष्यतावच्छेदकं (लक्ष्यार्थ भेदेको धर्मः) व्यापारत्वमेव भविष्यति, यच्छक्यतावच्छेदकमप्यस्ति। तच्चोभयपक्षे फूत्कारात्वाद्यनेक गुरुभूत धर्माः सन्ति। तत्रापि गौरवं तादवस्थ्यमेव = तथैव स्थितरित्यर्थः। अत आह-शक्यतावच्छेदकत्वस्यापि = यथा पच् धातु वाच्यार्थभेदका फूत्कारादयोऽनेके धर्माः तत्र तथैव गौरवं यथा लक्ष्यतावच्छेंदकत्वत् = व्यापारे लक्षणा करणेन लक्ष्यार्थभूतफूत्काराद्यनेक धर्माणामिव गुरूणि = गोरवग्रस्तानि सम्भवात् तद्वच्छक्यतावच्छेदकेऽपि गौरवं ज्ञेयम्। शक्यतायामेव गौरवं न लक्ष्यतायामित्यत्र पक्षपातिनी युक्तिर्नास्ति। शक्तिलक्षणयोरूभयो गुरूधर्मयोगे यथा लक्षणायां गौरवं तथा शक्यतायामपि।

शक्यतावच्छेदकधर्मं लक्ष्यतावच्छेदकधंर्मयो र्गुरुभूतयोस्तत्रैको धर्मः शक्यतावच्छेदकरूपः स्वीकार्योऽपरोलक्ष्यतावच्छेदक धर्मो न स्वीकार्यं इति वैषम्ये = मेदे बीजाभावात् = कारणाभावात। यतः यत्र समनियत = समानरूपेण विद्यमानगुरुधर्माणां लघु धर्माणाश्च स्थितिस्तत्रलघु धर्मस्यावच्छेकत्वं स्वीक्रियते। प्रसंगे तु "रथो गच्छति" इत्यत्र व्यापारे लक्षणास्वीकारे व्यापारत्वं लक्ष्यतावच्छेदकत्वं भविष्यति, "इच्छति" इत्यत्र (तिपः) आश्रये लक्षणायामाश्रयत्वं लक्ष्यतावच्छेदकत्वं भविष्यति। "नश्यति"

न च = न कहिए कि पचति का विवरण = व्याख्यार्थ पाकं करोति है। पच् का पाकं अर्थ हुआ ति का करोति अर्थ यत्नार्थक है। इस लिये यत्नार्थक कृ धातु के साथ विवरण होने से यत्न ही आख्यातार्थ (तिङर्थ) होना चाहिए? तो यह तर्क संगत नही है, क्योकि = रथो गमनं करोति इस वाक्य का अर्थ है। रथ कर्ता हो, गमत कर्म हो, ऐसा जो व्यापार इससे कृ धातु यत्नार्थक सिद्ध नही होता। ऐसे ही 'बीजादिना अङ्कुरः कृतः' बीजादि हो कर्ता और व्यापार से जन्य उत्पत्ति का आश्रय अङ्कुर है। इस अर्थ से भी कृ धातु की यत्नार्भकता नही सिद्ध होती है।

इत्यत्र प्रतियोगिनि लक्षणायां प्रतियोगित्वं लक्ष्यता वच्छेदकं स्यात् । अस्यां स्थितौ वैयाकरण मते नैयायिकसम्मत शक्यतावच्छेदककृतित्वापेक्षया गौरव सम्भवेऽपि, त्वदभि प्रेत लक्ष्यता वच्छेदकायेक्षया गौरवं नास्ति । अतो धातो व्यापारे तिङः कर्त्तरि शक्तिरवश्यं मन्तव्या ।

यत्र समनियतलघुधर्मं गुरुधर्मयोः सत्ता तत्र गुरुधर्मस्य शक्यतात्वे गौरवं कल्पयिष्यते । केवलं व्यापारे गौरवन्तु विवशता । नैयायिको ब्रूते । एतादृशी विवशता मम मतेऽप्यस्ति । यथा पच् इत्यस्यपाकं "ति" इत्यस्य करोतीति विवरणं ततो यत्न इति कस्यार्थो भविष्यति अत आख्यातस्य यत्नार्थो विवशता । यत्नार्थक—करोतिना विवरणात् । यत्पदं यद्विवरण विशिष्टं तत्पदं तदर्थवाचकम् । "ति" पदं करोति विवरण विशिष्टं तेन कृञर्थो यत्नः । तेन "तिप्" यत्नार्थक इति सिद्ध्यति । समाधानं—कृ धातोः यत्नार्थकत्वस्वीकारे धातुमात्रस्य यत्नार्थकता सम्भाव्यते । 'कृञ्" धातो र्धातुमात्रोपल क्षणत्वात् । "रथो गच्छति" इत्यत्र तिङर्थो यत्नः । तेन रथ-कर्त्तृक गमनकर्मको व्यापारः, इति स्थाने गमनजनककृत्याश्रयो रथ इत्यर्थो भविष्यति । तत्राचेतने रथादौ यत्नाश्रयत्वस्यवाधेन अचेतन कर्त्तृक प्रयोगानुपपत्त्या कृञो यत्नार्थकता न सिद्धयति । किन्तु विवरणेन व्यापारार्थकत्वमेव सिद्ध्यति । न च कृञः कृतौ शक्तिः व्यापारे लक्षणा करणेन यत्नार्थकत्वेऽपि न दोषोऽत आह—बीजादिनेति-वीजादि कर्त्तृक व्यापार जन्योत्पत्त्याश्रयोऽकुंर इत्यत्र यत्नार्थकता न प्रतीयते । यदि बीजादि–कर्त्तृककृति जन्योत्पत्त्याश्रयोऽङ्कूर इत्यर्थेऽचेतने बीजादौ यत्नस्य बाधेन कृञो यत्नार्थकता न सिद्ध्यति । रथस्य बीजस्य च जडरूपत्वात् । तत्र चेतन वृत्ति यत्नस्याप्रसङ्गात् । कृञो व्यापारेऽर्थे प्रयोगप्राचूर्यं प्राप्यते न यत्नार्थे । तेन व्यापारे शक्ति कल्पना न्याय्याः = उचितेत्यर्थः ॥

अथवा धातु का भावना अर्थ न माना जाय तो यह आपत्ति होगी कि जैसे 'घटं भावयंपि' वाक्य में घटके उत्पत्ति रूप फलका आश्रय होने से कर्म संज्ञक हुआ । ऐसे ही घटो भवति में भी घट उत्पत्तिरूपफल का आश्रय होने से कर्म संज्ञक क्यों न हो ? द्वितीया क्यों नही होती ? धातु का फलमात्र अर्थ होने से दोनौ स्थल में घट फलाश्रय है । नच = न कहिए घटो भवति में घट की कर्तृ संज्ञा होने से कर्म संज्ञा का बाध होगा । इस लिये द्वितीया भी नहीं होगी । इसपर वैयाकरण समाधान देता है कि अनुगतकर्तृत्व = व्यापक जडचेतन उभय साधारण कर्ता जो जड़ में भी रहे और चेतन में भी, ऐसा कर्तृत्व = कर्ता में रहने पाला व्यापार तुम्हारे मत में दुर्वच = बड़े दुःख से कहने योग्य है । अतः घट की कर्तृ संज्ञा हो ही नही सकती तो बाध को सम्भावना कहाँ ?

**किञ्च भावनाया अवाच्यत्वे 'घटं भावयति' इत्यत्रेव 'घटो भवति' इत्यत्रापि द्वितीया स्यात्। न चात्र घटस्य कर्तृत्वेन तत्संज्ञया कर्म्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम्, अनुगतकर्तृत्वस्य त्वन्मते दुर्वचत्वेन घटस्याकर्तृत्वात्। कृत्याश्रयत्वस्य कारकचक्रप्रयोक्तृत्वस्य वा घटादावभावात्। धात्वर्थानुकूलव्यापाराश्रयत्वस्य च कारकमात्रातिव्यापकत्वात्।**

किञ्च—भावनाया अवाच्यत्वे=सामान्यरूपेण भावना न धातुवाच्या न च तिङ वाच्या स्यात्, तदा घटं भावयतीत्यत्र धात्वर्थ—फलाश्रयत्वं कर्मत्वमिति लक्षणस्वीकारे उत्पत्तिरूपफलाश्रयत्वं घटे वर्त्तेत। तेन तत्र कर्मसंज्ञा जायते। धात्वर्थ व्यापाराश्रयत्वं कर्त्तृत्वमिति वक्तुं न शक्यते, व्यापारस्य अवाच्यत्वात् तथैव घटो भवतीत्यत्रापि धात्वर्थं उत्पत्तिरूपं फलं तदाश्रयो घटस्तेन तस्यकर्मत्वात्, द्वितीया प्राप्नोति। यतो धात्वर्थ—व्यापाराश्रयः कर्त्ता इति लक्षणं सम्भवत्येव नहि। लक्षणयोप स्थितस्य व्यापारस्या वाच्यत्वात्, कर्तृ संज्ञाऽपि न। येन कर्त्तृसंज्ञया कर्मसंज्ञायाः बाधः सम्भाव्येत्। अर्थात् लक्षणया भावनाया उपस्थितिर्वर्त्तते, शक्त्योपस्थितिः नास्ति। तदा फलजनक स्वजनक व्यापार व्यधिकरण धात्वर्थ फलाश्रयत्वं कर्मत्वम्। उत्पत्त्याश्रयत्वेन घट इत्यत्र—द्वितीया प्राप्नोति। यदा व्यापारोऽपि धातु वाच्यस्तदा नोक्त दोषः। धात्वर्थ व्यापाराश्रयस्य कर्तृत्वेन परत्वात् कर्तृसंज्ञया कर्मसंज्ञायाः बाधात्।

ननु घटो भवतीत्यत्र कृत्याश्रयः कर्त्ता इति लक्षणमादाय घट इत्यत्र धात्वर्थ फलाश्रयता कृत्याश्रयता च वर्त्तेते। तेन कर्त्तृसंज्ञया कर्मसंज्ञायाः बाधेन द्वितीया न प्राप्नोति। एतेन व्यापारस्या वाच्यत्वेऽपि न दोषस्तदाह न चेति-घटस्य कर्तृत्वेन=कृत्याश्रयः कर्त्ता इति लक्षणेन अथवा कारक-

यदि कहिए कि जो कृति ( यत्न का आश्रय है उसे कर्ता कहते हैं, तो यह लक्षण घट में घटता ही नहीं। यदि कारक कर्म करण-सम्प्रदान इत्यादि का चक्र (समूह) का प्रेरक कर्ता माना जाय, तो दोनो लक्षण में अनुगात। ( जड़चेतन उभयसाधारण ) कर्तृत्व नही हैं। दोनों चेतन निष्ठ है जड़ घट में उक्त कर्तृत्व नही जा सकता। कारक समुदाय का प्रेरक चेतन कर्ता होता हैं। यदि कहिए कि धात्वर्थ फल का जनक व्यापार उसका आश्रय जो हो उसे कर्ता कहते हैं, परन्तु यह लक्षण सभी कारकों में घट जाने से अलक्ष्य में लक्षण के चले जाने से अतिव्यप्ति दोष होगा। जब तक धातु का व्यापार अर्थ न ही स्वीकृत होगा; तब तक अनुगत कार्तृत्व दुर्वच बना ही रहेगा। अतः व्यापार भी धात्वर्थ सिद्ध हुआ।

चक्रप्रयोक्ता कर्त्ता । तेन कर्त्तृ संज्ञया कर्मसंज्ञा बाध्यते ततो न द्वितीया इति सत्यम् । अनुगत कर्त्तृ त्वस्य = जड़चेतनोभयसाधारण कर्त्तृ धर्मस्यत्वन्मते = भवदीय सिद्धान्ते दुर्वचत्वेन = वक्तुमशक्यत्वेन, यतोहि कृत्याश्रयः कर्त्ता इत्युच्यते । कृतिश्च चेतननिष्ठधर्मः । अचेतने घटेऽऽश्रयतां वक्तुं न भजते । अतो घटस्या कर्त्तृ त्वात् घटः कर्त्तेति वक्तु न शक्यते । कर्त्तृ त्वेन कर्मसंज्ञायाः बाधोऽपि न सम्भाव्यते व्यापारस्यावाच्यत्व दशायां कृत्याश्रयत्वस्य = धात्वर्थं फलजनककृतेराश्रयत्वमचेतने घटादावभावात् एवं कारकचक्रप्रयोक्तृत्वस्य = कारकाणां = क्रियान्वयिनां चक्रं = समूहः सकल कारकाणीत्यर्थं । तेषां प्रयोक्तृत्वस्य = प्रवर्तकत्वस्य प्रयोगदशायां सर्वाणि कारकाणि कर्त्तारं भजन्ति । अतस्तानि कर्त्तृ व्यापार प्रयोज्यानि सन्ति ( सर्वेषु कारकेषु सन्निहितेषु कर्तैव प्रवर्त्तयिता भवति ) अतः प्रयोक्तृत्वमपि प्राणिधर्मः । तदपि, अप्राणिनि घटादौ न दृश्यते । एतल्लक्षणमप्यनुगतं न सम्भवति । इत्थं नैयायिकमतन्निरस्य मीमांसकमतन्निरस्यति—धात्वर्थानुकूल व्यापाराश्रयत्वं कर्तृ त्वम् । तन्मते धात्वर्थः फलं तज्जनको—व्यापारस्तस्याधारः कर्त्ता । इदृशं लक्षणं मन्यसे चेत् तत्कारक मात्रातिव्यापकत्वात् = कारकेषु सर्वत्र यत्किञ्चिद्रूपेण क्रियान्वयित्वं वर्तते । सर्वत्र कर्तृ त्वलक्षणगमनेनातिव्याप्तिः स्यात् । अनुगतं सुनिश्चितं कर्तृ त्वं न स्यात् । लक्षणस्य—सकल कारकेषु प्रवर्त्तनात्, अलक्ष्ये लक्षण गमनात्—दोषः समुच्चीयते । भावनायाः वाच्यार्थत्वं विनाअनुगतं चेतनाचेतनोभयसाधारणं कर्तृ त्वं न सम्भविष्यति । अतो व्यापारोऽपि धात्वर्थ एवेति—मन्तव्यैव ।

ननु कारक चक प्रयोक्तृत्वं कर्तृ त्वम् ( कारक समूहप्रयोगविषयः कर्त्ता ) इति लक्षणं विवक्षया घटेऽपि तिष्ठति । तत्रापि कर्तृ त्वं यास्यति । यथा "कारके" इति सूत्र भाष्ये—स्वातन्त्र्यं कर्तृ त्वं पारतन्त्र्यं कर्तृ भिन्नकारकत्वम् । यत्र स्वातन्त्र्यं तत्र कर्त्ता "बलाहकात् विद्योतते" इत्यत्र

और भी यदि भावना धातु का अर्थ अस्वीकृत होंगा तो धातुओं में सकर्मक अकर्मक भेद विनष्ट हो जायगा । क्योंकि सकर्मक का लक्षण है कि स्वार्थ—धातु का अर्थ जो फल हैं उसके आधार से भिन्न है आश्रय जिसका ऐसे व्यापार के वाचक धातु सकर्मक कहाते हैं ।

अथवा धात्वर्थ व्यापार के आधार से भिन्न आधार हो जिसका ऐसे फल के वाचक धातुओं को सकर्मक कहते हैं । यह लक्षण भावना के वाच्यार्थ हुऐ बिना असम्भव है । अतः भावना को धात्वार्थ मानना चाहिए ।

**अपि च भावानाया अवाच्यत्वे धातूनां सकर्म्मकत्वाकर्म्मकत्वविभाग उच्छिन्नः स्यात् । १. 'स्वार्थफलव्यधिकरणव्यापारवाचित्वं' स्वार्थ २. 'व्यापारव्याधिकरणफलवाचकत्वं' वा सकर्मकत्वं भावनाया वाच्यत्वमन्तरेणासंभवि । अन्यतयत्वं तत्त्वमिति चेत् ? न, एकस्यैवार्थभेदेनाकर्म्मकत्वसकर्मकत्वदर्शनात् । तदेतदभिसन्धायाह—कृञ इति ।**

o

अपादान विवक्षायां पञ्चमी, अधिकरणविवक्षायां सप्यमी, स्वातन्त्र्यं विवक्षाया प्रथमा बलाहको विद्योतत इति । एतेन कारकं विवक्षाधीनमिति सिद्ध्यति । घटस्य कर्तृत्व-विवक्षायां "घटो भवति" ति प्रयोगे न दोषः । अत आह—अपि चेति—फलव्यापारयोर्धात्वर्थत्वे सकर्मकाकर्मकयोर्लक्षणं साधुमंघटते । अवाच्यत्वे तु=भावनाया अशक्यत्वे तु धातूनां=साध्यक्रिया वाचकाना यः सकर्मकत्वाकर्मकत्व विभागः=कर्मसहितं-कर्मरहितधातुभेदे सति सकर्मकः, अभेदे—सत्यकर्मको धातुः । तदाह मूले स्वार्थ इति ।। स्वं= धातुः तस्यार्थः फलं तस्माद् व्यधिकरणं भिन्नाश्रयो यस्य (व्यापारस्य) तस्य वोचकत्वं शक्त्या प्रतिपादकत्वं सकर्मकत्वम् । एवं स्वं=धातुः तदर्थो यो व्यापारः तेन सहसामानाधिकरण्यमेकाश्रयकं फलं, तस्य वाचकत्वमर्कमकत्वम् । एष विभागो तावन्नसिद्ध्यति यावद् भावनायाः धातुवाच्यता नाङ्गीक्रियते । वाच्यत्वमन्तरेण= बोधकत्वं विना उक्तविभागोऽसम्भवि ।

ननु लक्ष्येषु गोषु शृङ्गि ग्राहिकया—एते गावो चैत्रस्य, अन्येषां शृङ्ग गृहित्वा एते मैत्रस्येति विभाजन इवात्राप्येतेऽकर्मकाः इति सम्भावनया विभागो रक्ष्येते तदाह—अन्यतमत्वमिति । सकर्मकेभ्यः अन्ये=भिन्नाः (अकर्मकाः) अन्यतमाः तेषां भावस्तत्त्वम्=अनुगतं परिगणितं—सकर्मत्वं ततोऽवशिष्टा अकर्मकमाः । अर्थात्—सकर्मक रूपेण विवक्षिताः यावन्तो

**एषु=सभी धातुओं में अन्यः=सकर्मकत्व धर्म से विवक्षित धातुओं से भिन्न धातु अकर्मक है । ऐसे ही अकर्मकत्व धर्म से विवक्षित धातुओं से भिन्न धातु सकर्मक है । यही अन्य तमत्व है तत्व=सकर्मकत्व अकर्मत्व है; परन्तु ऐसा लक्षण अनर्थकारी और अव्याव हारिक भी हो सकता है । क्योकि एक ही धातु अर्थ भेद से सकर्मक भी है अकर्मक भी । जैसे वह धातु वहने अर्थ में अकर्मक है गङ्गा वहति । भारं वहति भार ढोने अर्थ में सकर्मक है । यह देखा गया है । इन्ही सब विषयों का अनुसन्धान करके कारिका में कहा कि कृञ् धातु को अकर्मक की आपत्ति होगी, अतः यत्न अर्थ कृ का न मानना चाहिए ।**

अयं भावः व्यापारावाच्यत्वपक्षे फलमात्रमर्थ इति फलितम्। तथा च 'करोति' इत्यादौ यत्नप्रतीतेस्तन्मात्रं वाच्यमभ्युपेयम । तथा च यती प्रयत्ने' इतिवत् फलस्थानीययत्नवाचकत्वाविशेषादकर्मकतापत्तिरुक्तरीत्या दुर्वारेति। तथा च "न हि यत्नः" इत्यत्र फलस्थानीयत्वेनेति शेषः। 'कृञ्' इति धातुमात्रोपलक्षणम्। सर्वेषामप्यकर्मकता सकर्मकता वा स्यादिति भावः।

०

धातवस्तैर्भिन्ना अकर्मकाः। ततो न विभागोच्छेदापत्तिस्तन्न एकस्यैव धातोर्थभेदेन धातूनामनेकार्थत्वेन केचन धातव उभय कर्मकाः भवन्ति। यथा जि धातुरभिभवार्थे—सकर्मकः। न्यूनी करणार्थेऽकर्मकः। वह् धातु "भारं वहति" इत्यर्थे सकर्मकः। गंगा वहतीत्यत्राकर्मकः। इत्थमर्थ भेदेन एकस्मिन्नपि धातौ सकर्मकताऽकर्मकता वा दृश्यते। श्रृङ्गि ग्राहिकया निर्णे तु साँकर्यमव्याप्त्यतिव्याप्तिश्चा पतति। एतान पूर्वोक्तान् दोषानभिसन्धाय= सम्यगनुभूय आह—कारिकायां कृञोऽकर्मतापत्तेः नहि यत्नोर्थ इष्यन इति।

ननु धात्वार्थ फल जनक व्यापार व्याधि करण फल वाचकत्वं सकर्मकत्वमिति लक्षण स्वीकारे कृ धातौ न दोषः। यतो यत्नरूपं फलं फलतावच्छेदक विषयता सम्बन्धेन यत्न जनकात्ममनः संयोगरूपव्यापारानधिकरणं घटादिवृत्तित्वेऽपि तद् भिन्नत्वरूपमकर्मकत्वम् कृ धातौ न सम्भवति। अतः कृञोऽकर्मकतापत्तेरित्यापत्तिरसङ्गतैव। अत आह अयम्भाव इति— व्यापारस्यावाच्यत्वे=व्यापारः धातोरर्थो नेति मते केवलं फलमेव धात्वर्थः स्यात। तेन कृ धातोः यत्न मात्रं फलं फलितम्। एवञ्च करोतीत्यादि स्थले ( आदिपदेन जानाति इच्छति इत्यादि संग्रहः। तत्रापि ज्ञानेच्छादि

व्यापार को धातु का अवाच्य अर्थ स्वीकार पक्ष में केवल फल ही धातु का अर्थ फलित होगा। और भी करोति इत्यादि में कृ धातु में यत्न रूप फल की ही प्रतीति होगी। यत्न ही कृ धातु का वाच्यार्थ मानना आवश्यक हो जायगा। तो परिणाम यह होगा, कि 'यती पयत्ने' धातु जैसे अकर्मक है वैसे ही धातु के फल वाचकत्व पक्ष में फल के स्थान यत्नरूप फल कृ धातु का वाच्य बनेगा। तो कृ और यत धातु के वाचकत्व में अवेषात्=कोई भेद (अन्तर) न होने से कृ धातु में अकर्मक होने की आपत्ति पूर्वोक्त व्याख्यान से दुर्वार होगी। इस प्रकार से 'नहि यत्नोऽर्थं इष्यते' का भाव यह है कि फल के स्थान में कृ का यत्न अर्थ नहीं मानना चाहिए।

कृञ् धातु सभी धातुओं का उपलक्षण है अपना बोध कराते हुए सभी का बोध कराता है। फलतः सभी धातु या सकर्मक होंगे या अकर्मक।

रूप फल मात्रार्थं वाचकत्वमावश्यकम् ) कृ धातोः यत्न मात्रार्थं प्रतीति र्भविष्यति। तेन फलस्थानीयो यत्नः फलरूपंमर्थं गृह्णाति। यथा यत्न रूपार्थस्य वाचको यति प्रयत्ने धातोरकर्मकोऽस्ति तथैव फल स्थाने यत्न रूपार्थस्वीकारे कृ धातोरपि। फलस्थाने यत्नार्थवाचकत्वेऽविशेषात्। कस्यापि भेदस्यासम्भवात् अकर्मकलक्षणातिव्याप्तिः स्यात् उक्तरीत्या= सकर्मकधातुभिन्नो धातुरकर्मक इति रीत्याऽकर्मकतापत्तिवारयितुमशक्या। यदा फल वाचित्वमकर्मकत्वं तदा सर्वेषां धातूनासकर्मतापत्तिः। सकर्मकतापत्ति र्वा स्यात्। तदा कृञोष्यर्मतापत्ति रिति कृ धात्वर्थो यत्फलं तत्स्थाने यत्न इत्यर्थों न कर्तव्यः तस्मादुभयार्थको कृ धातुः।

ननु पूर्वोक्त प्रकारेण सविषयार्थको "ज्ञा" धातुः, उत्पत्त्यर्थकश्च कृञ् धातुः, व्यापारार्थक इति सिद्धम्। किन्तु सर्वे धातवो भावनार्थकाः इति न सिद्धयति। धातु मात्रस्य व्यापारवाचकत्वे किं प्रमाणम्? अत्र कृञपदं धातुमात्रोपलक्षणं क्वचिच्छक्यार्थमादाय क्वचिल्लक्ष्यार्थ मादाय बोधकम्। एवमजहत्स्वार्थावृत्या धातु मात्रस्य प्रत्यायकाः। तेन सर्वेषां धातूनामप्यकर्मकता = कर्म प्रतीतिराहित्यं सकर्मकता =कर्मप्रतीतिसाहित्यमिति ध्वन्यते। तेन फलमात्रं धात्वर्थं इति वक्तुं न शक्यते तस्माद् व्यापारीऽप्यर्थो वक्तव्यः। अथवा यत्नमात्रमित्यर्थः।

फल मात्रं धात्वर्थ इति मीमांसकमतं खण्डयित्वा व्यापार मात्रं धात्वर्थं इति पक्षं निरस्यति। तत्र पक्षे तत्तद्धातुजन्यफलविशेषबोधे तत्तद्धातु जन्य भावनोपस्थितिः कारणम्। संयोग रूपफलविशेष बोधे "गम" धात्वर्थं व्यापारोपस्थितिः कारणं न त्यजधातोरूपस्थितिरिति। केषाञ्चिन्नैयायिकमतं निराकर्त्तुमाह-अथवेति कारिकायां व्यापारो भावना सैवोत्पादना सैव च क्रिया इत्यर्धभागेन व्यापारस्य वाच्यत्वं=शक्त्या बोधकत्वं प्रसाध्य= प्रकर्षेण सिद्धि कृत्वा फलांशस्यापि = धातोः व्यापारोऽर्थस्त्वस्त्येव, फलमप्यर्थं इति फलस्य धातुवाच्यत्वं साधयन् नैयायिकाभ्युपगतं=स्वीकृतं जानातीत्यत्र ज्ञा धातोः फल मात्रमर्थः। कृ धातोः यत्न मात्रमर्थ इति स्वीकर्तृभिः विरुद्ध वादिभिः केवलं ज्ञान यत्न क्रिया मात्र वाचित्वं = मात्र पदेन फलस्य धातुवाच्यत्व निराशः। धातुः व्यापारमात्र वाचीति निरासः। तद्दूषयति कृञ इति।

ननु "कृ" धातोः फलमर्थो नास्ति चेत्फलव्यधि करण व्यापार वाचित्वमिति वक्तुं न शक्यते। कथंसकर्मकत्वम्। अथवा फलं द्वितीयार्थस्तदन्वयी सकर्मकोऽनन्वयी अकर्मक तत्रो न दोषस्तदाह-अयम्भाव इति। धातो र्यः

अथवा 'व्यापारो भावना' इत्यर्धेन व्यापारस्य वाच्यत्वं प्रसाध्य फलांशस्यापि तत् साधयन् नैयायिकाभ्युपगतं जानातिकरोत्यादेः केवल-ज्ञान-अत्रादिक्रियामात्रवाचित्वं दूषयति—कृञ्ञ इति । अयं भावः । फलांशस्यावाच्यत्वे व्यापार एव धात्वर्थः स्यात् । तथा च स्वार्थफलव्यधिकरणव्यापारवाचित्वादिरूप सकर्मकत्वोच्छेदापत्तिः । न च कृञादौ सकर्मकत्वव्यवहारो भाक्त इति नैयायिकोक्तं युक्तम्, व्यवहारस्य भाक्तत्वेऽपि कर्मणि लकारासम्भवात् । न हि तीरे गङ्गापदेस्य भाक्तत्वेऽपि तेन स्नानादिकार्यं कर्तुं शक्यम् । एवञ्च 'न हि यत्न' इत्यत्र यत्नमात्रमित्यर्थः ॥ ५ ॥

o

फलांशः सोऽवाच्यश्चेत्तर्हि क्रियामात्रं धात्वर्थः स्यात् । तथा च=व्यापार मात्रधात्वर्थ स्वीकारे स्वार्थं इति । स्व=धातुः तस्यार्थः फलं तस्माद्भिन्न आधारो यस्यासौ व्यापारस्तस्य वाचीसकर्मकः । इति लक्षणमुच्छिन्नं फलमपि धात्वर्थ इति स्वीकर्त्तव्यः । न च कृ धातौ कर्मणा सहितं सकर्मकमिति लक्षणं फलवाचकतां विना न स्यात् । व्यापार मात्रं शक्तिरिति पक्षे तु द्वितीयाद्यर्थ फलान्वयी योऽर्थः स सकर्मकः । "पच" धातु योगे द्वितीयायाः विक्लीत्याद्यर्थ । "पठ" धातु सन्निकर्षे तस्या ज्ञानमर्थः "ज्ञा" धातु सन्निधौ ज्ञान विषय इत्यर्थः । तेषामन्वयिन इत्यर्थे न क्षतिः । घटो जानातीत्यादौ घटादीनां गौण कर्मत्वमिति, वदतां प्राचीन नैयायिकादीनां मतन्निराचष्टे न चेति तेषां मते सकर्मकत्व व्यवहारो भाक्तः । ज्ञा धातौ सविषयकयत्नार्थे लक्षणा करिष्यते । सविषयक ज्ञानार्थे लक्षणा भविष्यति । "ज्ञा" धातौ भाक्तः=लाक्षणिकः । भज्यते=आमृज्यते विशेष्यतया अनाश्रयते=च शक्यार्थोऽनयेति भक्तिः । शक्य सम्बन्धरूपा लक्षणा । यथा वाच्यार्थः तिरोधीयत, आत्मानं प्रदर्शयितुं शक्यार्थोऽपेक्ष्यते च तत आगतो भाक्तः । इति

कारिका के "व्यापारो भावना" इस अर्धांश से व्यापार को धातु का वाच्यार्थ सिद्ध करके, धातु के फल अंशको भी वाच्यार्थ सिद्ध करते हुए, नैयायिकों द्वारा स्वीकृत ज्ञा धातु का केवल ज्ञान मात्र अर्थ, कृ धातु का केवल यप्नमात्र अर्थ की वाचकता को दूषित करने के लिये कहा कि 'कृञ्चोऽकर्मकाण्पत्ते=' ।

सारांश यह है कि फल अंशको धातु का वाच्यार्थ न ही माना जायगा, तो केवल व्यापार ही धातु का अर्थ होगा । तथा च=परिणाम यह होगा कि स्वार्थ—धातु का अर्थ जो फल हैं उसके आश्रय से भिन्न है आश्रय जिसका ऐसे व्यापार के वाची धातुओं को सकर्मक कहते हैं इत्यादि लक्षण कुलक्षण ( उच्छिन्न ) से नष्ट हो जायंगे ।

नैयायिकोक्तम्, [प्राचीन नैयायिकोक्तं न तु नव्यैस्तैस्तु फल व्यापारयोरुभयो वाच्यार्थत्वमिति मन्यते ] युक्तं=तर्क सङ्गतं तन्न, व्यवहारस्य भाक्तत्वेऽपि =कृञ इति अकर्मकस्तत्र सकर्मक शब्देन यो व्यवहार=लोके प्रयोगस्यस्या कर्मकरुप वाच्यार्थस्तिरोधीयते सकर्मक रुपो लक्ष्यार्थ उत्भूयते । एवं लक्षणा निबन्धने सत्यवि कर्मणि लकारासम्भवात्=शक्यार्थो मुख्यं कर्मलक्ष्यार्थो गौणम् । एवं मुख्ये सकर्मके धातौ शास्त्रस्य लः कर्मणीत्यस्य चरितार्थता गौणे कर्मणि तु चारितार्थे मानाभावः । लक्षणायान्तु, अर्थः केवलमाभाषते न तु व्यवहारोपयोगीति । अत्र लौकिको दृष्टान्तो नहि तीर इति । यथा "गंगायां घोष" इत्यादौ गंगापदस्य प्रवाहार्थकस्य तटे भाक्तत्वेऽपि=लक्षणया तट रुपार्थ बोधेऽपि तेन तट रुप लाक्षणिकार्थेन स्नानादि कार्यं कर्त्तुं न शक्यते । भाक्ते=लाक्षणिके स्नानादिरिव किमपि कार्य कर्त्तु न शक्यते। तथा क्रियते घट इत्यादौ लाक्षणिके कर्मणि लकारो न भविष्यति भाक्तत्वात् । गौण मुख्य न्यायस्य प्रधानाप्रधान न्यायस्य च प्रवर्त्तनात् ।

न च तुल्य न्यायेन तण्डुलः—पच्यत इत्यत्रापि लाक्षणिकं कर्म । तेन तत्रापियगादीनि कार्याणि न स्युः, कथं तस्य सिद्धिस्तन्न, तत्र 'कर्मवत्कर्मणा तुल्य क्रिय' इति सूत्रारम्भ सामर्थ्येन कर्मकर्त्तृ पदेगौण मुख्य न्यायो न प्रतर्तते। एवञ्च पूर्वोक्त व्याख्यानमनुसन्धाय कारिकायामुक्तं नहि यत्नोऽर्थ इष्यत इति । तत्र यत्न मात्रमर्थो नेत्यर्थः । मात्र पदेन व्यापारस्य व्यवच्छेदः । केवलं व्यापार स्थानीयो यत्नो ग्राह्यः । अर्थात् यत्नादिव्यापारस्य, उत्पत्त्यादि फलस्य च धातोर्वाच्यत्वमङ्गीकार्य येन कृञादौ सकर्मकता सिद्धयेत ॥५॥

उपर्युक्त सिद्धान्तेन फल व्यापारयो र्धात्वर्थता स्वीकारादेव आह= किन्त्वुत्पादनमिति अपितु उत्पादनमेव=उत्पतिरूपफलमेव तत्सहितो यत्नदिस्तदनुकूलो व्यापारश्च कृञ् धातोरर्थः । आदि पदेन यत्नादन्येषां

न कहिए कृञ् इत्यादि धातुओं में सकर्मक धातु व्यवहार भाक्त=लाक्षणिक है क्योकिं नै यायिक लोग कहते हैं कि जहाँ कृ धातु में अकर्मकता हो वहाँ लक्षणा द्वारा सकर्मकता स्वीकार करनी चाहिए । कृ धातु में सकर्मकता का व्यवहार भले ही लाक्षणिक हो कर्म ( कार्यरुप ) में लकार असम्भव है । जैसे गङ्गा में स्नान की तरह लाक्षणिक अर्थ तट में स्नान वगैरह कार्य नही होता वैसे ही कृ धातु से भी कर्म में लकार नही होगा । अतः लक्षणा असङ्गत है । यत्नमात्र अर्थ नही हो सकता । किन्तु फलजनक यत्न अर्थ हो सकता है ।

किन्तूत्पादनमेवातः कर्मवत् स्याद् यगाद्यपि।
कर्मकर्तर्यन्यथा तु न भवेत् तद् दृशेरिव ॥ ६ ॥

उत्पादनम्—उत्पत्तिरूपफलसहितं यत्नादि कृञर्थ इत्यर्थः फलस्य वाच्यत्वे युक्त्यन्तरमाह-अत इत्यादि। यतः कृञो यत्नमात्रमर्थो नेष्यते, अतः। कर्मवत्स्यादिति पदेन "कर्मवत्कर्मणा तुल्यक्रियः" इति सूत्रं लक्ष्यते। अयमर्थः—यत एवास्योत्पादनार्थकता, अतः 'पच्यते ओदनः स्वयमेव' इति वत् 'क्रियते घटः स्वयमेव' इति यगादयोऽप्युपपद्यन्ते अन्यथा यत्नस्य कर्मनिष्ठत्वाभावात्तन्न स्यात्, दृशिवत्। यथा 'दृश्यते घटः स्वयमेव' इति न, दर्शनस्य घटावृत्तित्वात्, तथा यत्नस्यापि इति तथा प्रयोगानापत्तेरिति ॥६॥

०

धातूनामपि व्यापारो वाच्य इति ध्वन्यते। तेन रथो यच्छतीत्यादौ रथे यत्नार्थतया बाधेऽपि, अन्यः=ज्ञक्यार्थो व्यापारः, तस्याश्रयो रथः, तत्र कर्त्तरिलक्षणा न भवति।

ननु गौणमुख्योभय साधारण कर्मसम्वलित व्यापारवाचकाः ये धातवस्ते सकर्मकाः। अथवा कर्मवत्कर्मणेति शास्त्रसामर्थ्यात गौणमुख्यन्यायः कारकाधिकारे न प्रवर्तते। "आधारोऽधि करणम्" इति सूत्रे आधार ग्रहणं प्रमाणम्। तत्र गौणकर्त्तुरिव गौंण कर्मणोऽपि ग्रहणे कर्मणि लकारसम्भवे "लः कर्मणि०" इति सूत्रे गौण न्यायस्याप्रवृत्तौ मानाभावेन क्रियते कटः ज्ञायते ज्ञानमित्यादौ, गौणे कर्मणि यगादिः न स्यात् तन्न, कर्मणि लकार-विधायके शास्त्रे स्वरितत्व प्रतिज्ञा बलात् स्वरितेन अधिकः कार इत्यर्थेन-अधिक पदेन गौणस्यापि कर्मणो ग्रहणान्न दोष। तेनाध्यासिताः भूमय इत्यादीनां सिद्धि। अन्यथा फल व्यापारयोः पृथगाधारत्वं सकर्मकत्व-मिति लक्षणेनतेषां सिद्धिः नं स्यात्। उत्वादनार्थ स्वीकारे कर्मवद्

अतहव—सकर्मक और अकर्मक व्यवहार की असिद्धि के कारण धातुओं का फल व्यापार दोनो अर्थ स्वीकार करते हुए वोले किन्तु—अपितु उत्पादन के अनुकुल व्यापार ही कृ धातु का अर्थ हैं। इस लियें कर्म वद्भाव और यक् इत्यादि भी होते हैं। अन्यथा—यदि ऐसा नही होगो तो दृश धातु की तरह कर्म को कर्ता की विवक्षा भी नही हो सकेगी।

व्याख्या—कृ धातु का केवल यत्न ही अर्थ नही है, किन्तु उत्पादन रुप फल सहित यत्न क्रिया चेष्टा आदि ही अर्थ है फल भी धातु का वाच्यार्थ है इसमें

भावोऽपिभवति यगादयोऽपि जायन्ते । अन्यथा दृशेरिव कर्मकर्त्तरि यगादयो न स्युः ।

धातोः फलार्थकत्वे कर्मवद्भावयगादि साधने च युक्त्यन्तरम् = अन्यां युक्तिं ब्रूते । धातोः फलव्यापारोभयार्थकस्वीकारात् कृ धातोः यत्न मात्रं = केवल कृतिरेवार्थो नेष्यते = नाभिप्रियते । यतः = यस्मात् अतः = अस्मात् कारणात् कर्मवत् स्यात् ।

इवार्थे वतिः । यथा कर्मणि प्रत्यये सति यगादयो भवन्ति तथा आरोपिते कर्मकर्त्तरि यगादयः स्युः । यद्वा कर्मवत्पदमेकदेशानुकरणं तेन (कर्म

युक्त्यन्तर = अन्य प्रमाण प्रस्तुत करते हैं अतःफल अर्थ भी स्वीकार करने पर, जहाँ कर्म को कर्ता की विवक्षा हो गयी है वहाँ कर्मवद्भाव (कर्मका अतिदेश) होता है । यक् चिणादि भी होते हैं । यतः जिसलिये कृ धातु का यत्न मात्र अर्थ इष्ट नही है इसलिये कारिका में कर्मवद् पद से 'कर्मवत्कर्मणा तुल्यक्रियो सूत्र संकेतित होता है । सारांश यह है कि जिसलिये कृ जातु का उत्पति रूप फल का जनक व्यापार अर्थ है इस लिये 'क्रियतेघटः स्वयमेव' पच्यते ओदनः स्वयमेव इत्यादि में यक् इत्यादि होते हे । 'कुम्भकारः घटं करोति' कुम्भकार क्या स्वयं प्रगट हो रहा है । तन्डुल स्वयं पक रहा है । यहाँ घट और तण्डुलरूप कर्म में कर्ता की विवक्षा करने पर जब कर्म ही कर्ता हो गया । लट् के पश्चात् प्राप्तशपू को बांधकर यगादि होते हैं । क्योकि कर्मस्था क्रिया के तुल्य क्रिया हो जिस कर्ता में वह कर्मवद् भावको प्राप्त होता है । अर्थात् कर्म में प्रत्यय होने पर जो = कार्यं = आत्मनेपद यक् चिणित्यादि होते है । वे कर्मस्थानापन्न कर्ता में कर्मबद् माव के पश्चात् होते है । अन्यथा—यदि कृ का यत्नमात्र ही अर्थ मानोगे तो वह यत्न कर्म में रहने वाला नही है क्योकि वह चेतन में रहने वाला धर्म है । अतः घट में यत्न बाधित है । क्रियते घटः स्वयमेव यह कर्म कर्तृ प्रक्रिया का प्रयोग नही बनेगा । क्योकि यत्नरूपार्थ चेतनकार्तृस्थ है । जड़ कतृस्था नहीं 'दृशिवद्' जैसे दृशधातु में कर्म कर्तृ प्रत्तीत होती हो वहाँ कर्मस्था क्रिया है । जहाँ कर्म में क्रिया की कोई विशेषता परिलक्षित न हो वह कार्तृष्या क्रिया हैं । घट मे कुम्भकार वृत्ति उत्पादन क्रिया जो मिट्टी मे हुई है बह घट के दर्शन से लक्षित होती है । अतः घटमे परिलक्षित क्रिया कर्मस्था हो गयी । घटं पश्यति में दर्शन क्रिया (चाक्षुष् व्यापार) से घट रूप कर्म में कोई विशेषता दिखाई नही पड़ती है । यहाँ दर्शन क्रिया कर्तृस्था है कर्मस्था नही । अतः घट में दर्शन क्रिया की कोई झलक नही है । कर्मवत् अतिदेश भी न होगा । दृश्यते घटः यह प्रयोग भी नही बनता है । जैसे दर्शन क्रिया घट में अबृत्ति है वैसै यत्नस्यपि यत्न क्रिया भी घट में अबृत्ति है । अतः कर्म कर्तृ का प्रयोग नही होता है । ॥६॥

-वत्कर्मणा ) इति सूत्रं लक्ष्यते। तत्रापि सूत्रविहितयगादिःलक्ष्यते। कर्म-वदतिदेशेन कर्मकर्त्तरि यगादयोभवन्ति। केवल यत्नार्थं स्वीकारे दृशेरिव कर्म वद्भावो न स्यात्। अयम्भावःयत् एवास्याउत्पादनार्थकता= कृञ् धातोः यस्मात्कारणात् उत्पत्त्यनुकूलव्यापारोऽर्थः। अतः= अस्मात्कारणातं क्रियते घढः स्वयमेवेत्यत्र 'कुम्भकारः घटं करोति' किंतेन घटः स्वयमेव क्रियते। अत्र घटरूपकर्मणि कर्तृत्वविवक्षायां तत्र कर्त्तर्यर्थे शप् प्राप्नोति, तं प्रवाध्य कर्मवत्कर्मणा नुल्यक्रियः=कर्मणा तुल्यक्रियः कर्त्ताकर्म वद्भ्वति। कर्मणि घटे विद्यमाना या क्रिया सा कर्तृत्वा रोपेऽपि घटे तिष्ठत्येव। तेन यगादिः प्रवर्त्तते। यत्नार्थ स्त्वचेतने बाध्यते, तस्य चेतनमात्रविषयत्वात्। तेन क्रियते घटः, पच्यत ओदन इत्यादि प्रयोगाः यत्नांर्थे न सिद्धयन्ति। यत्र कर्मणि क्रियाकृतो विशेषी दृश्यते, सा केवल कर्तृस्था। तण्डुले कर्मणि दर्शनमात्रेण पाकक्रिया ज्ञायते। तेन तत्र कर्मवद्भाव उपपद्यते, संसिद्धयति। अन्यथा=यत्न मात्रंकृञर्थं-स्वीकारे यत्नस्य कर्म निष्ठत्वा भावात्=अचेतने धटे तण्डुले वा कृते रभावात्=क्रियाया असत्त्वात् यगादयो न स्युः। यदा उत्पत्त्यनुकूलव्या-पारोऽर्थो अंगीक्रियसे तदा क्रिया कर्मस्था भवति। तेन कर्मवद्भावातिदे शोऽपि। अन्यथा दृशिवत्=दृशिना तुल्यमित्यर्थः दृश्यते घटः स्वयमेवेति यथा न भवति तथा क्रियते घट इत्यपि न स्यात्। घटं पश्य तीत्यत्र चाक्षुष व्यापारेण घटरूपकर्मणि घटदर्शनेन दर्शन क्रिया न दृश्यते यतः चाक्षुष-क्रिया कर्त्तृस्थाऽस्ति कर्मस्था नास्ति। तत्राति देशो न जायते। एवं यत्न-स्यापि=कृतेरपि घटदर्शनेन ज्ञानं न भवति। अतस्तथा प्रयोगानापत्तेः दृश्यते घटइत्यादि प्रयोगाः न भवन्ति। प्राप्य कर्मत्वात।

कृञादेखि=यथा कृञ् धातोरुत्पत्त्यनुकूलव्यापारोऽर्थः। एवं ज्ञा-धातोरपि विषयेण घटपटादिनाऽवच्छिन्नं=विशिष्टमावरणंम्=अज्ञानमर्थः यथा घटाकाश इत्यत्र आकाशो व्यापकं तस्य अंवच्छेदको=भेदको घटः, अवच्छिन्नो=विशिष्टाकाशः एवमावरणं व्यापकं तस्या वच्छेदको गुणो घट विषयस्तेनावच्छिन्नमावरणम्। तस्य भङ्गो नाशोऽदर्शनमित्यादि फलं-मपिज्ञाधातो रर्थं इति मन्तव्यैव तथा च विषयावच्छिन्नावरण भङ्गफल स्वीकारे यथा क्रियते घट इत्यत्रापि विषयो घटः तदवच्छिन्नमावरणम्= अज्ञानं तस्य भङ्गो नाशस्तदाश्रयोऽपि घटोऽस्ति। स प्रयोगः कथं न भवति। एवं ग्रामो गम्यते स्वयमेवेत्षत्र गमनव्यापारजन्य संयोगाश्रयता ग्रामेऽपि वर्त्तते। सोऽपि कथन्न भवति इत्याद्यपीत्याशका=यावन्ति फलाश्रयाणि

यदि वेदान्त ये बात नहीं मानेगा तो सकर्मकता नहीं होगी और द्वितीया भी नहीं होगी।





वेदान्त का मत

नन्वेवं कृञादेरिव 'जानाति' इत्यादेरपि [ विषयावच्छिन्नावरणभङ्गादिफलवाचित्वमावश्यकम् । अन्यथा सकर्म्मकतानापत्तेः । तथा च 'ज्ञायते घटः स्वयमेव' इति किं न स्यात् । एवं 'ग्रामो गम्यते स्वयमेव' इत्याद्यपि, इत्याशङ्कां मनसिकृत्याह—

०

सन्ति सर्वत्र लकारः प्रवर्ततामिति सन्देहं मनसि कृत्वा = चित्त आरोप्याह निर्वर्त्त्य इति = ।

निरपूर्वक वृत् धातोः प्रकृति स्वरूप पुरस्सर विभिन्न रूप धारणमर्थः । निवर्तितुं योग्यं निर्वत्यं कर्म यथा कुण्डलं सुवर्णं रूप विकारः । तत्र सूवर्णं तथैव = तिष्ठति रूप मात्रं परिवर्त्तते । विकार्यं वि पूर्वक "कृ" धातोः प्रकृति विनाश्य विकारोऽर्थः । विकारयितुं योग्यं विकार्यं कर्म यथा लौहं भस्म लौहस्वरूपं विनाश्य भस्म जायते उभयत्र कर्मवद् भावः = कर्तृत्व विवक्षायां कर्मत्वारोप = इष्यते सर्वसम्मतमिति भावः । भाष्ये प्राप्य कर्म णि तु कर्मवद्भावो नेष्यते । एतेषां समर्थनं साधयितुमाह मूले सिद्धान्तोऽत्र व्यवस्थितः = उपस्थापितः । कर्मवत्कर्मणा "सूत्रे भाष्ये धातु पदमनुवर्त्त्य धातुवाच्याक्रिया कर्मणः तुल्याचेतृ कर्त्तरि कर्मवद् भावः । अथवा कर्मवत्सूत्रे कर्मग्रहणं कर्मस्थां क्रियां लक्षयतीत्येव सिद्धान्तः । अन्यथा साध्वसिश्छिनत्ति, स्थाली पचति" इत्यत्रापि कर्मवद् भावः सम्भाव्येत—

समान्येन कर्म द्विविधं लक्ष्यते । ईप्सितम्, अनीप्सितञ्च, तत्रेप्सितं = ( कर्तुः क्रिययाऽभिलषितम् ) त्रिविधम् । (१) निवर्त्त्यं, देशप्रदेशमण्डल

जैसे कृ धातु का उत्पत्ति के अनुकूल व्यापार अर्थ है । ऐसे ही ज्ञा धातु को भी विषयावच्छिन्न आवरणभङ्ग इत्यादि फल का वाची होना चाहिए । केवल ज्ञान मात्र अर्थ नही अन्यथा = असके विपरीत ज्ञाधातु में सकर्मक का लक्षण नही घटेगा । यदिज्ञा घातु में सकर्मकत्व व्यवहार के लिये विषय घट है उससे अवच्छिन्न = विशिष्ट आवरण = अज्ञान है उसका भङ्ग = अभाव विनाश आदि को फल मानते है उसका आश्रय घट है तो ज्ञायये घटः' यह प्रयोग क्यो नही; । इसी प्रकार ग्रामो गम्यते प्रयोग क्यो नही । क्योंकि—गमन क्रिया से फलीभूत फल संयोग है उसका आश्रय ग्राम है तो कर्मणि प्रत्यय क्यों नही । इत्यादि शङ्का को ध्यान में रख कर बोले—निवर्त्य इति ।

**निर्वर्त्यें च विकार्ये च कर्मवद्भाव इष्यते।**
**न तु प्राप्येकर्मणीति सिद्धान्तो हि व्यवस्थितः ॥७॥**

ईप्सितं कर्म्म त्रिविधम्—निर्वर्त्य, विकार्य, प्राप्यञ्च। तत्राद्ययोः कर्म्मवद्भावो, नान्त्ये। प्राप्यत्वञ्च क्रियाकृतविशेषानुपलभ्यमानत्वमिति सुबर्थनिर्णये वक्ष्यते। न हि—अयं घटः केन चिद् दृष्टो, ग्रामोऽयं केनचिद्गत इति शक्यं कर्म्मदर्शनेनावगन्तुम्।

०

ग्रामादिः देशस्येव विकारः सन्नपि देशत्वं न जहाति। (२) विकार्यम्, गोधूमस्य विकारोरोटिका। सा गो धूमं जहाति, स्वरूपञ्च यस्य न दृश्यते। (३) प्राप्यम्—प्रापयितुमनुभवं गमयितुं योग्यं कर्म, अत्र क्रिया कर्मस्था न दृश्यते। तत्र तस्याः कर्मणि प्रापणविषयता दर्शनस्यानुभवस्य वा विषयता नास्ति।

आद्ययोः=प्रथमोक्तयोः निर्ववर्त्य विकारयोः कर्मवद्भावः कतर्यारोपित कर्मत्वमिष्यते। तेन कर्मस्थानां क्रियावतां धातूनां कर्त्ता कर्मवद्भवति, नान्यत्। अत आह नान्त्ये=प्राप्ये कर्मणि क्रियायाः कर्मस्थत्वाभावात् तत्र तुल्या क्रिया यस्या सौ तुल्य क्रियः कर्त्तेति वक्तुं न शक्यते प्राप्य लक्षण

निर्वर्त्य कर्म और विकार्य कर्म में कर्मवद् भाव इष्ट है। प्राप्यकर्म में कर्मवद् भाव इष्ट नही है यह सिद्धान्त=निष्पन्न—निर्णय व्याकरण शास्त्र में व्यवस्थित है।

कर्ता को ईप्सित कर्म तीन प्रकार का है। १—निर्वर्त्य=जिसमें पदार्थ वही हो, केवल स्वरूप परिवर्तन होता है सुवर्ण के आभूषण में सुवर्ण वही रहता है केवल आकार बदलता है। २—विकार्य=जिसमें तत्व नष्ट होंकर चेन्ज होंता है। जैसे काण्ठ जलकर भस्म में वदलता है। गौंधूम नष्ट होंकर करपट्टिका के रूप में परिवर्तित् होंता है। ३—प्राप्य कर्म में क्रिया केवल कर्ता में रहती है कर्म में नहीं। तीनों कर्मो में प्रथम दों में कर्मवद्नाव=कर्ता में कर्म के धर्म का अतिदेश (आरोप) होंता है। अन्तिम (प्राप्य) कर्म में नही। प्राप्यकर्म का लक्षण यह है कि जिस कर्म मे क्रिया से की हुई कोई विशेषता—लक्षण, चिह्न, रूप, उपलब्ध न हो उसे प्राप्य कर्म कहते हैं जो सुवर्थ निर्णय में कहा जायगा। घट दर्शन का विषय है परन्तु दर्शन क्रिया का कोई भी चिन्ह, रूप, लक्षण घट में परिलक्षित नहीं होता। यह घट किसी से देखा गया, यह ज्ञान केवल कर्म के दर्शन से सम्भव नहीं है। इस ग्राम में कोई पहुंचा है यह ज्ञान केवल ग्राम के दर्शन से सम्भव नहीं। यहाँ ग्राम गम धातु का, घट दृश धातु का प्राप्य कर्म है क्रियाकृत विशेषता अदृष्ट है। 'तण्डुलः पच्यते में अवयव शिथिलीभवनादि क्रिया की विशेषता दृष्ट है।

'घटं करोति' इति निर्वर्त्यें, 'सोमं सुनोति' इति विकार्यें च तज्ज्ञातुं शक्यमिति न तत्प्राप्यम् । तथा च घटादेर्दृश्यादौ प्राप्यकर्म्मत्वान्नोक्तातिप्रसङ्ग इति भावः । धातूनां फलावाचकत्वे त्यजिगम्योः पर्यायतापत्तिः, क्रियावाचकत्वाविशेषात् । फलस्योपलक्षणत्वेऽप्येकक्रियाया एव पूर्वदेशविभागोत्तरदेशसंयोगजनकत्वादुक्तदोषतादवस्थ्यमित्यपि वदन्ति । तस्मादावश्यकं सकर्मकाणां फलवाचकत्वम् । अकर्मकाणान्तु तन्निर्विवादमेव । "भू सत्तायाम्" इत्याद्यनुशासनाच्च । अत एव 'द्व्यर्थः पचिः' इति भाष्यं संगच्छते इति दिक् ॥७॥ *पच् के दो अर्थ - फल और व्यापार*

मुच्यते क्रियेति—क्रियया = धात्वर्थभावनया कृत, उत्पादितो विशेषः = क्रियाकृतस्वरूपं व्यापारेण जातःकार्यं वा तस्यानुपलभ्यमानत्वम् उपलब्धेरभाव इत्यर्थः । यथा रोहिण्युपग्रहोऽन्तरिक्षं गच्छति तत्रान्तरिक्षरूपकर्मणि गमनक्रिया संयोगानुकूल व्यापारो वा न दृश्यते = नानुमातुं शक्यते च । पचतीत्यादौ तण्डुलस्य शिथिलीभवनादिस्तु दृश्यते । काष्ठं भस्म करोतीत्यादौ भस्म दर्शनेन काष्ठ कर्मणि क्रियाऽनुमातुं शक्यते । इत्यादि सुबर्थनिर्णये = सुप्प्रत्याहारस्यार्थनिर्णयप्रसंगे वक्ष्यते—सोदाहरणं सूचयिष्यते ।

"घटं पश्यति" प्रयोगे केवलं घट दर्शनेन दर्शनक्रियोपलब्धेः किमपि लिङ्गम् नास्ति । एवं ग्रामोऽयं गत इत्यत्र केवल ग्राम दर्शनेन संयोगानुकूल व्यापारोपलब्धेरपि प्रमाणं नास्ति । तत्र कर्मदर्शनेन क्रियाऽवगन्तुं न शक्या, यत्र शक्या न तत्र प्राप्यम् ।

घटं करोति इस वाक्य में घट निर्वर्त्य कर्म है वह मिट्टी में वैसे ही रहती है जैसे आभूषण में सुवर्ण । आकृति में परिवर्तन होता है । वहाँ कर्म के दर्शन से क्रिया की विशेषता परिलक्षित होती है । सोमं सुनोति वाक्य में विकार्य कर्म है; क्योंकि सोमलता विकृत करते निचोड़ी जाती है वस्तु का स्वरूप काष्ठ के भस्म की तरह नष्ट हो जाता है । यह विकार्य कर्म हुआ । इसमें निश्च्योतनादि क्रिया की विशेषता देखी जाती है । अतः ये प्राप्य कर्म नहीं हो सकते । और घट इत्यादि दर्शन क्रिया के कर्म प्राप्य है चाक्षुष् व्यापार से अदृष्ट होने से उक्त = अतिव्याप्ति दोष कर्मवद्भान आदि नहीं होते हैं ।

धातुओं का फल अर्थ यदि नहीं मानोगे तो त्यज् धातु और गम धातु में पर्यायता = समानार्थकता की आपत्ति आयेगी । क्योंकि फल ही भेदक होता था; अब तो व्यापार मात्र ही अर्थ रहेगा दोनों धातुओं के क्रिया वाचकत्व में कोई विशेषता; अन्तर, भेद नहीं है । फल अर्थ की स्वीकृति में विभागानुकूल व्यापार, त्यज् का अर्थ

घटं करोति, निर्वर्त्ये प्रकृतिविकारः सन्नपि यत्र प्रकृतेः स्वरूपं सन्तिष्ठते तन्निर्वर्त्यम्। यथा घटस्य प्रकृतिः मृत्तिका तत्रोत्पत्त्यनुकूलव्यापारः सन्नपि सा तत्रैव तिष्ठति। यदि प्रकृति परिणामो विकृतिरित्युच्यते। तत्र कुण्डलं विकार्यं कर्म तदाह—हरिः परिणमनशीला प्रकृतिरूपस्थिताऽनु-

सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी।
यस्य नाश्रियते तस्य निर्वर्त्यत्वं प्रचक्ष्यते॥

पस्थिता वा स्यात्। यस्या प्रवृत्तिः विकारिणी न स्यात् तन्निर्वर्त्यं कर्म। सोमं सुनोतीति विकार्य=प्रकृति परिणामो विकारः यथा स्वं=लता, प्रकृति, तस्य कुट्टनेन–चूर्णी करणेन निश्च्योतनेन निर्गलितः सोमो विकारः। प्रकृतेस्त्वविवक्षायां ( विकृतौ ) विकार्यमित्युच्यते। अन्ये तु क्रिया यस्य धर्मस्य नाशकं फलमुत्पादयति तद्विकार्यमुच्यते। यथा सोमं सुनोतीत्यत्र आरम्भकः संयोगनाशक विभागानुकूला क्रिया धातोरर्थः। सोमपदस्य च सोमवती लक्षणा तद् वृत्तिरारम्भक संयोगोऽस्ति। "सु" धात्वर्थ क्रिया जन्य विभागस्य नाशे सति विकार्यं कर्मेति। क्रियाकृत विशेष-धर्मः कर्मणि ज्ञातुं न शक्यते। ते प्राप्यं कर्म तथा च घटादौ घटरूप कर्मणि दृश् धातोः प्राप्य कर्मता तत्र कर्मवद्भावस्यातिप्रसङ्गदोषो न जायते।

प्राचीन नैयायिक मते फलं द्वितीयार्थः धातोः व्यापारोऽर्थः। नव्य मते तु धातोः फलवाचकत्वमत्यावश्यकं तदाह --धातूनामिति—फलावाचकत्वे= फलं क्रियापरिणामः तस्यावाचकत्वे=वाच्यार्थराहित्ये सति त्यजिश्च, गमिश्च, तयोः त्यजिगम्योः पर्यायता=शब्दार्थसाम्यमापतिष्यति सर्वेषां पर्यायताऽपि च। यतः फलभेदे धातुभेदः—फलरूपार्थाभावे धातुभेदाभावः। क्रियायाः वाचकत्वे=बोधकत्वे धातुषु नास्ति विशेषो—भेदोऽविशेषः तस्मात् पूर्वस्थान विभागः परदेश संयोगश्च तयोर्वाच्य द्वयोरर्थे भेदाभावः। संयोगानुकूल व्यापार गम का अर्थ है। यदि फल को उपलक्षण मानते हैं कि विभागोप लक्षित व्यापार त्यज का संयोगोपलक्षित व्यापार गम का अर्थ अङ्गीकार करके उप-लक्षक भेद से उपलक्ष्य व्यापार में भेद सिद्ध करके समानार्थकता दोषको निवृत्ति करना चाहते हैं तो दोष वैसे ही बना रहेगा। क्योंकि दोनों धातुओं में पूर्व देश विभाग उत्तर देश संयोग की जनकता बैठी हुई है। अतः सुस्पष्ट पर्यायतापत्ति रोकी नहीं जा सकती। यह भी विरुद्धवादी बोलते हैं तस्मात्—इसलिये सकर्मक धातुओं में फल की वाचकता आवश्यक हो गई। अकर्मक धातुओं में फल की वाचकता तो निर्विवाद ही है। द्वितीया न रहने पर भी फल अर्थ होता है। प्रमाण—सत्ता अर्थ में भू धातु का अनुशासन ही प्रमाण है। धातु का फल और व्यापार दोनों अर्थ स्वीकार करने भाष्य-कार पच धातु का दो अर्थ माना है अतः भाष्य भी सङ्गत होता है॥७॥

एवं सिध्यतु फलव्यापारयोर्वाच्यत्वम् । किन्तु आख्यातवाच्यैव सा भावना, न धातोः, प्राधान्येन प्रतीयमानव्यापारस्य धात्वर्थतायाः 'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यम्" इति न्यायविरुद्धत्वात् । 'तदागमे हि दृश्यते' इति न्यायविरुद्धत्वाच्च ।

एवञ्च "स्वयुक्ताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्मकत्वम्, आख्यातार्थव्यापाराश्रयत्वञ्च कर्तृत्वं वाच्यम्" इत्यादि वदन्तं मीमांसकंमन्यं प्रत्याह—

o

ननु फलमुपलक्षणं कृत्वा "त्यज्" धातुफलं विभाग इति । विभागोपलक्षिते व्यापारे शक्तिः । एवं संयोगोपलक्षिते व्यापारे "गम्" धातोः शक्तिरिति स्वीकारे=पर्यायिता न भविष्यति । उपलक्षणत्वञ्च फलस्य धातुजन्य बोधाविषयत्वे सति फलोपलक्षित व्यापारे शक्ति ज्ञापकत्वम् । तदाह—फलस्योपलक्षणत्वेऽपीति । यदि फलमुपलक्षणं क्रियते तदोपलक्षक ( फल ) भेदेन उपलक्ष्यव्यापारस्यापि भेदात् । अपि शब्देन शब्दार्थैकता ( पर्यायता ) न प्रव्रजिष्यति, दोषस्तादवस्थ्यः स्यात् । यतो हि एकस्याः क्रियायाः "त्यज्" धातोः गम् धातोर्वा भवेत्, उभयत्र पूर्वदेश विभाग उत्तर देश संयोगश्च तिष्ठत्येव । जनकत्वात्=संयोगविभागयोरुभयोः व्यापार जनकत्वात्—पर्यायिता सिद्धयति । यदि गम्यर्थव्यापारे संयोगे एवोपलक्षणं न विभाग इति विनिगमनाविरहात् वक्तुं न शक्यते । उक्तापत्तिवारणाय फलेऽपि शक्तिरावश्यकी । तदाह तस्मादिति=उक्तयुक्तिसम्पर्कात् सकर्मकाणां=कर्मक्रियाव्यधिकरणानां धातूनां फल वाचकत्वमावश्यकम् । एतेन धातोः फलेऽपि शक्तिरिति गम्यते ।

माना कि इस प्रकार फल और व्यापार में वाच्यता ( प्रतिपाद्यता ) सिद्ध हुई । परन्तु व्यापार की वह वाच्यता आख्यात ( तिङ् ) ही में है अतः भावना को तिङ का ही वाक्यार्थ माना जाना चाहिए धातु का नहीं । शाब्दबोध में प्रधानरूप से प्रतीयमान व्यापार को । ( भावना को ) धातु ( प्रकृति ) का अर्थ मानोगे तो 'प्रकृति का अर्थ और प्रत्यय के बीच प्रत्यय के अर्थ का प्राधान्य ( मुख्य विशेषता ) होता है । इस न्याय के विरुद्ध होने से सिद्ध होता है कि भावना धातु का अर्थ नहीं है । किन्तु प्रत्ययार्थ है अन्यथा न्याय विरोध होगा । 'तदागमें न्याय विरोध भी । तत्=आख्यात की आगमे=उपस्थिति में भावना अर्थ दृश्यते=देखा जाता है । आख्यात ( तिङ् ) के अभाव में भावना अर्थ का भी अभाव देखा जाता है । इससे भावना का आख्यातार्थत्व सिद्ध होता है । अन्यथा दोनों न्यायों का विरोध होगा ।

अकर्मकाणान्तु = फलव्यापारसमानाधिकरणानां धातूनां फल वाचकत्वं निर्विवादमेव निर्गतो विवादो यस्मात्तत् तत्र द्वितीयाया अभावात् फलं धातोरेवार्थः। अन्यथा फलव्यापारयोः समानाधिकरण्यं न सम्भविष्यति। न च पूर्वोक्तं सकर्मकं तद् भिन्नमकर्मकमित्येव लक्षणमुच्यतां तत्र, "भू" सत्तायामित्यादौ सत्तारूपं फलमेव गणेऽनुशासितं वर्त्तते। तत्र फलस्थानीयो धात्वर्थो निर्दिष्टः। अतएव धातुमात्रस्य फलवाचकत्वादेव द्व्यर्थः = फलव्यापारोभयार्थः पचिः = विक्लेदनम् ( फलं ) निर्वर्त्तनो ( व्यापार ) इत्यर्थद्वयं सिद्धयति। तण्डुलावयवान् विक्लेदयन, शिथिलीकूर्वन्नोदनं निर्वर्त्तयतीति भाष्योक्तमुभयार्थकत्वं संगच्छते।

ननु भाष्यनिर्देशः सकर्मकाणां फलवाचकत्वसाधकमस्तु। अकर्मकाणां मास्तु तदाह—दिगिति अकर्मकाणामपि फलवाचकत्वमावश्यकम्, अन्यथा सत्ताद्यर्थरूपफलनिर्देशाः व्यर्थीभविष्यन्ति ॥७॥

पूर्वोक्तैस्तर्कैः फलव्यापारयोः धातोः वाच्यत्वं सिद्ध्यतु, प्रामाण्यञ्चास्तु, परन्तु मण्डन मिश्र मते "पचति" इत्यस्य पाकं करोतीति—विवरणेन न्यायद्वयस्य (प्रकृति प्रत्यायार्थयोः तदागमे, च) सम्मानार्थश्च भावनाऽऽख्यात् वाच्यैव = आख्यातस्तिङ् तस्यार्थो भावना सा तिङन्तपदबोधविषयिणी न तु धातोः। यदि सा धातोरर्थः स्यात् तस्याः प्राधान्यं न स्यात्। प्राधान्येन मुख्यविशेष्यतया प्रतीयमानस्य = अनुभूयमानस्य व्यापारस्य धात्वर्थतायाः = धातुः = प्रकृतिः तस्या अर्थो भावना। एवञ्च प्रकृत्यर्थस्य प्राधान्येन प्रकृति प्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायो विरूद्ध्यते। तस्मादाख्यात वाच्यैव सा भावना न्यायानुरोधात्।

अपरन्यायस्तदागम इति तस्य = आख्यातस्य आगमे = उपस्थितौ भावनारूपोऽर्थो दृश्यते = अनुगम्यते। आख्यातस्यानुपस्थितौ भावनार्थो न गम्यत इत्यन्वयव्यतिरेकिबोध दर्शनात् आख्यातवाच्यैव सा भावना। अथवा पशुना यजेदित्यत्र करणत्वेन साक्षात् क्रियायामन्वयो जायते। परन्तु प्रकृति प्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यं स्वीक्रियते चेत्तर्हि "अजा" इत्यादिषु

एवञ्च = इस प्रकार सकर्मक अकर्मक विभाग की सुरक्षा हो सकती है। जैसे—स्व = धातु से युक्तः = सम्भूत जो आख्यातार्थ = तिङर्थ व्यापार उसके आधार से भिन्न है आधार जिस फल का उसका वाचक सकर्मक होता है ( समान आधार अकर्मक है ) आख्यात का अर्थ जो व्यापार ( भावना ) उसके आश्रय ही को कर्ता कहना चाहिए। इत्यादि युक्तियों को बोलने वाले अपने को महान मीमांसक मानने वालों के प्रति बोले—

व्यापार धातु का व्याख्यान है।





व्यापार
तस्मात्करोतिर्धातोः स्याद्व्याख्यानं, न त्वसौ तिङाम्।
पक्ववान्, कृतवान् पाकं, किं कृतं पक्वमित्यपि ॥८॥

तस्मात्—अभिप्रायस्थहेतोः। स चेत्थम्। फलमात्रस्य धात्वर्थत्वे 'ग्रामो गमनवान्' इति प्रतीत्यापत्तिः, संयोगाऽश्रयत्वात्। फलानुत्पाद-दशायां व्यापारसत्त्वे 'पाको भवति' इत्यनापत्तिः, व्यापारविगमे फलसत्त्वे 'पाको विद्यते' इत्यापत्तिश्च।

o

स्त्रीत्वविवक्षायां जायमानस्य टापः प्रत्ययार्थतया प्राधान्येन अजानिष्ठ स्त्रीत्वस्यैव बोधा पत्तिः। इत्यरूचेराह तदागम इति।

नन्वाख्यातवाच्याभावना मन्यते तर्हि सकर्मकाकर्मकलक्षणे कथं संघटतां तदाह एवञ्चेति—मीमांसकमते स्वं=धातुः तस्माद्युक्तं सम्बद्धमाख्यातं= तिङ्, तदर्थो व्यापारः=भावना, तादृश भावनाव्यधिकरण (भिन्नभिन्नाधारे) फलवाचकत्वं सकर्मकत्वम्।

एवं स्वयुक्ताऽऽख्यातार्थव्यापारसमानाधिकरणफलवाचकत्वमकर्म-कत्वम्। तेन न सकर्मकाकर्मक विभागोच्छिन्नता। अनुगतकर्तृत्वं दुर्वच-मित्यिपि वक्तुं न शक्यते। यतोहि, आख्यातार्थो यो व्यापारः तस्याश्रयः कर्त्ता, तस्यानुगतत्वमस्त्येव। इत्थं वदन्तं=साहङ्कारमभिव्याहरन्त-मात्मानं मीमासकं मन्यते, इति मीमासकमन्यं प्रति वैयाकरणो ब्रूते तस्मादिति।

पूर्वोक्तकारणात् विवरणे करोतिः (व्यापारः) धातोरेव व्याख्यानम्, असौ (करोतिः) तिङां व्याख्यानं न। 'पक्ववान्' इत्यादौ तिङर्थं विनाऽपि पाकं कृतवानिति विवरणे कृञः प्रतीतिर्भवति। किङ्कृतमिति प्रश्ने पक्वं कृतमित्युत्तरेऽपि कृञः प्रतीतिः तस्मात्=तच्छब्दो बुद्धिस्थपरामर्शकः। बुद्धिस्थाः यावन्तोविषयास्तै रूपलक्षिते यावद्धर्मावच्छिन्ने शक्तिः सर्वनाम-

तस्मात्=अभिप्रायस्थ विचार हृदयस्थ वक्तव्य भाव तात्पर्य मे स्थिति जो कारण है उससे यही सिद्ध होता है कि विवरण में करोति "धातु का अर्थ है। वह तिङ का व्याख्यान नहीं है जैसे 'पक्कवान' का विवरण पाकं कृतवान हैं इस विवरण में कृ धातु की प्रतिति हो रही है। ति का व्याख्यान भी नहीं है। ऐसे है। 'किं कृतं' इस इस प्रश्न पर 'पक्वं कृतम्' इस उत्तर में भी कृ की प्रतीति है और तिङ नहीं है। इससे सिद्ध होता है कि करोति धातु का व्याख्यान है। क्योंकि धातु उपस्थित है कृ भासित है। अभिप्रास्थ हेतु इस प्रकार है। यदि फल ही धातु का अर्थ होगा तो ग्रामो गमन-वान् इस प्रयोग की आपत्ति होगी। क्योंकि धात्वर्थ का आश्रय कर्ता होता है। गम

त्वात्। अत आह–अभिप्रायस्थ हेतोरिति। अभिप्राये बुद्धिस्थ—विषये पाकानुकूलव्यापाराश्रय इत्यर्थके पाकङ्करोतित्यादिविषये हेतुः=हृदयस्थं कारणं तिष्ठतीत्यर्थः। स चेत्थम्=बुद्धिस्थोऽभिप्रायस्त्वेतादृशः। यदि फलमात्रं धात्वर्थोऽङ्गीक्रियते तर्हि गम् धातोः फलं संयोग इति तस्याश्रयो ग्रामः, तेन ग्रामो गमनवान् इति प्रयोगस्यानिष्टापत्तिः सम्भवति। तत्र गम धार्तोभावेल्युट् प्रत्ययः (भावो भावना सैवोत्पादना सैव च क्रिया सर्वधात्वर्थ एव। भवन् मते संयोगमात्रं धात्वर्थः, गमनं=संयोग एव सोऽस्त्यस्मिन्निति गमनवान् ग्राम इत्यनिष्टं प्रसज्तेत् ग्रामः क्रियावान् न भवति। मम मते तु न तथा। यतः संयोगः व्यापारश्चोभयौ धात्वर्थस्तत्र न व्यापाराश्रयो ग्रामः ततो नोक्त दोषः।

धातोः फलमात्रार्थकत्वेऽपर दूषणं, फलानुत्पत्ति दशायामिति—यदा फलमनुत्पन्नं स्यात्तस्मिन काले व्यापारसत्वे=क्रियाया उपस्थितौ पाको भवतीति वर्त्तमान कालो न प्रयोक्तुं शक्यते। आख्यातार्थ कालस्य धात्वर्थ व्यापार एवान्वयात्। मीमांसक मते तु फलस्य वर्त्तमानेसति वर्त्तमानकालः प्रयोक्तुं शक्यते भूतभावि कालयोः व्यापारस्य धात्वर्थत्व दशायां प्रवर्त्तते। फलसत्वे तु न प्रवर्त्तते। फलस्यानुत्पत्ति दशायां पाको भवतीति वाक्यं न सिद्ध्यति। व्यापार विगमे=क्रियासमाप्तौ तु फलसत्वे=विक्लित्ति रूप फलस्योपस्थितौ भूतकालिकोऽभूत्वा पाको विद्यत इति प्रयोगस्यापत्तिरापतिष्यति। आपत्तिः=नान्तरीयकतया फलस्य व्यापार एवान्वयात्। यदा व्यापारोऽपि धात्वर्थस्तदा फलं विनाऽपि पाको भवतीति वाक्यं सिद्ध्यति। व्यापार समाप्तौ तु पाकोऽभूदित्यापत्तिः।

धातु का अर्थ तुम्हारे मत मे केवल संयोग फल है उसका आश्रय ग्राम है। गम धातु से भाव अर्थ में ल्युट हुआ। भाव धात्वर्थ हुआ, जो संयोग मात्र है, गमन=संयोग हो जिससे उसे गमनवान कहते है। उक्त प्रयोग होने लगेगा। हमारे मत में संयोगानुकूल व्यापार अर्थ है उसका आश्रय ग्राम के न होने से उक्त प्रयोग नहीं होगा। और भी फल की अनुत्पत्तिदशा में 'पाको भवति यह वर्तमान कालिक प्रयोग न ही होगा जो होना चाहिए। क्योंकि धात्वर्थ फल के वर्तमान न हीने से पाकमे फलाश्रयरूप कर्तृत्व नहीं है। जब व्यापार को धात्वर्थ मानते है तो फल के विना भी पाको भवति यह प्रयोग होता है। व्यापापार विगमे=व्यापार के समाप्त होने के पश्चात् फल सिद्ध एवं उपस्थित रहने पर पाको विद्यते, इस प्रयोग की आपत्ति होगी। हमारे मत में पाकोऽभूत् यह भूत कालिक प्रयोग होता है अतः आपत्ति कि प्रकृष्ट हो जाती है।

यत्तु भावप्रत्ययस्य घञादेरनुकूलव्यापारवाचकत्वान्नानुपपत्तिरिति, तन्न, कर्त्राख्यातवत् "कर्तरि कृत्" इत्यत एव तद्विधानलाभे भावे विधायकानुशासनवैयर्थ्यापत्तेः, तद्विरोधापत्तेश्च ।

अथ व्यापारोऽपि धात्वर्थ इत्यभ्युपेयमिति चेत् ? तर्हि धातुत एव सकलव्यापारलाभसम्भवेनाऽऽख्यातस्य पृथक्शक्तिकल्पने गौरवमिति । 'पचति' इत्यस्य 'पाकं करोति' इति विवरणात्मा करोतिः धातोरेव व्याख्यानं-विवरणम् । अतस्तदपि नाख्यातार्थत्वसाधकमिति भावः ।

मीमांसकोक्तं बोधकमुद्धरन् तन्मनं दूषयति-न त्वित्यादिना ।

o

केचन मीमांसकमन्याः मन्यन्ते यत् फलमात्रस्य धात्वर्थत्वेऽपि फलवाचकधातुपदोत्तरघञादेरनुकूलव्यापारवाचकत्वमर्थः । तस्य प्रत्ययार्थत्वेन प्राधानेऽनुकूल व्यापारे एवं वर्त्तमानकालस्यान्वयः । व्यापार सत्वे पाको भवतीति एवं जायते । व्यापार विगमे फल सत्वे पाकोऽभूदितीष्टः प्रयोगः सम्पत्स्यते । अतो न पूर्वोक्तानुपपत्तिः । तत्खण्डयितुमाह भूषण कारस्तन्नेति–पूर्वोक्ता रीतिरज्यासी कर्त्राख्यातवत् = "लः कर्मणि"—इति सूत्रेण कर्त्तरि आख्यातः = तिङ् जायते । कर्त्राख्यात् स्थले कर्तृत्वे ( भाव प्रधाने ) शक्तिस्तर्हि आख्यातस्य यथा भावनार्थे शक्तिः तथा यस्मात्सूत्रात् कर्त्तरीत्यनुवर्त्तते

अन्विताभिधानवादी मीमांसक का मत है कि धातु का फल मात्र अर्थ होने पर भी भाव अर्थ में प्रत्यय होने वाले घञ् आदि प्रत्ययों का ( फल के ) अनुकूल व्यापार वाचकता अर्थ है इसलिये कोई दोष नहीं है । फलजनक व्यापार के प्रत्ययार्थ होने से काल का भी सम्बन्ध होता है । व्यापार के रहने पर पाको भवति प्रयोग होता है व्यापार के समाप्त होने पर फल की स्थिति में पाकोऽभूत् प्रयोग इष्ट है कोई अनुपपत्ति नहीं है । इसका खण्डन करने के लिये भूषणकार बोले तन्न, यानी पूर्वोक्त तर्क अप्रशंसनीय है ।

कर्त्राख्यातवत्—लः कर्मणि सूत्र से कर्ता अर्थ में लकार तत्स्थानापन्न तिङ का कर्ता अर्थ होता है किन्तु तुम्हारे मत में वह तिङ व्यापारार्थक है । ऐसे ही कर्तरि कृत् सूत्र से विहित घञादि प्रत्यय भी व्यापार अर्थ वाले होंगे । भाव प्रधान निर्देश करेंगे तो कर्ता का कर्तृत्व अर्थ होगा, जो व्यापार रूप है । वही धात्वर्थ भी है । इस रीति से कर्तरिकृत् सूत्र भाव अर्थ में घञादि के विधान का लाभ हो जायगा । तो 'भावे' सूत्र से भाव अर्थ में घञ् का अनुशासन ही व्यर्थ हो जायगा । तादृविरोधापत्तेश्च = भावे सूत्र का कर्तरिकृत् सूत्र के साथ विरोध ( टकराव ) होगा । चूंकि सूत्र व्यर्थ होगा । अतः व्यर्थता ही विरोध है ।

तत्रापि='कर्त्तरि कृत्' इति सूत्रेऽपि कर्तृ पदं कर्तृत्वपरं भावार्थप्रधानमर्थः स्यात्। कर्तृत्वं व्यापारः स एव धात्वर्थः कर्त्तरि कृत् इति सूत्रेणैव कृत्प्रत्ययानां भावेऽर्थे सिद्धिः—तेनैव तद्विधानलाभे=भावेऽर्थे घञादि-विधाननिर्बाधे भाव इति घञ् विधायकमनुशासनं व्यर्थं स्यात्। कर्तृ-पदेनैव भावार्थकत्वलाभात् तद् विरोधापत्तेश्च=अयं भावः निरुक्तमतानु-सारेण "भावे" इति सूत्रस्य यतो वैयर्थ्यमतो विरोधापत्तिः। भाष्य विरोधोऽपि घञादीनामसत्वभूतकारकान्वययोग्यव्यापारार्थकत्वे इति सूत्रस्थ भाष्य विरोधापत्तिः। तत्रहि भावे सर्वलिंगनिर्देशः सर्वलिङ्गेभाव इत्यर्थः तथाहि पंच् धातोः भावेघञ् विधाने पाक इति पुंस्त्व निर्देशः, तत्रैव भावे क्तिनो विधाने पक्तिरिति स्त्रीलिंग निर्देशः। तथा भावेल्युट् पचन-मित्यत्र नपुसकमिति लिङ्गत्रयनिर्देशो हि—भावार्थप्रत्ययस्य द्रव्यवाचकता द्रव्यवत्प्रकाशत इति सिद्धान्तात्।

अथ व्यापारोऽपि="भावे" इति सूत्रवैयर्थ्यापत्तिवारणाय यत्नातिरिक्त व्यापारोऽपि धात्वर्थः। यत्नस्त्वाख्यातार्थ इत्यभ्युयेयं=स्वीकार्यं चेत्तर्हि व्यापारार्थकत्वस्वीकारे धातुतएव=धातुमात्रादेव सम्पूर्ण क्रियोपलब्धि सम्भवेन पुनराख्यातस्य व्यापारे पृथक शक्ति स्वीकारे गौरवम् उभयत्र शक्ति कल्पनात्। पचतीत्यत्र विवरणे पाकं करोति चेत्युभयं धातोरेव विवरणं =व्याख्यानं तस्य आत्मा=स्वरूपं यस्यासौ विवरणात्मा धातोरेव व्याख्यानं विशेषेण कथनं न त्वाख्यातस्य। अत्र भाष्यं प्रमाणं कथं ज्ञायते क्रिया वचना पच्यादयः यदेतेषां करोतिना समानाधिकरण्यं किं करोतीति प्रश्ने पचती-त्युत्तरे करोतीति धात्वर्थं विवरणं स्फुटम्।

यदि भावे सूत्र की व्यर्थता असह्य हो उसकी सार्थकता के लिये व्यापार धातु का अर्थ स्वीकार करें, तो धातु से ही सम्पूर्ण व्यापार का लाभ सम्भव होता है पुनः आख्यात ( तिङ ) में व्यापार की अलग शक्ति-कल्पना करने में गौरव है व्यर्थत्व भी। पचति पद का विवरणात्मा पाकं और करोति है दोनों पच धातु का ही व्याख्यान= एकार्थबोधक समान शब्दार्थ है आख्यात का अर्थ नहीं। ततस्तदपि—विवरण भी आख्यातार्थ ( भावना ) का साधन नहीं हो सकता।

इस प्रकार मीमांसकों से समुपास्थापित वचक—जैसे प्रकृति प्रत्ययों सहार्थं ब्रूत तयोः प्रत्ययार्थस्य प्राधान्यम् तदाबमे हि दृश्यते। आदि को टालते हुए, उनके मत को दूषित करते हैं—नत्वसौ विङामिति असौ=भावबा तिङां=तिङ प्रत्यय का व्याख्यानं नहीं है अन्यथा पक्वान् इत्यादि स्थल में सम्बन्ध नहीं जुड़ेगा। यहाँ कारण प्रस्तुत करते हैं।

नासौ तिङ्गां व्याख्यानम् पक्ववान्' इत्यादावनन्वयापत्तेः । अयं भावः- 'प्रकृतिप्रत्ययौ सहार्थ ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यम्' इत्यत्र हि 'विशेष्य-तया प्रकृत्यर्थप्रकारकबोधं प्रति तदुत्तरप्रत्ययजन्योपस्थितिर्हेतुः' इति कार्य-कारणभावः फलितः तथा च 'पक्ववान्' इत्यत्र पाकः कर्म्मकारकं क्तवतु-प्रत्ययार्थः कर्तृकारकम् । तयोश्चारुणाधिकरणरीत्या वक्ष्यमाणास्मद्रीत्या चान्वयासम्भव इति ।

o

अतस्तदपि = पाकं करोतीति विवरणं, प्रत्ययार्थ प्राधान्यं, तदागम इति न्यायश्च नाख्यातार्थं साधकं, भावनाया आख्यातार्थत्व साधकं नेत्यर्थः । इत्थं मीमांसकोक्तं बाधकं प्रकृति प्रत्ययोः तदागम इत्यादि बाधकं तन्मते-प्रत्ययार्थं ।

सह ब्रूत प्रकृति प्रत्ययौसद, प्राधान्यात् भावनातेन प्रत्ययार्थोऽवधार्यते ।

इत्युद्धरन् = अवतारयन् तन्मतं दूषयति = निरस्यति न त्वसौ तिङा व्याख्यानमिति । असौ = भावना तिङां व्याख्यानं = विवरणमर्थो वा नेत्यर्थः । पक्ववानित्यादावनन्वयापत्तेः । पाकं कृतवानिति—व्याख्यानं तत्र प्रकृत्यर्थः पाकमिति कर्मं, क्तवतु प्रत्ययार्थ कर्त्ता, तयोः परस्परमन्वयो न स्यात । कारकाणां क्रियायामन्वय नियमात्, कर्मकर्त्रोः न परस्परमन्वयः योग्यताया अभावात् ।

अयं भाव इति—प्रकृति और प्रत्यय सह=सम्बद्ध अर्थ कों कहते हैं । उन दोनों में प्रत्यय अर्थ का प्राधान्य रहता है । विशेषतया = मुख्यरूप से प्रकृति के अर्थ को विशेषण मान कर शब्दार्थ का ज्ञान करना हो तो वहाँ उत्तर भाग में प्रत्यय से जन्य अर्थ की उपस्थिति कारण है । यही प्रकृति प्रत्यय के बीच सह सम्बद्ध, कार्य कारणभाव सम्बद्ध फलित होता । परन्तु कृतवान में यह सम्बन्ध फलित नहीं होगा । क्योंकि प्रकृत्यर्थ जो पाक है उसका प्रप्यार्थ ( क्तवतु, कर्ता ) में अन्वय होना चाहिए । आपके मत में—पाकं कृतवान् इस विवरण में पाक कर्म कारक क्तवतु प्रत्यय का अर्थ कर्ता कारक है दोनों में सम्बन्ध असम्भव है कैसे अन्वय असम्भव है ? इसका दृष्टान्त देते हैं जैसे अरुणा, पिङ्गाक्षो, एक दायनी से सोम रस खरीदो । यहाँ अरुणा इत्यादि आपस में अन्वित नहीं है किन्तु क्रिणाति क्रिया में अन्वित होते हैं । ऐसे ही कारक का कारक में अन्वय नहीं होता, किन्तु क्रिया में अन्वय होता है । हमारी जो वक्ष्यमाण रीति है उसके अनुसार कारक का कारक में अन्वय असम्भव है । अतः व्यापार को धात्वर्थ मानिये ।

यदुच्यते शाब्द बोधे पदार्थोपस्थितिः कारणं, तस्याः सत्वे परस्परान्वये न किञ्चित् बाधकम्। परन्तु कारकस्य क्रियायामेवान्वयनियमात, पक्ववानित्यत्र प्रकृति प्रत्ययाभ्यां क्रिया नोपतिष्ठते। ततः क्रियायामन्वयाभाव एव बाधकम्। तथापि कारकादीनां क्रियायामन्वयो भवति, इति सम्बन्ध सामान्यं कल्पयित्वा तयोः परस्परान्वये न किञ्चित् बाधकम्। तदाह अयम्भाव इति—प्रकृति प्रत्ययो सह चासावर्थश्चेति सहार्थस्तं = परस्पर सम्बद्धार्थ ब्रूत = प्रतिपादयत बोधयतः। कीदृशोऽन्वयः = प्रकृत्यर्थेन सह प्रत्ययस्य सम्बन्धः। प्रत्ययार्थेन सह सम्बद्धा प्रकृतिः। तत्र कस्य प्रधानमित्याकाङ्क्षायामाह—तयोश्चेति = तयो र्मध्ये प्रत्ययार्थस्य = प्रकृत्यर्थ बोधित विशेष्यता शालिज्ञानम्। एतादृशकार्यकारण भावज्ञानं विशदयति। विशेष्यतयेति—प्रकृत्यर्थ विशेषणक प्रत्ययार्थ विशेष्यक शाब्दबोधं प्रति प्रकृत्युत्तर प्रत्ययजन्यो पस्थिति कारणम्। यथा-याजक अत्र "यज्" धातोः फलव्यापाराव र्थौ ण्वुलर्थः कर्त्ता। एवञ्च प्रकृत्यर्थ फलस्या नुकूलत्व सम्बन्धेन व्यापारेऽन्वयः तस्य चाश्रयता सम्बन्धेन ण्वुलर्थ कर्तर्यन्वयः। प्रीत्यनुकूल व्यापाराश्रय इत्यर्थे प्रत्ययार्थस्य प्राधान्यं फलितम्। तथा चोक्त कार्य कारण सम्बन्धे सति पक्व वानित्यत्र प्रकृत्यर्थः पाकः तस्य क्तवतु प्रत्ययार्थे-कर्त्तर्यन्वयेनावश्यं भवितव्यम्। ततः पाकं कृतवानिति विवरणे पाकः (विक्लित्तिरूपं फलं कर्म कारकम्) फलस्यापि व्यविदेशिवद्भावेन फलाश्रयत्वात् कर्मता। क्रिया विशेषणानामपि कर्मत्वमिति प्रामाणिकं वचनं प्रमाणम्। क्तवतुप्रत्ययः कर्तृ कारकं तयोः सम्बन्धोऽसम्भवः। अर्थात् प्रकृति प्रत्ययार्थयोः कर्मकर्त्रोः कारकत्वेन परस्परान्वये योग्यत्वे सति साध्याक्रियायामन्वययोग्यता सम्बन्धः। यथा—अरूणाधिकरणोक्तरीत्या = आरूण्य, पिङ्गाक्ष्य, एकहायनानाँ गुणानां गुणिनाञ्च करणश्रुत्या क्रियायामेवान्वयो जायते न तु परस्परम्। एवञ्च तथैव कारकयोः कर्मकर्त्रोः, क्रियायामेवान्वयो भविष्यति न तु परस्परम्। तत्र परस्परयोग्यतापि नास्ति तदाह अन्वयासम्भव इति—वक्ष्यमाण रीत्या = सुबर्थ निर्णये कारकान्वयितावच्छेदको धर्मः क्रियात्वमिति। अस्मद्रीत्याऽप्यन्वयोऽसम्भवः। यथा कारकत्वस्य क्रियाजनकत्वमिति ज्ञाते का सा क्रियेत्याकांक्षोदयेन साध्यरूपायाः क्रियायाः साधनाकांक्षया परस्परान्वयस्यौचित्यात् क्रियात्वमेव कारकान्वयिता वच्छेदकम्।

प्रकृत्यर्थो विक्लित्तिरूपंकर्म, प्रत्ययार्थः कर्त्ता तयोः = कारकयोः क्रियायामन्वय नियमात्। क्रिया तु न कस्याप्यर्थः। अतस्तयोरन्वयनियमस्य (कारकस्य कारकेऽन्वयेति नियमस्य ( अभावे = यतो मीमांसकमते पाकः

कारक का कारक के साथ सम्बन्ध नहीं होता। यदि होगा तो परोक्षरूप से होगा





**प्रकृतिप्रत्ययार्थयोरन्वयनियमस्यैवाभावे क्व प्राधान्यबोधक उक्तकार्य-कारणभावः। न च—** कर्ता में सम्बन्ध सामान्य कर्ता है।

**संबन्धमात्रमुक्तञ्च श्रुत्यो धात्वर्थभावयोः।**
**तदेकांशनिवेशे तु व्यापारोऽस्या न विद्यते॥**

**इति भट्टपादोक्तरीत्या संबन्धसामान्येन कारकाणामन्वयः शङ्क्यः, योग्यताविरहात्। अन्वयप्रयोजकरूपवत्त्वस्य तथात्त्वात्।**

०

कर्म कारकं, क्तवतु कर्तृ कारकं, तयोः गुणत्वात्. गुणानाञ्च परार्थत्वाद् सम्बन्धस्य समत्वादिति न्यायेनोक्तोदाहृणे क्रियया अभावात कारकयोरन्वय योग्यताया अभावेसति क्व प्राधान्य बोधकः = सम्बन्धं विना प्रधानाप्रधान भावो ज्ञातुं न शक्यते। ततश्च प्रत्ययार्थः प्रधानमिति नियमः क्व ! कथमुक्त कार्यं कारण भाव इत्यर्थः।

मीमांसायां भावार्थाधि करणे "ज्योष्टिोमेन स्वर्ग कामो यजेत्" इत्यत्राख्यातार्थ भावनायां स्वर्ग एव फलं दृश्यते। सा भावना न धात्वर्था। धात्वर्थो यागरूपस्तस्य।सुखरूपत्वेनापुरुषार्थत्वात् तद् रीत्या प्रसंगेऽप्यन्वयः स्यात् तदेव स्पष्टयति न चेतिसम्बन्ध मात्रं = धात्वर्थ फलस्य फलाश्रये लक्षणा। श्रुत्या पशुनायजेदित्यादौ धात्त्वर्थयागस्य प्रत्ययार्थं व्यापारस्य, च प्रथमं सम्बन्ध सामान्यं प्रत्याय्यते। तस्य = सामान्य सम्बन्धस्य य एकोंऽशः = सम्बन्ध विशेषः तस्य निवेशो बोधने—अस्याः = श्रुते व्यापारो न विद्यते तस्य धात्वर्थताभावात्।

यदि प्रकृति और प्रत्यायों के अर्थ में कोई सम्बन्ध ही नहीं बनेगा, क्योंकि भिक्षुक भिक्षुक से भिक्षा सम्बन्ध नहीं जोड़ता। यदि धातु का व्यापार अर्थ नहीं होगा दोनों के अर्थ सम्बन्ध विगड़ जायगा। तो कारकान्वियितावच्छेदक धर्म (कारका अन्वय जिस क्रिया में हो) उसका धर्म क्रियात्व कहाता है। यह नियम कहाँ रहा। सम्बन्ध के विना प्रधानाप्रधान सम्बन्ध नहीं बनेगा। तो प्रत्ययार्थ प्रधानता कैसे सिद्ध होगी। उक्त कार्य कारणभाव = प्रकृति का अर्थ हो विशेषण जिसमें ऐसे ज्ञान के प्रति मुख्य रूप से उत्तर में प्रत्यय जन्य अर्थ की उपस्थिति कारण है। नहीं बनेगा। न च सम्बन्धमात्रमिति—न कहिए कल्पित सम्बन्ध जोड़कर उक्त कार्य कारण भाव बना लेंगे। जैसे श्रुत्या = सोमेन यजेत इस श्रुति से धात्थं भावयोः—यज धात्वर्थ याग है ति प्रत्ययार्थ भावना है। याग का भावना के साथ सामान्य सम्बन्ध स्थापित करके याग सम्बन्धिनी भावना यह अर्थ करते हैं। दोनों का सामान्य अर्थ है। तदेकांश-तस्य = सामान्य सम्बन्ध का एक अंश = प्रधान अंश के सम्बन्ध विशेष निवेश के

क्रियान्वयित्वमेव हि कारकान्वयितावच्छेदकमिति वक्ष्यते। तदेतदाविष्कर्तुं विवरणेन धात्वर्थक्तवत्वर्थयोः कर्मत्वकर्तृत्वे दर्शयति—कृतवान् पाकमिति।

वस्तुतः "प्रत्ययार्थः प्रधानम्" इत्यस्य यः प्रधानं स प्रत्ययार्थ एवेति वा, यः प्रत्ययार्थः स प्रधानमेवेति वा नार्थः। 'अजा' 'अश्वा' 'छागी' इत्यत्र स्त्रीप्रत्ययार्थे स्त्रीत्वस्यैव प्राधान्यापत्तेः, छाग्यादेरनापत्तेश्च। किन्तूत्सर्गोऽयम्। विशेष्यत्वादिना बोधस्तु तथा व्युत्पत्त्यनुरोधात्। अत एव नैयायिकानां प्रथमान्तविशेष्यक एव बोधः।

स्त्रीत्वविशिष्ट द्रव्य की प्रधानता होती है।

सोमेन यजेदित्यादौ धात्वर्थो यागः तिङर्थो भावना तयोः परस्पर सामार्थ्याभावेऽपि परस्परं याग सम्बन्धिनी भावनेति, सम्बन्धं कल्पयित्वाऽन्वयः करिष्यते यथा पचतीत्यत्र पाक सम्बन्धिनी भावना इति श्रौतार्थो बोधः। पश्चात् पाकानुकूला भावनेतिमानसो बोधः। तत्रैकांशनिवेशे धातोः प्रधानांश = प्रवेशे श्रुते, न कश्चन व्यापार इति भाट्टपादोक्त—रीत्या प्रकृति प्रत्ययार्थयोः कर्मकर्त्रोः सम्बन्धः करिष्यते तन्न, उक्त सम्बन्धो न कार्यः। यतः समान्य सम्बन्धेन कारकस्य कारकेऽन्वयो न जायते। न च विशेषण विशेष्य भाव सम्बन्धेनान्वयो जायताम्, योग्यता विरहात्। कारकाणां क्रियायामेवान्वये योग्यता न तु परस्परम्। अन्वय प्रयोजको = सम्पादकः संसाधको वा धर्मो योग्यता यथा घटेन जलमाहर अत्र "आहरण" क्रियायां करण योग्यता निश्छिद्रे घटे तिष्ठति न तु सछिद्रे। एवं जले – सिञ्चन क्रिया करणत्व यौग्यता तिष्ठति न तु वह्नौ।

लिये, इस श्रुति का कोई व्यापार नहीं रह जाता। शब्द में सामर्थ्य ही नहीं रह जाता। भाट्ट पाद की इस प्रति पादित शैली से सामान्य सम्बन्ध की कल्पना करके कारकों के परस्पर अन्वय सम्भव हैं। इस शङ्का का समाधान-योग्यता विरहात—कारकों का कारक में नेता समान्य सम्बन्ध से न विशेष सम्बन्ध से अन्वय होता है। क्योंकि कारकों के परस्पर में अन्वय को योग्यता ही नहीं रहती। सम्बन्ध का संयोजक धर्म योग्यता है। उसका प्रसंग में अभाव है। व्यापार को धात्वर्थ स्वीकार करने से कोई दोष नहीं।

कारकों के अन्वय की योग्यता हो जिसमें उस क्रिया के धर्म को क्रियात्व कहते हैं। जो आगे कहा जायगा। इसी को विवरण से प्रदर्शित करते हैं। धात्वर्थ पाकं कर्म कारक है क्तवतु प्रत्ययार्थ कर्तृ कारक है। इसी को सुस्पष्ट करने के लिये कहा 'कृतवान पाकम्' इति इसस व्यापार का धात्वर्थत्व सिद्ध होता है।

कारकाणामन्वयोऽस्त्यस्यामिति कारकान्वयिनी ( क्रिया ) तस्या अवच्छेदकं=प्रयोजकं साध्यत्वेन प्रतीयमानं क्रियात्वं यदग्रे वक्ष्यते। तदेव कारकान्वयितावच्छेदको धर्मः, न तु कारकत्वम्। एतत्सर्वमाविष्कर्तुं=व्याख्यातुं 'पाकं कृतवानिति' विवरणेन धात्वर्थकर्मत्वं "क्त" प्रत्ययार्थे कर्त्तृत्वञ्च दर्शयति=उपपादयति।

ननु प्रसङ्गे कृदर्थः कर्त्ता, तत्र कर्त्तृत्वलाभाय भावनाऽपेक्ष्यते। तथैव पाकदीनां कर्मत्वेनान्वयसुलभान्नोक्त दूषणमतआह—वस्तुस्त्विति—प्रत्ययार्थं प्रधान वचनखण्डनम्। प्रत्यायार्थ प्राधान्यन्यायस्य कोऽर्थः ? यत्र प्राधान्यं तत्र २ प्रत्ययार्थत्वं तदा प्रत्ययार्थस्य व्यापकत्वं प्राधान्यस्य व्याप्यत्वं स्यात्। यदि यत्रयत्र प्रत्ययार्थत्वं तत्र तत्र प्राधान्यमिति व्याप्तौ प्रत्ययार्थस्य व्याप्यत्व प्राधान्यस्य च व्यापकत्वम्। उभयथाऽप्यर्थो न वक्तुं शक्यते। यतो हि अजा अश्वा, छागीत्यादौ स्त्रीत्वं प्रत्ययार्थस्तस्य प्राधान्ये स्त्रीत्वस्यैव प्राधान्यं स्यात्। यथा स्त्रीत्वविशिष्टा अजा, अश्वा, छागीत्यर्थे स्त्रीत्वं प्रकारः=विशेषणम्। तस्य प्रधान्यं नोचितं स्त्रीत्वस्य प्रत्ययार्थत्वेऽपि अजादावप्रधानतयाऽन्वितत्वात्। अज अश्व, छाग इति विशेष्यः। स च प्रकृत्यर्थो न तु—प्रत्ययार्थः अतो व्यभिचरितोऽयं न्यायः। अन्यथा छागयादेरनापत्तेः=तस्य प्राधान्यं न स्यात्।

न च सा व्युत्पत्तिरपार्था स्यादतः आह-किन्तूत्सर्गोऽयं—प्रत्ययार्थ प्रधान न्याय उत्सर्गः=प्रायिकः, त्याज्यः सामान्यं वा तादृशी व्युत्पत्तिः कृत्तद्धितमात्रविषया न तु प्रत्ययार्थमात्र पर्याप्तविषयिणी। अतस्तद्बलादाख्यातार्थे व्यापार इति वक्तुं न शक्यते।

यद्येव तर्हि कथं विशेषण-भावस्तदाह-विशेष्यत्वादिनेति-इदं विशेषणम् अयं विशेष्यः। एतादृशबोधस्तु व्युत्पत्यनुरोधात=शास्त्रज प्रकृति प्रत्यय तत्तदर्थं तत्तत्सम्बन्धादिविषयकयथार्थज्ञानजनकसंस्कारविशेषा व्युत्पत्तिः। एवं च शास्त्रानुकूल व्युत्पत्त्यनुसारी बोधः, न तु बोधानु-सारिणी व्युत्पत्तिरिति। व्युत्पत्त्यनुसारी ज्ञानं प्रमाणयति। अतएवेति-नैयायिक मते प्रथमान्तार्थे मुख्यविशेष्यतया व्युत्पत्ति जयिते। आख्यातार्थकृतिनिष्ठ प्रकारताक बोधं, प्रति विशेष्यता सम्बन्धेन प्रथमान्त पद जन्योपस्थितिः कारणं। इति नैयायिकरीतिः। वैयाकरण मते तु आख्यात स्थले व्यापार-प्रधान बोधो जायते।

लक्षणायामालंकारिकाणां शक्यतावच्छेदकप्रकारक एव बोधो, न नैयायिकादीनाम्। घटः कर्मत्वमानयनं कृतिरित्यादौ विपर्ययेणाऽपि व्युत्पन्नानां नैयायिकनव्यादीनां बोधो, न तद्व्युत्पत्तिरहितानाम्। अन्येषां तन्निराकाङ्क्षमेवेत्यादिकं संगच्छते। वैयाकरणानां

o

आलङ्कारिक मते तु लक्षणास्थले गंगायां घोष इत्यादौ गंगात्व प्रकारक तीर विशेष्यक एव शाब्द बोधः। तन्मते शक्यतावच्छेदकी धर्मो विशेषणम्। लक्ष्यार्थः (तटः) तद विशेष्यक शाब्दबोधं प्रति पदनिष्ठ लक्षणा ज्ञानाधीनोपस्थितिरिति कार्य कारण भावे तादृशव्युत्पत्त्यनुरोधेन उक्त प्रकारको बोधः। अत एव लक्ष्यगत शैत्यपावनप्रतीतिः न तु नैयायिकादीनां तन्मते तु लक्ष्यता वच्छेदकत्व (तटत्व) प्रकारक तटविशेष्यक बोधो जायते। उक्तञ्च—"शक्यादन्येन रूपेण ज्ञाने भवति लक्षणा।" इति प्रमाणेन लक्ष्य बृत्ति तटत्वादिनैव लक्ष्यस्य बोधो जायते। अत एव कचतस्त्रस्यति वदनम्। त्रस्यति=बिभेति कचत=राहूतः वदनं=चन्द्र इत्यत्र त्रासोपपत्तिः, वदने-चन्द्रत्वारोपत्व सिद्ध्यति। शक्यतावच्छेदक-रूपेण भानमिति। सिद्धांते तु उक्त स्थले शाब्द बोधानुपपत्तिः वस्तुस्तु शक्यतात्वावच्छेदक रूपेणलक्ष्यार्थ बाधेऽपि कचत्वेन राहोर्बोधे त्रासाच्चमत्कार सिद्धिः। एवं घटः कर्मत्वम्, आनयनं कृतिरित्यादौ विपरीतेन 'अव्यवस्थाचेत्युक्त्वा' नव्य नैयायिकादीनां मते घटमानयेति वाक्ये बोधित शाब्दबोधसमानाकार एवं शाब्दबोधः। विपर्यस्तंविपरीत बोधस्तु व्युत्पन्नानां नैयायिकादीनां जायते। निराकाङ्क्ष्यं

प्रत्ययार्थ प्रधान न्याय का अर्थ निर्णय करते हैं कि जो प्रधान है वही प्रत्ययार्थ या जो प्रत्ययार्थ है वह प्रधान है। क्या तात्पर्य है। नार्थ=ये दोनों अर्थ उचित नहीं हैं क्योंकि यदि कहें कि जो प्रधान है वही प्रत्ययार्थ है तो क्या अच्या छागी अज वाक्य छाग प्रधान हैं वे प्रत्ययार्थ नहीं हैं यदि प्रत्ययार्थ को प्रधान माने तो प्रत्ययार्थ स्त्रीत्व है, वह प्रधान हो जायगा। छग्यादि के अप्रधान होने से असंगति होगी। स्त्रीत्व विशिष्ट छग्गी में प्रत्ययार्थ अशेषण छागादि विशेष्य है। अतः न्याय व्यभिचरित है। न्याय की सार्थकता के लिये कहा वह उत्सर्ग=त्यज्य या साधारण नियम है। विशेष्य विशेषण भाव के अनुसार बोध तो व्युत्पत्ति के अनुरोध से होता है वाक्य में जिसको जैसा सम्बन्ध ज्ञान रहता है उसको वैसा बोध होता है। अतएव=इसलिये नैयायिकों को प्रथमान्तार्थ प्रधान ज्ञान होता है। उनको वैसी व्युत्पत्ति और कार्य कारण भाव समक्ष में आता है यहाँ प्रत्ययार्थ प्रधान व्युत्पत्ति व्यभिचरित है।

अत एव "प्रधानप्रत्ययार्थवचनमवचनमर्थस्यान्यप्रमाणत्वात्" इत्याह भगवान् पाणिनिः। प्रधानं प्रत्ययार्थं इति वचनं 'न' इत्यनुवर्त्य न कार्य्यम्, अर्थस्य-अर्थावबोधस्यान्यप्रमाणत्वाद्—व्युत्पत्यनुसारित्वादिति हि तदर्थः। एवं सत्यपि नियामकापेक्षणे च "भावप्रधानमाख्यातम्" इति वचनमेव गृह्यतामिति सुधीभिरूह्यम्।

o

पद समुहात्मकं वाक्यं तस्मादुक्तंशाब्दबोधे तन्मते निराकांक्ष्य वाक्येऽपि कार्यंकारणभावस्वीकारात्। तद् व्युत्पत्तिरहितानामन्येषामाचार्याणां मते, घटः कर्मत्वमानयनमिति वाक्यं निराकाक्ष्यम्। घटः प्रकृतिः तस्याः विभक्त्यर्थेऽन्वयः साकाक्ष्यात्वं तद् वैकल्येन नान्वयः। अतो घटः कर्मत्वमित्यत्र घटस्य कर्णण्याकाङ्क्षा न वर्त्तते। ततः सम्बन्धो न भविष्यति।

अत एव बोधानुसारि व्युत्पत्ति स्वीकारादेव प्राचीनैरुक्तं प्रधान प्रत्ययार्थ वचनं भगवतापाणिनिना खण्ड्यते। यत् प्रधान प्रत्ययार्थंवचनं न कार्यम् अथवा तदशिष्यं संज्ञा प्रमाणत्वात्" इति सूत्रादशिष्यमित्यनुवर्त्तनीयम्। उक्त वचनमशासितुं योग्यं, यतो हि, अर्थस्य = शब्दजन्य ज्ञानस्यान्यप्रमाण-त्वात्। अन्या = व्युत्पत्तिः सा प्रमाणं स्वविशेषणीभूतज्ञानानुरोधिनी भवति यत्र, तस्य भावः तस्मात् = व्युत्पत्त्यनुसारित्वात् कार्यकारण भाव ज्ञानाधीन त्वाच्च।

और भी साहित्यिकों के यहाँ लक्षणा स्थल में शक्य ( वाच्य ) में रहने वाला धर्म ( जैसे गङ्गायां घोषः मे ) गाङ्गात्वं विशेषण हो लक्ष्यार्थ तट विशेष्य हो ऐसा बोध होता है। रसिकों को एसी व्युत्पत्ति होती है। अतः शैत्य पावनत्व की प्रतीति होती है। नैयायिकों की व्युत्पत्ति भिन्न है उन्हें तटत्व प्रकारक तट विशेष्यक बोध लक्षणा से होता है। 'घट मानय' वाक्य में घट कर्म है आनयन कृति—( फल ) फल है इसके विपरीत व्युत्पत्ति भी नव्यनैयायिकों को होता है। जो व्युत्पन्न हैं। जो अव्युत्पन्न हैं उन्हें बोध नहीं होता। अन्य आचार्यों के मत में घटः कर्मत्वं आनयनं. कृति वाक्य में निराकांक्ष जैसा लगता है। क्योंकि आकांक्षा शाब्द बोध में कारण है सम्बन्ध के विना व्युत्पत्ति न होगी।

स्वरूप व्युत्पत्ति के अनुसार शाब्द बोध होने के कारण भगवान पणिनि ने कहा कि प्रत्ययार्थं प्राधान्य प्रतिपादक प्रमाण अनुशासन के योग्य नहीं है। अन्य प्रमाणात्वात् = व्युत्पत्ति के अनुसार ज्ञान है। प्रकृत्यर्थ और प्रत्ययार्थ में प्रत्ययार्थ प्रधान होता है यह वचन नहीं करना चाहिये क्योंकि अर्थ का बोध स्वानुभव के अनुसार होता है।

यदि किसी की प्रधानता में प्रमाण की आवश्यकता हो तो भाव प्रधानं—यानी आख्यातार्थ भव प्रधान होता है प्रातिपादिक द्रव्य प्रधान होता है। यही वचन प्रमाण होगा। यह विद्वान् लोग समझें।

"तदागमे हि" इति न्यायो विवरणञ्चातिव्याप्तमित्याह—किं कृतं पक्वमिति। कृञा विवरणं, प्रतीतिश्च पक्वमित्यत्रापि, इति तत्रापि भावना वाच्या स्यादिति भावः। नन्वस्तु तिङ इव कृतामपि भावना वाच्येत्यत आह—अपीति। तथा चोभयसाधारण्येन तत्प्रीतीतेरुभयसाधारणो धातुरेव वाचक इति भावः भवद्रीत्या प्रत्ययार्थत्वात् प्राधान्यापत्तिश्चेति द्रष्टव्यम् ॥ ८ ॥

o

एवं सत्यपि प्रत्ययानां क्वचित्प्राधान्यं क्वचिद प्रधान्यं सम्भवत्यपि, तथा चाख्यात धात्वर्थ व्यापारस्य आश्रयः कर्त्तेति भानेन क्रियायाः प्राधान्यं न स्यात्। विनिगमनाऽपि नास्ति, अत आह—नियामका पेक्षण इति=नियमयति=एकं पक्षं सुदृढं स्थापयामीति नियामकस्तस्यापेक्षणे=अवश्यं वक्तव्ये, महर्षि यास्क वचनं नियामकं भविष्यति। भाव प्रधानमाख्यातमिति। आख्यायते—प्रधानीभूतोऽर्थोऽनेनेति व्युत्पत्त्याऽख्यातं=धातुः सर्वनाम धातुजमाह—नामान्याख्यातजानीत्यादावपि तथा। फले प्रधानं व्यापारः सर्वापेक्षया प्रधानीभूतभावार्थकत्वं धातुत्वमिति लक्षणं ज्ञेयम्। नव्य मतेऽपि "आख्यात माख्यातेन क्रिया सातत्ये" इति सूत्रे आख्यातपदं—भाव काल कारक संख्या चतुरर्थ परं, तत्र भाव प्रधान मिति भाष्यम्। उभयपक्षे भावप्रधानवचनमङ्गीकृतं, तदेव प्राधान्ये नियामकवचनं सुधीभिः=सुष्ठु धीः बुद्धिः येषान्तैः उह्यम्=तर्क्यं, प्रामाणिक प्रामाण्यं ग्राह्यम्।

तस्य=आख्यातस्य—आगमे=सत्ता सत्त्वे तदर्थो व्यापारः प्रतीयते। यथा एकवचनसत्त्वे एकत्व प्रतीति स्तदभावे तदभावः। तथैवाख्यात सत्त्वे

तदागमे दृश्यते यह न्याय और पाकं करोति यह मीमांसकों का विवरण, दोनों अतिव्याप्ति दोष से ग्रस्त है। क्योंकि पक्वं का विवरण पक्वं कृतं है यानी क्रिया के विषय में प्रश्न है क्रिया के सम्बन्ध में उत्तर है यहाँ विना तिङ के भी व्यापार का वोध हो रहा है। यहाँ तदागमे न्याय काम नहीं करेगा। यदि धातु का वाच्य व्यापार होगा तभी प्रश्नोत्तर सही जमेंगे। कृञ का व्याख्यान और ज्ञान भी पक्वं यहाँ भी हो रहा है। इसलिये कृदन्त स्थल में भी धातु का भावना अर्थ मानना चाहिए। न कहिए तिङ की तरह कृत्प्रत्यय का भी व्यापार अर्थ वाच्य हो जाय? इसलिये वोले अपि च—यदि तिङन्त और कृदन्त दोनों स्थल में भावना को तिङ और कृत् का वाच्य मानना है। तो दोनों स्थलों में धातु का भावना ही माना जाय। जिससे लाघव होगा। आपकी शैली से भावना के प्रत्ययार्थ होने से उसी का प्राधान्य कृदन्त स्थल में भी होने लगेगा ॥८॥

भावना प्रतीयते तदभावे तदभावः। यथा हि किं कृतमित्यत्र व्यापारविषयके प्रश्ने, पक्वं कृतमिति व्यापारविषयकसमाधानदर्शनात्, आख्यातस्याभावेऽपि भावना प्रतीतेर संगत्त्या पत्तेः। मम मते तु भावनायाः धात्वर्थत्वेन स्वरूप-सत्त्वात्, असंगति नं जायते। त्वन्मते तु तदागम इति न्यायः पक्वं कृतमिति विवरणञ्चोक्त प्रश्नोत्तरेऽति व्याप्तम्। अलक्ष्येऽपि लक्षण प्रवंत्तकं तस्मान्न युक्तं तत्। तस्मात् व्यापारस्य धात्वर्थता वाच्या।

पक्वमित्यत्रापि विवरणे कृञः प्रतीतिः सुस्पष्टैव। तत्रापि=कृदन्तेऽपि पक्ववानित्यादौ भावना वाच्या=कृत्प्रत्ययस्य भावनार्थोऽपि वक्तव्यः स्यात्। भावनायां लिङ्। अपिशब्दो न केवलं पूर्वोक्तार्थं समुच्चायकः किन्त्वर्थान्तर स्यापि। तदाह नन्विति—धातुना फलस्य प्रत्ययेन कर्मादिश्च बोधसम्भवे-ऽपि भावनाया आक्षेपमकृत्वा तिङ श्व कृतां प्रत्ययानामपि भावनैव वाच्यार्थो जायताम्। अत आह कारिकायामपीति—समुच्चितार्थं प्रकाशयति। धातु-राख्यातश्चोभौ व्यापारवाचकौ स्यातां तर्हि–उभयसाधारण्येन कृदाख्यातो-भयत्रोपलभ्यमानत्वेन तत्प्रतीतेः। भावनार्थबोधात्, उभयसाधारणी प्रकृति प्रत्ययद्वयंवाचकत्वापेक्षया भावना धातोरेव वाच्येति लाघवम्। पाणिन्यादि संकेतसम्बन्धेनापि सा स्वीकर्तव्या। भवद्रीत्या कृत्प्रत्ययस्य भावनार्थश्चेत् तर्हि, भावनायाः प्रत्ययार्थत्वेन प्रधान्यापत्तिः स्यात्। पक्व-वानित्यादौ कर्त्तृस्थले कर्त्तृ विशेष्यको वोधश्चापि न स्यात्। तस्माद् व्यापारो न प्रत्ययार्थः।

किं कार्यं ?—व्यापार विषयक प्रश्न है। 'पचनीयम् यह फल-विषयक उत्तर है। इत्यादि कृदन्त में भी देखा गया है। अथवा क्रिया वाचकता के विना धातु संज्ञा भी नही हो सकती। कार्यं—जो करने योग्य हो यहाँ कम कारक के विषय में ण्यत् प्रत्यय हुआ है। और पचनीयम् में भी कर्म अर्थ में अनीयर है जो कारक है। आदि पद से ज्योतिष्टोम से जो यज्ञ करे उसे ज्योतिष्टोमयाजी कहते। यहाँ करण कारकके उपपद रहते कर्ता अर्थ में णिनि प्रत्यय होता है ये सव=यानी कर्ता कर्म करणादि कारक क्रिया के साथ सम्बन्ध जोड़े विना सम्भव नहीं है। अतः ये धातु में क्रिया की वाच्यता वोधित करके धातु को व्यापार का वाचक सिद्ध करते हैं। क्रिया में जो अन्वयी है वही कारक होता है क्रिया विना कारक कहाना असम्भव है। अतः कर्ता कर्म करणादि कारकों के वाचक प्रत्यय ( ण्यत् अनीयर णिनि ) आदि असम्भव होंगे।

यदि कहिए कि गम्यमान–प्रतीय मान, सम्भावित क्रिया को मान कर कारक का सम्बन्ध जोड़ेंगे, यह भाट्ठ की शैली तर्क सङ्गत हैं तो नहीं। यदि सम्भावित क्रिया को मान कर सम्बन्ध जोड़ सकते हैं। वहाँ भी भावना के वाच्यार्थत्व की असिद्धि होगी। इस आपत्ति के कारण गम्यमान क्रिया मानना बुद्धिमत्ता नहीं होगी।

व्यापारस्य धात्वर्थत्वे साधकान्तरमाह—

किं कार्य्यं पचनीयं चेत्यादि दृष्टं हि कृत्स्वपि।
किञ्च क्रियावाचकतां विना धातुत्वमेव न ॥ ९ ॥

'कार्य्यम्' इत्यत्र "ऋहलोर्ण्यत्" इति कर्मणि ण्यत्। 'पचनीयम्' इत्यादौ चानीयर्। आदिना 'ज्योतिष्टोमयाजी,' इत्यादौ करणे उपपदे कर्तरि णिनिः। एते च क्रियायोगमन्तरेणासन्तस्तद्वाच्यतां बोधयन्ति, विना क्रियां कारकत्वासम्भवेन तद्वाचकप्रत्ययस्याप्यसम्भवात्। न च गम्यमानक्रियामादाय कारकयोग इति भाट्टरीतिर्युक्ता, आख्यातेऽपि तथात्वापत्तौ तत्रापि भावनाया वाच्यत्वासिद्ध्यापत्तेः।

०

धातो व्यापारवाचकतायामन्यं साधकं=सिद्ध्युपायं ब्रूते किं कार्यमिति–व्यापारविषयकः प्रश्नः पचनीयमिति फलविषयकमुत्तरम्। इत्यादि कृत्स्वपि=कृदन्तस्थलेऽपि व्यापारो दृष्टः। तत्र तिङऽभावे किं कार्यं पचनीयम्? इत्यनयोः प्रश्नोत्तरयोः संगतये व्यापार वाचकधातूपादानेन व्यापार वाचकता धातौ तिष्ठति। किञ्च—यद्वा क्रिया वाचकतां विना धातु संज्ञैव न भविष्यति। अर्थात् कर्त्तुं योग्यं कार्यम् (उत्पत्त्याश्रयः) इत्यत्र ऋवर्णान्तात् हलन्ताच्च धातोः कर्म कारकविषय बोधे ण्यत्प्रत्ययो भवति। पचनीयमित्यत्रापि कर्मकारकबोधेऽनीयर इति। आदि पदेन ज्योतिष्टोमेन यजत इति विग्रहे करण कारकोपपदे भूताधिकारे "करणे यजः" इति सूत्रेण कर्त्तरि णिनिर्जायते। एते चण्यत्—अनीयर—णिन्यादयः क्रियायोग मन्तरेण =धात्वर्थ व्यापारेण सम्बन्धं बिना असन्तः=असम्भवन्तस्तिष्ठन्ति। कारकाणां क्रियान्वय नियमात्। क्रियायोग युक्ताः सन्तः तद् वाच्यता= क्रिया बोधकतां बोधयन्ति=ज्ञापयन्तीति। यावद्धात्वर्थो न व्यापारस्तावत् कर्मकरणाद्यर्थेण्यत् णिन्यादयो न स्युः। इत्यसम्भवं दर्शयति —क्रिया विना क्रियान्वयित्वरूपं कारकत्वं न सम्भवति। तद् वाचक=कारक वाचकाः ये प्रत्ययास्ते न सम्भविष्यन्ति। न च गाम्यमानां=आक्षिप्यमाणां प्रतीपमानां वा क्रियामादाय कारकयोगः=क्रियान्वयित्वम्। यथा कृदन्ते कर्त्रादिना भावनाऽऽक्षिप्यते, इति भाट्टरीतिः। तेन न कश्चन दोषस्तन्न—आख्यातेऽपि =तिङस्थलेऽपि तथात्वापत्तौ=गम्यमानाक्षिप्यमाणक्रियासिद्धवाख्यातस्य कर्त्रर्थो वाच्यः। भावना–आक्षिप्यताम्। तेन तस्याः वाच्यता न संसिद्धयति।

अथ पाचक इत्यादौ लिङ्गञ्च संख्या च तयोरन्वयः=सम्बन्धः तदनुरोधात् लिङ्गसंख्ययोः कर्त्रन्वयस्य सर्व सम्मतत्त्वात्। कर्त्तरि कृन्निरूपितं वाच्यत्वमावश्यकम्। तेन=कर्त्तु र्वाच्यत्वेन भावनाया आक्षेपात् भावनायाः

लिङ्ग, वचन, काल, संख्या





व्याकरण

अथ लिङ्गसंख्यान्वयानुरोधात् कर्तुर्वाच्यत्वमावश्यकमिति तेनाक्षेपाद्भावनान्वयः स्यादिति मतम् ? तर्हि संख्यान्वयोपपत्तये आख्यातेऽपि कर्ता वाच्यः स्यात्। 'पक्ववान्' इत्यादौ कालकारकान्वयानुरोधाद्भावनाया अपि वाच्यत्वस्यावश्यकत्वाच्चेति भावः।

अपिना हेत्वन्तरसमुच्चयः। तथा हि—'नखैर्भिन्नो नखभिन्नः' 'हरिणा त्रातो हरित्रातः' इत्यादौ 'कर्तृकरणे कृता बहुलम्" इति समासो न स्यात्, 'पुरुषो राज्ञो, 'भार्या देवदत्तस्य' इतिवदसामर्थ्यात्।

०

प्रत्ययः = ज्ञानं जायत एव। अतो भावना आख्यातार्थं इति न स्वीकर्त्तव्यः। यद्येवं यथा कृत्प्रत्ययस्य कर्त्तु र्वाच्यत्वमावश्यकमेवं संख्यान्वयोपपत्तेः। संख्यायाः सम्बन्धसम्भवायाख्यातेऽपि = तिङ्यपि कर्त्तुः वाच्यताऽऽवश्यकी। कृदन्त इव तत्रापि भावनाया—आक्षेपः कर्त्तव्यः। अथ पक्ववान् इत्यत्रापि भूतकालभेदानुरोधात् क्रिया भेदाय कालस्तु, क्रियान्वयिकारकानुरोधाच्च सम्बन्धोपपत्तये भावनाया अपि धातो र्वाच्यत्वमावश्यकम्।

कृत्स्वपीत्यत्र 'अपिना' हेत्वन्तर समुच्चयः = व्यापारार्थकत्वेऽन्यकारण संग्रहः तथाहि—भावना धात्वर्थो न स्यात्तर्हि नखैः = अङ्गुलि-शिरोरुहैर्भिन्नः = भेदनाश्रयः नखकरणक भेदनकर्म इत्यर्थः करणे तृतीयया करणकारकं नखे वर्त्तते। एवं हरिणा त्रात इत्यत्र हरिकर्त्तृकत्राणकर्म इत्यर्थे कर्त्तरि तृतीयया कर्त्तृकारकम्। कारकाणां क्रियायामन्वयनियमेन भिद् त्राणवाच्यक्रिययोरभावात्, परस्परान्वयो, न सामर्थ्याभावात् कर्त्तृकरणे, उपपदे कृदन्तेन सह समासो न स्यात्। अत्र क्रियायाः साधनकाङ्क्ष्यं = परस्परान्वय-सामर्थ्यं, यथा पुरुषो राज्ञो, भार्या देवदत्तस्येत्यादावसामर्थ्यात् समासो न भविष्यति। तथैव तत्रापि सामर्थ्याभावाद् न समासो भविष्यति। भवन्मतेऽपि निराकांक्षत्वात् समासानुपपत्तिरभिमतमस्ति।

यदि लिङ्ग और संख्या का कर्ता में अन्वय के अनुरोध से कर्ता को 'ति' (कृत) का वाच्य अर्थ मानना आवश्यक है कर्ता से भावना का आक्षेप हो जायगा तो भावना ही आख्यातार्थ क्यों न माना जाय। सङ्ख्या का सम्बन्ध जोड़ने को लिये कर्ता को ही 'ति' का वाच्यार्थ माना जाय (और भावना धातु का) 'पक्वान्' इत्यादि शब्दों में काल (भूत काल) कारक (कर्ता) के अनुरोध (प्रेरणा) से भावना का भी धातु का होना अनिवार्य है। करिका में अपि शब्द से और भी कारण का संग्रह करते हैं। जैसे खैर्भिन्न नख से छीली गई वस्तु) हरिणा त्रातः हरि कर्तृक रक्षणाश्रयः। यहाँ 'कर्तृ

सामर्थ्य न मानने से समास नहीं हो पायेगा

न चाध्याहृतक्रियाद्वारा सामर्थ्यं वाच्यम् 'दध्योदनः' 'गुडधाना' इत्यादिवत्, अन्यथाऽत्रापि "अन्नेन व्यञ्जनम्" "भक्ष्येण मिश्रीकरणम्" इति समासो न स्यादिति वाच्यम्, तत्र विध्यानर्थक्यादगत्या तथा स्वीकारेऽपि 'हरिकृतम्' इत्यादौ *साक्षाद्धात्वर्थान्वयेनोपपद्यमानस्य "कर्तृकरणे" इत्यस्य आक्षेपेण परम्परासंबन्धे प्रवृत्त्ययोगात् ।

अनिवार्य रूप से — प्रवृत्त्य

न च अध्याहृताचासौ क्रिया च तामादायक्रियाया आध्याहरणं कृत्वा कारकत्वमनुभूय, क्रियामाक्षिप्य, वा नखै कृत्वा भिन्नः हरिणा कृत्वा त्रातः, इत्येवं कारकान्वयित्व रूपयोग्यता सम्भविष्यति । तेनअन्वयरूपंसामर्थ्यमेकार्थीभावं वा वाच्यम् । ततो न दोषस्तथा च, अध्याहृतां क्रियामादाय सामर्थ्यसम्पादने प्रमाणं प्रबूते दध्योदन इति—दध्ना उपसिक्त ओदनः, गुडेन मिश्रा धाना, इत्यादावध्याकृत्य क्रियामादाय--सामर्थ्य सम्यगुपलभ्यते । तथैव नखैर्भिन्न इत्यादौ क्रियामध्याहृत्य, तत् द्वारा सामर्थ्यं स्वीकृत्य समास सम्भति । अन्यथा आक्षिप्त क्रियान्वयेऽसामर्थ्यं स्वीकारेऽन्नेनव्यञ्जनं, भक्ष्येण मिश्रीकरणमित्यादौ समासो न स्यात् । तन्न, तत्र दध्योदन इत्यादौ विध्यानर्थक्यात् समास विधायकमन्नेन व्यञ्जनमित्यादि शास्त्रं विधिः, तेषां वैयर्थ्यात्—अगत्या = उपायान्तराभावेन, नान्तरीयकतया = अध्याहार स्वीकारे सति सामर्थ्यं सम्पादनेऽपि, हरि कृतमित्यत्र अगत्याध्याहारी न कर्त्तुं शक्यते । यतस्तत्र "कृ" धातुव्यापारार्थकः, व्यापारनिरूपितं कर्त्तुत्वं हरौ साक्षात्तिष्ठति । अध्याहारं विनाऽपि शास्त्रस्य चारितार्थ्यं दृश्यते । तत्राध्याहारे न किञ्चिन्मानं, साक्षात् = प्रत्यक्षान्वयात् धात्वर्थान्वेयन 'कृ' धात्वर्थ सम्बन्धेनोपपद्यभानस्य = संबद्धस्य "कर्त्तु करणे" इति सूत्रस्याक्षेपेण = क्रियाया अध्याहारेण परस्परासम्बन्धे = स्वान्वय्यन्वयित्वे ( स्वं = कर्त्रादिः तदन्वयी कृञर्थो व्यापारः तद्भिन्न पदार्थस्याध्याहोरो न कर्त्तव्यः प्रवृत्त्ययोगात् = सूत्रस्य प्रवृत्तेर्योगो नास्ति ।

करणे' सूत्र से कर्ता और करण के साथ कृदन्त का सामर्थ्य ( परस्पर सम्बन्ध ) हो तो समास होता है । तो भिद्, त्रा धातु में व्यापार के स्वीकार विना क्रिया में अन्वय रूप कारकत्व ही नही बनेगा । तो समास भी नहीं होगा । जिसके लिये सामर्थ्य का होना आवश्यक है । जैसे पुरुषो राज्ञो भार्या देवदत्तस्य के परस्पर में सामर्थ्य (सम्बन्ध) न होने से समास नहीं होता । वैसे प्रसङ्ग में भी न होगा । अतः व्यापार को धात्वर्थ मानिये ।

नञ् का सीधा द्रव्य के साथ सम्बन्ध नहीं है

न चैकस्यां क्रियायामन्वयित्वमेव सामर्थ्यमिति शङ्क्यम्, 'असूर्यम्पश्या' इत्यादेरसमर्थसमासत्वानापत्तेः। इष्टापत्तौ 'कृतः सर्वो मृत्तिकया' इत्यत्र 'कृतसर्वमृत्तिकः' इत्यापत्तेः। न चात्र समासविधायकाभावः "सह सुपा" इत्यस्य सत्त्वात्। अन्यथाऽसमर्थसमासोऽपि विधायकाभावान्न स्यादिति।

o

पदार्थयोरेकस्यां क्रियायामन्वयरूपं सामर्थ्यं समर्थयितुमाह न चेति एक क्रियान्वयित्व मेव=यथा (धवखदिरौ छिन्धि) इति द्वन्द्वे धवखदिरयोः परस्परान्वयाभावेऽपि, एकस्यां छिन्धि क्रियायामन्वयं कृत्वा सामर्थ्यं प्रति षाद्यते। एवं नखैः कृत्वा भिन्न इत्यादावपि नख पदार्थभिन्न पदार्थौ करणकर्मकारकौ सन्तौ कृञर्थं क्रियायामन्वयितौ भवतस्ततो न दोषः तदाह 'असूर्यम्पश्याः। इति अत्र भाष्यकारेण (असमर्थसमासः) स्वीकृतः। तत्रासमर्थ समासानापत्तेः=अनुपपन्नो भविष्यति। यतो न सूर्यं पश्यतीत्यत्र एक क्रियान्वयित्वरूपं सामर्थ्यं तत्राप्यस्ति। नञर्थो यो निषेधस्तस्य कर्म सूर्यमिति। तस्य क्रियायामन्वयेनसामर्थ्यं सन्तिष्ठते। परन्तु क्रियायामन्वया भावात् 'असमर्थं' इति मन्यते तदेव विरोधः।

आदिना=अश्राद्ध भोजी, 'अ पुनर्ज्ञेयाः श्लोकाः' इत्यादीनां ग्रहणम्। यदि इष्टापत्तौ=असमर्थं समासस्यानुपलब्धिरिष्टं मन्यसे तर्हि कृतः सर्वो मृत्तिकया' इत्यत्रापि समासस्यापत्तिः स्यात्। यतः सर्व पदार्थस्य कर्मत्व सम्बन्धेन मृत्तिकायाकरणत्व सम्बन्धेन कृत इत्यत्रान्वयः। एक क्रिया-

न कहिए नखैर्भिन्नः आदि में क्रिया का अध्याहार करके कारक का सम्बन्ध जुड़ेगा। कृत् के साथ सामर्थ्य जम जायगा। जैसे 'दध्योदनः' में सिद्ध का 'गुडधाना में मिश्र शब्द का अध्याहार करके संयोजन और समास किया ही जाता है। अन्यथा अध्याहार के बिना अन्नेन व्यञ्जनम् और भक्ष्येण मिश्री करणम् से समास नहीं होगा सामर्थ्य का अभाव होने से। ऐसा नहीं कह सकते। दध्योदन; इत्यादि में विध्यानर्थ क्यात्=समास विधायक शास्त्र के व्यर्थ होने के भय से अगत्या=कोई चारा न चलने से अध्याहार स्वीकार हो सकता है। हरिकृतम् इत्यादि स्थल में तो साक्षात्-प्रत्यक्ष रूप धातु के अर्थ में उन्वय से उपपादित की जाने वाली प्रवृत्ति कराया गया। 'कर्तृ करणे' सुत्र की प्रवृत्ति में आक्षेप (अध्याहार) द्वारा परम्परा सम्बन्ध का कोई प्रसङ्ग नहीं है।

न कहिए एक क्रिया में जिसका अन्वय हो उसे सामर्थ्य कहते हैं। इस शङ्का पर बोले—भाष्य कारादि ने असूर्यंपश्या इत्यादि में असमर्थ समास स्वीकार किया है आप का एक क्रियान्वयित्व रूप सामर्थ्य (सूर्यं न पश्यति) सूर्य को नहीं देखती है)

किं च भावनायास्तिङर्थत्वे 'भावयति घटम्' इतिवद् 'भवति घटम्' इत्यपि स्यात्, धात्वर्थफलाश्रयत्वरूपकर्मत्वसत्त्वात्। न चाख्यातार्थव्यापाराश्रयत्वेन कर्तृत्वात्तत्संज्ञया कर्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम्, आख्यातार्थव्यापाराश्रयत्वस्य कर्तृत्वे 'पाचयति देवदत्तो विष्णुमित्रेण' इत्यत्र विष्णुमित्रस्याकर्तृतापत्तौ तृतीयानापत्तेः 'ग्रामं गमयति देवदत्तो विष्णुमित्रम्' विष्णुमित्रस्याकर्तृतापत्तौ ग्रामस्य गमिकर्मतानापत्तेश्च। तथा च 'ग्रामाय गमयति देवदत्तो विष्णुमित्रम्' इत्यपि न स्यात्, "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" इति गत्यर्थकर्मण्येव चतुर्थीविधानात्। एतेन णिजन्ते आख्यातार्थं उभयं, तदाश्रयत्वाद्देवदत्तयज्ञदत्तयोः कर्तृतेत्यपास्तम्।

o

न्वयरूपं सामर्थ्यमादाय अत्रापि समासः सम्भाव्येत्। अत्रेष्टापत्तिर्वक्तुं न शक्यते। तत्रासमासस्य सर्वसम्मतत्वात् समास विधायकं सूत्रं नास्ति, इति वक्तुं न शक्यते। "सह सुपा" इत्यस्यास्तित्वात्। अन्यथा = सहसुपा इत्यस्या भावेऽसमर्थ समासस्यापि विधायकं किञ्चिच्छास्त्रं न सम्भाव्येत्।

भावनायाः = व्यापारस्य तिङर्थत्व स्वीकारे—यथा भावयति घटमित्यत्र घटस्य भूधात्वर्थोत्पत्तिरूपफलाश्रयत्वात् कर्मसंज्ञा जायते. तथैव घटोभवतीत्यत्रापि घटस्य उत्पत्ति रूप फलाश्रयत्वात् कर्मसंज्ञा मा भूदिति। सत्तारूपफलाश्रयसत्वात् भवति घटमिति वाक्यमपि मा स्यात्। न च

यहाँ भी है तो असमर्थ समास को कहना यहाँ असङ्गत होगा। यदि यह कहिये कि असमर्थ समास का न माना जाना इष्ट है। तो कृतः सर्वां मृत्तिकथा' यहाँ समास नहीं होता है। परन्तु एक क्रिया में अन्वय रूप सामर्थ्य होने से जैसे सर्व पदार्थ का कर्म रूप से कृतः में अन्वय, मृत्ति का करणरूप से सम्बन्ध कृतः क्रिया में लक्षण घट रहा है। तब सामर्थ्य समझ कर समास सम्भव होने से कृत सर्वमृत्तिकः यह आपत्ति आयेगी। न कहिए असमर्थ समास का विधायक कोई सूत्र नहीं है। तो 'सह सुपा' असमर्थ के लिये गरज रहा है। अन्यथा—यदि 'सह सुपा' सूत्र न होता तो विधायक सूत्र के अभाव में असमर्थ समास भी सम्भव न होता।

और भी भावना को तिङ् का अर्थ मानेंगे तो भावयति घटम् में जैसे घट के उत्पत्ति रूप फल का आश्रय होने से कर्म संज्ञा और द्वितीया होती है। वैसे घटो भवति वाक्य में घट में भी। भू धातु का अर्थ उत्पत्ति रूप फल है उसका आश्रम होने होने से कर्म की सत्ता सत्य सिद्ध हो रही है। घटम् भवति यह प्रयोग सम्भाव्य है। यदि कहिए कि आख्यात अर्थ जो व्यापार है उसका आश्रय होने से घट को कर्तृ संज्ञा होगी। उससे कर्म संज्ञा का बाध (अवरोध) होने से द्वितीया नहीं होगी।

आख्यातर्थो ( तिङर्थो ) व्यापारः, तस्याश्रयः कार्तृसंज्ञकः, तेन कर्मसंज्ञा वाध्यते । ततो न द्वितीयेति वाच्यम् तन्न, यदि आख्यातार्थ व्यापारस्याश्रयः कर्ता मन्यसे, तर्हि यत्र तिङर्थ व्यापाराश्रयस्तत्रैव 'कर्ता' इति स्यात् दोषश्चापतीति । यथा—देवदत्तः विष्णुमित्रेण पाचयति । अत्र तिङर्थं व्यापाराश्रयो देवदत्तो न तु विष्णुमित्रः । तत्र कर्तुरभावात् कर्तृकरणे तृतीया न स्यात् अकर्तृतापत्तौ = व्यापाराश्रयाभावात् कर्तृसंज्ञाया अभावे । वैयाकरण मतेतु णिजर्थं व्यापारो भिन्नस्तदाश्रयो देवदत्तः पचधात्वर्थं व्यापारो भिन्नस्तदाश्रयो विष्णुभित्रस्तेन कर्तरि तृतीया सुतरां जायते । न च विष्णु मित्रस्याकर्तृत्वेऽपि करणतृतीयया भाव्यम् तदाह—ग्रामं गमयतिति तिङर्थ व्यापार स्वीकारे विष्णुमित्रः ग्रामं गच्छति, देवदत्तः तं प्रेरयतीत्यत्र अण्यन्तावस्थायाः कर्ता ण्यन्तावस्थायां कर्म इति नियम्यते । तेन तिवर्थं व्यापाराश्रयो देवदत्तो, नतु विष्णुभित्रः तेन तस्य अकर्तृता पत्तौ = कर्तृसंज्ञाया अभावे ग्राम इति गम धातो कर्म न सम्भवेत् । प्रयोज्यस्य स्वातन्त्र्यार्थक कर्तृपदेनाग्रहणेऽपि प्रयोजके उक्तस्वातन्त्र्यसत्वेन प्रयोजकनिष्ठ व्यापारजन्यं फलमावश्यकम् । तत्र प्रयोजके तिङर्थव्यापाराश्रयत्वरूप स्वातन्त्र्येसत्यपि तत्रस्थव्यापार जन्यं फलं प्रव्योज्य व्यापाररुपैव भविष्यति । प्रयोज्य व्यापार जन्यं फलञ्च संयोगादिः स्यात् । ग्रामवृत्ति संयोगरूपे फले प्रयोजक कर्तृस्थब्यापार-जन्य स्याभावेऽपि साक्षादुत्पाद्यत्व = परम्परयोत्पाद्यत्वरूपोभयसाधारणं

इस तर्क पर अनेक दोष देते हैं। जैसे तिङर्थ व्यापार के आश्रय को यदि कर्ता कहेंगे तो पाचयति देवदत्तो विष्णु भित्रेण इस वाक्य में तिङर्थ व्यापार का आश्रय देवदत्त है विष्णुमित्र नहीं जिसको कर्ता मानकर कर्तरि तृतीया होती है। अब तृतीया न ही होगी 'ग्रामं गमयति' वाक्य में बिष्णु मित्र को अण्यन्तावस्था का कर्ता मानकर ण्यन्ता वस्था में कर्मसंज्ञा है। तिङर्थ का आश्रय न होने से कर्तृ संज्ञा नहीं होगी तो ग्राम गम धातु का कर्म भी नहीं वनेगा। तथा च—यदि ग्राम गम धातु का कर्म न होगा तो, गम धातु के कर्म में (चेष्टा रहने पर अध्वा ( मार्ग होने पर ) चतुर्थी का विधान होता है सो न हो पायेगा। ऐतेन = उक्त तर्क से (जो कहते थे कि ग्रामाः यह प्रयोग निर्वाह के लिये णिजन्त प्रयोग में प्रयोजक व्यापार और प्रयोज्य व्यापार दोनों ही आख्यात के अर्थ हैं। दोनों व्यापारों के आश्रय देवदत्त और यज्ञदत्त के होने से दोनों में कर्तृ संज्ञा होगी और ग्राम गम धातु का कर्म हो सकता है वो हार गये। क्योंकि आख्यातार्थ व्यापार के आश्रय को कर्ता स्वीकार करने पर सर्वत्र अनेक अति प्रसङ्ग दोष होगा। जैसे विष्णु मित्र में कर्ता तिङ से उक्त और उक्ते प्रथमा होगी तृतीया न ही होगी परिणाम में चतुर्थी भी नहीं होगी।

**किं च तस्मिन्प्रयोगे य आख्यातार्थ इत्यस्यावश्यकत्वेनाख्यातशून्ये 'देवदत्तः पक्ता' इत्यादौ देवदत्तस्याकर्तृतापत्तेरिति दिक् ।**

o

योज्यत्वं गृह्यते। प्रयोज्य कृर्तृ व्यापार जन्य संयोग रूप कलाश्रयः सन् ग्रामो द्वितीयाभाग्भवति । ततो न दोषः ।

तथाच—णिच्प्रकृतिकगम धात्वर्थनिरुपित कर्मत्वाभावे ग्रामाय, इति वाक्यघटकग्रामे कर्म संज्ञाया अभावे गत्यर्थ कर्मणीति सूत्रेण गमिकर्मत्वानापत्तेः। चतुर्थी विधानमपि न स्यात्। यतो हि नास्ति गत्यर्थेण कर्म, धात्वर्थाभावात् । णिचिसति आख्यातार्थः कर्ता प्रयोजक व्यापाराश्रयो भविष्यति। कर्तृवृति व्यापार प्रयोज्य फलाश्रयत्वंनास्ति। अतो नाख्यातार्थो व्यापारः ।

एतेन=आख्यातार्थव्यापाराश्रयः कर्ता इति विचारविगमेन ( निरासेन ) णिजन्तस्थले उभयम्=प्रयोज्यप्रयोजकव्यापारद्वयम् तदाश्रयत्वात्= आख्यातार्थस्य व्यापार द्वयाश्रयत्वात् देवदत्त, यज्ञदत्तयोः द्वयोः कर्तृतेत्यपास्तम् ।

यदि आख्यातार्थं व्यापाराश्रयत्वं कर्तृत्वं मन्यसे तर्हि सर्वत्रातिप्रसङ्ग दोषः समापतति। तस्मिन् प्रयोगे=देवदत्तः चैत्रं ग्रामं गमयतीति प्रयोगे यस्तिङर्थ-व्यापाराश्रयः, स कर्ता इत्यर्थस्यावश्यकत्वंस्यात्, आख्यातशून्ये= आख्यातस्य अभावस्थले ( कृदन्तस्थले ) 'देवदत्तः पक्ता' इत्यादौ यत्र नास्ति आख्यातार्थस्तत्रापि कर्तुः प्रतीति जायते। किन्तु कर्तुः प्रतीति न भविष्यति। देवदत्तः कर्ता इत्यस्य वोधो न भविष्यति।

ननु 'कर्तरि कृत्' सूत्रारम्भसामर्थ्यात् कर्तृत्वं लभ्यताम्। अथवा कृत्प्रत्ययस्य कर्तरि व्यापारे च शक्ति स्वीकृत्य दोषो निराकर्तव्यस्तन्न, क्लिष्टकल्पनायाः सम्भवात् एतदरुचिं मत्वाह दिगिति—दिगगर्थस्तु क्लिष्ट कल्पनापेक्षया धातोरेव फल व्यापारोभयार्थं कत्वं स्वीकरणीयं, लाघवात् ।

**और भी यदि तिङर्थ व्यापाराश्रय को कर्ता कहोगे तो आख्यातार्थाश्रयः कर्ता यह कहना आवश्यक होगा। इससे अनेक अति प्रसङ्ग दोष होगे। जैसे पक्ता देवदत्तः। यहाँ का कर्ता आख्यातार्थ का आश्रय नहीं है। अतः आख्यत शून्य स्थल में कर्ता की भारी गड़बड़ी होगी। देवदत्त को कर्म संज्ञा नहीं होगी।**

भावना धातु का अर्थ होता है।

सूत्रानुपपत्तिमपि मानत्वेन प्रदर्शयन्नुक्तार्थस्य स्वोत्प्रेक्षितत्वं निरस्यति–किञ्चेति। धातुसंज्ञाविधायकं "भूवादयो धातवः" इति सूत्रं, तत्र भूश्च वाश्चेति द्वन्द्वः, आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः—आदिश्च आदिश्च आदी, ततो भूवौ आदी येषान्ते भूवादय इति बहुव्रीहिः। तथा च भूप्रभृतयो वासदृशा धातव इत्यर्थः। तच्च क्रियावाचकत्वेन। तथा च क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वं पर्यवसन्नम्। अत्र ति क्रियावाचित्वमात्रोक्तौ वर्जनादिरूपक्रियावाचके 'हिरुक्' इत्यादावतिव्याप्तिरिति भ्वादिगणपठितत्वमुक्तम् ॥९॥

व्यवस्था – जो गणपाठ में पढ़ी है, केवल वही / नाना – अलग करना

धात्वर्थो व्यापार एव। अन्यथा 'भूवादयो धातव' इत्यस्य वैयर्थ्यापत्तिः स्यात् तदाह– सूत्रानुपपत्तिमपि धातुसंज्ञाविधायकं शास्त्रमपि धात्वर्थव्यापारे प्रमाणं प्रस्तौति मानत्वेन = प्रमाणरूपेण प्रस्तावयन् उत्तरार्थस्य = फलव्यापारयो बोधको धातुरिति प्रतिपादितार्थस्य स्वोत्प्रेक्षितत्वं = स्वस्य = वैयाकरणसम्मतस्यैव ( नममैव ) किन्तु सर्वेषां स्वीकरणीयोऽयं विचार इत्युत्प्रेक्षा। अतोऽख्यातार्थोव्यापार इति भी मांसकमतं तत्कल्पनायाः विषयत्वञ्च निरस्यति कारिकायां 'किञ्चेति क्रिया वाचकतां विना धातुत्वमेव नः। क्रियावाचकतां विना धातु संज्ञा न निर्वर्तिष्यते इति तदर्थः। तथाहि–

धातुसंज्ञासमुपस्थापकं शास्त्रं 'भूवादय इति भूश्च वाश्चेति द्वन्द्वः। आदिश्च, आदिश्च अदीत्येकशेषः। अत्रैक आदिशब्दों व्यवस्थावाची। आरम्भणं व्यवस्था, प्रथमावधिः। 'भू' इत्यत्र च आदि शब्दः स व्यवस्थायां

व्यापार को धातु की आवश्यकता में सूत्र की असिद्धि भी प्रमाण रूप से प्रस्तुत करते हैं कि पूर्वोक्त विचार केवल हमारा ही नहीं अपितु सार्वजनिक विचार हैं। केवल स्वोत्प्रेक्षा को निरसा करने के लिये बोले किञ्च, क्रिया वाचकतां बिना धातुत्वमेवनः। क्रिया वाचकता के बिना धातु संज्ञा ही नहीं होगी। धातु संज्ञा का विधान करने वाला सूत्र भूवादयो धातवः है जिसका सूत्रार्थ यों है कि भू का वा के साथ द्वन्द्व समास और एक आदि शब्द व्यवस्था वाची है दूसरा प्रकार (वार्चा) दोनो आदि शब्द में एक शेष हुआ भूवा आदि में जिसके बहुव्रीहिः। व्यवस्था वार्चा आदि शब्द का भू में अन्वय। पकार (सदृश) वार्चा आदि शब्द का वा में अन्वय। तथाच भू इत्यादि जो वा के सदृश है वों धातु संज्ञक हों। यहाँ सादृश्य क्रिया वचकता रूप से ग्राह्य होगा। लक्षण यह होगा कि जो क्रिया का वाचक हो और भ्वादि गण में पढ़ा हो उसे धातु कहते। यह सुसम्भव हुआ। यहाँ क्रिया का वाचक धातु है इतना ही लक्षण करते तो वर्जन ( निवारण ) आदि क्रिया का वाचक जो हिरुक् है नाना है उस अलक्ष्य में लक्षण के जाने से अति व्याप्ति दोष होने लगेगा। उसके परिहार के लिये भ्वदिगण पठितत्व अंश का निवेश किया।

वर्तते इति भाष्यम् । भू इत्यारम्य पठिताः ये शब्दास्ते भ्वादयः । अपर= आदि शब्दः प्रकारः "वा" इत्यत्र य आदिशब्दः स प्रकारे वर्तते' इति भाष्यम् । भू शब्दस्य व्यवस्थावाचिन्यादिशब्देऽन्वयः । वाइत्यस्य प्रकार-वाचिन्यादि शब्देऽन्वयः ।

भूर्वा आदी येषां ते भूवादय इति बहुव्रीहिः । भूप्रभृतयो धातवे । वा सदृशाः=प्रकाराः सन्तु, धातुत्वेन सकल धातुवाच्याः भवन्तु । तच्च= सादृश्यञ्च क्रियावाचकत्वेन=साध्याक्रियाबोधकत्वेन ग्राह्यम् । अत्र नियामकम्—सादृश्यप्रतियोगितावच्छेदकीभूतो यो धर्मस्तद्व्यापकी भूतो योधर्मस्तेनैव धर्मेण सादृश्यं गृह्यते । यथा चन्द्रवन्मुखमित्यत्र, उपमानो-पमेयगतसमानगुणस्य मुखमित्युपमेये ( अनुयोगिनि ) सति चन्द्र उपमानम् ( प्रतियोगीति ) तस्यावच्छेदको ( भेदको ) धर्मश्चन्द्रत्वम् । तस्य व्यापको धर्म आह्लादकत्वम् यथा 'क्षत्रियवद् ब्राह्मणोऽयम्' अत्र वीरत्व धर्मेण सादृश्यं व्यापको धर्मः । तथैव 'वा' इत्यस्य सादृश्यं 'भू' इत्यादि गृह्यते । तत्र सादृश्य प्रतियोगी 'वा' इति तद्भेदको धर्मो वात्वम्, व्यापको धर्मः क्रियावाचकत्वम्, नतु शब्दत्वं घटत्वं पटत्वं ग्राह्यम् । एवं क्रियावाचकत्वे-सति=व्यापारार्थोपपादकत्वे सति भ्वादिगणे विद्यमानत्वं धातुत्वम् । एव सुमम्पन्नोऽयं सूत्रार्थः ।

ननु धातुलक्षणे निवेशद्वयभक्तत्वैकस्यैव समावेशं कुर्यात्तर्हि को दोषः । तदाह–क्रियावचित्वमात्रोक्तौ=अर्थात् केवलं क्रियावाचको धातुरित्येवं लक्षणं स्यात्तर्हि वर्जनादि अपक्रियावाचके=वर्जनाद्यर्थक व्यापारार्थबोधके हिरुक्, पृक्षक् नाना, इत्याद्यव्यये अतिव्याप्ति = व्यक्ति = लक्षणमति क्रान्तः=लक्ष्यस्योलङ्घनमपि स्यात् । वस्तुतः कालान्वयित्वं क्रियात्वं तेन तदर्थस्य साक्षात्कालेऽनन्वितत्वेन कारकान्वयितावच्छेदकधर्मवत्वं हिरुगादावभावात् दोषाभावः । अत आदिना शिश्ये इत्यादि वारणं प्रयो-जनम् । तस्मात् भ्वादि गण पठितत्वमित्यंशो देयः ॥९॥

**यदि भ्वादिगण में पठित हो । इतना ही धातु का लक्षण करेंगे तो सर्वनाम 'या' अव्ययादि 'वा' इत्यादि को भी धातु संज्ञा का प्रसंग होगा । अतः भ्वादिगणपाठमात्र लक्षण युक्त नहीं है यह भाष्य में स्पष्ट है ।**

**जैसे—सर्वनाम का उदाहरण या पश्यसि यहाँ यत् शब्द से टाप पररूप आदि करके बना है । यह या पाप्रापणे के सदृश है अतः धातु संज्ञा हो जायगी । आतो**

तावन्मात्रोक्तौ चाह—

सर्वनामाव्ययादीनां यावादीनां प्रसङ्गतः ।
न हि तत्पाठमात्रेण युक्तमित्याकरे स्फुटम् ॥१०॥

गणपठितत्वमात्रोक्तौ सर्वनामा यो 'या' तस्यापि धातुत्वं स्यात् । तथा च 'याः पश्यसि' इत्यादौ "आतो धातोः" इत्यालोपापत्तिः । ननु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणान्न सर्वनाम्नो ग्रहणं, तस्य लाक्षणिकत्वात्, इत्यत आह—वेत्यादि । अव्यये 'वा' इत्यादावतिप्रसङ्गस्तादृशस्यैव गणेऽपिपाठेन निर्णयासंभवात् । तथा च विकल्पार्थको 'वाति' इति प्रयोगः स्यादिति भावः । न च गतिगन्धनाद्यर्थनिर्देशो नियामकः, तस्यार्थानादेशनादिति भाष्यपर्यालोचनयाऽऽधुनिकत्वालाभात् ॥१०॥

o

तावन्मात्रोक्ता=भ्वादि गण पठित्वमात्रोक्तौ क्रियावाचकत्वांशस्याभावे । सर्वनामाव्ययादीनां=सर्वनाम 'याः पश्यसिः' इत्यादौ पच्छन्दान्निष्पन्नो 'या अव्ययं=वा, मा, नु इत्यादीनां प्रसङ्गतः-प्रयोगप्रसङ्गात् धातु संज्ञा सम्भाव्येत (धातुत्वंस्यात्) तथाच=तथाहि धातु संज्ञा या इत्यस्य सत्वे 'आतो धातोरित्ति सूत्रेण विश्वप इव आकार लोपापत्तिः स्यात् । अतः क्रियावाचकांशोऽपि लक्षण कुक्षौ प्रवेष्टव्यः । ननु 'या', वा' इत्यादौ धातुसंज्ञायाः दोषवारणं लक्षणप्रतिपदोक्तपरिभाषयैव भविष्यति । तेन या इत्यादि सर्वनाम्नां वा इत्याद्यव्ययानां ग्रहणन्न भविष्यति । यतो हिलक्ष्यते=अन्वाख्यायते, परिनिष्ठीयते साधुतां संसाध्यते शब्दोऽनेनेति लक्षणं सूत्रम् । तदनुसन्धानरूपेक्ष्यं लाक्षणिकं, यद्वा लक्षणेन=सूत्रेण निष्पन्नं सिद्धीकृतं लाक्षणिकम् । एवं 'वा' इत्यादीनां लाक्षणिकत्वात् सूत्रैः साधितत्वात् तदाह- वा इति । अव्यये वा इत्यादावति प्रसङ्गः प्राप्नोति । वा, मा, नु इत्याद्यव्यये यत्र विकल्पार्थः धातोः सूत्र से आकार का लोप होने लगेगा । न कहिए आकार लोपक सूत्र में प्रतिपदोक्त (साक्षादुच्चरित) का ही ग्रहण होने से सर्वनाम का ग्रहण नहीं होगा । क्योंकि वह लाक्षणिक है । अतः भ्वादिगण पठितत्व मात्र लक्षण करने से कोई दोष नहीं है इस अरुचि पर बोले वा इति । जो अव्यय है उस वा शब्द में आपत्ति होगी । तादृशस्यैव=अव्यय के सदृश ही वा का गण मे पाठ है इसका निर्णय असम्भव है । अव्ययार्थक वा शब्द को धातु संज्ञा होने से वाति यह प्रयोग भी होने लगेगा । यदि कहिए कि गति अर्थ गन्धन अर्थ ही निर्णायक होगा क्योंकि गण में वा गति गन्ध नयोः पढ़ा है । यह अर्थ अव्यय का व्यावर्तक बनेगा । तस्य=गणपाठ में धातुओं के अर्थों का अनादेशनात्=देपदेश न होने से इस भाष्य की समीक्षा से सिद्ध होता है कि धातुओं के अर्थों का उपदेश आधुनिक है मुनित्रयेतर से उपादिष्ट है ॥ १० ॥

'निषेधः-निश्चयः, इत्याद्यर्थप्रतीतिः लिङ्गसंख्यान्वयश्च तत्सर्वं धातुसंज्ञा संजाते सति न स्यात्। अधातोः पर्युदासे सम्प्रवृत्त सति प्रातिपदिकत्वानापत्तौ स्वाद्यनुत्पत्तिः = पदत्वानापत्तिः। 'अपदन्न प्रयुञ्जीत' इति भाष्य विरोधश्च। एतादृशोऽति—प्रसंगदोषः समापतति। तादृशास्यैव = वा सदृशस्यैव गणे (भ्वादिगणे) पाठोऽस्तीति निर्णयो न सम्भाव्यते। यस्य कस्यापि वा इत्यस्य ग्रहणं भविष्यति। तथा सति विकल्पार्थक वाशब्दस्यापि 'वाति' इति प्रयोगापत्तिः स्यात्। अतो भ्वादिगणपठितत्वं देयम्।

न च द्वयोः वा शब्दयोः नियामको = भेदको 'वा' गतिगन्धनाद्यर्थौ भविष्यति। यदि गणे पठितानामेव धातुसंज्ञा भविष्यति तर्हि धातूनामर्थ निर्देशो व्यर्थः स्यात्। व्यर्थः सन् ज्ञापयति यत् निर्दिष्टार्थानामेव धातु संज्ञा भवति। तन्न, तस्य = धातूनामर्थं निर्देशस्य अनादेशनात् सत्तादेरकथनात्। भाष्ये 'भूवादयः' सूत्रे परिमाण ग्रहणं कर्तव्यं कुतः भ्वेध शब्दो न धातुसंज्ञकः किन्तु भू शब्द एव इति भाष्यासंगतिः। यदि भू सत्तायाम् एध वृद्धौ, गणे पठितौ तदा गणे केवलभ्वेधशब्दाभावात् तदसङ्गतिः स्पष्टैव। इत्यादि सम्यक् समीक्षणेनाधुनिकत्वलाभात् = अयमर्थनिर्देशोऽऽधुनिको न त्वार्षः ॥१०॥

ननु मी० मते क्रियापदेन क्रियते या, सा क्रियेति व्युत्पत्त्या फलमेव गृह्यते न तु व्यापार। एतत्समुपपाद्य खण्डयितुमाह नन्विति—क्रियारूपार्थ प्रतिपादकः सन् गण पठितो धातुरिति लक्षणं मन्यते चेत् तर्हि—क्रियैव (फलमेव) धात्वर्थो न तु व्यापार इति। यदि फलवाचकस्य धातुसंज्ञा जायेत तदा भूवादि सूत्रं व्यर्थं स्यात्। सा (स्त्रिया) व्यापार साधिका न भविष्यति। इत्याशङ्काम् आपतितमन्योन्याश्रयं सन्दित्द्य समाधत्ते = सन्देहं निराकुरुपते—

**धातु के लक्षण में—क्रिया का वाचक हो और गण में पठित उसे धातु कहते हैं। इससे धातु का अर्थ क्रिया सिद्ध होती, व्यापार नहीं। तो धात्वर्थ व्यापार यह क्यों? इस शंका के समाधान में बोले धात्वर्थत्वमिति—जो धात्वर्थत्व है वही क्रियात्व है फल है तो फिर क्रियात्व (फल ही) धात्वर्थत्व (फल) रूप है धातु का ज्ञान होने पर ही धात्वर्थ रूप। क्रियात्व का ज्ञान होगा क्रियात्व के ज्ञान में धात्वर्थ का ज्ञान कारण है। फलजनक संस्कार विशेष नाम क्रिया है। जो किया जाय उसे क्रिया (फल) कहते हैं। जिस संस्कार से फल सिद्ध हो उस क्रिया को व्यापार हैं। और व्यापार दोनों धात्वर्थ है धातुत्व-धात्वर्थ के ज्ञान मेधात्वर्थ रूप क्रियात्व का ज्ञान कारण है। और क्रियात्व के ज्ञान में क्रियात्व (फल) से अवच्छिन्न = विशिष्ट**

फलकपाक्रिया होने पर

नन्वस्तु क्रियावाचकत्वे सति गणपठितत्वं, धातुत्वम् क्रिया च धात्वर्थं एव, न व्यापार इति शङ्कां समाधत्ते—

धात्वर्थत्वं क्रियात्वं चेद्धातुत्वं च क्रियार्थता।
अन्योन्यसंश्रयः स्पष्टस्तस्मादस्तु यथाकरम् ॥११॥

प्रश्न - यदि क्रियात्वं धात्वर्थत्वमेव तर्हि धातुत्वग्रहे तदर्थत्वरूपक्रियात्वग्रहः, क्रियात्वग्रहे तदवच्छिन्नवाचकत्वघटितधातुत्वग्रह इत्यन्योन्याश्रय इति उत्तर ग्रहपदं पूरयित्वा व्याख्येयम्। यथाश्रुते चान्योन्याश्रयस्योत्पत्तौ ज्ञप्तौ वा प्रतिबन्धकत्वाभ्युगपमेनासङ्गत्यापत्तेः।

o

धात्वर्थत्वं = फलमेव, क्रियात्वं = क्रियास्वरूपं चेत् तर्हि धातुत्वं = धातुस्वरूपं क्रियार्थता = फलरूपार्थता स्यात्। ततोऽन्योन्याश्रयः = परस्परापेक्षाच स्यात्। तस्मात् = उक्त दोष ग्रस्तत्वात् यथाशास्त्रं = शास्त्रीपदेशानुसार भाष्यप्रमाणानुसारञ्चास्तु ज्ञानम्। यदि क्रियात्वं = क्रियास्वरूपं धात्वर्थमेव = फलमेव तर्हि धातुत्वग्रहे = धातुसंज्ञाज्ञाने धात्वर्थत्व = फलरूपक्रियात्व ज्ञानं कारणम्। एवं क्रियात्वग्रहे = ( कियते = निष्पाद्यते या सा क्रिया। एवं कियते फलं निष्पाद्यते ययासा क्रिया = व्यापारवश। अनया रीत्या विग्रहभेदपुरःसरं क्रियापदं फल व्यापारोभयपरम्। उभयं धात्वर्थः ) तेन क्रियात्वज्ञाने तदवच्छिन्न = क्रियात्वावच्छिन्न क्रियात्व ( फल ) विशिष्ट क्रिया—वाचको विशिष्टो यो धातुः तस्यज्ञाने = पणिनि सङ्केत सम्बन्धेन धातु पदवत्वरूप धातुत्वज्ञानेऽन्योन्याश्रयः = स्वग्रहसापेक्ष्य ग्रहसापेक्ष कत्वमापतति। स च ज्ञप्तौ, उत्पत्तौ, वा जायते। ग्रहपदं पूरयित्वा = ज्ञान सन्निवेशंकृत्वा परम्परापेक्षताया व्याख्यानं, प्रदर्शनं वा कार्यम्। यदि ग्रहपद सन्निवेशं न कुर्यात् तदा धात्वर्थत्वं = फलं कियात्वं = क्रियास्वरूपं धातुत्वं = फलं क्रियार्थता, इत्यनयोः कारिकयोः परस्परापेक्षत्वं दोषावहं स्यात्। यतोऽन्योन्याश्रयः स्थितौ, उत्पत्तौ, ज्ञाप्तौ वा प्रतिबन्धकः =

क्रिया का वाचक धातु से घटित धातुत्व का ज्ञान कारण है। इस प्रकार परस्पराश्रित = अन्योन्याश्रय—एक दूसरे के आधीन रहना, यह स्थिति ग्रह पद को पूरित करके प्रदर्शित की गयी है। यथाश्रुते—यदि ग्रहपद को पूरित न किया जाता, तो धात्वर्थत्व, क्रियात्व। धातुत्व—क्रियार्थता को परस्पर अपेक्षा होती, तो उक्त दोष भी न होगा क्योंकि अन्योन्याश्रय उत्पत्ति या ज्ञाप्ति में दोषाधायक ( दूषण ) होता है। अन्यत्र भूषण है। वह प्रति वन्धक के रूप में स्वीकृत होकर असङ्गति की स्थित न खड़ा कर दे, अतः ग्रह पद का ग्रहण होना चाहिए।

**न चान्यतमत्वं धातुत्वम्, "भूवादयः" इत्यस्य वैयर्थ्यापत्तेरित्यभिप्रेत्याह—अस्त्विति । व्यापारसन्तानः क्रिया, तद्वाचकत्वे सति गणपठितत्वमित्यर्थः । ननु सत्तादीन्फलांशानन्यतमत्वेनादाय तद्वाचकत्वे सति गणपठितत्वं लक्षणमुच्यताम् । धात्वर्थत्वात्तेषां क्रियाशब्देन व्यवहारो भाष्यादौ कृतोऽप्युपपत्स्यते इति चेत् ? न, अन्यतमसध्ये विकल्पस्यापि 'विकल्पयति' इति प्रयोगानुसारात्प्रवेशावश्यकत्वेन तदर्थके 'वा' इत्यव्यये उक्तरीत्या गणपठितत्वसत्त्वेनातिव्याप्तेरिति ॥११॥**

विघ्नकारको भवति दोषाधायकश्च । अन्यत्रतु भूषणम् । यथा त्रिविष्टब्धके=त्रयाणां=दण्डकाष्ठविशेषाणां परस्पराश्रयणं त्रिष्टब्धकं भवति। प्रदीपेतु अन्योन्यमिथुनवृत्तयो गुणः, वर्तिका तैलं ज्योतिश्च, सत्वरजस्तमांसि' इत्यादौ अन्योन्याश्रयः भूषणम् । प्रसङ्गे ग्रह पदं विना नान्योन्याश्रयः सम्भवति । कारिका निर्देशोप्यसङ्गतः स्यात् । यथा श्रुतेतु=ज्ञाने, उत्पत्तौ, ज्ञप्तौ वा श्रुतेन धात्वर्थत्वस्य क्रियात्वस्य च परस्परापेक्षा न स्यात् केवलमुत्पत्तौ ज्ञप्तौ च प्रतिबन्धकत्व=विघ्नकारकत्व मभ्युपगमेन=स्वीकारेण असङ्गत्याप्ते=कारिका निर्देशस्य असङ्गत्यपत्तेः यथा=पृथिविजलयोः परस्परमाधाराधेयभावः, सर्वानुमतस्तथैव धात्वर्थत्वस्य । क्रियात्वे क्रियात्वस्य च धात्वर्थत्वे नास्ति काचन बाधा । तत्र दूषणदान मनचितं स्यात् ।

न च यावन्तो धातुपदव्यवहार्याः गणे पठिताः तान्निर्दिश्यै एकत्र सर्वेषां धातूनां सङ्ग्रहं कृत्वा एषु धातुषु अन्यः तद्भिन्नः तद्भिन्नभिन्नाः धातव इति लक्षणं कारिकायां ग्राह्यम् ततो नान्योन्याश्रयस्तदाह—अन्यतमत्वमिति—अत्र 'ऐषु अन्य' इति विग्रहे जाति प्ररिप्रश्ने डतमच्

**न कहिए अन्यतमत्वं—सम्पूर्ण धातुओं के सङ्ग्रह में यह धातु है, एक एक करके गिना देंगे, अन्योन्याश्रय नहीं होगा वैसा करेंगे तो 'भूवादय' सूत्र की सार्थकता समाप्त हो जायगी । यही सब सोच कर बोले अस्तु यथाकरम्=जैसा भाष्य कहे वैसा करना चाहिए । भाष्य कहता है कि व्यापार का सन्तान=समुदाय ही क्रिया है । ऐसा क्रिया का वाचक हो गण में पठित हो उसे धातु कहते हैं ।**

**न कहिए सत्तादि जो फलांश हैं, यानी धात्वर्थ निर्देश में सत्तार्थक—भूमि फलांश ही वाच्य है, स्पष्ट है । व्यापार तो उपलक्षण तथा भाषित है । अतः अन्यतम शब्द से फलांश जो सभी धातुओं के अर्थ निर्देश में झलक रहा है, उसका वाचक होकर गण में पठित हो, उसे धातु लक्षण मानो । क्योंकि फलांश भी धातु के अर्थ हैं और**

( अतमजर्थो जातिः ) जातिवाचकेषु गणपठितेषु धातुषु अन्यतमः= अन्यः तद्भिन्नः तद्भिन्नभिन्नः सर्वो धातुरिति लक्षणेनान्योन्याश्रयः सम्भवत्येव अथवा भ्वादिभिन्नभिन्नत्वं वोध्यम्। तन्न, तमेव लघुभूतं लक्षणधर्ममादाय धातूद्देश्यकसकलकार्यसिद्धौ धातुसंज्ञाविधायकं भूवादय इति व्यर्थं स्यात् तस्मादाह—कारिकायामस्तु यथाकरमिति। यथायोग्यं शास्त्रानुशासनमनुश्रृत्य वोध्यम् । आकरे=भाष्ये ( व्यापारसन्तानः ) क्रियेत्युक्तम्। तत्र सन्तानः,=सन्ततिः, परिवारः, समूहः, एकस्मिन् धातौ बहुक्रियादर्शनात् ताः उपसर्गयोगेन व्यज्यन्ते। प्रहाराहार संहारः विहारः पारिवारवत अनुभव, विभव, प्रभव सम्भवोद्भवादयोऽनेकार्थकाः धातवो दृश्यन्ते। एवं सर्वत्र, तेन व्यापार सन्तानः क्रिया। एतादृशक्रिया-वाचकत्वेसति धातुगण पठितत्वं धातुत्वम्। तेन सूत्रस्य सार्थक्यं परस्परा-पेक्षाऽभावश्च सिद्धयति।

ननु सत्तादीन्=एध वृद्धौ भू सत्तायां व्रजगतो, इत्यादौ वृद्धिसत्ता-गत्यादीन् फलांशान् अन्यतमत्वेन=एषु फलेषु अन्यः तद्भिन्नभिन्नरूपेणादाय, यतो हि धातु निर्देशे फलांशोऽपि वाच्यः, व्यापारांश उपलक्षणभिति मी० नैथायिकाश्च। तन्मते अर्थापत्या व्यापार आक्षिप्यते। अतःसत्तादि-फलांशवाचकत्वे सति धातुगण पठितत्वं धातुत्वम्।

ननु कथं ज्ञायते क्रियावचनाः पच्यादयः यदेतेषां करोतिना ( व्यापरेण ) सह सामानाधिकरण्यम्' इति भाष्यविरोधस्तदाह धात्वर्थ-त्वात्=फलांशस्य धात्वर्थत्वात् 'कर्मवत्कर्मणा' इति सूत्रे क्रियापदेन फल-स्यैव ग्रहणात् तेषां फलानां क्रियात्वं धात्वर्थत्वपदेन ग्रहणम् व्यवहारो वा भाष्यादौ कृतोऽस्ति। तेन उपपत्स्यते=फलरूपार्थोऽपि सम्पद्यते। तन्न, एषु अन्योऽन्यतम इति लक्षणे 'विकल्पयतीति प्रयोगानुसारात्—विकल्परूप फलस्य प्रवेश आवश्यकः। तस्य 'वाचको वा' इत्यव्ययम्। उक्तरीत्या 'वा' इत्यस्य गणे पठितत्वात् विकल्परूपफलर्थकत्वमादाय धातुसंज्ञा दुर्वारा। तस्मात् 'अन्यतम' लक्षणे सत्तादीन् फलांशान् न ग्राह-यितुं शक्यते। क्रियावाचकत्वे सति गणपठितत्वं धातुत्वमित्येवोच्य-ताम् ॥११॥

क्रिया शब्द से व्यवहार भाषादि ग्रन्थ में किये गये हैं। यह भी युक्त है तो ऐसा नहीं—क्योंकि अन्यतम शब्द के माध्यम विकल्पयति इस प्रयोग के अनुसार विकल्प रूप फल का प्रवेश आवश्यक होगा उसकी वाचकता 'वा' इस अव्यय में भी है। फलांश के अन्यतमत्व की शैली से गण पठितत्व विशेषता के रहने पर भी अतिव्याप्ति दोष अनायास आपधित होगा ॥ ११ ॥

व्यापार से फल उत्पन्न होता है।





व्यापार वाचकस्य

**नन्वस्यैव धातुत्वे 'अस्ति' इत्यादौ क्रियाप्रतीत्यभावादस्त्यादीनां तद्वाचकानामधातुत्वप्रसङ्ग इत्यत आह—** उत्पाद्यता

**अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना।**
**अन्यत्राशेषभावात्तु सा तथा न प्रकाशते ॥१२॥**

**अस्त्यादौ 'अस् भुवि' इत्यादौ। धर्म्यंशे—धर्मिभागे। भाव्ये— भाव्यत्वेन विवक्षिते। अस्त्येव–प्रतीयत एव।**

o

अस्यैव = क्रियार्थप्रतिपादकत्वे सति भ्वादिगणपठितस्य धातुलक्षणस्यैव स्वीकारे ( एव पदेन फलमात्रस्य धातुत्व निरासः ) 'अस भुवि' धातौ केवलं जातिरूपासत्ता कालसम्बन्धिनीसत्ता वा प्रतीयते न तु कश्चन व्यापारः। अतः क्रियायाः प्रतीत्यभावात् अस्त्यादीनां धातूनां व्यापारावाचकानां क्रियाया अप्रतिपादकानामधातुत्वप्रसङ्गः, = धातुसंज्ञायाः प्राप्तिरेव न स्यात्। क्रियावाचकत्वाऽभावात्। अत आह अस्त्यादाविति– 'अस भुवि' इत्यादि धातुषु धर्म्यंशे = (फले) धर्मिभागे धर्मः फलं तदस्त्यस्मिन्निति धर्मि कर्ता। यद्यपि फलाश्रयः कर्म भवितुमर्हति। तथापि अकर्मकधातुयोगे फलाश्रयो व्यापाराश्रयश्च कर्तैव भवति। फलव्यापारयोर्यत्र सामानाधिकरण्यं तत्राकर्मकः। 'धर्मिभागे' इत्यस्य धर्मिणि ( कर्तरि ) विशेषणतया भासमाने फले प्रधानं = जनकः साध्यत्वेन प्रतीयमानो व्यापारः तस्यभाव्ये = भवनीये भावनार्थनिष्पादनीये 'अस्' धातौ 'भावना' अस्त्येव, प्रतीयत एव भाव्यत्वेन विवक्षा अस्त्येव। अशेषभावात् = दुग्धेमिश्रं जलमिव तयोः समानाधिकरण्यात्प्रतीतिर्न जायते। यथा— 'सततो गतो न वा' इति प्रश्ने 'ऽस्ति' इत्युत्तरं भवति। अत्र सत्तारूपं यत्फलं तदनुकूलभावनायाः बोधो जायत एव। अत्मधारणानुकूलक्रियारूपा, उत्पत्यनुकूल व्यापाररुपा स्वरूपधारणानुकूला भावना वर्तते एव।

**निश्चय रूप से क्रिया वाचक को ही धातु संज्ञा स्वीकार करना है 'अस्ति' इत्यादि में (यानी अस् धातु में ) क्रिया का ज्ञान न हो रहा है, तो अस धातु में क्रिया वाचकता न होने से धातु संज्ञा का प्रसङ्ग ही नहीं उठता! इसके समाधान के लिये बोले अस्त्यादीवति–अस्ति, आदि पद से शेते, एधते इत्यादि शब्दों के धर्मी = कर्ता जो व्यापार का आश्रय होता है, उसमें भावना रहती ही है। कहीं वह धर्मी भाव्ये = भावी रूप से विवक्षित रहता है। 'ति' जहाँ होगा वहाँ व्यापार भी रहेगा जो धातु का अर्थ है। अकर्मक स्थल में अशेष ( अपृथग्भाव ) होने से फलव्यापार के दुग्ध जल की तरह मिश्रण होने से जैसे जल की प्रतीति नहीं होती है वैसे फल व्यापार की भी**

अयमर्थः-'स ततो गतो न वा' इति प्रश्ने महता यत्नेन 'तिष्ठति' इति प्रयोगे सत्तारूपफलानुकूला भावना प्रतीयत एव, उत्पत्त्यादिबोधने तु सुतराम्,

रोहितो लोहितादासीद् धुन्धुस्तस्य सुतोऽभवत् ।(रामायणे)

इत्यादिदर्शनात् । किं चात्र भावनाविरहे लडादिव्यवस्था न स्यात्, तस्या एव वर्तमानत्वादिविवक्षायां तद्विधानात् । अस में व्यापार न होने से लट् भी उत्पन्न नहीं होगा ।

क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका ।

इति वाक्यपदीयमिति । नन्देवम् 'अस्ति' इत्यत्र स्पष्टं कुतो न बुध्यत इत्याह-अन्यत्रेति ।

०

भूधातोर्यत्रोत्पत्यनुकूलव्यापारार्थंप्रतीतिस्तत्र तेदवार्थः । फलव्यापारयोः स्पष्टप्रतीतिश्च । प्रमाणश्चात्र-रोहितः लोहितात् आसीत्=अभवत्, उदपद्यत, अजायतेत्यर्थः तस्य (रोहितस्य) पुत्रो धुन्धुरभवत् उत्पत्यनुकूल-व्यापाराश्रयो जातः । धान्यानां भवने क्षेत्रे, 'तत्रभव' इत्यादौ प्रादुर्भावार्थको भू शब्दः ।

ननु आश्रयताया धात्वर्थकल्पनस्याग्रहमूलकत्वेऽपि रोहितो लोहिता-दासीदित्यादि वाक्ये उत्पत्तिरूपफलमात्रार्थकत्वेऽपि । रोहिताश्रयिका भूतानद्यतनोत्पत्तिरित्यभीष्टलाभात् इत्यरुचेराह--किञ्च--'असभुवि' इत्यत्र भावनाविरहे=क्रियावाचकत्वाभावे लट्-शप् इत्यादि व्यवस्था न स्यात्, तस्या एव=भावनाया एव (एवकारेणफलव्यवच्छेदः) सत्वे वर्तमान काल विवक्षायां धातोर्लट् जायते । तदा वर्तमानत्वं व्यापारगतमिति निश्चीयते । अत्रहरिसम्मतिं सन्दधाति कौण्डभट्टः । कालः क्रियाभेदाय भवति । भाष्येऽपि नान्तरेण क्रियां भूतभविष्यद् वर्तमानाः कालाः व्यज्यन्ते । कालास्तु व्यापारे विशेषणं, लडाद्यर्थं कालः क्रियामात्रभेदकः । विभक्त्यर्थं-रूपा संख्यातु सर्वस्य आख्यातार्थस्य—प्रातिपादिकस्य वा भेदिका भवति ।

प्रतीति नहीं होती । अतः 'अस भुवि' इत्यादि धातुओं के धर्मी (कर्तृ) अंश=भाग में भाव्ये=व्यापार होने की जिज्ञासा होने पर क्रिया का प्रकाश होता है । किन्तु सकर्मक की तरह पृथक् ज्ञान नहीं होता है । भाव यह है कि 'वह तब गया कि नहीं । प्रश्न पर बड़े प्रयास से अस्ति (गया है) का प्रयोग हुआ । जिससे सत्ता (अस्तित्व) रुप फल के अनुकूल क्रिया की प्रतीति हो रही है ।

भू धातु से उत्पत्ति रुप फल के अनुकल क्रिया भी बोधित होने से फल और व्यापार की भी प्रतीति होती है । इससे सिद्ध होता है कि दोनों अर्थ भू धातु के है । प्रमाण रोहित लोहित से पैदा हुआ धुन्धु उसका लड़का हुआ । इत्यादि स्थल में उत्पत्ति के अनुकूल व्यापार भी भू धातु का अर्थ है ।

११

अशेषभावात्—भावनायाः फलसमानाधिकरणत्वात् । तथा च भावनायाः फलसामानाधिकरण्यं तत्स्पष्टत्वे दोष इति भावः । नन्वेव 'किं करोति' इति प्रश्ने 'पचति' इत्युत्तरस्येव 'अस्ति' इत्युत्तरमपि स्यादिति चेद् ? इष्टापत्तिः, आसन्नविनाशं कञ्चिदुद्दिश्य 'किं करोति' इति प्रश्ने 'अस्ति' इत्युत्तरस्य सर्वसंमतत्वात् । इतरत्र तु सुस्थतया निश्चिते 'किं करोति' इति प्रश्नः पच्यादिविशेषगोचर एवेत्यवधारणात् 'अस्ति' इति नोत्तरमिति ॥१२॥ अस्ति का पाक के साथ सम्बन्ध है।

o

नन्वेवं=धातोः क्रियावाचकत्व स्वीकारे 'अस्' धातौ स व्यापारः स्पष्टतया कथन्नज्ञायते । तत्र कारणमाह–अन्यत्रेति—अकर्मक स्थले अशेष भावात्=शिष्यते योऽसौशेषः=पृथक् स्थितिः । न शेषोऽशेषः=असम्पृक्तिः सा भवत्यस्मिन्निति अशेषभावः=अपृथक् स्थितिः तस्मात्=फलव्यापार-योरपृथक्स्थानात् भावनायाः फलेन सह समभिव्याहाराधिकरण्यमकर्मकः । लवणपानीययोरिव एकीभवनम् ) तथा व्यापारस्य फलेन सह सामानाधि-करण्यं ( एकाधिकरणवृत्तित्वं ) पुनः तस्य अस्फुटत्वे=फलव्यापारयोः पृथग्बोधे ऽकर्मके धातौ दोषः=प्रतिबन्धकइत्यर्थ ननु किं करोतीति प्रश्ने यथा पचतीत्युत्तर जायते, तथा अस्तीत्युत्तरमपि जायतां को दोषः ? इष्टापत्तेः अस्तीत्युत्तरमपि अभीष्टैव यथा=मरणासन्नं कञ्चित्पुरुषं दृष्टवा पृच्छति किं करोति ? तत्र पचतीव 'अस्ति' इत्युत्तरमपि सर्वसम्मतम् । तेन 'अमृत' इति ध्वन्यते । इतरत्र=अन्यसमये सुस्थतया=यदा स स्वस्थो भवति तदा पाकादिविशेषगोचर एव=पाकादि विषयकमुत्तरमित्यव-धारणात्—सुनिश्चयात् तत्र पचतीत्येवोत्तरं भविष्येति नत्वस्तीति ॥१२॥

और भी—यदि भावना धातु का अर्थ नहीं होगा, तो लट् शप् इत्यादि की व्यवस्था भी नहीं होगी । व्यापारगत वर्तमान काल की विवक्षा होने पर ही 'वर्तमाने लट्' का विधान होता है । इसकी प्रामाणिकता वाक्यपदीय से सिद्ध करते हैं । काल भविष्य वर्तमान ) क्रिया भेद के लिये ( जिससे तीनों कालों की प्रतीति क्रिया में हो) है । संख्या सब में भेद डालती है ।

नन्वेवं—यदि ऐसा है तो व्यापार की प्रतीति स्पष्ट रूप से क्यों नहीं होती ? अतः बोले अन्यत्रेति—

भावना का फल के साथ घुलमिल जाने से एकाधिकरण होने से स्पष्ट प्रतीति न ही होती । और भी भावना का फल के साथ समभिव्याहार होने पर यदि उसका स्पष्ट ज्ञान होगा तो बहु दोष होगा ।

गम् - संयोगानुकूल व्यापार - कर्ताकर्म दोनों में
विभागानुकूल " संयोग व्यापार है।





**नन्वेवं भावनायाः फलनियतत्वात्फलाश्रयस्य च कर्मत्वात्सर्वेषां क्रिया-वाचकत्वे सकर्मकतापत्तिरित्यत आह—**

फलव्यापारयोरेकनिष्ठतायामकर्मकः ।
धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः ॥ १३ ॥

**एकनिष्ठतायाम्—एकमात्रनिष्ठतायां भिन्नाधिकरणवृत्तितायामित्ति यावत् । तेन गम्यादीनां फलस्य कर्तृनिष्ठत्वेऽपि नातिव्याप्तिः । अकर्मको यथा भ्वादिः । तयोः—फलव्यापारयोः आश्रयभेदे सकर्मक इत्यर्थः ।**

o

भावनायाः फलस्य च एकाधिकरणस्वीकारे क्रियायाः फलनियत-त्वात्=नि पूर्वक यम धातो व्यापकोऽर्थः फलव्यापिनी भावना इत्यर्थो जायते। यत्र-यत्र फलवाचकता तत्रतत्र व्यापार वाचकता। अथवा फलं नियतं=व्यापकं यस्य धातोः तस्मात् फलव्यापकत्वात् फलाश्रयस्य= धात्वर्थफलाश्रयरूपकर्मणः कर्मसंज्ञकत्वात् सर्वेषां=समानरूपेण सर्वत्र नियत व्यापार बोधकत्वे तस्य=फलाश्रयस्य कर्मत्वात्=कर्म संज्ञकत्वात् सकर्मकतापत्तिः=फलाश्रयस्य कर्मत्वात् सर्वेषां धातूनां सकर्मकतापत्ति-सन्देहनिवृत्यर्थं सकर्मकाकर्मकविभागमाह फलव्यापारयोरिति–धात्वर्थः फलं व्यापारश्च तयोरेकनिष्ठतायां=एकाधारे संस्थितौ 'अकर्मक' इत्युच्यते। तयोः=फलव्यापारयोः धर्मिभेदे=धर्मयोः, विशेषणयोः। फलव्यापारयोः धर्मिणोः=आधारयोः भेदे=भिन्नाश्रये सति सकर्मक इत्युच्यते। यथा–नायकः सभां सम्बोधयति। अत्र स्वाभिमुखी कार्णं फलं तदाश्रयो नायकः अत्र फल व्यापारयोः भिन्नाधारयोः सत्वात् सकर्मक इत्युच्यो।

यदि ऐसा है तो 'क्या करता है?' इस प्रश्न पर जैसे 'पचति यह उत्तर होता है। वैसे अस्ति यह उत्तर क्यों न हो होता। वह भी इष्ट ही है। जैसे मरणासन्न व्यक्ति को देखकर पूछता है कि करोति? तो पचति इस उत्तर की भांति अस्ति जी रहा है) यह उत्तर सर्व सम्मत है। यदि अन्यत्र=जहाँ स्वस्थ व्यक्ति है वहाँ पाकादि विशेष क्रिया के गोचर होने से पचति ही उत्तर होगा अस्ति यह उत्तर नहीं होगा।)१२॥

यदि ऐसा है तो भावना को फल का नियत, व्यापक या जनक होने या मानने से फल के आश्रय को कर्म संज्ञा से सभी धातुओं के क्रिया वाचक होने से सभी सकर्मक हो जायेंगे। अतः समाधान बोले—

फल और व्यापार के एक निष्ठ एकाधिकरण होने से अकर्मक धातु कहाता है। फल और व्यापार के धर्मी=आश्रय (कर्मकर्ता) के भेद से धातु सकर्मक कहाता है।

उक्तं च वाक्यपदीये—

आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते ।
अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः ॥इति॥

बिभ्रदिति । तेन स्वधारणानुकूलोव्यापारोऽत्रापिगम्यत इति भावः । तेन कर्मणा सकर्मकत्वं तु न, अन्तर्भावात्; फलांशेन सामानाधिकरण्यसत्वादित्यर्थः । 'आत्मानं जानाति, इच्छति' ईत्यादौ च द्वावात्मानौ, शरीरात्माऽन्तरात्मा च । तत्रान्तरात्मा तत्कर्म करोति येन शरीरात्मा सुखदुःखे अनुभवतीति "कर्मवत्कर्मणा" ईति सूत्रीयभाष्योक्तरीत्या भिन्नाधिकरणनिष्ठतामादाय सकर्मकत्वमित्यवधेयम् ॥१३॥

o

ननु फलव्यापारयोरेकाधारे सत्वादकर्मक उच्यते एवं गम् धातावपि अकर्मकः सन्दिह्यते यथा 'सेवकी गच्छति' अत्र संयोगाश्रयता व्यापाराश्रयता 'सेवके दर्शनात् । अत आह एक निष्ठतायां=एकाधारमात्रविवृत्तितयां न तु द्विष्ठायांम् । एकतरस्मिन्नवृत्तित्वेसतिएकाधारमात्र वृत्तित्वम् । भिन्नाकिरणे=पृथगाधारेऽवृत्तितायांम्=आस्थितायां तेन=फलव्यारयोः भिन्नाधारस्थितेन गम्यादौ मगधातु वोध्यफलव्या पारके फलस्यकर्तृ निष्ठत्वेऽपि=कर्तुः संयोगाश्रयंत्वेऽपि नातिव्याप्तिः=नाति प्रसङ्गः । यतः संयोगस्य एकमात्र वृत्तिता नास्ति । ततोऽकर्मकता नेत्यर्थः । अकर्मकस्यो दाहाणम्–भू सत्तायां सत्ता=उपस्थितिः, प्रादुर्भवनम्, आत्मधारणम्बा तदनुकूला क्रिया च तयोरेकैवाधारो भवति कर्ता ।

तयोः धर्मिभेदे सकर्मक उदाहृतः=फलव्यापारयोराश्रयभेदे विशेषणभेदेनाधारभेदेसति 'सकर्मकता' सिद्धयति । तच्च पच्यादीनामिव गम्यादी नामपि वर्तते ।

एतत्सर्वं समर्थयितुमाह उक्तश्चेति—आत्मना=स्वेन, आत्मीवेन धातुना आत्मानं फलं व्यापाररूपमानं मात्मानं विभ्रत=आत्म धारणानुकूलांक्रयां धारयत्, आसी (देवदत्त) इति व्यपदिस्तिग्यते=व्यवहृयते तेन स्वरूपधारणकर्मणा सह क्रियामाह अर्न्तभावात्=फलव्यापारयोरे कस्मिन्नधिकरणे प्रवेशात् सम्मेलनाद्वा, असौ=धातुः न सकर्मकः । विभ्रत्=एकनिष्ठतायां—दोनों एक ही आधार में स्थित हों भिन्न आधार में वृत्तिता (उपस्थिति) न हो । इससे गम धातु के संयोग रुपी फल के कर्तृ निष्ठ होने पर भी एकमात्र निष्ठता न होने से अति व्याप्ति दोष नहीं हुआ । अकर्मक का उदाहरण जैसे भू० इत्यादि जहाँ एक मात्र वृत्तिता है । फलव्यापार के आश्रय भेद से एककर्मक होता है । वाक्य पदीप में भी यह कहा गया है ।

विभ्रति(डुभ्रिम धारणपोषयोः) आत्मानं स्वरूपं दधाति तेन=तादृश कर्मणा व्यबहारेणफलव्यापारोभयार्थकेन स्वधारणानुकूलः=आत्मस्वरूपग्रहण जनको व्यापरः=क्रिया अत्रापि=अकर्मकेऽपि गम्यते-वोध विषयो जायते।

इतिवत् नन्वेवं आत्मानं धत्ते 'आत्मानमस्ति इत्यपि स्यादत आह— तेन कर्मणा=आत्मधारणकर्मणा स्वशरीरधारणया सकर्मकत्वं न सम्भाव्यते। यतः फलव्यापारयोः पृथगन्वये सति सकर्मकत्व नियमात्। कर्मसंज्ञको योऽर्थस्तस्यान्वयी सकर्मकः। अत्र अन्तर्भावात्=फलांशेन सह व्यापारस्य सामानाधिकरण्यात्=समानं तुल्यमेकमभिन्नमधिकरण सत्वात् धात्वर्थतावच्छेदकशरीरे आत्मरूप कर्मणः प्रवेशात्, अभेदाच्चाकर्मक एव भवितु मर्हति। कर्मणा सह यो यो वर्तते स सकर्मक इति वक्तुं न शक्यते। यतः सर्वे धातवः कर्मणा सह वर्तन्ते। तेन पृथगुपस्थितयोरेव सकर्मकता।

ननु आत्मनं जानातीत्यत्र ज्ञानरूपफलस्य ज्ञान जनकव्यापारस्थ च कर्तरि स्थानात्, एकाधिकरणकमकर्मकलक्षणं संघटते। कथं ज्ञाधातौ सकर्मकता। एवमात्मानमिच्छतीत्यत्रापि, इच्छा रूपफलस्य तदनुकूल क्रियायाश्च विषयतासम्बन्धेन आत्मनि स्थानात् अकर्मकता प्रतिभाति। कथं सकर्मकता। तत्र द्वावात्मानौ शरीरावच्छिन्नात्मा चैतन्योपाधिक एकः, अन्तःकरणावच्छिन्नात्माऽपरः। आत्मन एकत्वेऽपि शरीरन्तः करणोपाधिभेदेन द्विविधः। शरीरोपाधिकात्मा कर्म भवति अन्तःकरणोपाधिकात्माकर्ता। अन्तरात्मा=अन्तःकरणावच्छिन्नचैतन्यस्तदेव कार्यं करोति येन=कर्मणा शारीरात्मा=शरीरा वाच्छिनश्चैतन्योऽनुकूलवेदनोय प्रतिकूलवेदनीये, सुःख दुखेअनुभवति=भोगविषयतां प्राप्नोति। 'कर्मवत्कर्मणा' सूत्रेभाष्य प्रतिपादिताम् भिन्नाधिकरणनिष्ठतां=ज्ञानरूपफलाऽधिकरणमात्मा कर्म भवति तद्भिन्नश्शरीरात्माज्ञाननुकूल ( सुखदुःख सम्वेदनानुकूल ) व्यापाराश्रयः कर्ता भवति। तेन फलव्यापारयोः भिन्नाधिकरणत्वं सकर्मकत्वमिति लक्षणमात्मानं जानातीत्यादौ वोध्यम्। वैयधिकरण्यञ्च सूपपादम्।

इतः पूर्वं 'व्यापारो भावना, अभिधा, साध्या क्रिया' इति चर्चिता गुणदोष निरूपणपुरःसरं विवेचिता च। इतः परं सिद्धाया, क्रियायाः गुण दोष निरूपणपुरःसरं सिद्धांतो निरूपयिष्यते। तष्दाह-नान्वेति—

[आत्मक=करण में तृतीया) जिसका व्यापार अर्थ है। अर्थात् व्यापार के द्वारा (स्वयं) आत्मान=( फल परक शब्द है ) अपने को ( फल को ) धारण करता हुआ व्यक्ति अस्ति व्यापार का आश्रय कर्ता है) इस व्यवहार का भागी होता है। अन्तर्भावात्=फल और व्यापार दूध में पानी की तरह मिल जाते हैं इस कर्म से अस् धातु सकर्मक नहीं हो सकता।]

**न च वृत्तिमात्रे समुदायशक्तेर्वक्ष्यमाणत्वात्तत्रान्तर्गता भावना पदार्थैकदेश इति कथं तत्रान्वय इति वाच्यम् । नित्यसापेक्षेष्वेकदेशेऽपि देवदत्तस्य गुरुकुलं, चैत्रस्य नप्तेत्यादाविवान्वयाभ्युपगमात् । एवं भोक्तुं पाको भुक्त्वा पाक इत्यत्रापि द्रष्टव्यम् ॥ १९ ॥**

संयुज्यते । कृतं पूर्वमनेनेति विग्रहे समासे सति सपूर्वाच्चेति 'इनिः' तस्य गुणीभूत क्रियायामन्वयः ।

न च दृष्टान्ते 'ग्रामं गतः' दार्ष्टान्ते 'कृत पूर्वी कटेमित्यादौ स्थले वृत्तिमात्रे=कृत्तद्धित समास सनाद्यन्तैक शेषाः पञ्च वृत्तयः । सर्वत्र समुदाये शक्तिः । एकार्थीभावः पृथगर्थानामेकोपस्थिति जनकस्तस्य वक्ष्यमाणत्वात्= 'समासे खलु भिन्नैव शक्तिः पङ्कज शब्दवत् । अत्र समासपदं वृत्तिमात्रोप लक्षणमिति कथयिष्यते ।

तत्र कृतपूर्वीति । समासे कृते यः कृधात्वर्थ उत्पत्त्यनुकूल व्यापारः स समास घटक पदार्थस्यैकदेशः । तस्मिन् ( व्यापारे ) कर्तृ कर्म करणानां कथमन्वय इति । यतः पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशे कर्मण कटस्य तत्र ( व्यापारे ) कथमन्वय इत्यर्थः । एवं गत इत्यत्र कृदन्त वृत्तिसत्वेन गमन कर्ता इत्यर्थक गतपदार्थैकदेश गमन क्रियायां ग्राम पदस्य कर्मत्वे नान्वयोऽसम्भवः । पदार्थैक देशत्वञ्च–पदजन्योपस्थितीयप्रकारताश्रयत्वम तन्न–नित्य साकाङ्क्षेषु=वोधकाङ्क्षे सदा सापेक्ष्येषु पदानां पदार्थैकदेशेऽप्यन्वयो भवितु मर्हति । यथा देवदत्तस्य गुरुकुलम् । कस्य कुलमिति समासेऽप्याकाङ्क्षा दृश्यते । अत्र देवदत्त पदार्थस्य गुरुकुलमिति पदार्थैकदेशे गुरुत्वे निरुपितत्वसम्बन्धेन=परिचायकत्वेनान्वयः । अर्थात् गुरुद्वारा कुलेऽन्वयः उक्तञ्च–समुदायेन सम्बन्धो येषां गुरुकुलदिना ।

**न कहिए कि वृतिमात्र=पूरे कृत् तद्धित-समासादि के एकार्थीभाव या व्यपेक्षा मात्र के समुदाय में शक्ति कही जायगी, अवयव में नहीं, इससे स्पष्ट है कि दृष्टान्त= कृतपूर्वी कट दार्ष्टान्त ग्रामं गतः । दोनों में वृत्ति है, समुदाय में शक्ति है । इनके अन्तर्गत गम, या कृ धातु की भावना गत या कृत का एक देश हुआ । उसमें कर्ता या कर्म का सम्बन्ध कैसे ? क्योंकि पदार्थ का पदार्थ में अन्वय का नियम है पदार्थ के एक देश में नहीं । तो भी कहीं-कहीं पदार्थ के एक देश में भी अन्वय देखा जाता है । जहाँ नित्य सापेक्ष्य स्थल है वृत्ति=एकार्थी भाव जहाँ दोनों भाग मिलकर एकार्थक पद हो गये हों वहाँ अन्वय ( सम्बन्ध ) की अपेक्षा बनी हो तो कारण अंश में नित्य आकाङ्क्षित पदार्थ का पदार्थ के एक देश में भी अन्वय होता है । जैसे देवदत्त का गुरुकुल है, यहाँ गुरुकुल मे जो समास है वह जिज्ञासा उपस्थापित कर रहा है ।**

संस्पृश्यावयवांस्ते युज्यन्तेतद्वता सह। नित्य सापेक्ष्य पदार्थे व्यपेक्षा, अजहत्स्नार्था वा न हीयते। उक्ता व्युत्पत्तिस्तु सदा साकाङ्क्षातिरिक्त स्थले प्रवर्तते। अत आह--वाक्यपदीये।

सम्बन्धि सापेक्षो नित्यं सर्वं समर्थ्यते।
वाक्यवत्सा व्यपेक्षाहि वृत्तावपि न हीयते।

एक्षं चैत्रस्य नप्ता = कन्या जन्यपुमान्। अत्रापि चैत्र पदार्थस्य नप्तृपदार्थैक-देशे = नप्तृत्वेऽन्वयः। इत्यादाविव = कृतपूर्वी, ग्रामंगत इत्यादावपि कर्तृत्वं कर्मत्वं स्वबोधकत्वे, नित्यसाकाङ्क्ष्यम्। अत एव पदार्थैकदेशभूतयां क्रियायां कारकारणामन्वयो जायते। तत्र पदार्थः पदार्थेनान्वय इति न्यायो न प्रवर्तते।

निराकाङ्क्षत्वाभावाद्। अन्वयाभ्युपगमात् = नित्यसाकाङ्क्ष्य स्थलेऽपि एकदेशेऽन्वयदर्शनात् स्वीकाराच्च। एवं = तथैव 'भोक्तुं पाक' इत्यत्र भुजधातोः भावे तुमन् प्रत्ययः। तत्र तुमुन्नर्थव्यापारः भोजन क्रियायां स्वसमान कर्तृकत्वे सति ( भुजधात्वर्थ तुमुन् प्रत्ययार्थयोः क्रियवोरेकैव कर्ता ) स्वाव्यवहित पूर्वत्व सम्बन्धेन ( तुमुन् प्रत्ययाव्यवहितपूर्वं भुज् धातुर्वर्तते ! ) एक देशे भुज धात्वर्थ भावनायां ( तुमुन्नर्थं ) भावनाऽन्वेति। एवं भुक्त्वा पाक' अत्रापि क्त्वार्थं भावना यास्तत्रैवान्वयः। एकस्य सकृच्चेति भाष्ये 'अथानुवर्तमानेऽपि क्रियाग्रहणे इह कस्मान्न भवति, नैतत् क्रिया ग्रहणं किन्तु द्रव्यग्रहणं तत्।१९।

कि किसके गुरुका कुल है। इस आकाङ्क्षित, सापेक्ष्य शब्द के एकदेश गुरु में देवदत्त का अन्वय है। ऐसे ही चैत्रस्य नप्ता = यहाँ चैत्र पदार्थ का नप्तृ पदार्थ के एक देश नप्तृत्व में अन्वय होता है। ऐसे ही ग्रामं गतः में भी ग्राम शब्द का कर्मत्व सम्बन्ध से नित्य साकाङ्क्ष्य होने के कारण एक देश गमन क्रिया में अन्वित हुआ। यहाँ उक्त न्याय नहीं लगता है।

नित्य साकाङ्क्ष्य से अतिरिक्त स्थल में भी एक देश में अन्वय देखा गया है। जैसे भोक्तुं पाकः—यहाँ तुमुन् प्रत्यय का अर्थ ( भोजन ) क्रिया है, उसका अपने समान कर्ता वाले ( अव्यवधान में स्थित ) पच् धात्वर्थ के एक देश पाक ( फल ) में अन्वय हुआ। ऐसे ही भुक्त्वा पाकः में भी क्त्वार्थ भोजन क्रिया का पाक पदार्थ के एक देश में स्व समान कर्ता भाव से अन्वित हुआ। इससे सिद्ध होता है। कि उक्त न्याय अनित्य है।

ग्रन्थकार अतिप्रसङ् दोष की = जैसे क्त्वा, तुमन् प्रत्यचार्थ क्रिया का पाकः पदार्थ के एक देश क्रिया में अन्वय होता है, वैसे ही एकः पाकः द्वौपाको त्रयः पाका इत्यादि में एक, द्वित्रि पढ़ोत्तर सुच् प्रत्यय का संङ्ख्या वार अर्थ है। उसका भी पाक के एकांश क्रिया में अन्वय होगा, जो नहीं होना चाहिए। उद्भावना ( शंका ) करके

अन्वय होने पर भी
कहीं अपृथक् क्रिया के ... हो जाता है।





**अतिप्रसङ्गमाशङ्क्य समाधत्ते --**

**कृत्वोऽर्थाः क्त्वातुमुन्वत्स्युरिति चेत्सन्ति हि क्वचित् ।**
**अतिप्रसङ्गो नोद्भाव्योऽभिधानस्य हि नाश्रयात् ।। २० ।।** भोक्तुं पचति भी होसकता है

**भोक्तुं पाको भुक्त्वा पाक इत्यादौ "तुमुण्वुलौ क्रियायां क्रियार्थायाम्" "समानकर्तृकयोः पूर्वकाले" इति क्रियावाचकोपपदे क्रिययोः पूर्वोत्तरकाले विधीयमाना अपि तुमुनादयो गुणभूतां तामादाय यथा जायन्ते, तथा कृत्वोर्था अपि स्युः । एकः पाक इत्यत्र "एकस्य सकृच्च" द्वौ पाकौ, त्रयः, चत्वार इत्यत्र "द्वित्रिचतुर्भ्यः सुच्" पञ्चेत्यत्र कृत्वसुच् स्यात् । तथा च सकृत्पाकः, द्विस्त्रिश्चतुः पाका इत्याद्यापत्तिरिति, चेदिष्टापत्तिः । "द्विर्वचनम्" इत्यादिदर्शनात् । अतिप्रसङ्गस्त्वनभिधानात् नेत्याह—अतीति । "न हि वचिरन्तिपरःप्रयुज्यते" इत्याद्यभियुक्तरीत्या समाधेयमिति भावः ।**

व्याकरण से जो बना है वह

o

ननु स्वमते पदार्थैकदेशे गुणीभूत क्रियायामन्वये साधुत्व मुच्यते, तर्हिकृत्वोऽर्थ प्रत्ययानामप्येकदेशभूत क्रियायामन्वयात् प्रसङ्गमति-क्रान्तस्याति प्रसङ्गस्यापत्तिः समुदेति तदाह-अति-प्रसङ्गेति- यथा भोक्तु पाक इत्यत्र तुमुन्ण्वुलौ क्रियायां क्रियार्थायामिति, भुक्त्वा पाक इत्यत्र समानकर्तृकयोः पूर्वकाले' इति, च क्रियावाचकोपपदे = क्रिययोर्मध्ये पूर्वकाल वृत्ति क्रियार्थकाद् उत्तरकाल वृत्तिक्रियार्थकाद्धातोः सूत्रेण विधीयमानाः तुमुन् क्त्वादयऽगुणभूतां = विशेषणीभूतां तां = क्रियाभादाय जायन्ते उत्पद्यन्ते । तथैव कृत्वोऽर्थ प्रत्यया आप्येकदेश क्रियायामन्विष्यन्ते । अर्थात् समान कर्तृकः सन् क्रियार्थक क्रियायां सत्यां धातोस्तुमन् जायते । एवं समान कर्तृत्वे सति पूर्वकालिकी या क्रिया तद्वाचकाद्धातोः क्त्वा जायते । क्रियावाचकं पदमुपपदं चेत्द्वयोः क्रिययोः पूर्वकाले विधीयमानाः तुमुन्नादयो गुणभूत क्रियायां यथा जायन्ते ।

समाधान करते हैं कि ( सङ्ख्यावाचक ) कृत्वोऽर्थ प्रत्ययों की स्थिति त्वा, तुमुन की तरह समझे । ऐसा कहीं कहीं होता है इसलिये प्रसङ्गाति क्रान्त दोष की आशंका नहीं करनी चाहिए । प्रामाणिकों द्वारा अभिधान और अनभिधान साधुत्व के निर्णय में कारण है । भोक्तुं पाकः इत्यादि में दोनों क्रियाओं का समान कर्ता हो तो उत्तर कालिक क्रिया के लिये पूर्व कालिकी क्रिया वाचक धातु से विधीयमान् तुमुन्नादि गुणी भूत क्रिया को लेकर जैसे जन्मते है वैसे ही कृत्वसुच् आदि प्रत्ययों को भी जानना चाहिए । कृत्वोऽर्थ प्रत्ययों का गुणीभूत क्रिया में अन्वय न होकर प्रधानीभूत धात्वर्थ क्रिया में अन्वय होता है । परन्तु गुणीभूत क्रिया में अन्वय होकर एकः पाकः इत्यादि प्रयोग बनने लगेंगे । तो बोले इष्टापत्तिः = अभीष्ट लाभ है सुच्, कृत्वसुच्,

'पञ्चकृत्वः पाकः' नहीं बनता है ऐसा मानने वालों की यह व्याख्या

केचित्तु "क्रियाभ्यावृत्तिगणने" इत्यत्र क्रियाग्रहणं व्यर्थम्। तस्या एवाभ्यावृत्तिसंभवेन सामर्थ्यात्तल्लाभात्। यथा च साध्यमात्रस्वभावः क्रियालाभाय तदिति वाच्यम् न च पाक इत्यादौ तादृशीति नातिप्रसङ्गः। द्विर्वचनमिति च द्विःप्रयोगी द्विर्वचनमिति व्युत्पत्त्या "द्विर्वचनेऽचि" इति ज्ञापकं वाऽऽश्रित्योपपादनीयमित्याहुः ॥२०॥

o

तथा कृत्वोऽर्थाः प्रत्यया अपि गुणीभूत क्रियायामन्विष्यन्ते। तथा एकः पाक इत्यत्र एकस्य सकृच्चेति सुच्। द्वौ पाकौ त्रयश्चत्वारो वा पाकाः ईत्यादौ द्वित्रिचर्तुभ्यः सुच्, पञ्चन शब्दात् कृत्वसुच्। वारं वारं भाजनेऽर्थे जायन्ते। एतेषां गुणीभूत पच् धात्वर्थ क्रियायाम प्रधानीभूत सुजर्थं क्रियायामन्वयो दृश्यते। अयमेवातिप्रसङ्गस्तमिष्टायेति मत्वाऽङ्गीकरोति ग्रन्थकारः। अत्र प्रमाणं=द्विर्वचन निर्देशात्। अत्रद्विः निर्देशेन सुच् प्रत्ययस्या प्राधानीभत क्रियाया मन्वय दर्शनात्। प्रधानीभूत क्रियायामन्वये सत्यतिप्रसङ्गश्चेत्तर्हि द्विः शब्दे सुचोऽभिधानं न स्यात्।

अतिप्रसङ्गस्तु=द्वौपाकौ त्रयः पाका इत्यादौ क्रियायाः गणनसम्भवात् कथन्न कृत्वोऽर्थाः (क्रिया) भवन्ति। इत्याशङ्कायामुक्तंभाष्ये—नैतत् क्रियागणनम्=किन्तु द्रव्यगणनमेतत्। कथं? कृदमिहितो भावोद्रव्यवत् प्रकाशते। न च सकृद्भुत्त्वा सकृद् भोक्तुमित्यादौ सुचोऽभावमाशङ्क्य भाष्ये नैष दोषः तस्य क्रिया गणनाद्भविष्यति। लिङ्गसङ्ख्यान्वयरूप क्रियास्थले (पाक इत्यादौ) साध्यत्वेन सिद्धात्वेन च क्रियायाः प्रतीति र्जायते। लिङ्गसङ्ख्यान्वयि भावस्थले तु उक्तभाष्यप्रमाण्येन साध्यायाः भानं नतु सिद्धायाः। अतो विशेषणीभूतक्रियामादाय कृत्वोऽर्थं प्रत्ययानामापत्तिं दातुं न शक्यते। अत आह-अतिप्रसङ्गोनोद्भाव्य इति। यथाऽभिधानं ज्ञापकमाश्रीयते तथा साधुता सम्पत्स्यते। तत्रातिप्रसङ्गस्य=अतिक्रान्त दोषस्योत्थापनं न कर्तव्यम्। अभिधानस्य=प्रत्ययानां विधानस्य समाश्रयात्=अभियुक्तानां=प्रामाणिकानां वचनानुसारित्वात्। यत्र पदार्थैकदेश भूत क्रियायां सुच् प्रत्ययो वर्तते तत्र 'आप्त वचनं' प्रमाणम्। यथा—वच् धातुरन्ति परो न प्रयुज्यते। इति प्रामाणिकशैली समाधानाय पर्याप्ता तिष्ठति।

प्रत्ययार्थं का गुणीभूत क्रिया में सम्बन्ध होता है। प्रमाण द्विर्वचन के द्विः निर्देश से सुजर्थ का गौण क्रिया (उच्चारण क्रिया) में अन्वय सिद्ध है। अतः अति प्रसङ्ग दोष का प्रामाणिक अभिधान नहीं है जैसे वच् धातु अन्ति परक प्रयोग न मिलने से अनभिधान कहा है। इस प्रकार प्रामाणिक युक्तियों से समाधान करना चाहिए।

नन्वनभिधानं विना सकृत् पाक इति प्रयोगो न स्यात्। तदाह—केचिदिति—कृत्वोऽर्थ प्रत्ययास्तत्रैव भवन्ति यत्र साध्याक्रिया प्रतीयते। अत्र प्रमाणम्—सङ्ख्यावाचकात् शब्दात् तदा सुज् भवति यदा क्रियाया अभ्यावृत्तिः=पुनःपुनर्जन्म चेत्। अत्र क्रियाग्रहणं व्यर्थं; तत्रकारणंभाहतस्या एव=क्रियाया एवाभ्यावृत्तिः=पुनरावृत्तिः सम्भवति। एतादृशं पदं द्रव्यगुणतः पार्थक्यकरम्। द्रव्यगुणयोः सिद्धस्वभावरुपतया न पुनरावृत्तिः। पुनःपुनभीषणमित्यादौ प्रतीयमानां भवतिक्रियामादाय पौन- पुन्यमिति न दोषः। अतः क्रियाया पुनरावृत्ति सम्भवेन सामर्थ्यात्=क्रियाग्रहण सामर्थ्यात् साध्याया एव लाभात्। तथाच अभ्यावृत्तिपदोपादानसामर्थ्यात् साध्यामात्रं=लिङ्गसङ्ख्यान्वयशून्यः स्वभावः=स्वरूपं यस्या क्रियाया तस्या उपलब्धये तत्=क्रिया ग्रहणमिति।

न च पाक इत्यादौ तादृशी साध्यमात्रस्वभावा क्रिया नास्ति अतो नातिप्रसङ्गदोषः, तर्हि द्विर्वचनमित्यत्र कथं सुच् ऽ तत्र साध्यामात्रस्वभावा-क्रिया नास्ति, किन्तु भावे ल्युटि सति प्रत्ययनिबन्धना क्रियाऽस्ति। तत्र=द्विः प्रयोगो द्विर्वचनं=द्विरुच्चारणमर्थः। भाष्ये प्रयोगाच्च साधुः। अथवा द्विर्वचनेऽचीति सूत्रे द्विप्रयोगो ज्ञापकं भविष्यति यत साध्यामात्रस्वरूपस्या-भावेऽपि सुज् भवतीति ज्ञापकमाश्रित्योपपादनीयग=द्विर्वचन शब्दस्य प्रयोगः कर्तव्यः। इत्याहुः=सारग्रहिण ऊचुः॥ २०॥

किसी व्यक्ति ने बिना अभिधान के सकृत्पाकः का दोष हटाने की चेष्टा किया है। यथा सङ्ख्यावाची शब्द से जहाँ अनेक बार क्रिया का गणन हो तो कृत्वसुच् होता है इसमें क्रिया का ग्रहण व्यर्थ है। क्योंकि अभ्यावृत्ति—बार-बार प्रवृत्ति क्रिया में ही होती है। तो अभ्यावृत्ति के सामर्थ्य से ही क्रिया का लाभ होगा। तो भी साध्या स्वभाव वाली क्रिया के लाभ के लिये क्रिया ग्रहण मानिये और पाकः मे साध्यामात्र स्वभाव क्रिया न होने से अतिक्रान्त दोष न होगा और द्विर्वचनम् मे 'द्विकच्यते' यहाँ अर्थ नहीं है किन्तु दो बार प्रयोग करना द्विप्रयोग है। इस व्युत्पत्ति से या द्विर्वचनेऽपि में द्विशब्द ज्ञापन का आश्रयण कारके उपपादन करते हैं। इति सारग्रहिणः॥२०॥

मी० पुनभर्भूमि शोधनं की दृष्टि से बोले कि व्याकरणशास्त्र सिद्धान्त में बोधकता शक्ति ( जो शब्द और अर्थ को जोड़कर विकसित अर्थ की ज्ञापिका है ) स्वीकृत है वह जेसे धातु में वैसे आख्यात में सम्भव है। और तिङ् में भावनाऽर्थ की शक्ति ग्रहण करने वालों को बोध होने से 'ति' में ही शक्ति आवश्यक हो तो धातु का वाच्यार्थ भावना है, आख्यात का नहीं, यह क्यों ? इसका निर्णय कैसे ? इस शंका का समाधान देते हैं ! भेदेति—

ननु सिद्धान्ते बोधकतारूपा शक्तिराख्यातशक्तिग्रहवतां बोधादावश्यकीति धातोरेव भावना वाच्या नाऽऽख्यातस्येति कथं निर्णय इत्याशङ्कां समाधत्ते— भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम्। कारणं साधुत्वं भवे

साधुत्वं तदभावेऽपि बोधो नेह निवार्यते ॥२१॥

समानाधिकरण सम्बन्ध होता है

भेद्यं विशेष्यं, भेदकं विशेषणं, तयोर्यः सम्बन्धस्तस्य यो भेदस्तन्निबन्धनं साधुत्वम्। अयमर्थः—व्याकरणस्मृतिः शब्दसाधुत्वपरा, तत्रैवावच्छेदकतया कल्प्यमानधर्मस्य शक्तित्वं वदतां मीमांसकानां पुनः शक्तत्वं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्णये शक्तिनिर्णय उच्यते।

o

धात्वर्थ निर्णयान्ते मीमांसकाः सिंहावलोकनं कुर्वन्ति नन्विति—वैयाकरणसिद्धान्ते केवलं बोधकताशक्तिः स्वीकृताऽस्ति। बोधयति = ज्ञानविषयतां प्रापयतीति बोधकस्तस्य भावो (सम्बन्धो) बोधकता। यथा इन्द्रियाणां स्वविषयेषु रूप-रस-गन्ध-स्पर्श-शब्देषु ग्रहण-योग्यता अनादिकालिकी बोधकता शक्तिरस्ति, तथैव शब्दानामर्थेषु अनादिकालिकीबोधजनकता शक्तिरस्ति। सा यथा धातौ भावनार्थबोधिका, एवमाख्यातेऽपि व्यापार बोधिकाऽस्तु नाम का हानिः? आख्यातेऽपि भावना बोधस्य जायमानत्वात् शक्तिरबाधितैव। एवमाख्यातशक्तिग्रहवताम् = आख्यातं भावना विषयकबोधजनकतावत् बोधात् = आख्यातस्य भावनार्थ—बोधजनकत्वात्। बोधजनकता शक्तिराख्यतेप्यस्त्वित्यावश्यकी। अस्यां स्थितौ धातोरेव भावनावाचकता नत्वाख्यातस्येति कथं निर्णेतुं शक्यते। इमां शङ्कामुन्मूलयितु माह—भेद्य इति। कस्मिन्नर्थे कः साधुः कोऽसाधुरित्यङ्गुल्या निर्देष्टुं

भेद्यं = विशेष्य, प्रधान, अनुयोगी, आश्रयभेदक—विशेषण, अप्रधान, गौण, प्रतियोगी, आधेय, इन दोनों का जो सम्बन्ध = विशेष्यविशेषण, आधाराधेय प्रतियोगी-अनुयोगी भाव सम्बन्ध ही उपाधि = धर्म है। जो अन्य में अनुपलब्ध है। उसका जो भेदः विशेष = संयोग, समवाय इत्यादि सम्बन्ध = संस्कार वही निमित्त = कारण है जिस कारण से उसे साधु शब्द कहते हैं। साधुत्व सम्बन्धपुरःसर संस्कार है। भाव यह है कि व्याकरण = व्युत्पत्ति बोधक प्रक्रिया का स्मरण शब्दों के साधुत्व के लिए है। उसी साधुत्व में भेदक या व्यावर्तक रूप से कल्पित किया गया धर्म ही शक्तत्व = साधुत्व है। ऐसा बोलने वाले मीमांसकों का पुनः शक्तत्व—शब्दत्व को ही साधुत्व कहना यानी एक ही शक्ति है। इस मी० रीति से विचार करने पर स्पष्ट है कि साधुत्व-निर्णय ही शक्ति-निर्णय कहाता है।

प्रसंग में—साध्या क्रिया का जिसके साथ जो सम्बन्ध होगा उसी से उसमें साधुता स्पष्ट होगी।

न शक्यते। किन्तु शब्दानुशासनव्यवस्थानुसारिनिर्णयस्तयोर्जनकः। अतो व्यवस्थां व्यवस्थापयति। भेत्तुं योग्यं अन्यस्मात् व्यावर्तयितुं शक्यम्वा मेद्यं = विशेष्यम् भिनत्ति–इतरस्मात् पृथक्करोतीति भेदकं = विशेषणं = व्यावर्तको धर्मः। भेद्यभेदकयोः विशेष्यविशेषणभावरूपयोः यश्शास्त्रानुमोदितसम्बन्धः स एवोपाधिः। असाधु–शब्दात् व्यावर्तको धर्मः, तस्य भेदो = विशेषः (शक्ति) लक्षणा, व्यञ्जनारूपः तस्य = तादृशसम्बन्धविशेषस्य निबन्धनं = कारणं, बोधकं, निमित्तम्वा साधुत्वम्। यथा = घट इत्यत्र भेद्यो – घटः स मठात् व्यावर्तयितु योग्यः, भेदकं = घटत्वं घटे विशेषणं भेदको धर्मः स पटात् घटं व्यावर्तयति। तयोर्यो विशेष्यविशेषणभावसम्बन्धस्तस्योपाधिः = भेदकविशिष्टसम्बन्धस्तस्य = भेदः शक्तिरूपस्तदेव निबंधनं = साधुत्वस्य कारणम्। एतादृशं साधुत्वं शास्त्रे व्यवस्थापितु वर्तते। तथाच मध्ये दन्त्यसकारकोऽस्व शब्दो दरिद्रे साधुः घोटकेऽसाधुः। एवं तालव्यशकारकोऽश्वशब्दः घोटके साधुः निर्धनेऽसाधुः। तत्र अविद्यमानं स्वं = धनं यस्यासावस्वो निर्धनः। तस्मिन् धनस्याभावो विशेषणं विशेष्यस्तु निःस्वः पुरुषः। तयोः सम्बन्धरूपोपाधिस्तदेव तस्य साधुत्वे कारणम्। अतस्तत्र धनाभाव विशिष्टार्थनिरूपितं साधुत्वम्। अश्व शब्दे तु अश्वत्वं जतिः तदेव विशेषणं, जातिधर्मं विशिष्टा व्यक्तिः विशेष्यम् तयोः भेदकः समवाय सम्बन्धस्तद्रूपोपाधिभेदनिमित्तकं साधुत्वमश्वशब्दे वर्तते।

एवमेवाष्टकस्यसाधुत्वप्रसङ्गे धात्वर्थ—क्रियायामन्वये साधुत्वं शास्त्रेण व्यवस्थापितम्। तेन धातुः भावनार्थं बोधजनकतावादिति गम्यते। भावनार्थबोधक धातुः साधुः, (समर्थः), आख्यातमसाधुः। सारस्तु—पुण्यजनकत्वविशिष्टो धर्मः साधुत्वं मी० मते तु शक्ततावच्छेकत्वं = शक्तिविशिष्टे शब्दे विद्यमानत्वं साधुत्वम्। यद्येवं तर्हि तथा धातोः भावनायां शक्तिस्तथा आख्यतेप्यस्तु को दोषः? इत्याशङ्कां निराकर्तृमाह—अयमर्थ इति—व्याकरणस्मृतिः = साधुत्वज्ञानविषया, व्युत्पत्यर्थरूढचर्थयोरन्यत्–ज्ञानजनक साधनीभूत शब्दसंस्कार विशेषः स्मरणं साधुत्वं = पुण्यजनकं यज्ज्ञानं = प्रक्रियासंस्कारः सविषयो यस्या सा व्याकरणस्मृति, शब्दे साधुत्ववोधिका। अतः शब्द साधुत्वपरा इत्युच्यते। तत्रैव = साधुशब्दज्ञाने एव – निश्चयेन अवच्छेदकतया – भेदकतया कल्प्यमानधर्मस्य = 'धातुः भावनार्थविषयक बोधजनकतावान्' इति कल्पना। तत्र प्रतीयमानो धर्मः शक्तिरेव। तस्याः शक्तित्वं = सामर्थ्यं वदतां मीमांमकानां पुनः शक्तत्वं सधुत्वमुच्यते परन्तु, एकमेव = कल्प्यमानधर्मः (शक्तिः) शक्तत्वञ्च तुल्यमेव। शक्त्याश्रयत्वं शक्तत्वं 'भेदकतया = कल्प्यमानधर्मस्तदेव। तद्रीत्या – मीमांसकरीत्या

साधु के अलावा भी शक्ति में अर्थ का बोध होता है। महाभाष्यमत





**अतिरिक्तशक्तिवादेऽपि आख्यातानामसाधुता भावनायां स्यादेव। तथा च चतुर्थ्यर्थे तृतीयाप्रयोगवद्धात्वर्थभावनायामाख्यातप्रयोगे याज्ञे कर्मण्यसाधुशब्दप्रयोगात् "नानृतं वदेत्" इति निषेधोल्लङ्घनप्रयुक्तं प्रायश्चित्तं दर्शनान्तरीयव्युत्पत्तिमतां स्यादेव।**

o

शक्तत्वे साधुत्वे च नास्ति भेदः तदाह साधुत्वनिर्णयएव शक्तिनिर्णय इति। अतो व्याकरण शास्त्रबोधित शक्तिमत्वे सति पुण्यजनकतावच्छेदक धर्मवत्वं साधुत्वम्। व्याकरणशास्त्रं साधुत्वनिर्णायकं तत् शक्तिनिर्णायकमप्यस्ति। अतो 'लः कर्मणि' इति सूत्रेण आख्याते ( लकारे = तिपि ) कर्त्तरि शक्तिरित्युक्तं न तु भावनायाम्। भावनार्थ-बोधनायाख्यात प्रयोगोऽसाधुरिति भावः।

ननु व्याकरण व्यङ्ग्यं साधुत्वं, शिष्टप्रयुक्तत्वं शक्तत्वमिति भेदात्, शक्तत्व साधुत्वयोर्नैकता। अन्यथा असाधु शब्दादपि वोधो न स्यात्। अत आह—अतिरिक्तेति--अतिरिक्त शक्तिवादे = साधुत्वमतिरिक्तं शक्तत्वमतिरिक्तमस्ति। इति भिन्न शक्ति स्वीकारे आख्यातानां = तिङां भावनार्थकता स्वीकारे च असाधुता = संस्कार—शून्यता स्यादेव। आख्याते शक्तिभ्रमेण भावनार्थस्य वोधेऽपि तत्रापभ्रंशता भवत्येव। व्याकरणस्मृतिः, शब्दसंस्कारपरा, न तु शक्तिभ्रम जननी। साधुत्वं तु अर्थःसम्बन्धविशिष्टे शव्दे एव नियतमस्ति। अर्थमपेक्ष्यैव शक्तिःनिर्णीयते। अतश्शक्तिग्रहं व्याकरोपमान् इत्याद्युक्तम्। भाष्यकारादय आख्यातस्य भावनायां शक्ति नोक्तवन्तः। अतो भाष्ये समानश्च खेदविगमो (कामशान्तिः) गम्याया (भार्याया) मगम्यायामवैधतायाम्। समानायां मर्थावगतौ शव्देनापशब्देन च तत्र शास्त्रेण धर्मनियमः क्रियते। यत् साधुमिर्भाषितव्यं नासाधुभिः।

**जो लोग साधुत्व के अतिरिक्त शब्दत्व को शक्ति मानते हैं, उनके मत मे भी आख्यातों ( तिङ ) का भावना अर्थ में असाधुता है ही, धातु के अर्थ में तिङ् के अर्थ का प्रयोग वैसी ही नासमझी है जैसे चतुर्थी के अर्थ में तृतीया का प्रयोग। अतः धातु के अर्थभूत भावना के अर्थ में आख्यात का प्रयोग करने पर असाधु शब्द के प्रयोग का पाप लगेगा। जैसे यज्ञ कर्म में असंस्कृत शब्द का प्रयोग हो जाने से अशुद्ध उच्चारण न करे, यदि करता है तो प्रायश्चित्त का भागी होता है। पाप विशोधन करना पड़ता है। इस निषेध के उल्लंघन प्रयुक्त = निमित्तक प्रायश्चित्त = पापप्रक्षालनम् नै० मी०—कों को करणीय होगा। क्योंकि वे धातु में भावना की शक्ति न मानकर तिङ् में मानते हैं।**

 

ननु त्वन्मते नानृतमिति निषेधः क्रत्वर्थ एव न सिध्येत्।, आख्यातेन कर्तुरुक्तत्वाच्छ्रुत्या पुरुषार्थतैव स्यात्। प्रकरणाद्धि क्रत्वर्थता, तच्च, श्रुतिविरोधे बाध्यते इति चेन्न। "तिङर्थस्तु विशेषणम्" इत्यनेन परिहृतत्वात्। न हि गुणभूतः कर्ता निषेधं स्वाङ्गत्वेन ग्रहीतुमलम्। भावना तु प्रधानं तं ग्रहीतुं समर्थेति प्रकरणात् क्रत्वर्थतैव। अस्तु वा क्रतुयुक्तपुरुषधर्मः, अनुष्ठाने विशेषाभावात्। "जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू" इति वाक्योक्तमन्त्रविधिवदित्यादि भूषणे प्रपञ्चितम्।

o

यद्यपि वै० मते आख्यातं (तिङ्) भावनायामसाधुः किन्तु कर्तरि साधुः। मी० मते तु आख्यातं भावनायां साधुः कर्त्रादौ न साधुः। शक्तत्वं साधुत्वमिति नियमानुरोधात्। तेन जैमिनिनासह पाणिनेर्विरोध आपद्यते। तथापि साधुत्वासाधुत्वयोर्निर्णयाधिकारः प्राधान्येन वैयाकारणानामेव। मीमांसकानान्तु ज्ञानकाण्डे, कर्मकाण्डे, उपासनाकाण्डे, चाधिकारोऽस्ति। न तु शब्दसंस्कारविशेषे।

वस्तुतः जैमिनिनाऽपि धात्वर्थ क्रियाप्राधान्य भङ्गी क्रियते। यथा—भावार्थाः (क्रियार्थाः) कर्मशब्दाः (धातवः) एतेन धातुभ्यः क्रिया (तन्मते) प्रतीयत एव। उक्त प्रमाणेन भावनाधात्वर्थैव नत्वाख्यातार्था। अतएव मञ्जूषाशासने जैनिनीय वचनव्याख्यातृभिर्दूषितानित्युक्तम्। नतु मूलकारेण।

एवञ्च—आख्यातं भावनायामसाधुः। यत्परः शब्दः स शब्दार्थः। यत्रार्थे यस्य शब्दस्य शास्त्रेण विधानं कृतं तत्रार्थे स (शब्दः) साधुः। अन्यथा—चतुर्थ्यर्थे = उद्देश्ये ( उद्देश्यश्चतुर्थ्यर्थः ) करणे तृतीया ( साधन विभक्ति ) प्रयोगवत्। चतुर्थी—स्थाने तृतीयाया प्रयोगोऽसाधुरिव धात्वर्थभावनायाः प्रयोगस्थाने आख्यातार्थभावनायाः प्रयोगोऽसाधुः। तथा सति

मी० वैयाकरण से कहते हैं कि तुम्हारे मत में 'नानृतं वदेत्' इस निषेध में क्रत्वर्थही ( भावना का प्राधान्य ) नहीं सिद्ध होगा। क्योंकि प्रत्ययार्थ प्रधान नियम है। तिप्रत्यय से कर्ता ही उक्त होगा, श्रुत होगा, उससे पुरुषार्थ = कारक ( कर्ता ) का प्राधान्य होगा ही। क्रत्वर्थता = क्रिया की प्रधानता तो प्रकरण = प्रसंग से सिद्ध होगा। और प्रकरण से श्रुति = श्रवणजनितज्ञान बलवान होता है। कर्ता अर्थ श्रुत है भावना अनुमित या प्रसंग से लब्ध है। अत प्रकरण बेचारा श्रुति के साथ विरोध में बाधा जाता है। तो भावना की मुख्यविशेष्यता मूलकृशाब्दबोध नहीं होगा, तन्न = ये बात नहीं है। हमारे सिद्धान्त में तिङर्थ = कर्ता कम को विशेषण माना गया है। नानृतं वदेत में तिङर्थ कर्ता उच्चारण क्रिया में विशेषण है अतः पुरुषार्थ ( कर्ता ) का प्राधान्य नहीं होगा। यहाँ कर्ता का निषेध नहीं है किन्तु उच्चारण क्रिया का निषेध है।

दोषः समापतति। तथा याज्ञे कर्मणि—असाधुशब्दप्रयोगात् व्याकारण-व्यङ्ग्य संस्कारविषयविहीनतयाऽप्रयोगात्। शिष्टप्रयुक्तत्वाभावात्। 'नानृत वदेत्' अश्वशब्द प्रयोगोऽर्थान्नृतम् न वदेत्, इति निषेधस्योल्लङ्घनं = उपेक्षणम्, तत्प्रयुक्त = उल्लङ्घन निमित्तक प्रायश्चित्तं = पापविशोधनं। प्रायः पापं विजानीयात्चित्तं तस्य विशोधनम्। इति दर्शनान्तरीय व्युत्पत्तिमतां—अन्यं दर्शनं दर्शनान्तरं = मीमांसा शास्त्रं तत्रभवा व्युत्पत्तिः—शास्त्रज शब्दार्थ ज्ञान विषयक संस्कार विशेषः। दर्शनान्तरीय-व्युत्पत्ति = ज्ञानवतां तु स्यादेव = पापविशोधनार्थं प्रायश्चित्तं कर्तव्यं भवत्येव।

मी० वैयाकरणमाह—नन्विति त्वन्मते = तव वै० मते अनृतं न वदेत् = यज्ञे कर्मणि मिथ्यावाक्यमसंस्कृतवचन नोच्चारयेत्। अस्मिन्निषेधवचने क्रत्वर्थस्य = क्रतु = क्रियारूपा (देवसङ्गति-पूजा-दानानुकूल व्यापारपरूा) तदर्थस्य व्यापारस्य निषेधो = पापविशोधन प्रसङ्गाभावानुकूल व्यापार निषेधो न सिद्धयति उच्चारण—रूप प्रधान क्रियायाः निषेधः सिद्धयति। किन्तु अख्यातेन = तिङा। लःकर्मणीति सूत्रेण कर्तर्यर्थे तिप्प्रत्यस्य शक्तिसम्भवात् अतएव कर्तुरुक्तत्वात् प्रत्यायार्थप्रधान—न्यायाच्च निषेधवाक्ये श्रुत्या श्रावण प्रत्यक्षेणपुरुषार्थतैव = तिबर्थो यः कर्ता सैव पुरुषः तस्यार्थः प्राधान्यस्य निषेध। कर्तृकारक प्रधान निषेध वोधात्। अर्थात् पुरुषस्य। कर्तुनिषेधः नतु व्यापारस्य भावनामुख्यविशेष्यक शाब्दवोध भङ्गापत्तेः। भावनायाः वोधस्तु पश्चात्, प्रकरण = प्रसङ्गवशाद्भवति। श्रुत्योपस्थितस्य कार्तृकारकस्य प्रसङ्गात् क्रत्वर्थता = भावनायाः वोधो जायते। तेन पुरुषार्थस्य =

अतः विशेषणीभूत कर्ता निषेध को अपना अङ्ग नहीं बनायेगा। भावना तो प्रधान हैं, वह निषेध को स्वीकार करेगी। समर्थ है। अतः प्रकरण से क्रत्वर्थता = भावना की उपलब्धि में भी दोष नहीं है।

अथवा क्रत्वर्थता = क्रतुयुक्तपुरुषधर्म = क्रिया से विशिष्ट जो पुरुष (कर्ता) उसका धर्म = कर्तृत्व/जो व्यापार रूप है। यही अर्थ हो जाय और अनुष्ठान = कार्यविधि में कोई अन्तर नहीं पड़ता। क्रिया कारक भाव अनुकूल है। जैसे—जञ्जभ्यमान = जमहाई, अङ्ड़ाई लेनेवाला दक्षक्रतू शब्द घटित मन्त्र का उच्चारण करें। यहाँ पर शानच प्रत्यय से कर्ता के उपस्थित होने पर भी क्रिया विशिष्ट पुरुष का धर्म = विशेषणीभूतक्रिया स्पष्ट भासित है। इसी प्रकार प्रसंग में अनृत (मिथ्या, अशुद्ध) उच्चारण का निषेध ही क्रतुयुक्तपुरुष धर्म होने से क्रिया की उपकारता उपलब्ध होती है। इस प्रकार वाक्य में श्रुति प्रकरण निर्विरोध समावेश सिद्ध हुआ इत्यादि भूषण में विस्तृत है।

वैय्याकरण

नन्वाख्यातस्य भावनायामसाधुत्वे ततस्तद्बोधो न स्यात्साधुत्वज्ञानस्य शाब्दबोधे हेतुत्वादित्यत आह–बोध इति। असाधुत्वेऽपि साधुत्वभ्रमाद् बोधोऽस्तु नाम, अपभ्रंशवत्। असाधुत्वं तु स्यादेवेति भावः। वस्तुतः साधुत्वज्ञानं न हेतुस्तद्व्यतिरेकनिर्णयोऽपि न प्रतिबन्धक इति "असाधुरनुमानेन" इत्यत्र वक्ष्यामः ॥ २१ ॥

रङ्गोजिभट्टपुत्रेण कौण्डभट्टेन निर्मिते।
पूर्णो भूषणसारेऽस्मिन् धात्वाख्यातार्थनिर्णयः ॥ १ ॥

इति कौण्डभट्टविरचिते वैयाकरणभूषणसारे धात्वर्थाख्यात-
सामान्यार्थनिर्णयः समाप्तः ॥

०

कर्तुःप्राधान्यं स्यात्। श्रुत्यादीनां विरुद्धयोरनेकयोः धर्मयोः सन्निपाते, एकत्रोपस्थिते सति पूर्वेण परस्य वाधो वक्तव्यः। नच वलवता दुर्वलस्य वाधो भवति। कस्य दौर्बल्यमिति निश्चयार्थं पारदौवल्यमिति परं दुर्वलम्। पदपेक्षया यत्परं तदपेक्षाया तदेव दुर्वलमित्यर्थः। पूर्वस्य अर्थस्य = विनियोजकस्य लिङ्गाद्यपेक्षया विप्रकर्षात् = उत्तर वर्तित्वात्। लिङ्गादीनां पूर्वापेक्षया विलम्बेनो परिथितत्वात्। यथा–निरपेक्षो रवः श्रुतिः, अर्थस्य कथने पदान्तरस्या काङ्क्षाशून्यश्शब्दो। रवः–श्रुतिः, अर्थस्य कथने पदान्तरस्या काङ्क्षत शून्यश्शब्दो। खः=श्रुतिः। व्रीहानवहन्ति, अवहननक्रिया जन्य फल भागित्वकर्मत्वं व्रीहीणामितरनिरपेक्षैव वोध्यते।

शव्दानामर्थं प्रकाशन सामर्थ्यं लिङ्गम्। यथा देवसदनं दामि। दामि शव्देन 'दापलवने' लवनार्थ प्रकाशकतया छेद्रनार्थे सामर्थ्यं लिङ्गम्। अथवा लीनं प्रच्छन्नं, गुप्तमर्थं बोधपतीति।

अन्योन्या काङ्क्षावशात् एकस्मिन्नर्थे पर्यवसन्नानि पदानि वाक्यम्।

लब्धवाक्य भावनकायां कार्यवशत् वाक्यान्तराणि सह सम्बन्धः प्रकरणम्। स्थानं = क्रमः देशसामान्यम्वा। समाख्या = यौगिकश्शव्दः प्रकृत्यर्थ प्रत्ययार्थ सम्बन्धात् अर्थप्रकाशकः। अतएव योगवलमुच्यते। अवयववलं = समाख्या।

यदि आख्यात = तिङ्को भावना = क्रिया अर्थ में असाधू मानेंगे तो आख्यात से भावना का बोध भी नहीं होना चाहिए। क्योंकि साधुत्वशास्त्रीयसंस्कार का ज्ञान ही शब्दजन्यज्ञान के कारण हैं तन्न, ऐसा नहीं कह सकते। इसीलिये कहा कि 'बोधो नेह निवार्यते,' बोध–समझ = ज्ञान को कोई रोक नहीं सकता वह चाहे भ्रमात्मक हो या प्रमात्मक। असाधु होने पर भी नै० रीति से साधुशब्द का भ्रम होकर बोध हो जाय क्या दोष है? अपभ्रंश की तरह। जैसे अपभ्रंश बोध कराता हुआ असाधु माना जाता

एतेषाम्मध्ये यदपेक्षया यत्परं तद्दुर्बलमित्यर्थः श्रुतिलिङ्गयोर्विरोधे श्रुतिवलीयसी। लिङ्गन्तु दुर्वलम्। अर्थस्य = नियोजकस्य विप्रकर्षात् = विलम्बेनोपस्थानात्। प्रकरणाद्यपेक्षया श्रुतेः प्राबल्यात्। तच्च = प्रकरणादिकञ्च श्रुति विरोधेबाध्यते। मी० मते श्रुत्या आख्यातार्थ-भावनोपतिष्ठते प्रकरणात् = भावनया कर्ता अक्षिप्यते क्रत्वर्थ क्रियायाः वाच्यत्वे सति तस्याः प्राधान्येन क्रत्वर्थतायाः प्राधान्यं जायते। ततो न श्रुति विरोधः। त्वन्मतेतु विरोधोऽस्त्येव-यतोऽयं निषेधः दर्शपौर्णमास क्रतु प्रकरणे पठितत्वात्। तत्र क्रत्वर्थस्य = क्रियायाः प्राधान्यस्य आवश्यकत्वात्। तन्न —

श्रुतिलिङ्गयो विरोधे श्रुतिर्वलीयसी। लिङ्ग दुर्वलमस्तु नाम्। किन्तु वैयाकरण सिद्धान्ते "तिङर्थस्तु विशेषण' मुक्तं वर्तते। तेन = तिङर्थस्याप्राधान्येन दोषस्य परिहृतत्वात् श्रुत्या आख्यातेन कतुरुपस्थितेऽपि-भावनावत् तस्य प्राधान्यं न भवति। येन निषेधस्य पुरुषार्थताशङ्क्यते। किन्तु पुरुषार्थः = कर्तृकारकंभावनायां विशेषणम्। अतो गुणीभूतः = विशेषणीभूतः कर्ताश्रुतेन नञर्थेन सह न सम्बद्धयते। अतः स्वाङ्गत्वेन + भावनायां विशेषणतया प्रकाशकत्वेन निषेधं ग्रहीतु-स्वायत्तीकर्त्तुमलं… पर्याप्तन्नेत्यर्थः। ( प्रधाना प्रधानयोः प्रधाने कार्यसम्प्रत्यः ) इति न्यायेन भावनैव प्रधानरुपेण निषेधरूपं कार्यं स्वाङ्गत्वेन ( स्वयत्तीकर्तुं समर्था। शक्तिरस्ति। इत्थं प्रकरणात् + पश्चात् क्रत्वर्थतायाः क्रियायारुपस्थिति सत्यपि न दोषः सिद्धान्ते भावनाया प्राधान्यात्।

ननूक्तरीत्या 'न कलज्जं भक्षयेत्, इत्यत्र भक्षणाश्रये कर्तरि नञर्थस्य = निषेधस्य सम्बन्धो न स्यात् अतआह—अस्तुवा = पुरुषार्थस्य = कर्तुः प्राधान्यमस्तु नाम क्रतुयुक्तपुरुषधर्मः = क्रत्वर्थेन = क्रियया युक्तः = विशिष्टः पुरुषः = कर्ता, तस्यधर्मः कर्तृत्वं, तच्च व्यापारुपम्। ततो नास्तिदोषाः। यतोह्यनुष्ठाने यज्ञकर्माण ये केचन दीक्षितास्ते यजमानो भवत्वन्ये वा भवन्तु नानृतं वदेदिति वचनं सर्वान् प्रभवति। तत्र विशेषाभावात् = भेदस्य अभावात् श्रुतिप्रकरणाभ्यां सर्वैरनृतं वर्जनीयम्। सर्वे कर्तार यत्र यज्ञ क्रियाविशिष्टाः। अतुः क्रतुयुक्त पुरुषधर्मस्तु क्रत्वर्थ एव नान्यत्। यथा-जञ्जभ्यमानो = जृम्भाँ कुर्वाणो मयि दक्षक्रतू। इति शब्दघटितं मन्त्रम् अनुब्रूयात् = झटिति उच्चारयेत्। तत्र सन्देहः किं शुद्धपुरुष धर्मोऽहोश्वित् क्रत्वर्थता तत्र शानच् प्रत्ययेन कर्तुरुक्तत्वात् पुरुषधर्मस्य प्राधान्यम्। एवं नानृतं वदेदित्यत्रापि पुरुषार्थस्य प्राधान्येऽपि न क्षतिः।

है वैसे आख्यात–भावना का अर्थ मी० कों को भले ही ज्ञान कराये किन्तु उस अर्थ में वह असाधु रहता ही है। निष्कर्ष निचोड़ते हैं कि वस्तुतः–सिद्धान्त में साधुत्व का

 


न च व्याकरणस्य अनुरोधो नादर्तव्यस्तन्न—ब्राह्मणेन निष्कारणं षड्गोवेदोऽध्येयो ज्ञेयश्चेति भाष्येण—पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।सर्वोपकारकं ग्रह्यं कृत्स्नं ज्याज्यं न किञ्चन । इति पराशरोपपुराणोक्तः व्याकरणस्य प्राधान्यं प्रति पद्यते । ऐतेन फलव्यापारौ धात्वर्थौ कर्तृकर्मणीतिङर्थौ इति सिद्धयतः ।

उपसंहारं ब्रूते नन्विति आख्यातस्य=तिङः भावनारुपार्थेऽसाधुता मन्यसे तर्हि ततः=आख्यातात् तस्याः=भावनायाः बोधो न स्यात् । यतोहि शाब्दबोधे साधुत्वज्ञानं कारणमस्ति । बोधकर्त्वं शक्तिरितिमतेऽपि साधुशब्दा एव बोधकाः । अत आह 'बोधोनेह निवार्यते' असाधुत्वेऽपि= आख्यातस्य भानायामसामर्थ्येऽपि, तत्र साधुत्वस्य–व्याकरण व्यङ्ग्य संस्कारविशेषस्य भ्रमात=अनर्थारोपात् बोधोजायतां नाम अपभ्रंशवत्= अपभ्रंशे = असंस्कृते शब्दे गाँव इत्याद्यपभ्रंशे ग्राम इति साधुत्वस्यभ्रमात्= आरोपात् बोधे सत्यपि संस्कारविहीनत्वं जायत एव ।

न नु साधुत्वज्ञानं विनाऽपि शाब्दवोधोदयेन उक्तनियमे व्यभिचारात् अप्रभ्रंशादपि वोधदर्शनाच्च तदाह वस्तुतस्तु—साधुत्वज्ञानं शाब्दवोधे न कारणम् । असाधोरपि वोधोदयात् तद्व्यतिरेकि—निर्णयोऽपि=यं प्रति यस्य कारणत्वं निश्चितम् । तद्व्यतिरेकि अभाव ) निश्चय एव प्रतिबन्धको भवति । प्रसङ्गेतु साधुत्वज्ञानं शाब्दबोधे कारणम् । परन्तु कारणाभावेऽपि न कश्चित्प्रतिवन्धकः । तथाच आख्यातानां भावना वोधे वाधकाभावः । तात्पर्यमिदं यत्–असाधुरनुमानेन वाचकः कैश्चिदिष्यये ।

वाचकत्वाविशेषेतु बोधोनेह निवार्यते । इत्यग्रे वक्ष्यमः=अपभ्रंशेऽपि शाब्दवोधस्य सर्वानुभव सिद्धतया वोधे साधुत्वज्ञानं न हेतुः । नापि असाधुत्वज्ञानं प्रतिवन्धकम् । किन्तु पुण्यपापयोर्नियमस्तु स्यादेव यतः पुण्यजनकं साधुरतः साधुभिभाषितव्यम् यतः पापजनकमसाधुरतोऽसाधुभिर्नभाषितव्यम् । अतः शास्ति हिताहितमुपदिशतीति शास्त्रम् ॥२१॥

श्रीप्रभाकरमिश्रेण निर्मितेयं प्रभाकरी पूर्णौ भूषणसारस्य धात्वाख्यातार्थनिर्णयः ॥ १ ॥

ज्ञान शाब्दबोध में कारण नहीं माना गया है किन्तु शक्ति का ज्ञान शाब्दबोध में कारण है । शक्ति ज्ञानाधीन उपस्थिति होनी चाहिए । जिसके प्रति जो कारण है उसके व्यतिरेकिं=विपरीत–भिन्न निर्णयः ( असाधुनिर्णय ) भी बाधक नहीं होता । "असाधुरनुमानेन कारिका' के प्रसंग में नहीं जायेगी ॥२२॥

इति प्रभाकरी हिन्दीटीकायां सारस्य सिद्धा धात्वर्थ व्याख्या ॥१॥

चत्वारस्तिङर्थाः पूर्वमुक्ताः, तेषु कालस्य वाचकाः (व्यञ्जकाः) वा लकाराः भवन्ति। ते टित् ङित् भेदेन द्विधा विभज्यन्ते। षट्सन्तष्टिल्लकाराः, चत्वारोङितः। ते अ इ उ ऌ ए ओ इत्यादि वर्णक्रमानुसारेण वोध्याः।

प्रारभ्यमाणेऽस्मिन् प्रकरणे प्रौढ़विदुषा कौण्डभट्टेन लकाराणां विशेषार्थविश्लेषणवुध्या, इयं कारिका प्रस्ताविता वर्तमान इति—

वतमाने लट्—क्रियायाः प्रारम्भात् फलोत्पत्तिपर्यन्तः क्रियात्मकः कालो वर्तमान इत्युच्यते = वर्तते = फलसिद्धिपर्यन्तं तिष्ठतीत्यसौ वर्तमान कालस्तदेव लडर्थः।

परोक्षेलिट्–इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्, क्रियायाः, अनद्यतनभूतार्थत्वे कर्तृ विशिष्ट प्रत्यक्षाविषयत्वं परोक्षत्वम्। तादृशः कालो लिडर्थः। यथा— कदा मोदकं जघास। श्वो— अनद्यतने लुट्— फलसिद्ध्यर्थमागाम्यर्धरात्र्यनन्तरं या सम्भाविनी क्रिया तदात्मकः कालो लुडर्थ। श्वोअध्येता। भाविनी = सामान्यभविष्यकालिकक्रिया—लृट्शेषे च उक्तादन्यः शेषः लुड्विधावनद्यतन इत्युक्तः तस्माद्भिन्नोऽद्यतनभविष्यत्कालः। स लृडर्थः अद्य-गुरुकुलं गमिष्यति। यत्र क्रियार्था क्रिया न तिष्ठति सोऽपि शेष पदार्थः। यथा–स पठिष्यति। अत्र चपदेन क्रियार्थायां क्रियायामिति पदद्वयमनुकृष्यते। तेन क्रियार्थायां क्रियायांमसत्यामित्युक्तः तदन्यः शेषः। वृत्तिकार मते असत्यामिति शेषपदार्थः। यथा पठिष्यति गमिष्यति इत्यादि— कृयार्था क्रियाऽपि शेष पदार्थः यथा—पठिष्यतीति याति।

---

निर्णय हो चुका। उससे अव्यवहित विधेयभूत लकारों का अर्थ निर्णय शेष है। अतः कितने लकार विशेष है। उनके क्या अर्थ है। इस स्वाभाविकी जिज्ञासा की शान्ति के लिए प्रकरण अवतरित होता है। 'अथ लकारार्थनिर्णय इति।

प्रत्येकं = एक एक करके दशों लकारों का निरुपण = विशेष अर्थ का ज्ञान कराते हैं। यद्यपि दशों लकारों का सामान्य अर्थ की ( लः कर्मणि सूत्र से ) तिङर्थ निरुपण में अभिव्यञ्जना की जा चुकी है। तथापि विशेषार्थं निर्णय की जिज्ञासा से प्रारम्यमाण प्रकरण में परमविद्वान् श्री कौण्डभट्ट से उसी अर्थ की अभिव्यक्ति के लिए निम्नकारिका अवतरित की गयी है।

 

लेट् लोटलकारौ विध्यदौ प्रार्थनादौ च सन्तौ समानार्थकावास्ताम्। भेदस्त्वियान्, यत् लेट्वेदे लोट् लोके प्रयुज्यते। अनद्यतनभूतकालो लङर्थः।

अद्यतनानद्यन प्रतिबन्ध विनिर्मुक्तभूतकालो लुङर्थः। लिङर्थस्तु-विधिः-प्रेरणाकालः आमन्त्रणं कामचाराऽनुज्ञानिमन्त्रणं=नियोग करणं, कार्ये प्रवृत्ति कालः। अधीष्ठः सत्कारपूर्वको व्यापारः, सम्प्रश्नः=अज्ञात जिज्ञासा। यथा—वेदमधीय उत तर्कम्। प्रार्थना—भो गुरो ? मां संस्कृतमध्यापयेति। गुरूद्देश्यकप्रवर्तना विषयीभूता शिष्यनिष्ठाऽध्यापना।

लृङर्थः—क्रियाया असिद्धिसत्वे क्रिययोः परस्परं कार्यकारण भावो यत्र स कालः। छात्रोऽपठिष्यत् परीक्षामुदतरिष्यत्।

विशेषार्थस्य विस्तरेण विचारः।

---

'विशेषार्थो का संक्षिप्त परिचय'

'वर्तमाने=इस कारिका के अर्थ निर्देश प्रसङ्ग में क्रमशः लकारों का अर्थ निर्णय करते हैं।

वर्तमाने लट सूत्र के आधार पर लट का विधान वर्तमान काल में किया गया है। इस दृष्टि से भूषणकार ने प्रारब्ध=शुरुआत की गयी क्रिया के फल की उत्पत्ति पर्यन्त (क्रियात्मक) काल को वर्तमान काल अर्थ मानकर लट् लकार का प्रयोग किया है। परोक्षे—जो काल कर्ता के साथ प्रत्यक्ष (इन्द्रिय जन्य ज्ञान) का अविषय हो उसे परोक्ष कहते हैं। (परोक्षे लिट) सूत्र के आधार पर फल को उत्पन्न करके क्रिया समाप्त हो और कर्ता के प्रत्यक्ष का विषय न हो उसी अर्थ में लिट् का प्रयोग किया गया है। श्वो—आने वाले अनद्यतन काल में लुट् का विधान है। अद्यतन और अनद्यतन भेद से भविष्यत् दो प्रकार का है। अनद्यतन काल को ही पूर्व और भावीं पद से कहते हैं। अनद्यतने लुट् सूत्र के आधार पर जिस क्रिया मे आगामी अर्धरात्रि के पश्चात फल की उत्पत्ति हो' इस भाव में लुट का प्रयोग किया गया है।

लृट् लकार लृट शेषे च सूत्र के आधार पर प्रयुक्त है। जो अर्थ उक्त हो उससे भिन्न अर्थ को शेष कहते हैं। जो अद्यतन अनद्यतन के प्रतिबन्ध से विमुक्त सामान्य भविष्यत्काल है, वही शेष पदार्थ है, लृङर्थ है। जहाँ क्रियार्था क्रिया न रहे वह भी शेष पदार्थ है। वह पढ़ता है वृत्तिकार के मत में असत्यां ही शेष पदार्थ है।

## ॥ अथ लकारार्थ निर्णयः ॥

अवतरणम्—धात्वर्थ निर्णयानन्तरं लकारार्थं निर्णस्य कः प्रसंगः सङ्गतिर्वा। यतोहि स्मृति विषयत्वे सत्युपेक्षानर्हत्वं प्रसङ्गः। असंगतम् असम्वद्धम्वान प्रयुञ्जीत, इत्याधारीकृत्य प्रनर्भूमि शोधनं सिंहावलोकन न्यायेन वाऽवश्यं सङ्गतिः संयोज्या, अन्यथा उन्मत्तप्रलाप इव प्रकरणावतरमसङ्गतमुपेक्षणोयविषयांक्रान्तिश्च सम्भाव्येत। पूर्वप्रकरणस्य परप्रकरणेन सह सम्वन्धाभिधानं सङ्गतिः : पूर्वस्मिन् प्रकरणे धातोरर्थौ (फलव्यापारौ) निर्णीतौ जातौ। तयोः प्रधानं व्यापारः तिङर्थस्तु विशेषणम्। तिङर्थाः=कर्तृ कर्म-संख्या-कालाः फलञ्चै तत्सर्वं व्यापारे विशेषणम्। कालस्तु व्यापारे विशेषणमुक्तं वर्तते। अत एव व्यापार मुख्यार्थक शाब्दवोधोजायते। एतेन कालस्य क्रियाधर्मता सुतरां साधिता। एवं व्यापारे विशेषणीभूतस्य कालस्य ज्ञानम वश्यं सापेक्ष्यं जातम्। यद्यपि कालस्य विभाजकानां (वाचकानां द्योतकाम्बा) लकाराणां सामान्येनार्थाः लः कर्मणीति सूत्रेण कर्तरि-कर्मणि भावे च साधिताः निर्णीताश्च। लकारस्थानापन्नस्तिङ् लकारधर्मं कर्ता कर्म संख्याकालं लभते। एवं तिङर्थः कालरूपेण स्मर्यते। ततो लकाराणां विशेषार्थज्ञानं मदिष्टसाधनं प्रवृत्तौ प्रयोजकञ्च। यतोहि सामान्यार्थज्ञानपूर्वक विशेषार्थज्ञानं जायते। विशेषार्थश्च=वर्तमान-परोक्ष-भविष्यानद्यतन=सामान्यभूतेत्यादिरूपः। ऐतेषां विशेषर्थानां तद्बोधकानां लाकाराणाञ्च, स्मार्यस्मारकभावसम्बन्धबोधोऽनुपेक्षणीयः। तस्मात् कालस्य प्रकाशकानां (वाचकानां) लकाराणामर्थस्य निर्णयो जिज्ञासाविषयो जातः अथवा—लकाराणां प्रकृतिः धातुः यस्यार्थो निर्णीतोऽभूत्। तस्याः (प्रकृतेः) विधेयभूतानां लकाराणामर्थाः निर्णयायावशिष्यन्ते। अतः 'कियन्तः कालविशेषाः, तेषां केऽर्थाः" इति स्वाभाविकी जिज्ञासा समुदेति। तच्छान्त्यर्थं प्रकरणभवतार्यते। अथ लकारार्थनिर्णय इति॥

---

धात्वर्थ निर्णय के अनन्तर लकारार्थ निर्णय की आवश्यकता क्यों? 'असङ्गत एवं असम्बद्ध का प्रयोग नहीं करना चाहिए। इस आधार पर प्रसङ्ग की संङ्गति आवश्यक हुई। अन्यथा उन्मत्त व्यक्ति के प्रलाप की तरह, यह ग्रन्थ उपेक्षणीय विषय से आक्रान्त हो जाता। पूर्व प्रकरण से पर प्रकरण का सम्बन्ध संयोजन ही सङ्गति

# अथ लकारार्थनिर्णयः

**अथ प्रत्येकं दशलकाराणामर्थं निरूपयति—**

डिल्लकार कन दस चीजों में आता है।

**वर्तमाने परोक्षे श्वो भाविन्यर्थे भविष्यति।**
**विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लड़ादयः॥ १ ॥(२२)**

**लडादयष्टितः षट् क्रमेणेष्वर्थेषु द्रष्टव्याः।**

---

प्रत्येकं = एकमेकं प्रतीत्यर्थः (वीप्सायामत्ययीभावः) दशलकाराणामर्थं निरुपयति = विशेषरुपेण प्रकाशयति। यद्यपि दशचते लकाराश्चेति विग्रहे स्वाभाविकस्य कर्मधारयसमासस्य विरोधः दिक्सङ्ख्ये संज्ञायामिति सूत्रेण सम्भाव्यते। दिग्वाचिना संख्यावाचिना च सह समासः संज्ञायामेवेति नियम्यते। अत्र लकारेषु एकैकं संज्ञेति नानुभूयते। तथापि सप्तर्षिरिव सत्स्वन्येषु महर्षिषु परिगणितानां वशिष्ठादिमहर्षीणां सप्तर्षिसंज्ञा नान्येषाम्। एवं लडादिलृङन्तपर्यन्तदशलकारसंज्ञा स्वीकार्या। अतो नियमविरोधी न प्रभवति।

---

है। पूर्व में धातु के अर्थ का निरुपण किया गया। जिसको फल और व्यापार कहते हैं, उनमें प्रधानं व्यापार है व्यापार में तिङर्थ = कर्ता-कर्म-संख्या-काल विशेषण है। व्यापार प्रधान हुआ 'कालस्तु व्यापारे विशेषणम्' काल क्रिया में विशेषण है।

पूर्व प्रकरण में व्यापार की मुख्यतया चर्चा हुई, उसमें विशेषणीभूत काल का ज्ञान अनिवार्य है। यद्यपि पूर्व में काल विभाजक, द्योतक, (व्यञ्जक), एवं वाचक (जिसका जिससे वोध होता है उसका वह अर्थ है) लकारों का सामान्य अर्थ (लः कर्मणि सूत्र से विहित) (कर्त्ता कर्म) कहा गया जो मेरा इष्ट साधक है। तथापिउक्त सामान्य अर्थ से लकार स्थानापन्न तिङ् का विशेषार्थभूत काल स्मृत हुआ। सामान्य अर्थज्ञानपूर्वक विशेषार्थ का ज्ञान होता है। 'मुझे लकारों के विशेषार्थों का ज्ञान हो जाय' यही इच्छा प्रकरण में प्रवृत्ति का प्रयोजक है। मदिष्ट साधन विषयक विशेषार्थ = वर्तमान-भूत-भविष्य-अद्यतन-अनद्यतन-परोक्ष-हेतु हेतमद्भाव-आज्ञा, आशोः-प्रवर्तना इत्यादि अर्थ ही लकारार्थ हैं। लकारों का बिशेषार्थों के साथ स्मार्य स्मारक भावसम्बन्ध उपेक्षणीय नहीं है। अतः काल का प्रकाशक या वाचक लकारों अर्थ निर्णय नितान्त जिज्ञास्य हो गया। अथवा धातु प्रकृति है, जिसका अर्थ

**तथाहि–वर्तमानेऽर्थे लट्"वर्तमाने लट्" इति सूत्रात्*प्रारब्धापरिसमाप्तत्वं, *भूतभविष्यद्भिन्नत्वं वा वर्तमानत्वम्। पचतीत्यादावधिश्रयणाद्यधःश्रयणान्ते मध्ये तद् अस्तीति भवति लट्प्रयोगः।**

---

वर्तमानत्वं कालस्य भेदः। नच कालस्य नित्यत्वात् अखण्डत्वात् कथं भेदः इति। तत्र कालविभागस्याधारः क्रिया। तस्या एवारम्भसमापन दर्शनात्। तस्यां कालो विशेषणम्। कालस्तु व्यापरे विशेषण मिति प्रमाणात्। फलोत्पत्य नन्तरं समाप्ता क्रिया भूतकाल इत्युच्यते, प्रचलन्ती वर्तमान इति, भविष्यन्ती भविष्य काल इत्युते। इत्थं कालो विभाजयितव्यः। वर्तमानत्वस्य वाचको लडिति। किन्नाम वर्तमानत्वमित्याकाङ्क्षायामाह ग्रन्थकारः प्रारब्धापरिसमाप्तत्वं वर्तमानत्वमिति। लक्षणस्यार्थः–प्रारब्धाचासावपरिसमाप्ता या क्रिया तस्याः भावः प्ररब्धापरिसमाप्तत्व मिति। अत्र त्व प्रत्यययस्य विशेषणमर्थः। प्रारब्धायांक्रियायांविशेषणं वर्तमान काल इति। प्ररब्ध पदार्थस्तु व्यापारनिष्ठः। धातु वाच्यानां तत्तफलानामुत्पत्ति पर्यन्तं स्थितो योऽन्तिमो व्यापारस्तस्य प्रागभावाधिकरणः कालस्तत्र विद्यमाना फलानुकूलाया कृतिः (यत्नविशेषः) तस्याः विषयभूतो व्यायारः प्रारब्ध इत्युच्यते। अथवा फललाभं यावत् क्रियाया

---

विद्धयादि अर्थ में लेट प्रार्थनादि अर्थ में लोट का विधान है। साधारण रूप से लेट का वेद में लोट का लोक के व्यवहार स्थल में प्रयोग है। इनके विधि निमन्त्रणादि अर्थ है। टित ल्कार पूर्वोक्त अर्थों में द्रष्टव्य है। ये लकार तिङ् के स्थानी भूत है। लकारों का विभाजन दो पार्टी में हुआ है टित् पार्टी में ६ लकार है। इनके षड्विधित्व की अभिव्यक्ति या क्रम शैली वर्णसमाम्नाय के अच् प्रत्याहार वोध वर्णक्रम पर आधारित है। जैसे अ-इ-उ-ऌ-ए-ओ के आधार पर क्रमशः लट् लिट् लुट् ऌट् लेट् लोट की उपस्थिति पाणिनि वैयाकरणों ने माना है इसी प्रकार अ-इ-उ-ऌ के आधार पर लङ् लिङ लुङ् ऌङ् को समझो।

## ।। विशेषार्थ संक्षिप्ती का विस्तृतीकरण ।।

वर्तमाने लट्—वर्तमान = काल का एक भेद है जिसका आधार क्रिया है। क्रिया का ही आरम्भ और अपवर्ग = समाप्ति सम्भव है। उसी में काल विशेषण है। कालस्तु

आरम्भोऽस्ति यस्मिन् काले स कालः प्रारब्धः। कालं क्रियात्मकमाहुरिति सिद्धान्तात् कालः क्रियारूपैव। सा प्रारब्धा सती असमाप्ता चेत्। अर्थात् तत्तत्फल जनिकायाः चरमक्रियायाः ध्वंसात् ( समाप्तेः ) प्रागभावाधिकरण काल वृत्तिः, अथवा ध्वंसानधिकरण काले स्थितो य क्रियात्मकोऽर्थः स एव वर्तमान काल इत्युच्यते। इदं लक्षणं ( क्रिया एव काल ) इत्यभेद पक्षे संघटते। भेद पक्षेतु क्रियाकालयोः परस्परभेदवादिनस्तु—तयोः परिच्छेद्यपरिच्छेदकभावसम्बन्धमिति ब्रुवन्ति। परिच्छेत्तुं = विभाजयितुं योग्यः परिच्छेद्यः क्रियैव विभाजयितुं योग्याऽस्ति, कालस्याधारभूता च। यतोऽऽधारभूताऽतो परिच्छद्या। तत्रण्यत् प्रत्ययो विभाग विषय-वाचकः। परिच्छिनत्ति–विभजतीति ( कर्तरि ) ण्वुलि ( अकिसति ) परिच्छेदकः = विभागानुकूल व्यापाराश्रयः कालोऽधेयः क्रियाया विशेषणत्वात्। अत्र क्रिया परिच्छेद्या, विभाग विषया, आधारभूता च कालस्तु क्रियायाः परिच्छेदको, विभाजकोऽऽधेयश्चेति निष्कर्षः।

अस्मिन्पक्षे–प्रारब्धाचासावपरिसमाप्ताचेति कर्मधारय समासे ( प्रारम्भवती या क्रिया तस्याः फलं सिद्धं = सफलं भवतु, असिद्धम्वा किन्तु प्रचलन्ती सा स्यात् तदा 'प्रारब्धापरिसमाप्ताक्रिया इत्युच्यते, सा अस्ति, अस्मिन्वेति विग्रहे अर्शादित्वादधिकरणेऽच्। सोऽधिकरण साधनः। तथा च प्रारब्धा सती अपरिसमाप्ता क्रिया यस्मिन् काले स कालो वर्तमानस्तस्यभावः तत्वम्। एवं क्रिया=आधेयी कालोऽऽधार इति निश्चप्रचम्। तयोरवच्छेदकता सम्बन्धस्तु ( साध्यत्वेन प्रतीयमान क्रियात्वसम्बन्धस्तु )

---

व्यापारे विशेषणम् ! क्रिया के माध्यम से काल में तीन विभाजन होता है, जिसका एक भाग वर्तमान काल है। इसी का द्योतक लट् है। अब लक्षण या परिभाषा के रूप मे वर्तमानत्व की जिज्ञासा स्वाभाविक हो गयी। अतः ग्रन्थकार ने प्रारब्ध अपरिसमाप्तात्वं को वर्तमानत्व लक्षण किया। प्रारब्ध ( शुरू की गयी और फल की उत्पत्ति पर्यन्त असमाप्ता अनुत्पन्न फलवाली ) जो क्रिया उसका भाव = विशेषणीभूतकाल ही वर्तमान काल है। वह क्रिया रूप ही है। अतः क्रियाप्मकः कालः कहा गया है।

अर्थ—प्रारब्ध = फल के लिए आरम्भिक क्रिया का फल की उपलब्धि पर्यन्त रहनेवाली अन्तिम क्रिया के ध्वंस ( समाप्ति ) का प्रथम अभाव = असत्ता, फलोन्मुखी क्रिया की सततस्थिति उसका जो अधिकरण ( आधारभूतकाल जिसमें क्रिया रहती है। आश्रये तु तिङ् स्मृताः ) उसी काल में रहने वाली कृति ( चल ) का विषयभूत

परिच्छेद्य, परिच्छेदकभावरूपः । अस्यां स्थितौ परिच्छेद्या=विभाज्या क्रिया परिच्छेदको (विभाजकः) कालः । तादृश सम्बन्धावच्छिन्ना प्रारब्धा, एवमपरिसमाप्ता या क्रिया तन्निष्ठा या आधेयता (वृत्तिता-विशेषो धर्मः) तन्निरूपितं दर्शितं लक्षितं, ज्ञापितं नियमितम्त्रा अधि-करणतावत्वं (आश्रयतावत्वं) वार्तमानकालत्वम्। अर्थात् प्रारम्भवती, (अपरिसमाप्ता च या क्रिया तस्याः आश्रयतावान्। वर्तमान इत्यर्थः। यथा—हरिं भजतीत्यत्र भज्धातोः प्रीत्यनुकूलव्यापारोऽर्थः । तत्र क्रिया-षोडशोपचारात्मिका यस्यामावाह्नादि पुष्पाञ्जलिपर्यन्त क्रियाकलापोऽन्त-र्भूतः तादृशधातोः परे तिप्रत्ययः कर्ता-कर्म संख्या इव कालस्यापि बोधकः। तथा सति क्रियात्मकः काल इत्यभेद पक्षे-हरिकर्मिका प्रीत्यनुकूला या क्रिया तदात्मकः काल इति शाब्दबोध भेद पक्षेतु (क्रिया कालयोर्भेद पक्षेतु) हरिकर्मिका प्रीत्यनुकूला प्रारब्धा (आवह्नादितः सती असमाप्ता असमाप्तपुष्पाञ्जलिनी या क्रिया तस्याः परिच्छेदकः वर्तमान इत्युच्यते। एवं अतीतकालिकी क्रिया विभाजकत्वसम्बन्धेन तिष्ठति यस्मिन् काले स भूतकालः। एवं भाविनी क्रिया विभाजकत्व-सम्बन्धेन तिष्ठति यस्मिन् काले स भविष्यत्कालः।

वर्तमानकाल लक्षणे प्रारब्धपदं भाविन्या क्रियया उपलक्षितस्य भविष्य कालस्य निवृत्यर्थम्। एवमपरिसमाप्त पदं भूतकालिक क्रिययोप-लक्षिते काले वर्तमानत्व व्यावृत्यर्थं देयम्।

बौद्धमते…क्षणसमूहः कालः क्षणपदं भूत-भविष्य-वर्तमानानां दिन-पक्षमास वर्षयुगदीनामुपलक्षणम्। तेन कालभेदो सुतरां सिद्धः।

---

व्यापार प्रारब्ध कहाता है। वह व्यापार असमाप्त हो तथा उन उन फलों को उत्पन्न करने वाली अन्तिम क्रिया ध्वंस का प्रथम अभाव (निरन्तर क्रिया का रहना) उस क्रिया के आधारभूत काल में रहने वाला व्यापार या क्रिया समाप्ति के अनधिकरण काल में रहने वाला क्रियात्मक अर्थ वर्तमानत्व कहाता है। यह लक्षण 'कालं क्रिया-त्मकमाहुः' क्रिया ही काल है। इस अभेद पक्ष में सफल है।

भेद पक्ष में—क्रिया और काल के भेदमत वादियों ने उन दोनों के परस्पर परिच्छेद्य—आधार परिच्छेदक—आधेय भाव सम्बन्ध माना है। क्रिया परिच्छेद्य है। विभाग का विषय है। क्रिया का परिच्छेदक एवं आधेय, विभाज्य है। यहां का

वेदान्तमतेऽखण्डो—भेद शून्यः कालः पञ्चविंशति तत्वाद्भिन्नः कालः, जगद् व्यतिरिक्तः। तत्रापि क्रिया माध्यमेनैव कालो भिद्यते। न्यायमते जन्यानां जनकः कालः। वर्तमानत्वादि भेदोऽपिजन्य एव। सर्वेषामाधारभूतो जनकश्च तेन भूतादीनामपि जनक आधारभूतश्च। 'वर्तमानत्वं कालधर्मः' क्रियाभेदाय कालस्त्वित्यादिना चं आख्यातार्थः काल इत्यपि सङ्गच्छते।

भाष्येऽपि न्याय्यात्वेषा वर्तमानकालतया आरम्भानपवर्ग पर्यन्तं भुञ्जानो हसति, जल्पति पिबति, निमिषतीत्युक्तम्। तावतीषु क्रियासु सतीषु अपि नान्तरीयकत्वात् भुङ्क्ते इति व्यवहार-दर्शनात् भुजिक्रियायाः हासादि क्रियाः विच्छेदिकाः न भवन्ति। कालस्य सामान्यलक्षणम्।

सम्पूर्णं कार्यं तत्वम्वा कालाधिकरणे प्रादुर्भवन्ति। अतः कालिक-सम्बन्धावच्छिन्नानां सर्वेषां कार्यकलापानामाधारत्वे सति तेषां निमित्त-कारणत्वं महाकालत्वम्। काले भवः कालिक इति व्युत्पत्या यावन्ति कार्य जातानि सन्ति सर्वाणि भूत-भविष्यद् वर्तमान कालेषु अन्यतममाश्रित्या-विर्भवन्ति। तेषां ( कार्यसमुदायानां ) निमित्ताकारणमपि महाकाल एव। नतूपादानकारणम्। यद्यपि सर्वेषां कार्यकलापानामधिकरणं निमित्ताकारणञ्च देशोऽप्यस्ति, अत एव तन्निवृत्यर्थं कालिकसम्बन्धो दीयते। तेन देशे तल्ल-क्षणं नाभिनिविशते।

---

सम्बन्ध विभाज्य विभाजक, आधाराधेय माप्य मापक भाव है। अतः परिच्छेद्य-परिच्छेदक भाव सम्बन्ध से आरम्भ और समाप्त क्रिया का आधारभूत काल वर्तमानत्व है। जैसे 'हरि को भजता है। यहाँ पर प्रीति के अनुकूल क्रिया ही भज धातु अर्थ है। उस क्रिया में आवाहन से लेकर पुष्पाञ्जलि तक क्रिया कलाप अन्तर्भूत है। भज-धातु से परे तिप्रत्यय का जैसे कर्ता कर्म अर्थ है वैसे काल भी अर्थ है जो वर्तमान का भी बोधक है। यहाँ पर प्रथम लक्षण ( अभेदपक्ष ) के अनुसार हरि प्रति के अनुकूल क्रियात्मक काल ही वर्तमान है। द्वितीय लक्षण के अनुसार भगवान् को प्रसन्न करने वाली क्रिया परिच्छेदकत्व सम्बन्ध से जिसमें अन्वित हो उसे 'वर्तमान काल कहते हैं।

## 'काल का सामान्य लक्षणम्'

काल के सम्बन्ध से सभी कार्यों का अधिकरण (आधार) होते हुए कार्योंका निमित्त कारण हो उसे काल कहते हैं। 'काले भवः' काल में जो प्रादुर्भूत हो सभी कार्य

यद्यप्यदृष्टम्, ईश्वरोऽपि च समस्तकार्याणां निमित्त कारणे भवतस्तथापि तेऽधिकरणं न भावितुमर्हस्ति। एवं दिशा-देशादृष्टेश्वरेषु काललक्षणं न सङ्घटते।

नच काललक्षणे कालिक सम्बन्ध इत्युच्यते। तत्र संसर्ग ( सम्बन्ध ) विधया कालस्य निवेशो जातः। एवं कालज्ञानाधीनं काललक्षण ज्ञानं तदधीनं तज्ज्ञानम्। एवमात्माश्रय दोषः सम्भाव्यते। आतो निर्दुष्टं लक्षणमिदं देशे भवो दैशिकः। एतादृशाधारभूतस्वरूपातिरिक्तसर्बाधारता नियामकेन यावत्सम्बन्धेन समुद्भूतानां सर्वकार्याणामाश्रयतावान् यः स काल इत्युच्यते। तथैव प्रारब्धांसती असमाप्ता या क्रिया तस्या आश्रयीभूतो महाकालो वर्तमान इत्युच्यते। अतस्तिङर्थः काल इति लक्षणमपि समन्वितम्भवति। य आश्रयरूपेण स्मर्यते। क्रिया भेदास्य कालस्तु। क्रिया भेदाय कालो निगद्यते।

अयवा वर्तमानत्वलक्षणे लाघवानुरोधेनाह कौण्डभट्टः—भूत भविष्यद्

---

कलाप भूत भविष्य वर्तमान काल में हो रहे हो, उन सभी कार्य समूहों का काल निमित्त कारण ही होता है उपादान नहीं। यद्यपि देश भी सभी कार्यों का अधिकारण है, निमित्तकारण भी। उसकी व्यावृत्ति के लिए कालिक सम्बन्ध दिया यद्यपि कालिक सम्बन्ध से अदृष्ट और ईश्वर भी निमित्तकारण हो सकते है। तथापि वे अधिकरण न ही हो सकते। अतः दिशा, अदृष्ट, ईश्वर में काल का लक्षण न ही गया।

न च काल के लक्षण में संसर्ग ( सम्बन्ध ) रूप से काल का निवेश हो जाने से आत्माश्रय दोष ( काल के संसर्ग से कालज्ञान ) की सम्भावना है। अतः शुद्ध लक्षण देशरूप जाधार के अतिरिक्त सभी आधार का नियामक सभी सम्बन्धों के किसी न किसी सम्बन्ध से समुद्भव कार्यों का आधारतया निमित्त कारण काल कहाता है। ऐसे ही प्रारब्ध और असमाप्त क्रिया का आधार भूतकाल वर्तमानत्व है। अतः आख्यतार्थः कालः यह लक्षण भी समन्वित होता है। तिङ् का अर्थ भी काल है जो आश्रयरूप से स्मृत है। क्रिया काल भेद के लिए होती है। यद्यपि उक्त लक्षण ही समीचीन है तथापि लाघव के अनुरोध से जो भूतकाल भविष्यत्काल से भिन्न हो उसे वर्तमान काल कहते हैं। यद्यपि यह लक्षण व्यावहारिक दृष्टि से बड़ा सुगम है। वा शब्द से अनास्था ( अनादर ) सूचित करते हुए पूर्व लक्षण की अपेक्षा गौरव सिद्ध करते हैं। क्योंकि वर्तमान के लक्षण में भूतभविष्य का ज्ञान कारण होगा। ऐसे भूत के लक्षण में भविष्य वर्तमान का ज्ञान कारण होगा। इत्यादि। अन्योन्याश्रय से बंचने के लिए इसे औपचारिक लक्षण मानना व्यावहारिक है। एवं निर्दुष्ट नहीं।

इस लक्षण का अनुभव पचति प्रयोग में अधिश्रयण ( चुल्हिका पर चढ़ाना से लेकर पाक रूप फल से पूर्ण पात्र को नीचे उतरने ( प्रारम्भ से लेकर समाप्ति तक )

भिन्नत्वम्वेति—यन्न भूतकाल इत्युच्यते न च भविष्यत्काल इति वक्तुं शक्यते तं परिशेषात् वार्तमान काल इति वक्तव्यमेव।

यद्यपीदं लक्षणमनुभवगम्यं, व्यावहारिकं, वा इत्युच्चारणेनास्मिँल् लक्षणेऽनास्था (अश्रद्धा) अनादरो वा व्यज्यते। यतो हि अन्योन्याश्रय, आत्माश्रयश्चापतति। सच स्वज्ञप्यधीनज्ञप्तिकत्वम् अत्र स्वं—भूतं, भविष्यच्च तस्य ज्ञाप्तिः (ज्ञानं) तस्या ज्ञानाधीनं ज्ञाप्तीर्ज्ञानं यस्य तस्य भावस्तत्वं वर्तमानत्वम्। तत्र ज्ञाने भूत भविष्यज्ज्ञानं कारणम्। एवं भूतकाल लक्षणे भविष्य वर्तमान भिन्नत्वज्ञानं कारणम्। एवं भविष्य लक्षणे वर्तमान भूत भिन्नत्वज्ञानं कारणम्। तत्रापि किं भूतत्वं, किं भविष्यत्व किं वर्तमानत्व मिति जिज्ञासा वरीवर्ति। सर्वस्मिल्लक्षणे सर्वस्य ज्ञान कारणता तिष्ठत्येव। अतस्तानि परस्परापेक्षितानि सन्त्येव तेन तद्दोषः गौरवश्चास्त्येव। इदं लक्षणमौपचारिकं नतु व्यावहारिकम्। यथा—वेदमधीते इत्यत्र वेदकर्मिका अध्ययनानुकूला क्रियेति बोधः। अत्र स्वाध्यायारम्भात् ज्ञानरूपफलोपलब्धिपर्यन्ताक्रियात्यकः कालः। तस्मिन् वर्तमानत्व व्यवहारः, तस्य काल धर्मत्वात्। तदर्थे लट् प्रयोगः।

न च कालोऽखण्डो निरुपाधिकः क्रियातो भिन्नः। तत्र वर्तमानत्वादि भेदोपाधिः कथम्? यद्यपि कालस्त्रिकालधर्मतया अपरिच्छिन्नस्तथापि क्रियायां ननाश, नश्यति, नङ्क्ष्यति इत्यादि व्यवहार दर्शनात् कालस्य क्रियाया आधारत्वात् तत्र भूतादि भेदो भासते। तेन कालेऽपि भेदव्यवहारः क्रियाधिकारणकः कालः कालधिकरणिका क्रिया वेत्युभयं प्रमितमस्ति।

वस्तुतः—विपल-पल-दण्ड-प्रहर दिवस सप्ताहपक्षमास वर्ष युगमन्वन्तरकल्पादयुपाधिरिव भेद दर्शनात् वर्तमानत्वादिरपि तस्य वाच्यमेव। ब्रह्मणिभेदमयी 'अविद्या' इव महाकाले भूतत्वादीनि भिद्यन्ते सर्वाधारत्वात्। शक्यानन्त्यमपि वक्तुं न शक्यते। तदादिन्यायेनानुगतत्वात्।

---

क्रियात्मक काल में वर्तमान का व्यवहार होने से लट् का प्रयोग हुआ। न कहिए कि क्रिया से काल भिन्न है निरुपाधिक अखण्ड है उसमें वर्तमान-भूत आदि का भेद कैसे! यद्यपि काल त्रिकाल से अबाध्य (अपरिच्छिन्न) है तथापि भूत-भविष्य-वर्तमान का व्यवहार क्रिया में होता है। जिसका आधार काल है।

सत्य कहिए तो जैसे दण्ड-मुहूर्त-पल-विपल मासयुग कल्प इत्यादि काल के उपाधि हैं (वह चाहे न्यून मात्रा में हों या अधिक) उसी काल में वैसे ही वर्तमानत्व भी सुवाच्य है। वही लट् का वाच्यार्थ है। तदादिन्याय से अनुगत भी है। शक्तयानन्त्य भी नहीं है। यदि काल सम्पूर्ण भेदों का आधार है तो भूतत्वादि का भी आधार हो सकता है। जैसे भेदमयी अविद्या का आधार ब्रह्म है।

*आत्माऽस्ति पर्वताः सन्तीत्यादौ तत्तत्कालिकानां राज्ञां क्रियाया अनित्यत्वाद्विशिष्टस्योत्पत्त्यादिकमादाय वर्तमानत्वमूह्यम्। उक्तं च भाष्ये- "इह भूतभविष्यद्वर्तमानानां राज्ञां क्रिया *स्तिष्ठतेरधिकरणम्" इति।

*परतो भिद्यते सर्वमात्मा तु न विकल्पते।
पर्वतादिःस्थितिस्तस्मात्पररूपेण भिद्यते॥

इति वाक्यपदीये च।

एवं "*तम आसीत्" "[१]तुच्छेनाभ्यपिहितं[२] यदासीत्" "अहमेकः प्रथममसिं, वर्तामि च, भविष्यामि च" इत्यादिश्रुतयोऽपि योज्याः।

---

ननु प्रारब्धापरिसमाप्तत्वं भूतभविष्यद्भिन्नत्वम्बा, लक्षणमस्तु। परन्तु 'आत्मा अस्ति', पर्वताः सन्तीत्यादौ एकमपि लक्षणं न संघटते। यतोहि आत्मनि पर्वते वा भूतभविष्यद्भिन्नत्वं न क्वाप्यनुभूयते। न च तयोरारम्भः समाप्तिर्वा दृश्यते। तत्र अस्ति, वभूव, अभवत् भविष्यति इत्यादि व्यवहर्तुं न शक्यते। सतारूपा क्रिया नित्या, एका च। एवमात्मनः सत्ता नित्या, निरवयवा, अभिन्ना च। एवं तत्र वर्तमानत्वादिभेदो न सम्भवति। 'व्यापार समुदाय क्रिया' इति लक्षणमपि न सघटते। अखण्डे आत्मनि अवयवरूपभेद वैलक्षण्याभावेन भूतत्वादि व्यापारोऽसम्भवः। एव पर्वताः सन्तीत्यत्रापि पर्वतस्य सत्ता नित्या निरवयवा च, तत्रापि 'व्यापार सन्तानः' क्रिया इति लक्षणं भूतत्वादिरुपेण व्यवहर्तुं न शक्यते। तत्र प्रारब्धापरिसमाप्ती न दृश्येते। भूतभविष्यद् भिन्नत्वमपि न परिचीयते। कथं वर्तमान कालिको व्यवहारः। अत आह आत्मा अस्तीति—दृष्टान्तेन समाधीयते यथा जीवो नित्यः शरीरमनित्यम्। अनित्यं शरीरमाश्रयणो जीवः शरीरावच्छिन्नः सन् नित्यः प्रतिभाति। एवमात्मा नित्यः, पर्वतोऽपि नित्यः (प्रलयंयावत्) तत्र तत्तत्=तस्मिन्-२ काले भवानाम्=उत्पन्नानां

---

भा—ऊपर कहे गये वर्तमान काल के दोनों लक्षण 'आत्मा है, पर्वत हैं' इस वाक्य में आत्मा और पर्वत की सत्ता (अस्तित्व) में नहीं घटते। क्योंकि उनकी सत्ता का प्रारम्भ एवं समाप्ति अनुभूत नहीं है वह न व्यापार समूह है, किन्तु निरवयव है। भूत भविष्य भिन्न भी उसमें अननुभूत है। अतः क्रियात्व=काल का व्यवहार न ही

वर्तमान कालिकानां राज्ञां क्रियाया = राजादिगत–व्यापारस्या नित्यत्वात्, भेदसम्भवात् कालत्रयस्य व्यवहारः। तद्विशिष्टस्य = अनित्यराजादि क्रिया विशिष्टरुपार्थस्योत्पत्यादिकमस्तित्वम्बा आत्मनि पर्वते वा आरोप्य वर्तमानत्व लक्षणं संघटनीयम्। एवं विशिष्टसत्ताया अनित्यत्वात् आत्मसत्तायामारोपितं क्रियात्वं कालत्रप्रयोगश्चोपपद्यते। अस्य समर्थनं भाष्यतः करोति ग्रन्थकारः—यथा—इहभूतभविष्यद्वर्तमानानां = अस्मिन् प्रसंगे भूतकाले भविष्यत्काले वर्तमान काले च ये राजनः अन्ये वा सन्ति तेषां क्रिया तिष्ठतेः = आत्मादिसत्ताया अधिकरणम्। कालं क्रियात्मकमाहुरित्यभिप्रायेण। अथवा आधेयता सम्बन्धेन तादृशक्रियात्मककालविशिष्टात्मा। तत्र क्रियाभेदकस्य कालस्य आत्मस्थिताबाधेयता सम्बन्धेनारोपात् वर्तमानत्वं विज्ञेयम्। वाक्यपदीयं प्रमाणमपि प्रस्तौति लेखकोऽयम्भाव इति—

एवं सर्वं भावजातमात्मापर्वतादिकं पच्यादिक्रियारुपं = धात्वर्थ व्यापारसामान्यरुपं, परतः = कालधर्मतः ( भूतत्वभविष्यत्व–वर्तमानत्व धर्मतः भिद्यते = भेदस्य अनुयोगी ( आश्रयो ) भवति। अर्थात् आत्मनः पर्वतस्य वा अखण्ड सत्ता क्रियायां भूतकालिकी–भविष्यकालिकी वर्तमान-कालिकीत्येवं रूपेण भिन्नतया प्रतीयते। आत्मा तु = आत्मनः पर्वतस्य वा सत्ता तु न विकम्पते = वर्तमानत्वादि कालधर्मतो न भिद्यते। भेदानुमिति विषयो न भवति। सनातनत्वात्, निरवयत्वत्वात्, त्रिकालाबाध्यत्वात्, समूहरुप क्रियात्वाभावात्।

यद्येवन्तर्हि कथमात्माऽस्तीति प्रयोगः स्यात्। तत्समाधीयते। यस्मात्कारणात् पर्वतादि स्थितिः, आदिपदेन आत्मनः स्थिति ग्राह्यः। पर्वतस्य आत्मनश्च सत्ता पररुपेण = राजादिक्रियारुपेण भिद्यते = भेदानुयोगी ( आश्रयो ) भवति। तत आत्मनि भूतभविष्यवर्तमान कालादि व्यवहारः सम्पद्यते।

---

होगा। समाधान—तत्तत्कलिक—( जिस समय वाक्य का प्रयोग हो ) उस समय के राजाओं की क्रिया अनित्य होने के कारण ( क्रिया के आधार पर भूत-भविष्यादि व्यवहार सत्ता में होता है ) अनित्यक्रिया ( जो वर्तमान कालिक राजाओं में है ) का जो उत्पत्यादि फल है, उसको आत्मा और पर्वत में आरोपकरके वर्तमान काल का व्यवहार करें। आदि पद से क्रिया का आरोप समझे। आत्मा, पर्वत में

एवं यथा आत्मा नित्यो, विभुः, अनादिः, अनन्तश्च तत्रारोपित वर्तमानत्वादिभेदव्यवहारो जायते। यथा 'तम आसीत्' इत्यत्र तमः = अविद्या ( नञोविरूद्धार्थकः ) विद्या = ज्ञानं तद्विरुद्धा इत्यर्थः अज्ञानरुपा तस्याऽनित्यत्वात् कालत्रयेपि सम्भवात्। प्रारम्भ परिसमाप्त्यर्शनात् सत्तायाः ध्वंसाभावात्, आसीदिति भूतकालिकक्रियाअसम्भवा। एवं तुच्छेन = अज्ञानेन = अविद्यया अभ्यपिहितम् = आवृत्तमाच्छादितम्वा यत् = आत्मा आसीत्। अत्रापि भूतत्वादिकन्नोपपद्यते। परतो भिद्यते = काल धर्मतो = भेदाश्रय इत्याद्युक्तोत्तरत्वात्। अत्रापि तमः तुच्छम् अविद्या काले तत्तत् राजादीनां भूत कालिकक्रियाविशिष्टमज्ञानं ग्राह्यम्। अविद्यायां भेद कलिकत्वमारोप्य तम आसीत्, तुच्छेनाभ्यमिहितमासीदित्यादिप्रयोगाः सङ्गमनीयाः।

आरोपे सत्येव आत्मा-पर्वत-तमसां भेदों जायते। अतः श्रुतिः प्रमाणं दीयते अहमेवेति—'अहमेकः प्रथममासम्' अत्र भूतकालिकव्यक्तिविशेषस्य क्रियामादाय आत्मनि भूतकालिकी सत्ता व्यवहर्तव्या 'अहं वर्तामि' इत्यत्र ( वर्तमाने लट् ) वर्तमानकालिकव्यक्तिनिष्ठक्रियाणामुत्पत्यादिक व्यक्ति क्रियाविशिष्टसत्तायामारोप्य आत्मनि बर्तामि इति श्रुतिप्रयोगः संयोज्यः। एवं भविष्यामीत्यत्र भविष्यकालिकं क्रियागतं भविष्यत्वमारोप्य अर्थात् भविष्यकलिकराजादि क्रिया गत मुत्पत्यादिकं विशिष्ट सत्ता यामारोप्य आत्मनि भविष्यत्वव्यहारः कार्यः।

---

आरोपित भेद या अनित्यता है। जैसे जीव नित्य है किन्तु अनित्य शरीर के संसर्ग से जीव भी अनित्य समझा जाता है।

भाष्य में भी कहा गया है। कि यहाँ भूत-भविष्य वर्तमान काल के राजाओं की क्रिया ही काल के सम्बन्ध से तिष्ठतेः = नित्यसत्ता के भेद का आधार होगा। वाक्यपदीयकार भी कहते हैं कि परतो—सर्वं = सभी नित्य पदार्थ परतः = काल के धर्म (भूतत्व-इत्यादि) से भेदवान होते हैं। काल का धर्म तत्कालिक राजनिष्ठ क्रिया भी हो सकती है। उसी भेद का आरोप आत्मा में है। अन्यथा आत्मा कभी भी भेदवान नहीं होता। अतः पर्वत की स्थिति भी ऐसी ही है। वह भी पर ( क्रिया विशिष्ट राजादि के आरोप से पर्वते में भेद का ( वर्तमान आदि का ) व्यवहार होता है )। एवं = ऐसे ही = अनादि, अनन्त, नित्य आत्मा में भेद की तरह तम = अविद्या, अज्ञान,

तच्च वर्तमानत्वादि लडादिभिर्द्योत्यते, क्रियासामान्यवाचकस्य तद्विशिष्टे लक्षणायां लडादेस्तात्पर्यग्राहकत्वेनोपयोगात्। अन्वयव्यतिरेकाभ्यां तद्रूपं लडादिवाच्यमेव। अन्यथा प्रत्ययानां वाचकत्वविलोपापत्तिरित्यपिपक्षान्तरम्।

---

लडादीनां द्योतकत्वं वाचकत्वम्वेति विचारः। लकारार्थ इत्यत्रार्थशब्दो द्योत्य (प्रकाश्य) परः। यतो लकाराः कालस्य द्योतकाः (प्रकाशकाः) वर्तमान इत्यादि सूत्र प्रमाणेन 'वाचकाः' इति सिद्धयन्ति। कस्य प्रमाण्यमिति सन्देहे प्राचीनानामयं राद्धान्तो यत् वर्तमानत्वादयोऽर्थाः लड़ादिभिः द्योयन्ते = काल विभाजक लकारैः प्रकाश्यन्ते, तात्पर्यं ग्राह्यन्ते। तत्र द्योतकतावादिभिः तर्कः प्रस्तूयते यथा पञ्चकं प्रातिपदिकार्थं इति पक्षे स्वार्थ द्रव्य लिङ्ग संख्या कारकाणीति नामार्थाः। अतस्ते प्रकृत्यर्थाः। एतानर्थान् द्योतयन्ति = तेषां तात्पर्यं बोधयन्ति, इति द्योतकाः स्वादयः। जातिव्यक्त्यादयोऽर्थाः प्रकृतितो (धातुतो) लब्धाः। अनन्य लब्धो हिशब्दार्थः। तस्मात् लकाराणांद्योतकत्वमेवेति।

ननु द्योकत्वन्नाम– स्वं (तिवादि) समीपस्थ धातुनिष्ठ शक्त्युद्बोधकत्वम्। एवं लट् स्थानापन्नतिवादिसमीपस्थेपु धातुषु भूत-भविष्य वर्तमान कालप्रकाशिका शक्तिःस्वीकार्यैव। यदि अनन्ताः धातवः तेषां शक्तीनाञ्चानन्त्यात् शक्तता (वाचकता) वच्छेदकत्वे = शब्दस्यधर्मे गौरवम् (अधिक धर्म वहनम्) अनुभूयते। अत एव कतिपय तिङादीनां प्रत्ययानां वाचकत्वेनुकूलं लाधवमिति युक्तमतआह क्रिया सामान्य इति = क्रिया सामान्य वाचकस्य = क्रियात्वव्याप्यधर्मावच्छिन्नवाचकस्य, यद्वा

---

जो अनादि होने से शाश्वतिक सत्ता का संकेतक है। यह 'आसीत्' इस भूतकाल का भाजन नहीं होगा। तुच्छेन = (अन्धकार से जो ढँका था) में भी वही शैली समझिये अहं प्रथममासम् आसम्—मैथा, वर्तमान हूं, और रहूंगा। इत्यादि श्रुतियों में भी आत्मा और पर्वत की तरह भेद सिद्ध करनी चाहिए। पररूप=राजाओं की क्रिया के आधार पर अतीत अन्तर्गत का व्यवहार करें। अर्थात राज क्रिया विशिष्टसत्ता=तम-तुच्छ-अहं में आत्मा पर्वत की तरह आरोपकरके कालभेद मानें।

तच्च—वर्तमान भूत-भविष्य काल लट् इत्यादि लकारों के द्योतक (प्रकाशक) है वाचक न ही। जैसे विभक्तियाँ नामार्थ की प्रकाशिका है। इस द्योतक पक्ष में— साधारणतया क्रिया के वाचक धातु का वर्तमान काल इत्यादि से विशिष्ट क्रिया में लक्षणा करके लट् आदि को काल विशिष्ट क्रिया का तात्पर्य ग्राहक मानते हैं।

क्रिया शब्दोऽत्र कालपरः काल सामान्य ( वर्तमान त्वादिः ) भेद वृत्ति क्रिया वाचकस्य धातोः तद्विशिष्टे=वर्तमान त्वादि काल विशिष्टे व्यापारे लक्षणायां जातायां ततोऽर्थं वोधश्चेत् लडादीनां का गतिः इति जिज्ञासायां तेषां तात्पर्यग्राहकत्वेन=स्वाति शयसंमीपस्थ पदवृत्तिशक्ति प्रकाशकत्वेन। उपयोगात्=सफलत्वसम्भवात्।

नन्वेवं शक्तत्वं द्योतकत्वकत्वञ्चेति वृत्ति द्वयस्वीकारे सकृदुच्चरितश्शब्दः सकृदर्थं वोधयतीति न्यायो व्याकुप्येत। कथं बृत्ति द्वयेन शाब्द वोधः क्रियते तन्न, यत्र विशिष्टे लक्ष[illegible]। तत्र न्यायो न प्रवर्तते। यथा—गङ्गायां मीनघोषौ स्तः। अत्र गङ्गापदेन शक्तया प्रवाहस्य वोधो जाथते, यत्र मीनः सम्भवति। लक्षणया तटस्य बोधो जायते यत्र घोषः सम्भवति। वृत्तिभ्यां युगपत् तट-मीनयोर्वोधः सर्वानुभवसिद्धः। तत्र सकृदुच्चरितन्यायस्य बिरोधे मानाभाव इति द्योतकता वादिनः।

केचन आचार्यास्तु व्रुवन्ति यत् सर्वे प्रत्यया वाचकाः अर्थे प्रयोगात्, नतु द्योतकाः। तेन लादयो वर्तमानकालाद्यर्थानां वाचका एव। अत्र अन्वय व्यातिरेकि दृष्टान्तः प्रमाणम्। यथा तत्सत्वे तत्सत्वमन्वयः=लडादिसत्वे वर्तमानाद्यर्थ लाभोऽन्वयः(तद्भावे तदभावो व्यतिरेकि) लडाद्यभावे भूतत्वादि कालार्थाभावो व्यतिरेकि। तत्तद्रूपं=वर्त्तमानत्वादिरूपोऽर्थः लडादीनां वाच्य एव (अतएव लः कर्मणीति सूत्रेण 'कर्तरि कर्मणि भावे च, लकारविधानं सार्थ-कम्। यस्मिन्नर्थे यः प्रत्ययोविहितः स तस्यार्थः। तेन लकाराणां कर्त्राद्यर्थाः वाच्याः। वर्तमाने लट्। परोक्षेलिडित्यादिनाकालवाचकतायाः स्वीकारात्। अन्यथा-शक्ति ग्राहकयोरन्वयव्यतिरेकिणोः सनोः द्योतकत्वपक्षे प्रत्याययन्ति=वोधयन्तीति प्रत्ययाः तेषां वाचकत्वं=शब्दार्थत्वमुच्छिन्नं स्यात्। प्रत्यया-र्थस्य प्रकृत्यैवलाभात् प्रत्ययार्थविधानं व्यर्थं स्यात्।

इत्यपिपक्षान्तरम्=अत्र 'अपि' शब्दोच्चारणेन द्योतकता पक्ष एव ज्यायानिति ध्वन्यते। यदि कर्तरि लकारविधानसामर्थ्यात् वाचकता स्वीकारे प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यं प्रवर्त्स्यते। तथा सति वर्तमानत्वादेः प्रत्ययार्थतया प्राधान्यापत्तेः। आख्यात स्थले यत्र व्यापार प्राधान्यमावश्यकं तत्र तं परित्यज्य प्रत्ययार्थ प्राधान्यं स्यात्। इत्यपरं गौरवम् अतो द्योतकता बहुश्रेयसी। हेतुभति च स्त्रियामितिसूत्रस्य स्त्रीत्वेद्योत्ये टाब्विधानात् लोकेद्योत्यार्थः प्रासिद्धः पठतीत्यत्र लडर्थज्ञानं बोधंबिनाऽपि सर्वानुभवसिद्धत्वात्।

  

**लिडर्थमाह--परोक्ष इति। "परोक्षे लिट्" इति सूत्रात्। कालस्तावद् अद्यतनानद्यतनभेदेन द्विविधः। द्विविधोऽपि भूतभविष्यद्रूपः। तत्रानद्यतने भूते परोक्षे लिडित्यर्थः। तेनाद्यतने भूते, अनद्यतने भविष्यति, भूतेऽप्यपरोक्षे च न लिट्प्रयोगः। परोक्षत्वं च साक्षात्करोमीत्येतादृशविषयताशालिज्ञाना-विषयत्वम्।**

---

भूतानदद्यतन परोक्षार्थं विवक्षितेभ्यो विशिष्टक्रियावचकेभ्यो धातुभ्यो लिड्विधीयते । अक्षणः = चक्षुरिन्द्रियविषयज्ञानात् परं = तिरोभूतम्, अविषयं कर्तुः वाह्यन्द्रिज्ञानशून्यं परोक्षम्। कालोद्विविधः अद्यानोऽन-दद्यनश्च। द्विविधोऽपि द्वौ भूतभविष्यद्रुपौ। अदद्यतनभिन्नभूत कालात्मिका या परोक्षा क्रिया तद्वाचकाद्धातोर्लिङ्ति सूत्रार्थः। प्रत्ययानां वाचकत्व पक्षे भूतानदद्यतन परोक्षार्थं कालवाच्ये धातोर्लिट्।

व्यतीतायाः रात्रेः निशीथ-(अर्धरात्रि) कालादूर्ध्वम्, आगामि रात्रेः मध्यरात्रितः पूर्वं यावान् कालः सोऽदद्यतनः। तस्माद्भिन्नः कालोऽनदद्यनः। लिङ्विषयेऽपि दद्योतकत्व-वाचकत्व व्यवस्था पूर्ववद्बोध्या। लिङ्विधौ अनद्यतनत्वं, भूतत्त्वं, परोक्षत्त्वञ्चेति त्रित्त्वं बीजम्। तेन त्रित्त्वस्य बीजत्त्व स्वीकारे सति अनदद्यतनेभूते केवले लङ्विषये न लिट् प्रयोगः। तत्र लङ्लकारविधानम्। अर्थात् अनदद्यतने भविष्यत्काले लुट् विषये न

---

**वाचक—पक्ष में कुछ आचार्यों का सिद्धान्त है कि अन्वय = लट् इत्यादि के रहने पर काल भेद (वर्तमानादि का बोध होता है और लकार के न रहने पर उनका बोध नहीं होता। यह व्यतिरेकि दृष्टान्त है। अत. तद्रूपं = काल भेद्र का स्वरूप लकार का वाच्य अर्थ है। अन्यथा—यदि लकार को वाचक न माना जाय, तो जो बोध करावे उसे प्रत्यय कहते हैं। इस प्रकार प्रत्ययो के वाचकता शक्ति का विलोप= परम्परा नष्ट हो जायेगी। अपिपक्षान्तरम्—द्योतकत्व के साथ साथ वाचकत्व पक्ष भी है। इसमें लकार विधायक सूत्र प्रमाण है।**

**परोक्ष-इति – जो दृष्टि से परे हो नेत्रेन्द्रिय का विषय न हो क्रियासहित कर्ता का बोध न हो उसे परोक्ष कहते हैं। अतः अनद्यतन-भूत-परोक्ष अर्थ का वाचक धातु से लिट् लकार होता है। काल तो दो प्रकार का है अद्यतन और अनद्यतन। ये दोनों भूत और भविष्य भेद से दो दो है। इनमें अनद्यत भूत-परोक्ष हो तो लिट् का विषय बनता है। इसीलिए शुद्ध अनद्यतन भूत काल हो या अनद्यतन भविष्यकाल हो और भूत भी हो परोक्ष न हो तो लिट् प्रयोग नहीं होता।**

लिड्विधानम्। परोक्ष शब्दोच्चारणेन अपरोक्ष विषये लुङादि विषयभूतेऽपि न तथा।

न नु प्रत्यक्षाद्भिन्नविषयत्वं परोक्षत्वम्। आर्थात् प्रत्यक्षप्रमाणाद्भिन्नं यत्प्रमाणं तस्माज्जन्यं यज्ज्ञानं तादृशज्ञानविषयः इत्युच्यते। तथा चाप्रत्यक्षात्मिका शब्दजन्यज्ञानविषयिणी, अनुमितिविषयिणी वा क्रिया सिद्धयति। तत्रापि पपाच इति प्रयोगापत्तिः।

शब्दजन्यस्य, अनुमिति विषयस्य प्रत्यक्षाद्भिन्नत्वात्। तदाह परोक्षत्वञ्चेति ग्रन्थकारेण कृतं लक्षणमित्थं साक्षात्करोमीत्येतादृशं यज्ज्ञानं तादृश विषयताशालि = साक्षादिन्द्रियगोचरवज्ज्ञानस्य अविषयः परोक्ष इति। अर्थात् साक्षात्करोमि एतत्प्रतीतिसाक्षिक लौकिकविषयस्य अभाववानित्यर्थः। यथा 'रामो रावणं जघान' इत्यत्र रामकर्तृकं रावण कर्मकं परोक्षविषयीभूतं भूतकालिकं हननम्। इत्यहं साक्षात्करोमीत्येतादृश ज्ञानस्य अविषयत्वं सुस्पष्टम्।

ननु परोक्षत्वं साक्षात्कारोमीत्येतादृश ज्ञानाविषयत्वमङ्गी क्रियसे र्त्तार्हि 'दशमस्त्वमसि' इत्यादौ शब्दादपि अपरोक्षज्ञानस्य दृष्टत्वेन शब्दजन्या परोक्षज्ञानविषयेन्द्रियासम्वन्धक्रियायां लटोऽनुपपत्तिः स्यात्। तत्र लिटः सम्भावना। तन्न, तत्रापि शब्दज्ञान सहकृन्मनसैव दशमस्य साक्षात्कारो न तु शब्दात्। लौकिक विषयतानियामकेन्द्रियसंयोगादेरभावेन मनसा साक्षात्कारे शब्दत्वासम्भवात्। अत एव 'तत्त्वमसि' इत्याद्याचार्योपदेशे शमदमादि संस्कृतं मनः आत्मदर्शने कारणम्। तेन सर्वं सुसम्पन्नम्।

---

यदि परोक्ष का लक्षण—प्रत्यक्ष प्रमाण से भिन्न प्रमाण से उत्पन्न ज्ञान का विषय हो, ऐसा मानेंगे तो प्रत्यक्ष क्रिया भी शब्द जन्य ज्ञान का विषय बन जायगी, और प्रत्यक्ष अनुमिति का विषय होगी। 'अयं पपाच' यह प्रयोग नहीं बनेगा। क्योंकि—यहाँ शब्दाबोध में प्रत्यक्ष के बोध या अनुमान का प्रश्न ही नहीं उठता। इस आपत्ति को वारण करने के लिए ग्रन्थकार परोक्ष का लक्षण बोलते हैं कि सक्षात्कार क्रिया सहित कर्ता का ) करता हूँ इस प्रकार के ज्ञान का जो विषय न हो उसे परोक्ष कहते हैं। 'राम ने रावण को मारा' यहाँ राम कर्ता, रावण कर्म. भूत कालिकहनन होने से प्रयोक्ता के साक्षात्कार का विषय नहीं बना।

न च "क्रिया नामेयमत्यन्तापरदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्" इति भाष्यात् तस्या अतीन्द्रियत्वेन परोक्षे इत्यव्यावर्तकमिति शङ्कयम्, पिण्डीभूताया निदर्शयितुमशक्यत्वेऽप्यवयवशः साक्षात्करोमीतिप्रतीतिविषयत्वसंभवात्। अन्यथा 'पश्य मृगो धावति' इत्यत्र तस्या दर्शनकर्मता न स्यादिति प्रतिभाति*।

---

क्रियाया अतीन्द्रियत्वेन परीक्षात्वसाधनम्। क्रियानाम = साध्यत्वे बोध्यमाना या क्रिया, इयं भजतीत्यादौ प्रीत्यनुकूल व्यापार विषय भूता (अनुभव गम्येति भाष्ये) अत्यन्तं = सर्वथा अपरिदृष्टा = प्रत्यक्षज्ञानशून्या अपरदृष्टा = परेण = चक्षुरिन्द्रिय ज्ञानजन्य प्रत्यक्ष प्रमाणेन अदृष्टा साक्षात्काररहिता (साक्षात्कारेऽवयवानां दर्शनमावश्यकम्) तत्र प्रमाणमाह— पूर्वापरिभूता क्रमिकानेकव्यापारसमूहात्मिका। यथा षोडशोपचारे षोडशात्मिका सामूहिकी सेवा भजधातोरर्थः। तत्र क्रमेण क्रिया समूहो दृश्यते। सा पिण्डीभूता नास्ति। मोदक इव निदर्शयितुं = प्रत्यक्षं कारयितुं न शक्याः। अवयवानां क्रमिक विनाशशालित्वात्, आशुविनाशित्वाद्वा पिण्डीभावस्य अभावाच्च।

न च तादृश क्रियाया अभावोऽपि भवितुमर्हति तन्नभगवत्प्रीतिरूपकार्येण कारणीभूतस्य फलानुकूलव्यापारस्य अनुमेयत्वादिति भाष्यात्। तस्याः = क्रियायाः अतीन्दियत्वेन = इन्द्रियजन्य ज्ञानस्य अविषयत्वेन =

---

'परोक्ष' इस विशेषण के विषय में शंका। क्रिया वह वस्तु जो अत्यन्त अपरिदृष्ट हो (कभी न देखी जाय। उसके पूर्व अवयव = क्रमिक आरम्भ अपरीभूत = पश्चात् होने वाले अवयव (अंश) होने पर भी उसके समुदाय को पिण्डी (पिड़िया) या लड्डू की तरह दिखायी नहीं जा सकती। इस भाष्य से यह सिद्ध होता है कि वह (क्रिया) अतीन्द्रिय इन्द्रिय से ओझल है। इसलिए परोक्ष यह विशेषण नहीं बनेगा। समाधान—यद्यपि लड्डू की तरह क्रिया को कोई दिखा नहीं सकता तथापि क्रिया के अवयवों (अंशों) को साक्षात्–प्रत्यक्ष करता हूँ ऐसी प्रतीति = ज्ञान का विषय होना सम्भव है। वही अवयव समूह क्रिया बुद्धि में पिण्डी भूत होकर प्रत्यक्ष

परोक्षस्यापि वाह्येन्द्रियज्ञानराहित्येन द्वयोस्तुल्यधर्मत्वात्। व्यभिचाराभावाच्च क्रियायां विशेषणन्न भवितुमर्हति। यत:

सम्भवव्यभिचाराम्यां स्यद्विशेषणमर्थवत्।
न शीतेन न चोष्णेन वह्निः क्वापि विशेष्यते ।। इति

न्याय विरोधात् परोक्ष इति पूर्वोक्तानां व्यावर्तकन्न भविष्यति। इत्थमाशङ्क्याह-पिण्डीति—यद्यपि मोदक इव पिण्डीभूतायाः वल्मीकभूतायाः क्रियायाः स्वरूपं निदर्शयितुं = प्रत्यक्षं कारयितुमशक्यत्वेऽपि = असम्भवेऽपि अवयवशः = क्रमशः ( वीप्सायांशस् ) एकैककस्यावयवस्य साक्षात्करोमीति प्रतीतेः = ज्ञानस्य विषयत्वसम्भवात् = विषयतया बोधनात्। अयम्भावो यत् अवयवानां या साक्षात्बोधविषयता सा बौद्धा। बुद्धौ पिण्डीभूता। तादृशीं क्रियामारोप्य परोक्षत्वं संसाध्य प्रत्यक्षत्वव्यावृत्यर्थं परोक्ष इति विशेषणं सफलम्। व्यभिचारसम्भवात्।

अन्यथा—क्रियायाः पूर्वपरीभूतानामवयवानां क्रमशः प्रत्यक्षास्वीकारे, न च यथा समूहात्मिका क्रिया प्रत्यक्षविषया न भवति। तथैव तस्या अवयवा अपि प्रत्यक्षाः न स्युः, अत एव 'परोक्ष इत्यव्यावर्तकम्। अस्ति तत्र वर्तमानकालः परन्तु आदित्यगतिवन्नोपलभ्यते। तस्मादवयवानां दर्शनं न स्यात्। पक्षे तु पश्य मृगोधावतीत्यादिस्थले धावनक्रिया दर्शनक्रियायाः कर्म अस्ति। अवयवानां साक्षात्कारं बिना तन्नसम्भवति इति भाष्यम् अवयवानां साक्षात्कारे प्रमाणम्। तेन परोक्ष इत्यस्य व्यावर्तकत्वं सम्यक् सिद्धम्।

प्रतिभाति' इत्यनेन अवयवानामप्रत्यक्षत्वं ध्वन्यते। वर्तमानत्वं कालरूपं, कालात्मिका क्रिया सूर्यसरणवन्नोपलभ्यते। पश्य मृगो धावतीत्यादौ दृशधातुः ज्ञानार्थकः। धावतिशब्दः उत्तरदेशसंयोगरूपफलपरः। संयोगस्य प्रत्यक्षत्वे नास्ति विरोधः। न च कर्मताया अनुपपत्तिरिति।

---

का विषय बन सकती है। इसकी व्यावृत्ति के लिए परोक्ष विशेषण है। यदि ऐसा न होगा तो देखो मृग दौड़ रहा है यहाँ पर धावन क्रिया दर्शन क्रिया का कर्म नहीं बनेगा। भाव यह है कि धावति शब्द संयोग रूप फल परक है। उसके प्रत्यक्ष में किसी का विरोध नहीं है। अतः दूसरा लक्षण देते हैं।

क्रिया जहाँ हो रही है वह न दिखाई तो परोक्ष होता है।

 

*व्यापाराविष्टानां क्रियानुकूलसाधनानामेवात्र पारोक्ष्यं विवक्षितमतो नोक्तदोषः। 'अयं पपाच' इत्याद्यनुरोधाद्व्यापाराविष्टानामित्यपि वदन्ति।

---

शंका—यथा प्रकृतः कटमित्यत्र क्रियायाः अवयवस्य अतीत कालिकत्वेन समुदायस्यापि भूतकालमादाय क्त प्रत्ययस्य विधानम् । तथैव क्रियाया अवयवप्रत्यक्ष मिव समुदाय प्रत्यक्षमादाय 'परोक्षे' इत्यस्य चारितार्थ्येऽवयवशः साक्षात् करोमीति भाष्ये पूर्वपक्षस्य निर्दलत्वापत्तिरित्यसन्तोषात् मतान्तर माह–व्यापाराविष्टानामिति = ( व्यापारैः आविष्टानाम् आश्रितानां, संसक्तानां, आगृहीतानां, व्यापाराश्रयभूतानां ) क्रियाविशिष्टानां क्रियानुकूलसाधनानां = क्रियाजनककर्तृ-कर्म-करणादीनामतीतोऽनद्यतनश्च ये व्यापारास्तैराविष्टा परोक्षार्थकर्तृका क्रिया तद्वृत्ताद्धातोर्लिट्' इति परोक्षे लिट् सूत्रस्यार्थः क्रियानुकूलसाधानां व्यापारकाले कर्तुरदृष्टत्वेऽपि लिटः साधुत्वम् । एतादशं पारोक्ष्यं ग्राह्यम् । अर्थात् व्यापारकाले व्यापाराश्रितः कर्ता' इति ज्ञानं यदा प्रत्यक्षं न स्यात्तदा स कालः परोक्ष इत्युच्यते ।

एवं विवक्षणीयं साधनगतं पारोक्ष्यमुख्यम् । तस्मिन् यद्विशेषणं व्यापाराविष्ट इति तस्येदं प्रयोजनं यत् 'अयं पपाच' इत्येतादृशाः प्रयोगा अपि भवेयुरिति । एतदर्थं विशेषण दीयते । तस्येदं फलं यत् पपाच इति प्रयोगकाले पाककर्ता प्रत्यक्षः सन्नपि पाककाल-विशिष्ट कर्तृरूपेण न दृश्यते । अतस्तत्र पारोक्ष्यम् । यद्यपि अवयवशः समूहतोऽपि क्रिया अप्रत्यक्षा भवति । तद्विशिष्टसाधनमप्यप्रत्यक्षं स्यात्तथापि व्यापार विशिष्ट साधन कालस्य पारोक्ष्यं वोध्यम् । तेन व्यापार विशिष्ट कालस्य अप्रत्यक्षे सत्येवोक्तः प्रयोगः साधुः ।

---

व्यापार से आविष्ट = विशिष्ट हो (क्रिया का आश्रय) जो साधन ( कारक ) कर्ता उसका ही पारोक्ष्य=साक्षात्कार का अभाव यहाँ विवक्षित है। अतः कोई दोष नहीं है। व्यापार कालिक कर्ता का अदृष्ट होना परोक्षत्व में बीज है। तभी इसने पकाया "यहाँ कर्ता के उपस्थित रहने पर भी व्यापार कालिक कर्ता का साक्षात्कार नहीं होने से परोक्षत्व सिद्ध होता, इत्यादि के अनुरोध ( आदरणीय विवशता ) से व्यापाराविष्ट विशेषण देते हैं।

उदयनाचार्य - १ श्लोक

कथं तर्हि "व्यातेने किरणावलीमुदयनः" इति, स्वक्रियायाः स्वप्रत्यक्षत्वादिति चेत्? असंगतमेव। व्यासङ्गादिना (मद्यपान) स्वव्यापारस्य *परोक्षत्वोपपादनेऽपि बहुतरमनःप्रणिधानसाध्यशास्त्रार्थनिर्णयजनकशब्दरचनात्मके ग्रन्थेऽनद्यतनत्वातीतत्वयोर्विस्तारक्रियायामसत्त्वेन अनद्यतनातीतत्वयोरभावेन 'तदर्थकलिडसंभवात्।

---

ननु व्यातेने किरणावलीमुदयन इति, उदयनाचार्यः स्वयं किरणावली ग्रंथं विस्ततार। अत्र स्वकर्तृकायाः विस्तार क्रियाया स्वस्मिन्प्रत्यक्षत्वात् परोक्षत्वस्येन्द्रिय-गोचराभावस्य असम्भवाच्च 'व्यातेने' इत्यत्र लिट् कथमिति प्रश्नः—इदं वाक्यमसङ्गतमेव, असाधुरेव।

यदि व्यासङ्गादिना = (मनसः विषयान्तरे विचरणं व्यासङ्गः) आदि पदेन सुरापानादिना मनसोऽसन्निधानात् 'मत्तोऽहं किल विललाप' इत्यादौ क्रियायाः पारोक्ष्यमिव प्रसंगेऽपि स्वव्यापारस्य = उदयनाचार्यनिष्ठ विस्तार क्रियायाः परोक्षलक्षणस्योपपादनं न कर्तुं शक्यते। तत्र व्यासंगो वक्तुमशक्यः। यतोहि वहुतरमनः प्रणिधानसाध्यः = नितान्त निर्मलस्वान्तमनसास्मृतिगम्यः शास्त्राणामर्थः, तस्य निर्णयजनके = सावधानतया विमलबुद्धया शास्त्रस्य अर्थभूतनिर्णयस्य सम्पादके शब्दमूलक रचनात्मके ग्रन्थे = किरणावल्यां विस्तारानुकूलव्यापारावच्छिन्ने काले अनद्यतनत्वातीतत्वयोरुभयोः विस्तार क्रियायां = ग्रन्थ निर्माणानुकूलव्यापारेऽसत्वेन = अभावेन अनद्यतन परोक्षातीतार्थकस्य लिटोऽसम्भवात् व्यातेने' इत्यसाधुः।

वस्तुतः—क्रियाऽवयवानामपि सावयवसम्भवात् सर्वाः क्रियाः परोक्षैव। अतएव 'अत्यन्ताऽपरदृष्टा' इति भाष्ये अत्यन्त पदस्य स्वारस्यं सङ्गच्छते इत्युक्तम्। तन्नयुक्तम् तथा सति = क्रियाणामप्रत्यक्षरूपपरोक्षस्वींकारे लङ्लुङोरुच्छेदापत्तिः।

---

यदि व्यापार विशिष्ट काल के कर्ता का अप्रत्यक्ष ही परोक्ष मानते हैं। तो उदयनाचार्य स्वयं कहते है कि मैंने किरणावली को व्याप्तेने (बनाया)। यहाँ अपनी क्रिया के अपने में प्रत्यक्ष होने से कैसे प्रयोग हुआ। तो बोले कि यह अशुद्ध है।

यदि कहिये कि व्यासङ्ग—रचना कर रहे थे, तो मन दूसरी जगह विचरण कर रहा था। या नशे में चूर था इसलिए स्वमे प्रत्यक्ष नहीं माना जायगा। इससे परोक्षत्व सिद्ध होता है तो नहीं—बहुत प्रकार से मन को एकाग्र करके साध्य = ग्रन्थ

**लुडर्थमाह—श्वो भाविनीति। अनद्यतने भाविनीत्यर्थः। "अनद्यतने लुट्" इति सूत्रात्। यथा श्वो भवितेत्यादौ।**

---

श्वो = भविनी क्रिया लुडर्थः। 'श्वस्' इत्यव्ययपदम् तस्य अनद्यतनभावीत्यर्थः यद्यपि श्वस् शब्दः स्वशक्तया सामान्यभविष्यवाची तथापि लक्षणया अनद्यतनोऽर्थः। तेन अनद्यतन भविष्यत्काले विद्यमानायाः क्रियाया वाचकाद्धातोर्लुट्। इत्यनद्यतने सूत्राल्लभ्यते। भविष्यत्वश्चवर्तमान काले तत्प्राक् च अभावस्य प्रतियोगित्वम् = आश्रयत्व भविष्यत्कालः। अतो वर्तमान प्रागभाव प्रतियोगित्वमुच्यते। अथवा वर्तमानानन्तर काल द्योतको भविष्यत्कालः। यथा–'घटो भविष्यति श्वो भविता वा इत्यादौ वर्तमान कालिकायाः घटकार्तृकभावनाश्रयिकायाः क्रियायाः यः प्रथमोऽभावस्तस्याः प्रतियोगिनी भावनी क्रिया। यस्या अभावः सा प्रतियोगिनी। भविष्यत्कालिकी क्रिया। इति क्रिया कालयो-भेद—(परिच्छेद्य परिच्छेदकभाव) पक्षीयाः। क्रियाकालयोस्तादात्म्य (अभेद) सम्बन्ध पक्षीयास्तु भविष्यत्क्रियैव भविष्यत्कालः) अनद्यतनत्वञ्च-अद्यन-भिन्नकाल वृत्तित्वम्। अद्यतन विभागस्त्रेधा-त्रिकाल रुपा। भाष्येतु व्यतीतयाः रात्रेः पश्चर्धेन च रहितो दिवसोऽद्यतनः। तद्भिन्नोऽनद्यतन इति वृत्तिकारः। कैयटस्तु -'लुड' विधायक सूत्रे अतीतरात्रेरन्त्ययामेन-आगामिरात्रेरर्धयामेन सहितो दिवसोऽद्यतनः। केचित्तु-सूर्योदयादारभ्य पुनः सूर्योदयं यावत् अद्यतनः। तद्भिन्नोऽनद्यतन कालः। इत्थं देशाचारतो व्यवस्था बोध्या। अनद्यतन सम्बन्धे यदा भूतमात्रविवक्षा तदालुङ। अनद्यतन भूत विवक्षा तदा लङेव। यदा भविष्यत्काल मात्र विवक्षा तदा लृट।

---

रचना में उपयोगी शास्त्र के अर्थभूत तत्वों के निश्चय करनें वाली शब्द रचना है। उस ग्रन्थ की विस्तार क्रिया में अनद्यतनकाल और अतीत (भूत) की असत्ता (अभाव) होने से अतीत, अनद्यन, परोक्षार्थक लिट् असम्भव है। अतः कहा असङ्गतमेव।

श्व शब्द का केवल भविष्य अर्थ है, लक्षणा से अनद्यतन भविष्य अर्थ होता है। उस अर्थ के वाचक धातु से लुट् होता है। यथा–श्वो भविता (कल होगा) यहाँ भवन क्रिया के प्रथम अभाव होने से उसकी प्रतियोगिनी भाविनी क्रिया है। यही भविष्य काल है।

**लृडर्थमाह—भविष्यतीति। भविष्यत्सामान्य इत्यर्थः। "लृट् शेषे च" इति सूत्रस्य। यथा घटो भविष्यतीत्यादौ। तत्त्वं च वर्तमानप्रागभावप्रतियोगि-समयोत्पत्तिमत्त्वम्।** भविष्यत्

---

सामान्य भविष्यत्कालि की या क्रिया तद्वाचकाद्धातो लृट्। सामान्य भविष्यत्वञ्च —अद्यतनानद्यतनोपाधिभेद—शून्यकाल बोध विषयत्वम्॥ इत्युद्देशेनैव भगवतापाणिनिना 'लृट शेषे चेति सूत्रं निरमायि। तत्र शिष्यते योऽसौ शेषः, उक्तादन्यश्शेषो वा। अनद्यतनभविष्यत्काल उक्तः तद्भिन्न-सामान्य भविष्य वाचकाद् धातोः लृट् विधीयते। सूत्रे च पदं (तुमुनण्वलौ) सूत्रात् क्रियार्थकक्रियाऽनुवृत्यर्थम्। ततोऽयमर्थोयत् क्रियार्था या क्रिया तद्वाचकं धातुरूप पदं चेत्तर्हि भविष्य कालिक क्रिया वाचकाद्धातो लृट। यथा चैत्रः पठिष्यतीति याति पठितुं याति। पठिष्यतीति पाठकः इति। असत्यायां (असिद्धायां) क्रियार्थायां लृडर्थमाह-शेष इति। यदा क्रियार्था क्रिया शेष पदं तन्त्रविवक्ष वृत्तिभ्त्रा कृत्वोभय--सम्बद्धम्। घटो भविष्यति घटं करिष्यति।

ननु 'अहमेकः प्रथमभासम्, वर्त्तामि च भविष्यामि च पूर्वोक्त भविष्य-कालो न घटते, वर्तमानकालस्य प्राग-भावरूपभविद्यमानत्वं नास्ति। कथं भविष्यकालिक लकारः प्राप्स्यतिं। अतः क्रियायां भविष्यकालमाह वर्त-मानेति–वर्तमान कालिक क्रियायाः योध्वंसः प्रथममभावः तस्य प्रति-योगी यः समयः (कालः) तस्मिन्नुत्पद्यमाना या किंया सा भविष्यकाल इत्युच्यते। क्रियाया अधिकारण कालस्य भविष्यत्वं बोध्यम्, 'समयपदोपा-दानात् तद्वाचकाद्धतोर्लृट्।

---

आज और कल के प्रतिबन्ध मुक्त जो सामान्य भविष्य कालिक क्रिया के प्रति-पादक धातु से लृट होता है। इसी उद्देश्य से पाणिनि ने लृटशेषेच सूत्र बनाया। उक्त से भिन्न अर्थ को शेष कहते हैं अनद्यतन उक्त है अद्यतन ग्राह्य है, इस सूत्र में चपद से क्रियार्था क्रिया की अनुवृति आती है। चैत्र पढ़ेगा इसलिए जाता है यह क्रियार्था का उदाहरण है और सामान्य भविष्य भी शेष है। शेषपद को आवृति करके उभयार्थक जानें।

लेटोऽर्थमाह—विध्यादाविति । "लिङर्थे लेट्" इति सूत्रात् । लिङर्थश्च विध्यादिरिति वक्ष्यते ।

लोडर्थमाह—प्रार्थनादाविति । आदिना विध्याद्याशिषो गृह्यन्ते, "आशिषि लिङ्लोटौ" "लोट् च" इति सूत्राभ्यां तथाऽवगमात् । यथा 'भवतु ते शिव-

---

विध्यादाविति—लिङर्थेलेट् सूत्रात् लिङर्थश्च—विधि निमन्त्रणादि रूपः, ऐष्वर्थेषु लेट प्रयोगः । आशिषि लिङलोटौ सूत्रात् आशीरर्थोऽपि । आशीश्च सम्बोधन कर्तृक सम्बोध्यहित प्राप्ति—विषयिणी प्रयोक्तुरिच्छा । हितञ्च स्वस्य परस्य वा भवतु । अस्य प्रयोगो वेद एव दृश्यते अतआह—कौमुद्यां एषुपञ्चमो लकारश्छन्दो मात्र गोचरः ।।

प्रार्थनादाविति—आदि पदस्य विधिनिमन्त्रणदिः, आशीश्चार्थः । आशिषि लिङलोटौ सूत्रात् । विधिः=प्रेरणम्, लघु भूतस्य सेवकादेः कर्मणि प्रवर्तनम् । आशीश्च स्वपरविषयिणी माङ्गलिकीच्छा तस्याः विषयतासम्बन्धेन लोट् लकारस्य प्रकृतिभूत धात्वर्थेऽन्वयः । तेष्वर्थेषु लोट् प्रयोगः सम्यगवगम्यते । यथा भवतु ते शिवप्रसादः । अस्य वक्तृसमवेता या माङ्ग-

---

वर्तमान कालिक क्रिया का जो प्रथम अभाव उसका प्रतियोगी ( आश्रय ) जो समय ( काल ) उसमें उत्पद्यमान क्रिया भविष्य काल कहलाती है । अवच्छेदक वाद में होने वाली क्रिया का आधार ही भविष्य है । जैसे घटो भविष्यति । यथा भवन क्रिया का प्रथम अभाव उसकी प्रतियोगिनि भविनी क्रिया है । अतः लृट हुआ ।

'लिङर्थे लेट्' सूत्र से लिङ् के अर्थ = विधि निमन्त्रणादि है इन्हीं अर्थों में लेट का प्रयोग होता है । आशीर्वादार्थक भी है केवल वेद में प्रयुक्त है ।

प्रार्थना इत्यादि अर्थ में लोट का प्रयोग होता है । आदि पद से विधि निमन्त्र इत्यादि आशीः अर्थ में भी । ऐसा ही आशिषिलिङ् लोटों लोट् सूत्रों से ज्ञान होता है । ये अर्थ लोट् के हैं । तुम पर शिव जी की प्रसन्नता हो । यह आशीर्वादार्थक है । एतयोः = लेट और लोट का अर्थ लिङर्थ ही है । तीनों का समान अर्थ है । एक के

प्रसाद' इत्यादौ। एतयोरर्थौ लिङर्थं एव, त्रयाणां समानार्थत्वादिति तन्निर्णयेनैव निर्णयः ॥ १ ॥

लङादिक्रमेण ङितामर्थमाह—

ह्यो भूते प्रेरणादौ च भूतमात्रे लङादयः।
सत्यां क्रियातिपत्तौ च भूते भाविनि लृङ् स्मृतः ॥२॥(२३)

लङर्थमाह— ह्योभूत इति। अनद्यतने भूत इत्यर्थः, "अनद्यतने लङ्" इति सूत्रात्। यथा 'अस्य पुत्रोऽभवत्' इत्यादि।

---

लिकी ( शुभ ) प्राप्तिः हित विषयिका मदिच्छा विषयभूतं त्वत्सम्बन्धि शिवप्रसाद कर्तृकं भवनम्। एतयोः—लिङ्लोटोरर्थौ यो लिङर्थः सः। त्रयणां—लेट् लोट् लिङां समानमर्थो येषान्ते तस्यभावः तत्वात् समानार्थत्वात्। एकस्य निर्णये त्रयाणां निर्णयों योज्यते।

यदि ते समानार्थास्तर्हि त्रयोलकाराः कथं पठिताः इति चेच्छृणु—लोट् वेद एव प्रयुज्यते नतुलोके, लोट् सेवक शिष्यादीनां कृते प्रयुज्यते। लिङ्तु सर्वेषां कृते; इति विशेषः ॥ २२ ॥

इत्थं टिल्लकाराणामर्थाः उदाहरणानि च निर्दिष्टानि इदानी ङिल्लकाराः प्रदर्श्यंते विवेच्यन्ते। क्रमेण ङिल्लकाराणामर्था उच्यन्ते। ह्योभूते—यद्यपि—हृयस् इति अव्ययशब्दः सामान्य भूत कालवाची तथापि तस्य अनद्यतनभूते लक्षणा। यथा—श्वस्शब्दोऽनद्यनं लक्ष्यते। ह्यः पदम् अनद्यतनपरम्। 'अनद्यनेलङ्' सूत्रात्। अनद्यतन भूत कालिकी या क्रिया तस्याः वाचकाद्धातोर्लंङ। यथाऽस्य पुत्रोऽभवत्। इदं सम्बन्धि पुत्र

---

निर्णय से तीनों का निर्णय निश्चित है। इस प्रकार ६ टित् लकारों के अर्थ, उदाहरण निर्दिष्ट किये गये ॥ २२ ॥

ङित् लकारों का विवेचन सुनिये।

लङ् लिङ् लुङ् लृङ् इस क्रम से ङितलकारों का अर्थ बोलते हैं।

ह्यो भूते—ह्यस् शब्द बीते हुए काल का वाचक है। परन्तु लक्षण द्वारा अनद्यतन भूत का द्योतक है। जैसे श्वसपद लक्षणा से अनद्यतन भविष्य को बोधक है। अतः अनद्यतन भूतकालिक क्रिया के वाचक धातु से लङ् होता है। यथा—इसको

**लिङर्थमाह—प्रेरणादाविति। "विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्" इति सूत्रम्। तत्र विधिः–प्रेरणं, भृत्यादेर्निकृष्टस्य प्रवर्तनम्। निमन्त्रणं–नियोगकरणम्, आवश्यकप्रेरणेत्यर्थः। आमन्त्रणं–कामचारानुज्ञा। अधीष्टः–सत्कारपूर्वको व्यापारः।**

---

कर्तृकमद्यतनभिन्नं भूतकालिकं भवनम्। तद्योत्ये लङ्। अत्र वर्तमान ध्वंस प्रतियोगी = भूतानद्यतन कालः तन्निष्ठं इदं सम्बन्धि पुत्र कार्तृकोत्पत्यनुकूल व्यापारः। 'अध्यस्त' इत्यादौ भूतानद्यतन मात्र विवक्षायां लङ्।

प्रेरणादीनामर्थानां द्योतनाङ्क्षाचेत् लिङ्विधीयते। प्रेरणादयस्तु विधिनिमन्त्रणामन्त्रणाधीष्ट सम्प्रश्नप्रार्थनेषु लिङ् विधानाद् बोध्याः। न च उक्तसूत्रेण विध्यादीनां लिङ्र्थत्वं सुप्रसिद्धम् प्रेरणादौ तु न क्वापिश्रूयतेऽत आहतत्र=तेषु मध्ये बिधिः=प्रेरणम्। अत्र विधिशब्दः प्रेरणा पर्यायवाची प्रेरणादि घटकस्य विधेः प्रेरणारूपत्वात्। अस्योदाहरणम् = भृत्यादीनां परिचारकादि सेवकानां निकृष्टस्य = अपकर्षविशिष्टस्य लघुभूतस्य वा कर्मणि प्रवर्तनम्। तच्च इष्टसाधनताविषयक ज्ञानस्य प्रवृत्तिजनकम्। यद्वा प्रवृत्तिविषयक कृति साध्यता ज्ञानाधीनो यः प्रयत्नस्तत्प्रेरको व्यापारः प्रवर्तनम्। अभिलषितकार्य सिद्धयर्थमुपायोपदेशः प्रवर्तनम्।

---

पुत्र हुआ। यहाँ अन द्यतन भूतकाल वाच्य हुआ। प्रेरणा = प्रवर्तना इत्यादि लिङ के अर्थ है सामान्य भूतकाल में लृङ् क्रिया की आसिद्धि हो और कार्य कारण भाव हो तो लृङ्। भूत काल भविष्यकाल दोनों विषय है।

प्रेरणा = क्रिया में प्रवृत्ति रूप अर्थ द्योत्य रहे तो लिङ लकार होता है। इसका आधार विधि निमन्त्रण सूत्र है। विधिः = प्रेरणा विधानं = छोटे लोगों को कर्म में प्रवृत्त कराना ही विधि है जैसे ऐ शिष्य पूजन के लिए पुष्प लाओ। भारं वह यहाँ विधि-आज्ञा के रहते लिङ हुआ। निमन्त्रण = किसी निमित्त से किसी कार्य में प्रवृत्त कराना नियोगकरण–नियुक्ति करना। और नहीं श्राद्ध क्रिया में भोजन में प्रवृत्ति के लिये दुहिता (पुत्री, का पुत्र नाती को निमन्त्रित करना भी निमन्त्रण है। नाना के श्राद्ध में नाती का भोजन आवश्यक है। आमन्त्रण—स्वेच्छा के अनुकूल- आज्ञा। जैसे तुम वेद पढ़ो, 'या न्याय जैसी इच्छा। अधि पूर्वक इष् धातु का स्वागत वाली क्रिया अर्थ है। स्वागत है ? आइए। संप्रश्न = जब मैं यह करूँ या वह करूँ इस संशय पर सम्प्रधारण = स्वेच्छा से निश्चय करना। ये अर्थ यदि बोध्यमान हां तो लिङ का प्रयोग होता है।

निमन्त्रणं नियोगकरणम्। निपूर्वक युजधातो नियुक्तिजनक प्रवृत्तिरर्थः तस्य करणं—प्रवृत्त्यनुकूला भावना। यथा—क्रीडकान् स्वदेशं निमन्त्रयते (प्रदर्शनार्थम्) यजमानः विप्रं निमन्त्रयते। अत्र कर्ता यजमानः तद्वृति व्यापारो भोजनोद्देश्यक प्रवृत्तिजनके कृत्यनुकूलोऽऽह्वानत्व प्रकारिका या इच्छा (अयं निप्रः भोजन प्रवृत्याश्रयो भवतु, तदुद्देश्यस्य विप्रस्य कर्म संज्ञायां कर्मण द्वितयायां विप्रं यत्रवा प्रवर्तनमावश्यकं तत्रैव लिङ् प्रयुज्यते। तद्विवरणमाह श्राद्ध भोजनादौ दुहितुः=पुत्र्याः अपत्यं दौहित्रः=नप्ता तदादेः भोजनमावश्यकम्। तदेव निमन्त्रणपदार्थः। 'इहभुज्जीत भवान्' इत्यत्र अप्रवृत्तस्य प्रवृत्यनुकूलाभावना ध्वन्यते। मातमहस्य श्राद्धे नप्तुः भोजनमावश्यकम्। तत्सिद्धयर्थं मुपायोपदेशरूपं निभन्त्रणम्। तदर्थेद्योत्ये लिङ्। तेन दौहित्रादेः इष्टसाधनता वोधक निमन्त्रणं फालितम्।

आमन्त्रणं=कामचारानुज्ञा। कामः इच्छा तथा चरतीति=प्रवर्तते कमाचारः। स्वेच्छयाऽऽचरण प्रवृत्ति शीलः (तस्य अनुज्ञा इतरप्रवृत्ति प्रतिवन्धविमुक्तस्वाभिलषितविषयक प्रवृत्यनुकूला भावना अनुज्ञा= अनुमितिः स्वेच्छा। यथा आरब्धं कुरुत, वेदान् पठ, तर्कम्वा स्वेच्छया पठ व्याकरणं न्यायम्वा अधीष्व। आमन्त्रणम्। त्वत्कर्तृकं मत्प्रेरणाविषयोभूतं वेदविषयकं स्वाध्यायार्थं कल्पितं तर्कविषयकमध्यमनम्।

अधीष्टम् (इष) धातोः भावेक्तप्रत्यये सति स्वागता नुकूल व्यापारोऽर्थः। अत आह सत्कार पूर्वक व्यापरोऽर्थः। अध्यापनादि व्यापारे सम्मान पूर्वकः प्रवृत्यनुकूलो व्यापारोऽधीष्ट पदार्थः। (माणवकमध्यायेद् भवान्)। अत्र भवत्कर्तृक माणवककर्मकसत्कारपूर्विका मत्प्रेणाविषयीभूता अध्यापना (पाठनम्)।

सम्प्रश्न=सम्प्रधारणम् द्वयोः क्रिययोर्मध्ये एकस्यां क्रियायामिष्ट साधनता निर्धारणम्। आत्मनि फलमुद्दिश्य प्रवृत्तिरिष्टा। सा (इष्ट-प्रवृत्तिः) व्याकरणाध्ययने वर्तते तर्काध्ययने वा एकस्य निश्चयो निर्धारणम्वा सम्प्रधारणम्। अथवा स्वाभिलषित वस्तुदानादौ स्वेच्छया निश्चयी करणम्। यथा भोजनं लभेय। त्वत्कार्तृकं भोजनकर्मकं भोजन दान विषयकं स्वीयेच्छा बोधनम्।

ननु लिङर्थेषु विधित्व निमन्त्रणत्व अधीष्टत्वादि नाना धर्माः विलः

एतच्चतुष्टयानुगतप्रवर्तनात्वेन वाच्यता लाघवात् ।

उक्तं च – अस्तिप्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि ।
तत्रैव लिङ् विधातव्य किं भेदस्य विवक्षया ॥
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा ।
विध्यादीनामुपादानं चतुर्णामादितः कृतम् ॥ इति ।

---

सन्ति । तेषामनेकत्वेन गौरवम् । शक्यतावच्छेदकविधित्वादि धर्मभेदेन शक्तेर्नानात्वञ्च दृष्ट्वा ग्रन्थकार उक्तवान्, एतच्यतुष्टयमिति ।

विधि निमन्त्रणदि चतुष्टये अनुगतम् = एकरूपेणस्थितं समानेन विद्यमानं व्यापकं यत्प्रवर्तनात्वं ( प्रेरणा, प्रवृत्तिः ) तदेव लिङ् लकारस्य वाच्यम् । अर्थात् चतुर्णामर्थानां वाच्यता प्रवर्तनात्वेन प्रवर्तकज्ञानविषयरूपेण बोध्या । एतेन उक्ताः लिङर्थाः वाच्येति सिद्धयति । यादृशी वाच्यता यत्र तिष्ठति तदेव वाच्तताया अवच्छेदकम्भवति । एतेन विध्यादि लिङर्थस्य शक्यतावच्छेदकं ( विशेषणी भूतो धर्मः ) प्रवर्तनात्वं सिद्धम् । पृथक् वाच्यार्थ स्वीकारे तु वाच्यतावच्छेदके विधित्वादि विभिन्न धर्म सत्वे गौरवं स्यात् । अतो लाघवात् चतुष्टये एकस्य धर्मस्योपस्थिति सत्वात् 'प्रवर्तनायां लिङ्' इति सूत्रन्यासो विधेयः । अस्मिन् विधाने हरिकारिका स्वसम्भति प्रददात्विति दृष्टया कौण्डभट्टः वाक्य पदीयस्य पद्यद्वय प्रस्तौति, अस्ति प्रवर्तनेतिचतुर्षु = विधि निमन्त्रणामन्त्रणाधीष्टेषु प्रवर्तनारुपम् = इष्टसाधनत्वं ( यद्विषयकं ज्ञानं कर्मणि प्रवृत्तिजनकं तदेव प्रवर्तना । यथा = इदं मदिष्ट साधन मिति ज्ञानं प्रवृत्तौ प्रयोजकं = प्रेरकम् । प्रवर्तनायाः = प्रेरणाया = रुपं = धर्मं अनुस्यूतम् = अनुविद्धम् । अनुपूर्वक सिवधातो सर्वस्मिन्सम्बद्धमर्थः क्त प्रत्यये ऊठि च कृते सिद्धयति । तत्रैव = प्रेरणार्थे ( प्रवर्तनायामेव लिङ् लकारो विधातव्यः = विधातुं योग्यः । यद्यपि तत्रैव इत्यस्य प्रवर्तनात्वे ऐवेति वक्तुमुचितं पूर्वोच्चारणात् तथापि लिङर्थरुपेण विध्यादीनामेव बोध

---

एतच्यतुष्टयम् = विधि-निमन्त्र-आमन्त्र-अधीष्ठ इन चारों अर्थों में अनुगत, समान, या एक रूप से प्रवर्तनात्व = प्रेरणा से भरा धर्म व्याप्त होने से लिङ् की वाच्यता माननीय है । उक्त अर्थ का अवच्छेदक (भेदक धर्म ) एक है लाघव हैं पृथक् शक्ति स्वीकार में विधित्व इत्यादि अनेक धर्म के अधिक वहन से गौरव है । अतः (लाघव अनुरोध से प्रवर्तनायां लिङ् ऐसा सूत्रांश रखना चाहिए । इसका समर्थन हरि-

प्रवर्तनात्वं च प्रवृत्तिजनकज्ञानाविषयतावच्छेदकत्वम् । तच्चेष्टसाधनत्वस्यास्तीति तदेव विध्यर्थः । यद्यप्येतत्कृतिसाध्यत्वस्यापि, तज्ज्ञानस्यापि

---

दर्शनात् प्रवर्तनात्वमित्युचितमेव । अथवा आकृत्यधिकरणन्यायेन धर्ममात्रे शक्तिरित्यपि वक्तुं शक्यते । तत्रार्थे लिङ्कर्तव्यः । किं भेदस्य=विधित्वादि-रुपेण पृथक् पृथगुच्चारणस्य, विवक्षया = भेदो न कर्तव्य इत्यर्थः ।

यद्येवं तर्हि किमर्थं सूत्रकृता विधिनिमन्त्रणादि भेदानामुपादानं कृतमित्याशङ्क्याह न्याय इति । विशेषधर्मव्यापकोहि सामान्य धर्मः ( विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् ) इति न्याय स्वरुपम् । विशेष धर्मः विधित्व निमन्त्रणत्वादि रूपो व्याप्यो धर्मः तज्ज्ञानपूर्वकं व्यापकस्य सामान्यधर्मस्य प्रवर्तनात्वस्य ज्ञानमिति न्यायः । तस्य व्युत्पादनार्थम् = अव्यभिचरितरुपेण प्रदर्शनार्थं विध्यादीनामुपादानं = ग्रहणं कृतम् । यद्वा न्याय्यते = प्रत्याय्यते येनासौ न्यायः = शक्तिः तस्याः व्युत्पत्तये विविधाश्रय-रुपेणग्रहणाय तेषाङ्ग्रहणम् । अथवा प्रपञ्चार्थं शिष्टबुद्धिवैशद्यार्थं, प्रवर्तनात्वस्य विध्यादिष्वेव शक्तिरिति विस्तरेण ज्ञानार्थम् अदितः = प्रथम मुपादानं चतुर्णां कृतम् ।

प्रवर्तना वा कर्मणि प्रवर्त्यन्ते जनाः । यथा सा (करणे युच्) प्रवर्तना = प्रवृत्तिः, प्रेरक ज्ञान विषयिणी (इदं मदिष्ट साधनरुपा) एतदभि प्रायेणाह— प्रवर्तनात्वञ्चेति—लाभार्थं कर्मकर्तुमेधमाना रुचि रभिलाषा वा प्रवृत्तिः तस्याः जनकम् = उत्पादकं यज्ज्ञानम् = इदं मदिष्ट साधक ( पूरकम् )

---

कारिका के दो पद्यों से करते हैं । अस्ति—चतुर्षु उक्त चारो अर्थों में प्रवर्तना = प्रवृत्ति में प्रेरक धर्म व्यापक रूप से अनुस्यूत = पिरोया हुआ है माला में सूत्र की तरह । अतः तत्रैव = प्रवर्तना अर्थ में लिङ् का विधान ( प्रयोग ) करना चाहिए । विधि निमन्त्रण आदि के भेद की विवक्षा से क्या लाभ है । भिन्न भिन्न अर्थ में शक्ति क्यों ?—समाधान—न्याय है कि विशेष धर्म का ज्ञान होने पर साधारण धर्म का ज्ञान होता है । इस न्याय की व्युत्पत्ति के लिये । जैसे प्रवर्तनात्व सामान्य धर्म है उसका ज्ञान विधित्व आदि विशेष धर्म ज्ञान के पश्चात् होगा इसलिये और प्रपञ्चार्थ— शिष्य की बुद्धि में विशद एवं स्पष्ट ज्ञान होने के लिये पूरा सूत्र पाणिनि ने पढ़ा । प्रवंतना के व्यापक होने से विध्यादी अर्थों में शक्ति है । अतः उन चारो अर्थों का ग्रहण प्रथम किया गया ।

**प्रवर्तकत्वात्*, तथापि यागादौ सर्वत्र तल्लोकत *एवाबगम्यत इत्यन्यलभ्यत्वान्न तच्छक्यम् । 'बलवदनिष्टाननुबन्धित्वज्ञानं च न हेतुः, द्वेषाभावेनान्यथासिद्धत्वात् ।**

---

मिति रूपम् । तस्य = रुचिरुत्पादकज्ञानस्य विषयः = इष्टसाधनं, कामनासिद्धिः, अभिलाषपूर्णता तादृशज्ञानीया प्रकारताख्याविषयता इष्टसाधन निष्ठा ( इष्ट साधने प्रवृत्तिजनक ज्ञनें प्रकारता ) रुपेण भासते । तत्र प्रकारताख्या विषयता ) यथा स्वर्गकामो भवान् यजेत । यज्ञकर्मणि यजमानस्य स्वर्गकामना प्रवृत्यर्थं या प्रवृत्तिस्तस्याः जनकं ज्ञनम् ( अयं यागः मम स्वर्ग कामनारूप मभीप्सित साधनः ) एतादृश ज्ञानमिष्ट साधने प्रकारः । प्रकारतया अवच्छेदको धर्म इष्ट साधनत्वम् ) तदेव प्रवर्तनात्व मुच्यते । तदेव लिङर्थः । अतो भवदभिन्नैकत्वशिष्टाश्रयवृत्तिः यागोद्देश्यिका कर्तृ निष्ठा इष्ट साधनीभूता भावनेतिशाब्दबोधः ।

ग्रन्थककारः उपर्युक्त लक्षणे विध्यर्थत्व प्रदर्शनार्थं प्रसंगे आह तच्चेति = ( उक्त प्रवर्तनात्वंच ) इष्टसाधनत्वस्य = सम्पूर्णां प्रवृत्ति प्रति "इष्टसाधनत्वज्ञानं" कारणमस्ति । तत्कामना सिद्धावस्त्येव । तदेव = अभीप्सितार्थं साधनता ज्ञानमेव ( अत्र एव पदेन अन्य योग व्यवच्छेदः कृत । अन्ययोः कृतिसाध्य-वलवदनिष्टानुवन्धिनीः योगस्य = ( सम्बन्धस्य व्यवच्छेदः = वियोग कृतः ) विध्यर्थः = प्रेरणादि बोधक प्रत्यार्थः । इष्टत्वञ्च = इच्छा विषयत्वम् । लिङन्तपदसमीपस्थपदोपस्थापित कामना विषयत्व मिति वा ।

---

किसी कार्य में सकुशल प्रवृत्ति हो उस प्रवृत्ति का जनक जो ज्ञान उसका जो विषय जैसे 'यह मेरा इष्ट का साधक है । । ऐसा अवच्छेदक = एक ( समान ) रूप से अनेक में प्रतीयमान धर्म ( जीत ) वही प्रवर्तनात्व है । त्व प्रत्यय धर्म का बोधक है । जैसे 'आप यज्ञ करें' कर्ता के उद्देश्य से फल को उत्पन्न करने वाली क्रिया यह अर्थ हुआ । यही लिङर्थ है । विधि आदि अर्थ है ।

यद्यप्येतत्—जैसे इष्ट साधनत्व प्रकारक ज्ञान-प्रवर्तना है । वैसे यह कार्य मेरे कर्म-कृति = परिश्रम से साध्य है कि नही । इस प्रकार कृति साध्यत्व विशेषणक ज्ञान भी प्रवर्तना होने से लिङर्थ क्यों नही ? यह यज्ञ मेरे पश्रिम साध्य का अनुमान

एवञ्च इष्टसाधनताज्ञानस्य लिङर्थत्वे इष्टत्वेनोपलक्षितः स्वर्गसाधन रुपार्थो वाच्यः। यत्रतु 'अहरहः संन्ध्या मुपासीत, श्राद्धमु पासीत' इत्यादौ फलविशेषाश्रुतिस्तत्रार्थवाद वाक्योक्त फलसाधनताज्ञानेनैव प्रवर्तकत्वं लिङादिवाच्यम्।

नच नित्यकर्मणः फलकल्पने नित्यत्व हानिः स्यात्तन्न ग्रहणश्राद्धादौ नित्यत्व-काम्यत्वयोः सर्वसम्मतत्वेन सन्ध्यादिष्वपि नित्यकर्मसु फल कल्पने विरोधाभावात्।

उक्तञ्च--यद्यहरहः श्राद्धं पितृभ्यः प्रीतिमाहवन्।
सन्ध्यामुपासते ये तु सततं संशितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्।

इत्यादौ श्राद्ध पितृतृप्त्योः सन्ध्या ब्राह्मतृलोकावाप्त्योः कार्यकारण भावो दृश्यते। जन्य जनक भावश्च। तेन फलकल्पना सिद्धयति। नच श्राद्धे व्यापारः पुत्रे तिष्ठति, तृप्ति रुपं फलन्तु पितरि तिष्ठति कथं कार्य कारणभावः। तत्र उद्देश्यत्व सम्बन्धेन श्राद्धादि व्यापारस्यापि पित्रादिस्थत्वात्। पितृणां मुक्तत्वेषु अनुष्ठातरि एव फल कल्पनात्। अत एव शास्त्रोपदेशितं फलमनुष्ठातरीत्युत्सर्ग इति वृद्धा।

ननु अभीप्सतार्थलाभो लिङर्थ इति स्वीकारे 'न कलञ्जं भक्षयेत्' इत्यत्र नञ निर्देशे निषेधार्थं बोधात् इष्ट साधनत्वं नोपपाद्यते अभीप्सितार्थं लाभस्य वाधात् कथं लिङलकारः प्रयुज्यते। तन्न लक्षणया अभीष्ट साधनत्वमपि लिङथे लभ्यते। कलञ्जम्—(विषव्याप्त वाणविद्धमृगमांस-) कर्मकं भक्षणमनिष्टसाधनमिति बोधः। नञर्थाभावविषयक एव वा बोधः कलञ्जभक्षणाभावोऽभीप्सितार्थः। कलञ्जकर्मकं भक्षणाभावेष्ट साधनम्। स्वं (नागम्यां गच्छेत्) इत्यत्रापि नञ् समभिव्याहारे अभीप्सितार्थलाभा भावात् लक्षणया सङ्गमनीयः वा अगम्यां (परस्त्रियं) गमनाभाव एवेष्ट साधनमितिविवेकः।

---

लोक व्यवहार से सुलभ है। वह लिङशव्द का अर्थ नहीं हो सकता। क्योंकि शब्दार्थ उसे कहते हैं जो दूसरे साधन से सुलभ न हो। परिश्रम साध्यता है लोक व्यवहार से उपलब्ध है। न तच्छक्यम्—वह शब्दार्थ नहीं हो सकता। यद्यपि सकाम कर्म में इष्ट साधनताज्ञान भी लोक लभ्य होता है। किन्तु निष्काम कर्म में वह लोक लभ्य नहीं है कि लिङादि रूपशब्द मात्रगम्य है।

ननु पूर्वंप्रपञ्चिते प्रवर्तनात्वरूप काललक्षणे यथा इष्टसाधनत्व प्रकारकं ज्ञानं ( अभीप्सितार्थ लभः कर्मणि कामनाजन्यविषयो ) लिङर्थः । तथैव कृति-( प्रयत्न ) साध्यत्वज्ञानं ( स्वकर्मकश्रम साध्यरूपमपि ) इष्टसाधनत्वे प्रकारक ज्ञानं तदपि प्रवृत्तौ प्रयोजकमस्ति । यथा सुमेरुशिखरात् सुवर्ण विकण्टलानयनमभीप्सितार्थ लाभजनकं, विना प्रवृत्तिर्न जायेत प्रयत्न साध्याभावात् । 'नागलोका दमृतमानय' इत्यात्रपि तथा । एवमयं यागः मम प्रयत्न साध्योऽस्ति नवेति ज्ञानं प्रवृत्तौ प्रेरकम् । तस्य तादृशज्ञानस्य प्रकारताख्या विषयता कृतिसाध्यज्ञानेऽप्यस्ति । विषयतायाः ——अवच्छेदकं कृतिसाध्यत्वं भविष्यति । तदपि लिङर्थोऽस्तु तदाह—यद्यपीति—कृतिसाध्यत्व=मम प्रयत्न साध्यं कार्यमस्ति न वेति ज्ञानमपि प्रवृत्तौ प्रेरकमस्ति तथापि यागादौ=अभीष्टलाभदायकयज्ञकर्मणि प्रयत्नसाध्यज्ञानं लोकतः=लौकिकप्रमाणात्, अनुमानात्, व्यवहाराद्वा लभ्यते=स्वभावाद् गम्यते । तन्नशब्दार्थः । यतोहि अनन्य लभ्यो हि सः । योऽन्येन प्रमाणेन न लभ्यते स शब्दार्थः । प्रयत्नसाध्यज्ञानन्तु लोकव्यवहाराल्लभ्यं न तल्लिङर्थः ।

इष्टसाधनत्व प्रकारकं ( अभीष्टार्थलाभ ) ज्ञानन्तु, न केवलं व्यवहार लभ्यम् । किन्तु लिङादिरूपशब्द मात्रगम्यम् । नच कामनाजन्यं कर्म भवति । कामनात, प्रवर्तना, इप्सादिरुपैव । ततः प्रवर्तनायां सर्वत्र ईप्सादि दर्शनात् व्यभिचाराभावान्न विशेषणता तत्र । तन्न निष्कामकर्मणि व्यभिचार सम्भवात् । ईप्सादि लाभो न लोके प्रसिद्धः । अत इष्टसाधनत्वं लिङ् वाच्यम् लकारमात्रैकगम्यत्वात् ।

न च कृति साध्यत्व ज्ञानं लोकतो लब्धमपि तत्र प्रवृत्तिप्रेरकंज्ञानविषयत्वं व्यभिचरितं वर्तते ) तद्विशेषणं कथन्न भवितमर्हति । कदाचित्प्रयत्नसाध्य ज्ञानसत्यपि द्वेषाभावात् प्रवृत्तिर्नजायते यथा--मधुविषसम्पृक्तान्नभक्षणे कृतिसाध्यताऽस्ति किन्तु भक्षण कर्मणि प्रवृत्तिर्न जायते । मृत्युकारणीभूत विषेण विद्वेषात् । अतो न शक्यं शब्दार्थः ।

ननु 'नागलोकादमृतमानय' इत्यादावमृतानयन कर्मणि वलवतां प्रतिवन्धकानां नागानां सन्निधानादमृतानयनस्य प्रवृत्तिर्न जायते । अतः=अस्मात् कारणात् अनिष्टानां=बिघ्नानां (न अनुबन्धनं=विघ्नजननम् ) अननुवन्धिः=प्रत्यूहाजनकं वलवन्ति च तानि अनिष्टानि तेषामननुवन्धिः=अप्रतिवन्धकं तस्याज्ञानं प्रवृत्तिप्रयोजकम । यत्र बलवदनिष्टज्ञानं नास्ति तत्र किञ्चिद्

आस्तिककामुकस्य नरकसाधनताज्ञानदशायामप्युत्कटेच्छया द्वेषाभावदशायां प्रवृत्तेर्व्यभिचाराच्च। तस्मादिष्टसाधनत्वमेव प्रवर्तना।

*उक्तं च मण्डनमिश्रैः—

*पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः (अन्यः) न।
*प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम्॥ इति।

*प्रपञ्चितं चैतद्वैयाकरणभूषणे। र

---

दुःख जनकत्वेऽपि न काचिदनुपपत्ति। किंतावद् बलवदनिष्टत्वम् = स्वसह्यसामर्थ्यादधिक दुःखजनकत्वम्। यथा—विषाक्तभोजने प्रवृत्तिर्न जायते प्राणवियोग सम्भावनया सह्यदुःखातिरेकात्। यत्र सह्यसामर्थ्यादधिक दुःखानुभूतिर्न जायते। यथा प्रस्तोता प्रस्तावं प्रस्तूयात् तत्र न दोषः। तेन बलवदनिष्टानां प्रतिबन्धकत्व ज्ञानं विषयतया अवच्छेदकम्। तस्यापि प्रवर्तनात्व लक्षणे प्रतीतिसम्भवात् तज्ज्ञानमपि लिङर्थ इति कथन्न स्यात् तदाह न हेतुः—(प्रबल) विघ्नस्य प्रतिबन्ध कत्वज्ञानं प्रवृत्तौ न कारणम् यद्यपि संकल कार्यंप्रति विघ्नाभाव ज्ञानमपि कारणं भवति तथापि द्वेषस्य प्रबल प्रति बन्धकत्वं तत्र सर्वसम्मतम्। यथा विषमधु सम्पृक्तभोजने। यत्र तु बलवदनिष्टज्ञाने सत्येऽप्यनिष्टात् द्वेषो नास्ति, कर्मणः फलमनिष्टं भवतु नाम, किन्तु तत्र प्रवृत्तौ रुचिर्जायते। अन्यथासिद्धत्वात् स्वभावसिद्धत्वात् वासन-सस्कारवशाद्वा।

यथा अगम्यागमनं नरक साधनम्। इत्थं बोधायमानोऽप्यास्तिककामुकः (अस्तिपरलोकं वेदधर्मशास्त्रादि मर्यादाऽस्येत्यास्तिकः) तस्य परिणामो नरक फल प्राप्ति ज्ञान सत्यपि अगम्यामगन प्रवृत्ति दर्शनात् व्यमिचरितं बलवदनिष्टाननुबन्धित्वज्ञानमतो न लिङर्थः। दृश्यतां यच् चोरः आपतिष्य

---

बलवद—बलवान् जो अनिष्ट = विघ्न, प्रतिबन्धक से अननुबन्धि युक्त न हो प्राणघातक विघ्न न हो ऐसा ज्ञान भी यद्यपि प्रवृति में कारण होता है। परन्तु वैसा शब्दार्थ में कारण नहीं बनेगा। द्वेषाभावेन—कहीं-कहीं बलवान अनिष्ट से कोई द्वेष न होने से भी प्रवृत्ति होती है। अन्यथा = अन्य प्रकार से (स्वभाव से) सिद्ध वासना वशीभूत होने से प्रवृत्ति होती है। जैसे आस्तिक (धर्मात्मा) कामुक (विलासी) को (परदारा या वेश्यागमन) नरक का साधन है। ऐसा ज्ञान होने पर भी अति उत्कट (प्रबल) इच्छा (वासना के प्रदीप्त होने से (बलवान् अनिष्ट नरक पतन से कोई द्वेष (भय या घृणा) के अभाव दशा में प्रवृत्ति होने से लक्षण में

  

माणं दण्डं जानन्नपि चौरकर्मणि उत्कटरागवशात् प्रवर्तते। स्वभावजवसना सिद्धत्वात्। तत्र प्रवृत्तौ द्वेषाऽभावः कारणम्।

यागं प्रति यदि वलदनिष्टाननु वन्धित्वस्य कारणत्वं स्वीक्रियेत् तर्हि कारणत्वलक्षणे स्वभाव सिद्धिशून्यत्व घटितत्वेन अस्य देषाभाव-रूपान्यथासिद्धि विशिष्टत्वेन कारणत्वाभावः स्यात्। लघुनियतपूर्ववर्ति भिन्नत्वम। लघुत्वं त्रिविधं—स्वरूपकृम्, उपस्थितिकृतं, सम्बन्धकृतञ्चे क्रमेणोद्धाहरणम् प्रत्यक्षं प्रति महत्वस्यज्ञानं कारणम् गन्धं प्रति प्रागभावः कारणम्। [1] घटं प्रति दण्डः कारणम् तस्भादिष्टसाधनत्वप्रकारकज्ञानमेव प्रवर्तना। तदेव लिङर्थः।

इदानीं मण्डन मिश्रोक्तं प्रमाणं प्रस्तौति ग्रन्थकारः पुंसामिति पुंसामिति पदं प्राणिमात्रोपलक्षणम्। स्त्रीनपुंसकादीनामपि तेषामपि अभीप्सितार्थं लाभे प्रवृत्तिदर्शनात्। इष्टाभ्युपायत्वात्=अभिलाषप्रपूर्णा-र्थोपायं बिना अन्यः=इतरः (कृतिसाध्यत्वं वलवदनिष्टाननुवन्धित्वज्ञानं वा) क्रियासु=कर्मसु प्रवर्तको न=प्रवृत्तिजनकज्ञानविषयतावछेदको नेत्यर्थः। यतोहि प्रवृत्तिहेतुं=कारणीभूतां प्रवर्तनां धर्मञ्च प्रवर्तनामेव वदन्तिस्म आचार्याः। अतो न कृतिसाध्यत्वज्ञानं कारणम्, लोकतः सिद्ध-त्वात्। न च बलवद्विघ्नज्ञानं कारणम् द्वेषाभावात्। नार्गलाकात तेना-मृतानयनमपि वृथाश्रमजनकम्। प्रवर्तना इत्यत्र प्रपूर्वकवृतधातुः, प्रवृत्ति प्रेरक व्यापारपरः। करणेयुचिप्रत्ययस्य इष्टसाधनत्वादि ज्ञानमर्थः। सक्रियस्य प्रेरणाव्यर्थेति न वक्तव्यम्। प्रमादवशात् 'विगमो माऽभूत्' अ.(: प्रेरणेत्युचितमेव।

---

बलवान् अनिष्ट के अभाव का ज्ञान व्यभिचरित है। अतः इष्ट (इच्छित) साधनता का ज्ञान ही प्रवर्तना (प्रवृत्ति में प्रेरक) है वही लिङर्थ है।

मण्डनमिश्र ने भी—पुंसा = प्राणिमात्रको इष्टाभ्युपायत्वाद् = इष्टसाधतता ज्ञानरूप उपाय के बिना क्रियासु = कर्मों में प्रवृत्ति कराने वाला धर्म अन्य कोई नहीं है यानी कृतिसाध्यतादि प्रवर्तक नहीं है। प्रवृत्ति में कारण और धर्म दोनों प्रवर्तना (प्रेरणा) ही है ऐसा आचार्यगण उद्घोष से बोलते हैं। इत्यादि वैयाकरण भूषण सार में विस्तृत विवेक्षित है।

ब्राह्मण की निन्दा - हेतु, इसके कारण से

आदिना "हेतुहेतुमतोर्लिङ्" "आशिषि लिङ्लोटौ" इतिसूत्रोक्ता हेतुहेतुमद्भावादयो गृह्यन्ते। "यो ब्राह्मणायावगुरेत्, तं शतेन यातयेत्" इति यथा।

लुङर्थमाह—भूतमात्र इति। भूतसामान्य इत्यर्थः, भूते इत्यधिकृत्य "लुङ्" इति सूत्रात्। अत्र विद्यमानध्वंसप्रतियोगित्वं भूतत्वम्। तच्च क्रियायां

---

लिङर्थः किमिति प्रश्ने (प्रेरणादौचेति) कारिकायामुक्तम्। तत्र आदि पदेन किं ग्राह्यं तदाहहेतुहेतुमतोलिङिति—अत्र हेतुः = कारणं (हेतुरस्त्यस्येति) हेतुमत् कार्यम्। यत्र द्वयोः क्रिययोः कार्यकारणभावो भवेत् तदपि लिङर्थः। 'अशिषिलिङ्लोटौ' सूत्रात् आशीश्च लिङर्थः। प्रथमस्योदाहरणम् यो ब्राह्मणाय इति—यत्कर्तृकं ब्राह्मणमुद्दिश्यावगोरणं = हननार्थं दण्डाद्युत्थापनं चक्षुर्विकासेनरोषप्रदर्शनं यत्रहेतुः वधोद्यमः = तादृशपुरुषकर्मकयमदूतकर्तृक शतसम्वत्सरयातनेति हेतुमानिति शाब्दबोधः। पत्येशेते' इतिवत् ब्राह्मणायेत्यत्रचतुर्थी। अर्थात् ब्राह्मणावगोरणं हेतुः शतयातना हेतुमान्। अत्र हेतुहेतुमद्भाव सम्बन्धसत्वेऽपि अवपूर्वकस्य उद्यमनार्थक गुरधातोः हेत्वर्थबोधकत्वमर्थः। तथैव ण्यन्त धातोः हेतुमदर्थबोधकत्वमर्थः तयोः तात्पर्यबोधकोलिङ् नतु तत्र तस्य शक्तिः। मूलाभिप्रायस्तु वाच्यत्वेन बोध्यः।

भूतमात्रे = अत्रमात्रशब्दः प्रतिबन्धयोगव्यवच्छेदपरप्रतिबन्धनश्च अद्यत्तनानद्यतनबन्धयुक्तोभूतकालः एकैको वा तस्य योगः = सम्बन्धस्तस्य अभावः अर्थात् भूतेइत्यधिकारात् उपाधिविमुक्तभूतकालोऽत एव भूतसामान्ये-निरूपाधिकेऽतीतकालार्थकेबोधे लुङ् विधीयते। अत्र विद्यमानध्वंस प्रतियोगित्वं भूत्वम् उपस्थितस्य योऽभावः तस्य प्रतियोगी = आश्रयः

---

कारिका में प्रेरणादि घटक आदि पद से मूल में उक्त दोनों में कहे गये हेतु हेतुमद्भाव इत्यादि अर्थ भी ग्रहण किये जाते हैं। उनके उदाहरण जैसे—जो ब्राह्मण को गुर्राय आँख दिखाये उसे सौ से दण्डित करे। यहाँ ब्राह्मण को घूरना हेतु है, गत यातना हेतुमती (कार्य) है, कार्यकारणभाव लिङ् का द्योत्यार्थ है। यह भी लिङर्थ है।

भूतकाल मात्र में (सामान्य (सभी) अतीतकाल में) 'भूत' सूत्र का अधिकार होने से लुङ् लकार का विधान किया गया है। इस सूत्र से विद्यमान (उपस्थित)

निर्बाधमिति विद्यमानेऽपि घटे घटोऽभूदिति प्रयोगः०। विद्यमानध्वंसप्रतियोगी घटाभिन्नाश्रयक उत्पत्त्याद्यनुकूलो व्यापार इति बोधः।

अयमत्र संग्रहः। कालो द्विविधः-अद्यतनोऽनद्यतनश्च। आद्यस्त्रिविधः-भूतभविष्यद्वर्तमानभेदात्, अन्त्यो द्विविधः-भूतो भविष्यंश्च। तत्र वर्तमानत्वे लट्।

---

(कालो) गृह्यते। तच्च = उक्तभूतत्वञ्च क्रियाया काले वा (क्रिया) उपलक्षणतया कालास्यापि बोधिका) निर्वाधम् = निर्विघ्नस्थितिः। अतो विद्यमानेऽपि घटे घटोभूऽदिति भूतकाले प्रयोगोदृश्यते। तत्र विद्यमानस्य = उपस्थितस्य यो ध्वन्सोऽभावः तस्य आश्रयरूपं भूतत्वं घटाभिन्नाश्रयके उत्पत्यनुकूले व्यापारे विशेषणं न तु घटे। यदा क्रियायाः यद्विद्यमानत्वं तस्य ध्वन्सो जायते, तदा तस्य अतीतत्वं मन्तव्यम्। तस्य व्यापारेविशेषणत्वात्। घटस्तु भावनाश्रयः तत्र कालस्य विशेषणता नास्ति। यतो घटो न ध्वस्तः किन्तु क्रियैव ध्वस्ता। ध्वंसस्याश्रयः क्रियात्मकः कालः। अत एव विद्यमानध्वंस प्रतियोगी घटाभिन्नाश्रयक उत्पत्यनुकूल व्यापारः, चक्राधिकारणकोभ्रम्यनुकूलः इति शाब्दबोधः। तेन घटसत्वेऽपि अभूदिति प्रयोगो निर्वाधः।

कालोऽखण्डः सन्नपि क्रियाभेदाद्भिद्यते। शरीरभेदात् आत्मनो भेद इव। क्रियात्मककालभेदस्य सारांशसङ्ग्रहोऽयम् कालोद्वेधाविभजते। १—अद्यतनः = वा आङ्गलतारिकां व्याप्नोति। पूर्वार्धरात्रितः परार्धरात्रि पर्यन्तं तिष्ठति। प्रथम स्त्रिविधः। १—भूताद्यतनः (यो गतरात्रितः इदानीं यावत्)। २—भविष्याद्यतनः = अधुनातः आगतार्धरात्रिपर्यन्तम्। ३—

---

के ध्वंस (अभाव समाप्ति) के प्रतियोगी (आश्रयकाल) को भूतकाल कहते है। वह क्रिया में निर्वाध (विघ्नविनास्थित) है घट के उपस्थित रहने पर भी 'घट हुआ' ऐसा प्रयोग होता हैं। घटोऽभूत का शाब्दबोधः। विद्यमान (वर्तमान) के ध्वंस (समाप्ति) का प्रतियोगी (आश्रय) वर्तमान व्यापार के अभाव का अभाव भूत व्यापार है घाटादभिन्न आश्रय है। जिसका ऐसा उत्पत्ति रूपफल का जनक व्यापार जिसमें भूतकाल विशेषण है।

काल अखण्ड है वह क्रिया के भेद से भिन्न प्रतीत होता है। इस प्रकार क्रियात्मक काल के भेद रहस्य का सारांश सङ्ग्रह करते हैं कि—काल दो प्रकार का है। १—अद्यतन (गत १२ बजे से आगत १२ वजे तक) उससे भिन्न या अंग्रेजी

सामान्य

भूतत्वमात्रे लुङ्। भविष्यन्मात्रे लृट्। हेतुहेतुमद्भावाद्यधिकार्थविवक्षायामनयो लृंङ्। अनद्यतने भूते ०तत्वेन विवक्षिते लङ्। तत्रैव परोक्षत्वविवक्षायां लिट्। तादृशे भविष्यति लुडिति द्रष्टव्यम्।

लृङर्थमाह—सत्यामिति। क्रियाया अतिपत्तिरनिष्पत्तिस्तस्यां गम्यमानायाम्। ०भूते भाविनि। हेतुहेतुमद्भावे सति लृङित्यर्थः। "लिङ्निमित्ते

---

वर्तमानाद्यतनः (क्रियारम्भात् फलोत्पत्तिपर्यन्तम्) द्वितीयोऽनद्यतनः = भूतानद्यतनः = गतार्धरात्रेः पूर्वकालः भविष्यानद्यतनः (आगतार्धरात्रेः पश्चाद्भावीकालः वर्तमानत्वे = फलोत्पत्तिपर्यन्त प्रचलितायाः क्रियायाः य कालस्तत्रद्योत्ये लट् प्रयुज्यते। भूतत्वमात्रे—अनद्यतनपरोक्षादि विशेषण विभुक्ताया अतीत क्रियायाः यः कालस्तत्रद्योत्ये लुङ् विधीयते। भविष्यत् अनद्यतनाद्यतन विशेषण विमुक्ता या आगामिक्रिया तस्याः कालद्योत्ये लृट् व्यवह्रियते। यत्र क्रिययोः हेतुहेतुभद्भावः = कार्यकारणभावोऽधिको भासते। तत्रानयोः = भूतभविष्यद्योरुभयत्रापि लृङ् प्रयुज्यते। अनद्यतन भूतकालविवक्षायां लङ् तत्रैवानद्यतन परोक्षभूतकालविवक्षायां लिट्, तादृशे = अनद्यतनपरोक्षे। भविष्यत्कालवाच्ये लुट्।

लृङ्विधायकं लिङ्निमित्ते लृङ्क्रियतिपत्ताविति सूत्रम्। तत्र लिङ् निमित्तं = द्वयोः क्रिययोः परस्परापेक्षयोः हेतु = कारणं हेतुमद् = काया

---

तारीख अद्यतन है। २—अनद्यतन (उससे भिन्न) अद्यतन ३ प्रकार का है १—भूत अद्यतन वर्तमान से अर्धरात्रितक) २—भविष्य अद्यतन (अब से आगत आधीरात तक) ३—वर्तमान अद्यतन (फल की उत्पत्ति पर्यन्त चलने वाली क्रिया का काल) अनद्यतन के दो भेद हैं। भूत गत अर्धरात्रि से पूर्वकाल। अनद्यतन भविष्य (आगत अर्धरात्रि का पश्चात्काल)। वर्तमान फल की उपलब्धि पर्यन्त प्रचलन्ती क्रिया काल) अर्थ में लट्। भूतकाल मात्र (जिसमें तद्यतनादि का झंझट न है) में लुङ्। अद्यतनादि विशेषण से विमुक्त आगामि (भविष्यत्) काल में लट् का प्रयोग, हेतु = कारण हेतुमत् = कार्य रूप सम्बन्ध भाषित हो, या विवक्षा हो तो भूत काल हो या भविष्य काल हो लङ् का प्रयोग होता है। अनद्यतन भूत में लङ् का प्रयोग, अनद्यतन भूतकाल होते हुए परोक्ष (व्यापारविशिष्ट कर्ता का अभाव) हो तो लिट्, ऐसे ही अनद्यत न भविष्यकाल हो तो लुट्, ये अनुभव गम्य हैं।

आटन का न जलाना — प्रयोज्य





"लृङ् क्रियातिपत्तौ" इति सूत्रात्। लिङो निमित्तं हेतुमद्भावादि। यथा '[2]सुवृष्टिश्चेदभविष्यत्, सुभिक्षमभविष्यत्' वह्निश्चेत्प्राज्वलिष्यद्, ओदनमपक्ष्यत्' इत्यादौ। अत्र वह्न्यभिन्नाश्रयकप्रज्वलनानुकूलव्यापाराभावप्रयुक्त ओदनाभिन्नाश्रयकविक्लित्त्यनुकूलव्यापाराभाव इति शाब्दबोध।

---

भाव इति लिङ् लकार विषयोद्योत्यरूपः। तस्य सत्वेलिङ्विधीयते। यदि क्रियायाः = व्यापारस्य अनिष्पत्तिः = असिद्धिः, असम्भावना वा गम्यमाना चेत्। सा (अनिष्पत्तिः) भूतकाले भवतु भविष्यकाले वाऽस्तु, किन्तु द्वयोः क्रिययोः कार्यकारणभावभूतयोः तयोःपरस्परापेक्षितयोः सति लृङर्थः। न च लृट् लृङोर्कोभेद? उभयत्रभविष्यात्कालसत्वात्। यत्र केवलं भविष्यत्कालो वाच्य सा लृट् प्रयुज्यते। तत्र फलसहितभविष्यात्कालो व्यङ्ग्यस्तत्र लृङ् प्रयुज्यते यथा – सुवृष्टिरभविष्यत्तदासुभिक्षमभविष्यत्। अत्र सुवृष्टयनुकूला क्रिया हेतुः सुभिक्षोत्पादिका क्रिया हेतुमती। तयोः कार्यकारणभावः सन् भविष्यकालवाच्योऽस्ति। शोभनावृष्टिः शोभना भिक्षा च वाच्या, सम्बन्धो व्यङ्ग्यस्ततो लृङ्।

विह्नश्चेत्प्राज्वलिष्यत् ओदनमपक्ष्त्। अत्र वह्नि प्रज्वलनानुकूला क्रिया हेतुः, ओदन कर्मक विक्लित्यनुकूला क्रिया हेतुमती (कार्यम्) द्वयोः प्रज्वलन पचन क्रिययोः परस्परहेतुहेतुमद्भावो गम्यतेऽतो लृङ्भूत्। यतो भविष्यत्कालः वाच्यत्वेन प्रतीयतेऽतोलृङ्विषयता। वह्निप्रज्वलनमोदनपाकश्च वाच्यत्वेन प्रतीपते। अत्र भूतकालस्य भविष्यत्कालस्य वा विवक्षाचेत्तर्हि

---

सत्यामिति--एक क्रिया के अभाव में दूसरी क्रिया असिद्ध होती हो, दोनों में भाव हो, या पहली क्रिया की सफलता में दूसरी क्रिया फलवती हो, या होनेवाली पहली क्रिया से दूसरी क्रिया का फल सम्भावित हो हो जैसे सुबृष्टि होगी तो सुभिक्ष होगा। हेनु हेतुमद्भाव विषय हो तो लङ होता है। यहाँ लिङ का निमित्त कारण कारणकार्य भाव है। (भूत) भविष्य काल वाच्य है सम्बन्ध द्योत्य हैं। अग्नि यदि जलती तो चावल पकं जाता। यहाँ प्रज्वलन कारण है पाक कार्य है। दोनों का सम्बन्ध सही होने पर लङ् हुआ। यही भूतकाल की विवक्षा में भूतकाल लङ् से सर्वथा द्योत्य है। यहाँ शाब्दबोध प्रदर्शित करते हैं। वह्नि से अभिन्न है आश्रय जिसका, ऐसी जो ज्वाला उसको जन्म देने वाली क्रिया के अभाव से प्रयोज्य

इति रीत्या द्रष्टव्यम् । अथ चार्थनिर्देश उपलक्षणम् । अर्थान्तरेऽपि बहुशो विधानदर्शनात् । प्रसिद्धत्वादेष्वेवार्थेषु शक्तिरन्यत्र लक्षणेति मतान्तररीत्या उक्तम् । एतेषां क्रमनियामकञ्चानुबन्धक्रम एव । अत एव पञ्चमो लकार इत्य नेन मीमांसकैर्लेड व्यवह्रियत इति दिक् ॥ २ ॥ ( २३ )

इति श्रीकौण्डभट्टविरचिते वैयाकरणभूषणसारे
लकारविशेषार्थनिरूपणं समाप्तम् ।

---

सवर्था लृङ् लकारेण द्योत्यते । शाब्दबोधस्त्वित्थम्—वह्न्यभिन्नैकत्व-विशिष्ट य आश्रयस्तन्निष्ठो भविष्यत्कालिक प्रज्वलनजन्या विक्लित्त्यनु-कूलो व्यापरः इत्येवं ग्रंथकारेण प्रदर्शितः

अभावरुपोऽ (अभावानुकूल शाब्दबोधो ) पि । उक्त वाक्ये नञ् योज-नेन 'वह्निर्न प्राज्वलिष्यत् ओदनं नापक्ष्यत्' इत्यर्थो वाच्यः प्रज्वलनाभाव-प्रयोज्य पाकानुकूल व्यापाराभावः । वह्न्यभिन्नाश्रयवृत्ति प्रज्वलनानुकूल व्यापरस्य स्व प्रतियोगित्व ( अभावाश्रयत्व ) सम्बन्धनेन प्रज्वलन व्यापरस्य नञर्थाभावेऽन्वयः । अत्र लिङो निमित्तं हेतु हेतुमद्भावादिः वर्ततः एव । एवं सुवृष्टिर्हेतुः सुभिक्षं हेतुमत्, भावात् लृङ विषयता । ज्वल धातूतर नञर्थाभावस्य पच धातूत्तर नञर्थाभावे प्रयोज्यत्व सम्बन्धेनान्वयः जन्य-जन्य साधारणो धर्मः प्रयोज्यत्वम् ।

एवंरीत्या=लृङर्थस्यभावाभावोभय रीत्या द्रष्टव्यम्=विचारः कर्तव्यः । अयञ्च—वर्तमान परोक्षानद्यतन भूतभविष्यविध्याद्यर्थः । अर्थनिर्देशः= अर्थात्मकतात्पर्य बोधकः । उपलक्षणम्=लक्षणयोपकारकोऽपि भविष्यति यतो हि अर्थान्तरेऽपि=अन्यार्थेऽपि यथा—'अर्ह-प्रशंसा-प्राप्तकाल' इत्याद्य-र्थेष्वपि लडादयः प्रयुज्यन्ते । यदा प्रज्वलनकालः प्राप्तस्तदा ओदनोपलब्धिः यन्नैवं तन्नैवम् । यदा—सुवृष्टि कालः प्राप्तस्तदा सुभिक्षोपलब्धिः । एष्व-र्थेषु=वर्तमानादिष्वर्थेषु लकाराः प्रसिद्धाः । तेष्वर्थेषु शक्तिः सा च संङ्केत-रूपा । अस्माच्छब्दात् अयमर्थो बोधव्य इत्यर्थ प्रधाना । 'इदं पदमिममर्थं बोधयतु । इति शब्दप्रधाना । इच्छाशक्तिः, बोधकतां शक्तिर्वाऽभिधा । अन्यत्र=अर्ह-प्रशंसा प्राप्तकालादिष्वर्थेषु लक्षणा—अप्रसिद्धार्थत्वात् । मतान्तररीत्या=नैयायिकमीमांसक रीत्या लक्षणेत्यर्थः । बोधकताशक्ति-

रित्ति प्राचीनवै० मते। उक्तेष्वथेषु त्रोधोऽनुभवसिद्धमात्र शक्ति: अन्यात्र प्रयोगोपाधित्वम्। वर्णसमाम्नाय पठित 'अ-इ-उ-'ऌ-ए-ओ इत्यादि वर्ण नियामक क्रमानु- रोधेन लट् लिट् इत्यादीनां क्रमेणोच्चारणम्। अतएव= क्रमनियामकत्वादेव पञ्चमो वर्ण एकार: मीमांसकै: पञ्चमो लकार लेट् इत्युच्यते।

दिगिति—उच्चारित: शब्द: प्रत्यायको भवतिनानुच्यारित इति। इयान् व्यतिध्वे, इत्यादौ प्रत्ययमात्रस्य दर्शनात्। एवं गर्गा, भव, इत्यादौ प्रकृतिमात्रस्य दर्शनात् प्रत्ययानां द्योतकत्वं वाचकत्वमेवेति विचारो न सम्भवति। तत्र पद स्फोटस्य वाचकता स्वीकर्तव्या। य: शिष्यते स लुप्यमानार्थाभि धायी भवति। प्रकृति लुप्ते प्रत्ययस्तदर्थबोधक:। प्रत्ययलोपे सति प्रकृतिस्तदर्थामिधायिका। इत्थं शक्ति बोधे न क्षति:।

आनुमानिक स्थान्यादेश कल्पनापेक्षया, आदिना 'विभाषाकर्मणि लिङ् चेत्यादि विहितानां लिङो निमित्तानां ग्रहणं भविष्यति। नित्यं लृङ्च' यथागर्हायां = कथं वाभवान् धर्ममत्याक्षयत्। भूते कथं धर्म त्याजे: त्याजसि वा, अत्यक्षत्, अत्याक्षीद्वा इत्यादौ कथामेति प्रश्ने गर्हायां लिङ् बोध्या:। किंवृत्ते: विभाषा का कतर: कतमो वा हरिं निन्देत् निन्दिष्याति अनिन्दिष्यति वा। अनवकलृप्तिरसम्भावनं, अमर्षोऽक्षमा, इत्यनयो रर्थेऽकिम्वृत्तेऽपि लृङ्। न सम्भावयामि न मर्षये वा भवान् हरिं निन्देत् निन्दिष्यति वा। चित्रीकरणे—(आश्चर्यभावे च) लिङ निमित्ततातिष्ठति। यथा—आश्चर्य मन्धो नाम कृष्ण द्रक्ष्यति।

हेतु हेतु मद्भावादि: क्रियातिपत्तिश्चेत्याद्यर्था: यथाकथञ्चि द्गम्या:, नतु लृङ् वाच्या:।

न च सुवृष्टिकस्य सुभिक्षकस्य फलस्य उत्पन्ने सति भूत काल इत्युच्चते। कारणीभूतं मेघं विना शस्यादीनाभावात् लृङ् प्रयोक्तुं न शक्यते। एवं फलजनक साधनसामग्री सत्येव भाविनी कार्योत्पादककारणता भविष्यादित्युच्यते। आलम्वनाभावात् न क्रियातिपत्ति:। भूतभविष्यतोरभावात्। कथं लृङिति प्रश्न: ? फलोत्पादक सोधनानां कर्तृकर्मव्यापारादी नां भूतेऽभावेऽपि तत्र भूतकालत्वमारोपणीयम्। अत्रैतादृशी क्रियातिपत्ति ग्राह्या। भूतभविष्यतोर भावे सत्येवारोप:। अयमेव 'आहार्या रोप' इत्युच्यते आहृत्य= अभावेभावमतिदिश्य, आरोप इत्यर्थ:।

वस्तुत: शाब्दबोधे वाध निश्चयज्ञानं न प्रतिबन्धकम् । अन्यथा—एष वन्ध्यासुतो याति, वह्निना सिञ्चति; इत्यदीनां वाक्यंत्वं न स्यात् ।

सुतोत्पत्तौ बन्ध्यया', सिञ्चन क्रिययां वह्ने: कारणत्वं वाधते तथापि शाब्दबोधो जायते। बौद्धार्थस्य पदार्थत्वस्वीकारात् । अद्रवेण वह्निना सेकमपि न जायते। ये लृङर्था: द्योत्यास्ते सर्वे आहार्यारोपात्मका: । बाध-ज्ञानन्तु प्रमात्वं ( प्रमाणितं ज्ञानं ) प्रति प्रतिबन्धकम् । नतुशाब्दबोधं प्रति प्रतिवन्धकम् ।। २३ ।।

व्याख्या भूषणसास्य लरार्थं निर्णायिका ।
टीका प्रामाकरीनांम्नी स्वत: परिपूर्णतां गता ।। २ ।।



---

साक्षात् में अनुत्पन्न ( अग्नि तण्डुल का साक्षात् दाहक नहीं होता, किन्तु पात्र के माध्यम से पकाता है ) परम्पराजन्य भाव है। और तण्डुल ( ओदन ) है अभिन्न आश्रय जिसका ऐसी विक्लित्ति ( पाक ) को पैदा करने वाली क्रिया का अभाव। यह भविष्यल्लिङ का शाब्दबोध हैं।

अत: लिङ का अर्थ अभाव भी मानिये।

एवंरीत्या—इस प्रकार लकारों के विधान का विषय सर्वत्र मानना चाहिए। लकारों का यह अर्थ निर्देश उपलक्षण हैं जो अपना बोध कराकर अन्य अर्थों का भी ज्ञान कराये उसे उपलक्षण कहते हैं। अर्थान्तरेऽपि—अन्य अर्थ ( जैसे प्रशंसाप्राप्तकाल अर्हइत्यादि ) में लकारों का प्रयोग अधिक रूप से देखा जाता है। हाँ उक्त अर्थ में लकारों की शक्ति अन्य अर्थ में लक्षणा ऐसी मत भेदवादियों की दृष्टि से सङ्गति घटनी चाहिए। इन लकारों के उच्चारण का क्रम अ इ उ इत्यादि क्रम के अनुसार जाने इसीलिए पाँचवें लकार को इससे मीमांसकों ने लेट का व्यवहार किया है।

तद्दि मनोरमा शब्दरसज्ञसम्बिदां
सारस्य सिद्धा लकारार्थव्याख्या ।। २ ।।



## अथ सुबर्थनिर्णयः

अवतरणम्—

अथ शब्दोऽधिकार वाची अनन्तरारम्भवाची च। तत्र पद संस्कार पक्षे 'ङ्याप्प्रातिपदिकात्' इति सूत्राधिकारः प्रभवति। अतो ङ्यान्तादाबन्तात् प्रातिपदिकाच्च स्वादिपान्तसमुदायघटकसुब्विभक्तयो भवन्ति। अस्यां स्थितौ प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायात्, प्रथमं प्रत्ययार्थानां (सुबर्थानाम्) विवेचनं परमावश्यकम्। पश्चात् प्रकृत्यर्थ भूतानामर्थाः निरूपयिष्यन्ते। प्रातिपदिकाधिकारे सुबर्थाः पद प्रयोजकाः तद्बोधयितुमाह–अथेति—

सर्वंनाम धातुज माहेति निरुक्तम्। तेन सर्वेषां शब्दानां मूलं धातुरिति। धातुनो सम्बन्धिता यावन्तोऽर्था (प्रकृत्यर्थाः प्रत्ययार्थाः वा) स्तेषां शाब्दबोधानुकूलविशेषण विशेष्यभावः, पूर्वं प्रकरणे उद्बोधितः। तत्र भावप्रधानमाख्यातं सत्वप्रधानानि नामानीति महर्षियास्क वचनमाधारीकृत्य, 'फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणमित्युक्त्वा, धात्वर्थतिङर्थयोः विशेषण विशेष्य भाव उक्तः। कालस्तु व्यापारे विशेषणम्,। काल द्योतकाः वाचकाः वा लकाराः तेषामर्थाः, निरूपिताः तदनन्तरं लकाराः कर्तृकर्मव्यपदेशेन कारकाणि स्मरन्ति। कारकाणि च संख्या कर्मादीन्यभिलषन्ति। तेषां वाचकाः द्योतकाः वा सुबर्थाः सन्ति। तन्निर्णयमाह अथेति—

---

## अथ सुबर्थ निर्णयः

सुबन्तपद संस्कार पक्ष में ङीबन्त टाबन्त और प्रातिपादिक का अधिकार प्रचलित है जिससे सभी सुप् विभक्तियाँ होती है। प्रकृति और प्रत्यय के बीच प्रत्ययार्थ का प्राधान्य सिद्धान्त सिद्ध है। इस न्याय से प्रथम सुप प्रत्ययार्थों का विवेचन आवश्यक हो गया।

सभी शब्दों के मूल में धातु सन्निहित है जिससे सम्बन्धित अर्थों का विशेषण विशेष्य भावादि स्पष्ट किये जा चुके है। पश्चात् लकारार्थ निरूपण हुआ। क्योंकि तिङर्थ (कर्ता-कर्म-संख्या-काल) विशेषण है। तिङन्त स्थल के शाब्दबोध में क्रिया का

७सुबर्थमाह' —

**आश्रयोऽवधिरुद्देश्यः संबन्धः शक्तिरेव वा।**
**यथायथं विभक्त्यर्थः सुपां कर्मेति भाष्यतः ॥ १ ॥ (२४)**

---

आरम्भार्थकोऽपि "अथं शब्दः धात्वर्था या क्रिया तस्यामन्वयिकारकमिति। अस्यां दशायां कारकाणामन्वयोऽपेक्षते तानि षड् भवन्ति।

//कर्ता कर्म च कारणं च सम्प्रदानं तथैव च।
अपादानाधिकरणमित्याहुः कारकाणि षट्॥ //

एषां कारकाणामन्वयीं, प्रतिपादकश्च सुबर्थः। तस्य प्रतिपादनमवसरसंगत्या प्राप्तम्। प्रातिपदिकविशेष्यत्वात्, क्रियया–आकांक्षितत्वा,त् विभक्त्यर्थं निरूपणंभारभ्यते। अथ सुबर्थ निर्णय इति। कः सुबर्थं इति जिज्ञासायामाह आश्रयोऽवधिरिति।

सुप् विभक्त्यर्थाः—आश्रयो, अवधिः, उद्देश्यः, सम्बन्ध इति। अथवा शक्तिमात्रं सुब्विभक्त्यर्थाः। आदावाश्रयत्रयी परिचाय्यते। कर्माण द्वितोयाया आश्रयोऽर्थः। यतः—कर्मणि द्वितोयेति सूत्रेण कर्मरूपार्थ बोधनाय द्वितीया विधीयते कर्म संज्ञा च "कर्त्तुरिप्सित तमम्" इति सूत्रेण क्रियया जन्यं यत्फलं तदाश्रयस्यैव भवति। यतोहि यत्क्रिया जन्य फलशालि, तत्कर्म, कर्त्तुरीप्सिततमं, कामना विषयश्च कर्म भवति। एतेन यः क्रिया जन्य फलाश्रयः स द्वितीयार्थ, इति निधार्यंते। क्रिया, तज्जन्यं फलं, द्वयो र्जन्यत्व सम्बन्धश्चान्यपदार्थंलब्धाः भवन्ति। यथा फलव्यापारी धातु

---

प्राधान्य सिद्धान्तित है। क्रिया के अन्वय की आकाङ्क्षा स्वाभाविक हो गयी जिसकी शान्ति कारक से ही है। क्रिया में जिसका अन्वय हो उसे कारक कहते है। ये कारक ६ हैं ( कर्ता-कर्म-करण-सम्प्रदान-अपादान अधिकरण ) जिनका प्रतिपादक सुवर्थ है जिसका निर्णय प्रसङ्ग सङ्गत है। अतः कौण्ड भट्ट सुवर्थों को बोले—

आश्रय = क्रिया और फल का आधार, अवधिः = सीमा जहाँ से किया प्रारम्भ हो, उद्देश्य = इच्छा का विषय, सम्बन्ध = जन्य जनक भाव, स्वस्वाभिभावादि।

लभ्यौ भवतः। द्वयो जन्यजनक भावः सम्बन्धश्चैकपदार्थेऽपर पदार्थस्य ससंर्ग भर्यादया (आकाङ्क्षा दर्शनेन) भासते। अनया व्युपत्त्या सम्बन्धोऽपि, आकांक्षयैव बोध्यते। आश्रयमात्रभवशिष्यते, तदेव द्वितीयार्थः। स च कर्मरूपः कर्त्तुरिच्छा विषयश्च यथा छांत्रः सुवर्ण पदकर्माभिलषति। अभ्युपसर्गक लष् धातोरभिलाषापूर्त्यनुकुलव्यापारोऽर्थः, कामना तदनुकुला क्रिया च लष् धातोरर्थः। इच्छा विषयभूते आश्रयरूपार्थो द्वितीयार्थोवोध्यः। कामनारुप फलाश्रयः सुवर्णपदक मिति तत्र कर्मता सिद्धयति। एवं करण तृतीयायाअयाश्रयोऽर्थः व्यापारोऽपि। कर्त्तृ कारणयोस्तृतीयेति, सूत्रमनुसृत्य कर्त्तरि तृतीयायाः कर्त्तैवार्थः। स च धात्वार्थप्रधानीभूत व्यापाराश्रयो भवति। तत्र तिवर्थ कर्ता धात्वर्थो व्यापारः। आश्रयमात्र भवशिष्यते स तृतीयार्थः। यथा--करण तृतीयाया आश्रयोऽर्थः। यत्व्यांपाराव्यवधानेन क्रया फलयोर्मध्ये व्यवधानाभावेन फलस्योत्पत्तिरतस्तकरणम्। (आश्रयः) इति करणलक्षणे प्रविष्टानांमाश्रायार्थ भिन्नानां पदार्थानांमन्यशव्दलभ्यत्वात्, आश्रयमात्रभवशिष्यते स तृतीयार्थः। यथा 'रामेण वाणेन हतो बाली' वाणेनेत्यत्र करणे तृतीया। रावणनिष्ठप्राणवियोगानुकूल व्यापारो--(मृत्यु) रावणवृत्तिव्यापारस्याव्यवधानेन जायते। यस्माद व्यवधानेन फलस्योत्पत्तिरतस्तत्करणम्। हननानुकुलक्रियाश्रयः (कर्ता) रामः—सर्वत्र कर्तुं व्यापार जन्यं फलं करण व्यापारानन्तरमेव भवति। कर्त्रा यत् क्रियाया-अव्यवधानेन फलमुत्पाद्यते तत्करणम्।

एवमधिकरणकारकस्याप्याश्रयोऽर्थं। आधारस्याधिकरणसंज्ञा। अधिक्रियन्तेऽस्मिन्निति व्युत्पत्त्या अधिकरणे सप्तमी जायते। कर्तृ कर्म द्वारा क्रियाया आधारोऽधिकरण संज्ञकः। कर्तृ द्वारा यथा—"चैत्र आसने शेते" अत्रासनमधिकरणम्। तस्य स्ववृत्तिवृतित्व सम्बन्धेन शयन क्रियायामन्वयः स्वम्=आसनं तद् वृत्तिः (आसनस्थे चैत्रः) चैत्रे विद्यमाना शयनक्रिया सा उक्तसम्बन्धेन चैत्रमाश्रयीकृत्यासनेऽन्वेति। ततोऽधिकरण संज्ञा। एवमासन पदोत्तरसप्तम्या आश्रयोऽर्थः, अन्येषामपेक्षणीयार्थानामन्यलभ्यत्वान्न तदर्थः। यद्यप्येतादृशोऽर्थआश्रयस्य सामान्य

---

अथवा शक्ति=एक ऐसा सामर्थ्य जो सबमे हो, उसमें कोई विशेषण न हो। इस प्रकार यथा योग्य विभक्तियों का अर्थ समझे। जो भाष्य से 'सुप के कर्मकरण इत्यादि अर्थ है संख्या भी इस रूप में सिद्ध है।

रूपार्थः। सर्वस्मिन् कारके सुसंस्कृतोऽस्ति, तथापि यः साक्षात् प्रधानी भूत व्यापाराश्रयः स कर्त्ता। एवं कटः कर्तृ द्वारा प्रधानी भूत व्यापाराश्रयः सन्नधिकरणसंज्ञां लभते। कर्म द्वारा तु 'स्थाल्यामोदनं पचति' अत्रापि स्व वृत्ति वृतित्व सम्बन्धेन स्थाली वृत्तिः (विद्यमानः तण्डुलः) तत्र विद्यमाना विक्लित्ति (अवयवानां शिथिली भवनम्) तदनुकुला क्रिया, तण्डुल रूप कर्मद्वारा स्थाल्यां तिष्ठति। विक्लित्ति रूप फलोत्पादिका या क्रिया तदाश्रयः स्थालीति। तत्राधिकरणसंज्ञा सप्तम्यधिकारणे चेति विहिता या सप्तमी तस्याः साक्षात् फलाश्रयःकर्म द्वारा आश्रयत्व मर्थः। कटे शेते इत्यत्र शयनानुकुलक्रियाश्रयः कटः शयनं तत्क्रिया च शीङ् धात्वर्थः, आश्रय मात्रमधिकरणार्थः।

पञ्चमी विभक्तेरवधिरर्थः-यस्माद्विभागः स विभागाश्रयः, प्रस्तुत धात्वर्थक्रियाया अनाश्रयः सन् विश्लेषस्य य आश्रयः सोऽवधिः पञ्चम्यर्थः कृष्णः गोकुलात् मथुरां गच्छति। अत्र गोकुलोत्तरदेशसंयोगानुकूलव्यापारस्यावधिरस्ति। तथा च गोकुलावधिक कृष्णाभिन्नैकत्वसंख्या--विशिष्टाश्रयः (कृष्णरूपाश्रयः) तद्वृत्ति (विद्यमानः) मथुरां भिन्नाश्रयवृत्तिः य उत्तरदेश संयोगस्तज्जनको वर्त्तमानकालिको व्यापार इति बोधः। एवं त्रिशङ्कुः स्वर्गादधो लोकमभ्रशत्। अत्रस्व र्गमवधि कृत्वा एकत्वविशिष्टस्त्रिशङ्कुः। तदभिन्नाश्रयवृत्ति, अधोलोकाभिन्नाश्रय वृत्तिरधः पतनानुकूलाभूतकालिको व्यापारः। यस्मात् विश्लेषोविभागोऽपायः पृथग्भवनं वा सोऽवधिः।

चतुर्थी विभक्तेरुद्देश्योऽर्थः। स च कामनाविषयः। यद्यपि गां ददातीत्यादौ यथा दानकर्त्तुः कामनाविषयोविप्रस्तत्र चतुर्थी भवति। एव कामना विषयः गौरप्यस्ति। गोशब्देऽपि कामना विषयता तिष्ठत्येव। तत्रापि चतुर्थी सम्भाव्येत। तथाऽपि दानस्य कर्मणा (गवा) यं (विप्रम्) सबंधं अभिलषति स उद्देश्यः। वाक्ये "दा" धातोः कर्म गो इति। गवा सम्बन्धुम् विप्रमभिलषति। अतो विप्र एवोद्देश्यः तत्रैव चतुर्थी न्याय्या, नान्यत्र। विप्रोद्देश्यकं दात्रभिन्नैकत्वविशिष्टाश्रय वृत्ति वर्त्तमान कालिक गो कर्मकं दानम्। स्वस्वत्वनिवृत्तिपूर्वकं परसत्वोत्पादनं दानम्। फलाश्रयत्व प्रकारकेच्छोद्देश्यं कर्म, कर्मत्वप्रकारकेच्छोद्देश्यं सम्प्रदानम्। यथा अयं तण्डुलः विक्लित्याश्रयो भवत्विति। विक्लित्ति रूपफलाश्रयत्व प्रकारकेच्छोद्देश्यत्वात् फलाश्रयस्य तण्डुलस्य कर्मत्वम्। तथा विप्राय गां-

ददातीत्यादावयं विप्रः गोमान्भवतु, इति दातुरिच्छा । एवञ्च गोरूप कर्मत्वत्व प्रकारकेच्छोद्देश्यस्य विप्रस्य सम्प्रदानत्वं बोध्यम् । "षष्ठीशेषे" इति सूत्रात् सम्बन्धमात्र षष्ठ्यर्थः तस्याः कारकविभक्तित्वं नास्ति । प्राचीन मतेक्रियान्वयित्वाभावात् । नव्यमते क्रियाजनकत्वाभावात् । क्रियासम्बन्धाभावाच्च । महर्षेः परमर्षः पृच्छतीत्यादौ व्यापारसम्बन्धाभावदर्शनात् । अत एव कारकषट्त्वमुक्तम् । कारकषष्ठ्यास्तु परिभूतत्वात् = सम्बन्धाधिकायामन्तर्भूतत्वात् । यथा 'राष्ट्रस्य सञ्चालकः' अत्र राष्ट्रपदार्थस्य नियमस्य नियामक भावसम्बन्धेनसञ्चालकेऽन्वयः । यद्यपि सम्बन्धोद्विष्ठो भवति । तेन द्वयोराष्ट्रपञ्चालकयोः षष्ठी सम्भाव्यते । तथापि षष्ठ्युत्पत्तित्व भेदकादिति व्युत्पत्तिबलेन भेदकात् = विशेषणशब्दात् षष्ठ्युत्पद्यते । तस्या उत्पत्तिरूपः सम्बन्धोवाक्य घटको यः प्रतियोगी तस्माद्भवति । विवक्षाधीनोऽयं नियमः । यदा सञ्चालकानां राष्ट्रमिति विवक्षा तदा तदैव वाक्यं विलसतु । एवं षष्ठी विभक्तेः सम्बन्धमात्रमर्थोऽवगम्यते । यथा योग्यं विभक्त्यर्था एवमेवानुमेया ।

इदानीं शक्तिः कारकमिति पक्षमवलम्ब्य, शक्तिरेव वा' इत्युक्तम् । सुपां शक्तिरेवार्थः । यथाऽऽश्रयत्वम्, अवधित्वम्, उद्देश्यत्वम्, सम्बन्धत्वरूपधर्ममात्रं विभक्त्यर्थाः । अस्मिन् कल्पे प्रकृत्यर्थस्यनिष्ठत्वसम्बन्धनाश्रयत्वेऽन्वयः, आश्रयत्वस्य च परिचायकत्वसम्बन्धेन स्वाश्रयानुकूलक्रियायामन्वयः । यथा पुण्यात्मा यज्ञं करोति" अत्र "कृ" धातूत्तर "ति" प्रत्ययस्य शक्तिः कारकमिति पक्षे आश्रयत्वमर्थः । तस्मिन्नाश्रयत्वे पुण्यात्मापदार्थस्य निष्ठत्व सम्बन्धेनान्वयः । आश्रयत्वस्य निरूपकत्व सम्बन्धे नव्यापारेऽन्वयः । तथैव यज्ञपदोत्तरम् "अम्" विभक्तेराश्रयत्वमर्थः तस्मिन्नाश्रयत्वे यज्ञपदार्थस्य निष्ठत्वसम्बन्धेनान्वयः । आश्रयत्वस्य परिचायकत्व सम्बन्धेन फलेऽन्वयः । एवं चैत्रः तण्डुलं पचतीत्पत्र चैत्र निष्ठाश्रयत्व निरूपकतण्डुलनिष्ठाश्रयत्व परिचायकः विक्लित्यनुकूलो व्यापार इति पूर्वार्धस्य व्याख्यानम् । उत्तरार्धकारिकायाः तात्पर्यनिरूपणावसरे प्रयोजकरूपेण सुपां कर्मेति भाष्यत इत्युक्तम् । तदित्थम्—

॥ सुपां कर्मादयोऽप्यार्थाः संख्याचैव तथा तिङाम् ।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥ ४

सुपां = सुब्विभक्तीनां कर्मादयोऽपि = कर्म-करण-सम्प्रदानादिः, अपिना कर्मत्वकरणत्वादयऽर्थाः संख्या च भवन्ति । एव तिङामपि कर्मादयोऽर्थाः

द्वितीयातृतीयासप्तमीनामाश्रयोऽर्थः। तथा हि-"कर्मणि द्वितीया"। तच्च कर्तुरीप्सिततमं - ०क्रियाजन्यफलाश्रय इत्यर्थः। ०क्रियाजन्यफलवत्त्वेन कर्मण एव कर्तुरीप्सिततमत्वात्।
क्रिया से उत्पन्न हुआ फल उसका आश्रय
प्रथमा = ०व्यापार का आश्रय

संख्या च। तत्र = एतद्विषये कथं कर्मादयोऽर्थाः इति प्रश्ने प्रसिद्धोनियमः यथा = "द्व्येकयोर्द्विवचनैकवचने" "बहुषु बहुवचनम्" आभ्यां सुब्विधायकशास्त्राभ्यां सहैकवाक्यता भवति। तेन संख्या बुद्ध्यते। सुब्विधायक शास्त्रस्य कर्मणि द्वितीयेत्यनेन सह सम्बन्धः ततः प्रातिपदिकात् एकत्वे संख्याविशिष्टे कर्मणि द्वितीयैकवचनं द्विसंख्याविशिष्टे कर्मणि द्वितीयायाः द्विवचनम्। बहुत्व संख्याविशिष्टे कर्मणिद्वितीयायाः बहूबचनम्। एवमन्य कारकेष्वनुभूयताम्। एवं सुबादिविभक्तीनांसंख्या कर्मादयोऽर्थाः संगताः भवन्ति। अनयारीत्यातिङामपि, एकवचन द्विवचन बहुवचनैः सह एक वाक्यतया संख्याकर्मादयोऽर्थाः ज्ञेयाः। यद्यपि स्वौजस्मौडित्यादीनामर्थाः न निर्दिष्टा। अनिर्दिष्टाः प्रत्ययाः स्वार्थे भवन्तीतिनियमः प्रसिद्धः। येषां प्रत्ययानामर्था अनुक्ताः सन्ति ते स्वार्थे ( स्वं प्रकृतिः तस्यार्थः स्वार्थस्तत्र ) भवन्ति। अत्र प्रकृतिः प्रातिपदिकं तस्मात् स्वादयो विधीयन्ते। तेषामर्थस्तु पञ्चकं प्रातिपदिकार्थ इति पक्षेजातिव्यक्तिलिङ्गसंख्याकारकमिति। यदा योऽर्थो विवक्षितः तदर्थे सामान्येन स्वादयोभवन्ति। एतेन कर्मणि द्वितीयेति सूत्रं व्यर्थतां प्राप्नोति। सिद्धे सत्यारभ्यमाणोविधिर्नियमाय कल्प्यते। अत्र नियमोद्विविधः, (१) अर्थनियमः (२) प्रत्ययनियमश्च। येन नियमेनार्थो नियम्यते सोऽर्थनियमः। तत्र सुबादीनां कर्मादयोऽर्थाः प्रसिद्धाः। यथा कर्मणिद्वितीयैव करणे तृतीयैव एवं सर्वत्रसंख्या कर्मादयो ज्ञायन्ते।

प्रकृतेषु वा नियमः = प्रकरणप्राप्तेषु विकल्पेन नियम्यते। समानविषयकस्य समानविषयेण सहनियमः, यथा कर्मण्येव द्वितीयेत्यादि। वेत्युच्चारणेन ज्ञायते यत् अव्ययानां संख्याकर्मदयोऽर्थाः न भवन्ति, कन्तु तेभ्योऽपि स्वादयो भवन्त्येव। एतेन न केवलं द्योतका-अपितु वाचका:विभक्तयइति ध्वन्यते। एवं सुपां कर्मेति भाष्यतः यथा योग्यं स्वादीनामर्था अवगन्तव्याः इति कारकार्थः।

द्वितीयाया आश्रयोऽर्थ इत्यत्र प्रमाण प्रदीयते। तथा हीति कर्मणि वर्तमानात् प्राति पदिकात्, द्वितीया विधीयते तेन कर्मत्व शक्ति विशिष्टे

द्वितीया यथा-हरिं भजतीत्यत्र कर्मत्वशक्तिविशिष्टे। कर्मत्वशक्ति रूपं फलं तद् विशिष्टो हरिः, मद् वृत्ति व्यापारेण प्रीप्याश्रयो द्वितीयार्थः भवतु। तच्च–कर्म च "कर्त्तुरिप्सिततमस्यैवभवति। क इत्सिततम? सूत्रे कर्ता यमीप्सतीति, कर्त्रा यदीप्स्यते, (कर्मणि प्रत्ययः) इति कर्त्तुरिप्सितमति-शयेन यदीप्सितं तदीप्सित तमं तत्र कर्म संज्ञा भवति। अत्र सम्बन्धार्थक "आपधातोरिच्छार्थके सन् प्रत्यये" गति बुद्धीति वर्त्तमाने क्तः। अति शयार्थक द्योत्ये तमप्प्रत्यये सति ईप्सिततमशब्दो निष्पद्यते।

सूत्रे कर्म इति प्रथमान्तं पदं कर्तुरित्यत्र कर्तरि षष्ठी, तस्याः वृत्तित्व मर्थः। आप्धातुः—सम्बन्धार्थकः। कः सम्बन्ध इति जिज्ञासायां कर्ता यं कर्मत्वेनसंज्ञामिच्छति, तेन सह कर्तुः सम्बन्धः एव आप् धात्वर्थः। स च स्ववृत्तिव्यापारजन्य फलाश्रयत्वरूपः। तत्र स्व पदार्थः कर्तृ लभ्यस्तद् वृत्तित्वमाकाङ्क्षा भाष्यम्। तस्य संसर्ग मर्यादया ज्ञेयं त्वात्। अस्यां स्थितौ केवल व्यापारजन्य फलाश्रयत्वम् आप् धात्वर्थः। तथा च कर्तुरि-प्सिततममित्यत्र कर्तृ पदार्थस्य वृत्तित्व सम्बन्धेन, आप् धात्वर्थावयव व्यापारेऽन्वयः। तेन कर्तृ वृत्ति व्यापारजन्य फलस्य य आश्रयस्तत् कर्म। तमप् प्रत्ययः प्रकर्षार्थबोधकः तस्य व्यापारजन्यफलगतं प्रयोज्यत्वं–परम्परया बोध्यम्।

एवं कर्तृ वृत्ति व्यापार प्रयोज्योयः फलाश्र यः तस्य प्रकारित्व (विशे-ष्यत्व) सम्बन्धेन सन्नर्थं इच्छायामन्वयः। क्त प्रत्ययस्यार्थ उद्देश्यता। सन्नर्थेच्छायां निरूपितत्वसम्बन्धेन प्रत्ययार्थोद्देश्यतायामन्वयः तस्या आश्रयत्व सम्बन्धेन प्रातिपादिकेऽन्वयः। एवं च कर्त्तृ वृत्तिव्यापारप्रयोज्य फलाश्रयत्व प्रकारिका या इच्छा तदुद्देश्यभूतं प्रातिपदिकं तत् कर्म संज्ञकं भवति।

ननु कर्त्तृ सम्बन्धिनी या प्राप्ति (इच्छा) तस्या उद्देश्यं कर्म इत्येव फलितम्। द्वितीयार्थ भूत आश्रयो फलितः। आश्रयत्व कथनमसंगतं तदाह-क्रिया जन्येति—कर्तुः क्रियाया–व्यापारेण जन्यम्–उत्पन्नं यत्फलं तदाश्रयः कर्म। तदेव क्रिया जन्य फलवत्वेन व्यापार प्रयोज्य फलशालिरूपेण कर्तुं

---

द्वितीया तृतीया और सप्तमी विभक्तियों का विशुद्ध आश्रम–आधार अर्थ है। जैसे—कर्मणि द्वितीयासूत्र से कर्म अर्थ का बोध कराने के लिये द्वितीया विभक्ति का

रिप्सित तमो भवति यथा नेतारो राष्ट्रमुद्धरन्ति। अत्र नेतार इति कर्ता तेन विद्यमानोऽसामाजिक तत्वापनो देन विकाशानुकूल व्यापारः। उद्धरणानुकूलो व्यापारो वा। तज्जन्यं फलम् तत्वापनोदेन विकाश इति विकाशाश्रयत्वप्रकारिकेच्छा, च ( इदं राष्ट्रं मद वृत्ति व्यापारेण विकाशाश्रयो भवत्विति ) तदिच्छोद्देश्यं प्रातिपदिकं राष्ट्रमिति। तदेव क्रिया जन्य फलाश्रयः। तस्यैव कर्म संज्ञा, नेतृणामीप्सिततमत्वात्। तेन नेत्र्य भिन्नवहु कर्तृको विकाशानुकूलो व्यापार इति शब्दाबोधः अत्र फल व्यापारौ धातु वाच्यौ। आश्रयमात्रं शिष्टं तदेव द्वितीयार्थः।

एष आश्रयः कर्मत्व शक्ति विशिष्ट एव कर्मत्व शक्तिस्तु यत्र-यत्र कर्म संज्ञा तत्र तत्र बोध्या तत्तत् संज्ञा तत्तच्छक्तीनां द्योतिकाः भवन्ति। एतेन कर्म संज्ञैव कर्मत्व शक्तिप्रकाशिका। तेनवैकुण्ठमध्यास्त इत्यादि वाक्ये वैकुण्ठमित्यत्र या कर्मत्व शक्तिः सा अधिशीङ् इति कर्म संज्ञया प्रकाश्यते न तु क्रिया जन्य फलाश्रयत्वमिति।

---

विधान किया जाता है। तच्च — वह कर्म संज्ञा, ( जो कर्ता को अत्यन्त अभीप्सित है ) क्रिया से जन्य जो फल उसके आश्रय को होती है। क्रियां से उत्पन्न फल के रूप में कर्म कर्ता को अत्यन्त अभिलषित है। इससे सिद्ध होता है कि क्रिया जन्म फल का आश्रय ही द्वितीया का अर्थ है। क्रिया और फल के बीच जन्य जनक भाव सम्बन्ध है। ये तीनों अन्य ( धातु और आकाङ्क्षा ) से लभ्य है। केवल आश्रय अर्थ शेष रहता है। जो द्वितीयार्थ सिद्ध होता है। ऐसे ही कर्तृ करणयोस्तृतीया सूत्र के आधार पर कतृ तृतीया का अर्थ कर्ता। जो प्रधानं व्यापार का आश्रम होता है। तिष् से कर्ता का धातु से व्यापार का लाभ है। आश्रय मात्र अवशिष्ट अर्थ तृतीयार्थ हुआ। ऐस ही अधिकरण का अर्थ 'आधारोऽधि करणं' सूत्र के आधार पर आश्रय है। क्योंकि कर्ता कर्म के द्वारा क्रिया के आधार को अधिकरण संज्ञा होती है। कटेशेते देवदत्त के माध्यम से शयन क्रिया चटाई पर चल रहीं है। चटाई पर देवदत्त जिसमें शयन क्रिया है। आधार को अधिकरण संज्ञा सिद्ध है। इस प्रकार तीनों विभक्तियों का आश्रय अर्थ है।

तथा युक्तं चानीप्सितम्" इत्यादिसंग्रहाच्चैवमेव युक्तम्। ईप्सितानीप्सितत्वयोः शाब्दबोधे भानाभावेन संज्ञायामेव तदुपयोगो न तु वाच्यकोटौ तत्प्रवेशः। तथा च क्रियायाः फलस्य च धातुनैव लाभादनन्यलभ्य आश्रय एवार्थः। तत्त्वं चाखण्डशक्तिरूपं०मवच्छेदकम्। ओदनं पचतीत्यत्र विक्लित्याश्रयत्वात्कर्मता।

---

नन्वेवमीप्सित तमत्वं कर्मत्व मिति लक्षणं सिद्धम्। तेन ईप्सायाः यो विषयः स फलाश्रयत्वेन कर्मोद्देश्य इति स्पष्टं, कथं-क्रिया जन्य फलाश्रय इच्युच्यते। यत्र ईप्सित तमत्वन्नास्ति, तत्र कथं कर्म संज्ञा क्रियते तदाह— तथा युक्तमिति—ईप्सित तमवत्क्रियया युक्तमनिप्सितम्=अनिष्टमपि कारकं कर्म संज्ञं भवति। यथा—विदेशं गच्छन् वारिधिं पश्यति। अत्र गम् धात्वर्थः परदेश संयोगरूपः। तदाश्रयो विदेश इति। स च कर्तुः क्रियया ईप्सिततमस्तदेव द्वितीयार्थभूतकर्मरूपाश्रयः वारिधिस्तु नेप्सिततमः। उत्कटेच्छा विषयो नास्ति। किन्तु प्रबलेच्छाविषयभूता या गमन क्रिया तद्योगेऽनिप्सितम्=अनिच्छा विषयभूतं कारकं वारिधिरिति तेन तत्र कर्मता जायते।

इत्यादि संग्रहाच्चेत्यत्रादि पदेन "गति बुद्धि" इत्यादिनि सूत्राणि संगृह्यन्ते। तत्रापीप्सिततमत्वन्नास्ति। अत इच्छयाऽघटितत्वं तथा युक्तमनिप्सितमपि कर्म संज्ञकं भवति।

नन्वीप्सतमत्वं (अतिशयेच्छाविषयी भूतत्वम्) कर्मत्वमिति लक्षणम्। हरिं भजतीत्यादौ शाब्द बोधे न संघटते। तत्र ईप्सिततमत्वरूपवाच्यत्व

---

कर्म संज्ञा उसको होती है जो क्रिया से जन्य फल का आधार है और कर्ता का हृद्य हो। तथा युक्तम्—कर्ता के हृद्य फल पैदा करने वाली क्रिया से युक्त=सम्बन्धित कर्म का भी आश्रय ही अर्थ है। द्वेष्य उदासीन कर्म इत्यादि का भी सङ्ग्रह हो जाने से एवमेव=क्रियाजन्यं फलाश्रय को कर्म संज्ञा। द्वितीया का आश्रय अर्थ होना युक्ति=तर्क सङ्गत है।

यद्यपि कर्म संज्ञा ईप्सित और अनीप्सित को कही गयी है किन्तु पुत्रः पुस्तकं पठति वाक्य का शाब्दबोध=शब्द से जन्य ज्ञात करते समय न ईप्सित की न अनीप्सित की स्पष्ट प्रतीति होती है। केवल कर्म संज्ञा विधान करते समय उन दोनों का

व्यवहारस्यानुगमो न जायते। अत आह ईप्सितानीप्सितयोः किन्तु यदा कर्मसंज्ञा क्रियते तदा तयोरुपयोगो जायते। वाच्यार्थकोटौ = आश्रयः आश्रयत्वं वा यदा द्वितीयाया अर्थं इत्युच्यते तदा ईप्सितानीप्सितयोः शाब्दबोधे भानं न भवति। यथा "विष्णुः ब्रह्माण्डं व्याप्नोति" इत्यत्र विष्ण्वभिन्नैककर्तृकोवर्त्तमानकालिको ब्रह्माण्डकर्मको व्यापनानुकूलो व्यापार इति शाब्दबोधः। अत्र वाच्यार्थे ईप्सितानीप्सितयोः प्रदर्शनं नास्ति। अतो वाच्यत्वे न भानम्।

ननु द्वितीयाया आश्रय एवार्थो न तु फलव्यापाराविति कथं निश्चीयते तदाहशब्दार्थस्तु स भवति योऽनन्यलभ्यः। लब्धुं शक्योलभ्यः। अन्येन प्रमाणेन न लभ्य इत्यर्थः। क्रियायाः फलस्य च धातुनैव लाभात्। तेन क्रियाफले न द्वितीयार्थे किन्तु आश्रय एव द्वितीयार्थः। यत् यस्य बोधकं तत्तस्यार्थ इति नियमः।

ननु आश्रयस्य वाच्यार्थत्व स्वीकारे नानार्थापत्तिः। यतोऽगणिताः धात्वर्थाः तेषां फलान्यप्यगणितानि तेषामाश्रयोप्यसंख्यातैव। तेन आश्रयस्य शक्यतावच्छेदकधर्मोप्यपरिच्छिन्नैव अतस्स नानुगन्तुं शक्यते नानार्थत्वात्। अनुगतधर्मस्य (एकरूपेण सर्वस्मिन् प्रतीतस्य) इदमित्थं समानरूपेण ज्ञानमानस्य निश्चितधर्मस्य आश्रयत्वं वक्तुं शक्यम्। एतन्नानार्थतादोष-परिहाराय निर्धर्मकं निर्विकल्पकमेकमेवाश्रयत्वं वाच्यम् एवं शक्तिः कारकमिति पक्षे दोषः परिहृतः।

ननु आश्रयत्वं द्वितीयार्थं इति मन्यसे तर्हि त्वप्रत्ययेनाश्रयविशेषणं (फलं) संग्रहीष्यते। फलाश्रयः कर्मेति दर्शनात्। तेनाश्रयत्वस्य परिचायकत्वसम्बन्धेन फलेऽन्वयः। फलान्यनन्तानि सन्ति तेषां निरूपकभेदेना-श्रयत्वमपि भिन्नं-२ स्यात्। तेनाश्रत्वज्ञापिका शक्तिरप्यसंख्यातैव

---

दर्शन होता है। ननु वाच्यकोटौ = द्वितीया वाच्यार्थ (आश्रय) कोटि = पक्ष मे न ईप्सित का न अनीप्सित का अनुगम होता है। क्योंकि वे वाच्यार्थ नहीं हैं। या क्रिया और फल धातु से संल्लब्ध हैं। अतः आश्रय ही द्वितीया का वाच्यार्थ है।

यदि आश्रय को वाच्यार्थ स्वीकार करेंगे तो आश्रयत्व का परिचायक फल होगा। जितने फल होंगे उतने आश्रय निरूपक के भेंद भिन्न-भिन्न होगे। अनेक आश्रयों को ज्ञान कराने वाली शक्ति भी अनन्त होगी। तो स्वभावतः नानार्थ की आपत्ति आयेगी इसीलिये भूषणकार कहें तत्वञ्च = माने आश्रयत्व निर्गुण ब्रह्म की तरह अखण्ड है

भविष्यति। एवं स्वाभाविकी नानार्थतापत्तिः प्रस्फुरति। एतत्परिहाराय भूषणकार उवाच तत्वञ्चेति आश्रयत्वञ्च—अखण्डशक्तिरूपमवच्छेदकम् = अखण्डत्वञ्च–खण्डो = भेदः भिन्नत्वम्वा, विशेषणत्वे सति जातिगुणक्रियाद्युपाधिसंकेतभिन्नत्वम्। शक्तिः = सामर्थ्यरूपो धर्मः। स च इतरपदार्थेष्वघटितोऽन्यपदार्थेषु भिन्नो धर्मो न घटते ( तिष्ठति ) तदाश्रयत्वम्। अखण्डशक्तिरितियावत्। तच्च = कर्मत्वञ्च निर्गुणब्रह्मइव सजातीय विजातीय स्वगतभेदशून्यत्वम्। एकमेवानिर्वचनीयम्। सत्तामात्रम्। न इदृशो न तादृशः। आश्रयस्य तद्रूपमवच्छेदकम् = तस्य कर्मत्व ( फल ) विशिष्टेस्यारूपम् आश्रयत्वे तादात्म्येन = अभेदेन ऐकीभावेन वर्तमानम् यदाश्रयत्वं तदेवावच्छेदकम्। तच्चैकमनुगतमनेकस्मिन्नेकरूपेण प्रतीयमानम्। एवमाश्रयत्वनिरूपिताशक्तिरप्येकैव। अतो नानार्थनिरूपिता नानाशक्तिरूपनानार्थतापत्तिर्नात्र सम्भवति।

न चाश्रयत्वस्य शक्यतावच्छेदकत्वे = आश्रयत्वे गौरवं स्यात्तन्न—आश्रयत्वमवच्छेद्यमप्यस्ति। तत्रैवावच्छेदकत्वसम्बन्धेन वर्तमानं यदाश्रयत्वं तदेवावच्छेदकम्। एकस्मिन्नाश्रयत्वे अवच्छेद्यता ( विशेष्यता ) अवच्छेदकता (विशेषणता)च व्यपदेशिवद्भावेन बोध्या। यथा शक्यता (वाच्यता) आश्रयत्व निष्ठा, सम्बन्धावच्छिन्ना, एवमवच्छेदकताऽपि = आश्रयत्व निष्ठाशक्यता, अवच्छेदकता च अनुगतरूपेण ( अनेकस्मिन्नेकरूपेण दर्शनात् न नानाशक्ति कल्पनाया गौरवम्। आश्रयत्वं घटत्ववदेकमेव तस्य वाच्यार्थभेदकत्वे लाघवमेव। अर्थानां स्वरूपभेदेऽपि सर्वत्र 'आश्रय, आश्रय' इत्येक रूपेण व्यवहारदर्शनात्। आश्रयत्वमेकमखण्डमिति। ओदनं पचतीत्यत्र विक्लित्याश्रय ओदनः। अतो कर्मसंज्ञा।

न च ओदनं विक्लित्याश्रयो न भवितुमर्हति यतः विक्लित्तिः = अवयवानांशिथिभवनम्। परिपाकेन मृदुलतण्डुल एव ओदन इत्युच्यते। सो विक्लित्तिरूपैव। तत्र पाकानुकूलव्यापारो न सम्भवति कथन्तत्र कर्मता = अत ओदनस्य स्वप्रकृती = तण्डुले लक्षणा क्रियते लक्ष्यार्थकस्योदनस्य पाकाश्रयत्वात् कर्मता।

---

निरूपाधिक जाति धर्म गुण क्रियादि के भेद से शून्य है। जातीय विजातीय स्वगत भेद रहित है। अखण्ड शक्ति का स्वरूप है एक है। कर्म रूप फल से विशिष्ट होकर अभेद रूप से वर्तमान आश्रयत्व अवच्छेदक है। सबमें विद्यमान है अनुगत है उससे बोधित शक्ति भी एक ही है। वही सब की आत्मा है। नाना अर्थ और नाना शक्ति

घटं करोतीत्यत्रोत्पत्त्याश्रयत्वात्। ०उत्पत्तेर्धात्वर्थत्वात्। जानातीत्यत्राऽऽवरणभङ्गरूपज्ञाधात्वर्थफलाश्रयत्वात्। अतीतानागतादिपरोक्षस्थलेऽपि ज्ञानजन्यस्य तस्याऽऽवश्यकत्वात्। अन्यथा यथापूर्वं न जानामीत्यापत्तेः।

---

घटं करोतीत्यत्रोत्पत्तिरूपफलस्याश्रयोघटोऽस्ति। तत्र फलाश्रयत्वेन कर्मत्वं द्वितीयया व्यज्यते। न च कृ धातुः यत्नार्थकः घटस्तु न यत्नाश्रयोऽचेतनत्वात्। यत्नश्चेतननिष्ठो धर्मः, कथं घटे कर्मता तदाह-उत्पत्तेरिति— "कृ" धातुरुत्पत्यनुकूलव्यापारार्थको न तु यत्नार्थकः। अत उत्पत्तिः 'कृ' धात्वर्थफलस्वरूपा तदाश्रयत्वात् घटादौ कर्मता।

घटं जानातीत्यादौ "ज्ञा" धातोरावणभङ्गानुकूलव्यापारोऽर्थः आवरणं नाम "अज्ञानम्" तस्य भङ्गः=नाशोऽभावो वा भज्यतेऽस्मिन्निति विग्रहे च प्रत्ययेऽज्ञानस्याभावानुकूलव्यापार विषयाकारान्तःकरणवृत्तिरूपः= अज्ञानस्याभावो ज्ञानं तेनावरणभङ्गरूपफलस्याश्रयत्वात् घटादौ कर्मता। न चाज्ञानं ज्ञानस्यात्यन्ताभाव रूपं, कथं तस्य भङ्गस्तन्न, अज्ञानमविद्यापरिणामस्वरूपं ज्ञानविरोधिभावरूपञ्च। तेन भङ्गता सम्भवतीति प्राचीना- नवीनास्तु ज्ञानानुकूलव्यापारोऽर्थस्तत्र ज्ञानं फलम्। परन्तु ज्ञानाधिकरणात्माऽस्ति न तु घटः। कथं कर्मसंज्ञेति चेच्छृणु, ज्ञानं विषयतासम्बन्धेन घटमाश्रयते घटोज्ञानविषयः। ज्ञानविषयताश्रयोघटोऽस्ति, तेन कर्मसंज्ञानिर्बाधा। न च ज्ञान विषयोऽपि घटः ज्ञानानुकूल व्यापाराश्रयोऽपि घटः, एवं फलव्यापारयोरेकाश्रयेणसमानरूपेणसत्वात् अकर्मकलक्षणं घटते। घटो जानातीत्येव भविष्यति। एवं शास्त्रं जानातीत्यादौ कर्मता

---

की सम्भावना भी न हो सकती। आश्रत्व हो अवच्छेद्य है व्ययदेशिवद्भाव (व्यवहार) से वही अवच्छेदक भी है अतः गौरव भी नहीं है। ओदनं पचति भात पकाता है; यहाँ भात शब्द स्वप्रकृति तण्डुल में लक्षणा करने से ओदन विक्लित्ति का आधार वन जायगा अवयव शिथिली भवन का आश्रय होने से ओदन कर्म संज्ञा हुई।

घट उत्पन्न करता है, यह उत्पत्ति रूप फल का आश्रंय भट को कर्म संज्ञा हुई। क्योंकि उत्पत्ति रूव फल धात्वर्थं है उसका आश्रय ही कर्म होता है। ऐसे ही (शास्त्र) जनाति में ज्ञा धातु का अर्थ आवरण=अज्ञान भङ्ग=विनाश का जनकः व्यापार है। जिसके विषय में अज्ञान था उसका ज्ञान हो रहा है अज्ञान का भञ्जन अभाव हो रहे। यह फल धात्वर्थ है उसका शास्त्र या घट आदि आश्रय है। इसी से कर्म

न स्यात् । प्रयोगश्चानुपपद्यते । तद्वारणायावरणविनाशाऽनुकूला क्रिया 'ज्ञा' धात्वर्थ इत्यवश्यं स्वीकार्यम् । तेन = फलतावच्छेदकसम्बन्धेनफल व्यापारयोः समानाश्रयत्वाभावाच्छास्त्रमित्यत्र कर्मसंज्ञासिद्धयति । येन सम्बन्धेन फलं स्वाश्रये तिष्ठति स फलतावच्छेदक सम्बन्धः एवं ज्ञानरूपं फलं यथा समवायसम्बन्धेनात्मनि तिष्ठति तदेव विषयतासम्बन्धेन घटे-तिष्ठति । एवं वैयधिकरण्येन सकर्मकत्वमवगन्तव्यम् ।

ननु भज्यतेऽस्मिन्निति व्युत्पत्त्या वर्तमानकाल एवाज्ञानभंगसम्भवात् भूतकालिकं भविष्यत्कालिकं वा घटं जानामीत्यादौ कर्मसंज्ञा न प्राप्नोति । वर्तमानकालिकाश्रयत्वाभावात् । अत आह-अतीतानागतेति । अतीते= भूतकालेऽनागते = भविष्यत्कालेपरोक्ष स्थलेऽपि ज्ञानजन्यस्य = वृत्तिरूप-ज्ञानजन्यस्य तस्य = आवरण भङ्गरूपफलस्यावश्यकत्वात् । ज्ञानानुकूलार्थ स्वीकारेऽपि अज्ञानभंगस्यावश्यकता वरीवर्त्ति । अतीतादिस्थलेऽपि ज्ञान-जन्यमज्ञानभङ्गमस्त्येव ।

एवं यथा भूते तथा भविष्यत्यपि फलता वच्छेदक सम्बन्धेन ( फलस्य विशेषणत्वेन ) घटादा वुत्पत्त्यादेराश्रयता कर्मता च बोध्या । यदि ज्ञाना-श्रयतैव स्वीक्रियते न त्वावरण भङ्गता, तदाह अन्यथेति । यथा पूर्वं

---

संज्ञा हुई । शंका यादि आवरण भंङ्ग अर्थ न होगा तो ज्ञा धातु का केवल ज्ञानानुकूल व्यापार अर्थ होगा तो ज्ञानरूप फलतदनुकूल व्यापार दोनोंका समानाश्रय होगा तो अकर्मकता की आपत्ति होगी । शास्त्र को जानता हैं यह प्रयोग नही बनेगा । अतः आवरण भङ्ग फल मानते है तो उस फल का आश्रय शास्त्र या घट होने से सकर्मकता सुरक्षित रहती है ।

अतीत—भूतकाल ( मैं शास्त्र को जाना ) मे ओर अनागत ( मैं शास्त्र को जानूंगा ) में इत्यादि परोक्ष स्यल में भी ज्ञान होने से उत्पन्न आवरण भङ्ग आवश्यक है । अन्यथा—यदि ज्ञानमात्र ज्ञा धातु का अर्थ होगा तो ज्ञान नित्य है । नित्य वस्तु में भूत भविष्य सम्भव नहीं है जैसे चेतन में । वह पूर्व में था अब नहीं है यह हो नहीं सकता । आवरण भङ्ग तो तीनों काल में सम्भव है । अतः उसे मानना चाहिए । अन्यथा—

यथा पूर्वं जानामि की जगह यथा पूर्वं न जानामि इस प्रयोग की आपत्ति होगी क्योंकि जैसा पहले जानता था ( ज्ञानरूप फल के समाप्त होने पर ) वैसा अब नहीं जानता । इसमें आपत्ति यह होगी कि ज्ञान नित्य है उसका भूतकाल या भविष्य काल कैसे होगा । तब न जानामि का स्वाभाविक प्रयोग होगा । हमारे मत में पूर्वकालिक

॰अतीतादेराश्रयता च विषयतया ज्ञानाश्रयताया नैयायिकानामिव ॰सत्कार्यवादसिद्धान्ताद्वोपपद्यत इति।

उक्तञ्च तिरोभावाम्युपगमे भावानां सैव नास्तिता - नहीं ना
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते॥ इति
धीरे-२ कोई चीज नष्ट होती है तो नश्यति

जानामीति स्थाने न जानामीति बोधापत्तिः सम्भाव्येत। यतो हि ज्ञा धातो ज्ञान मात्रमर्थं स्वीकारे ज्ञानं नित्यमस्ति तत्पूर्वमासीत् "इदानीं नास्ति" इति वक्तुन्न शक्यते अत आवरण भंगाश्रयताऽवश्यं मन्तव्या। यथा पूर्वमिति पदं जानाति क्रियायाः विशेषणम्। पदार्थानतिवृत्तावव्ययीभावः। पूर्वमनतिक्रम्येति तदर्थः। पूर्वज्ञानस्या नति क्रमो यस्मिस्तद्यथापूर्वमिति। अज्ञान भंङ्गार्थग्रहे तु भूतभविष्यत्काले ॰कथमावरण भंङ्ग इति जिज्ञासायां भूत कालिक घटे भूत कालिक ज्ञानेनावरण भंगो जायते। एवं भविष्यत्कालिक घटे भविष्यत्कालिक ज्ञानेनावरणविनाशोऽपद्यते। तेन पूर्व कालिक ज्ञानस्यैतत् कालिक ज्ञानस्य च आवरण भंङ्ग विशिष्टत्वसत्वेन पूर्वापरज्ञानस्यानतिक्रमः = अनुल्लंघनमस्त्येव। तेनावरणभंग माध्यमेन ज्ञान रूप फलस्याश्रयताऽतीतानाग तदावपि वर्तत एव। एवं पूर्व जानामीति, व्यवहारो भवत्येव। अज्ञान भंङ्ग स्वीकारे यथा पूर्वमज्ञानभासीत्, तथेदानीं नेति फलितार्थः। केवलं ज्ञान मात्रं ज्ञा धात्वर्थं स्वीकारे सति यथा पूर्वमहं जानामीति प्रयोगो न सेत्स्यति। ननु विद्यमान घटे एवावरण भंगता सम्भवति न तु भूते भविष्यति वा। अतीतादौ निराश्रयत्वात् सा न सम्भाव्येत। तस्मिन्काले घटो नष्टः भावि वा न तु वर्तमानः। एवं घटादीनामभावेनावरणभंगाश्रत्वाभावात् जीवितस्योपस्थितस्य वा अज्ञाननाशो भवति। न तु नष्टस्य मृतस्य वा। अत आह अतीतादे रिति

नैयायिक मते घटं ज्ञास्यति, अज्ञासीद्वेत्यादावज्ञानाभावरूप फलाश्रयताविषयता सम्बन्धेन ज्ञानाश्रयता कल्प्यते। अथवा बौद्धो यो भूतो भवि वा घटोऽस्ति तस्मिन्नावरण भंग रुप फलाश्रता कल्पिष्यते। अर्थात् घटो

---

ज्ञान या एतत् कालिक ज्ञान के आवरण भङ्ग विशिष्ट होने से अति प्रसङ्ग दोष नहीं होता यथा पूर्वं जानामि का व्यवहार होता है।

विषयता सम्बन्धेन ज्ञानस्याश्रयो भवति । एवमतीतादौ बौद्धे घटे ज्ञानभङ्गस्याश्रयता बोध्या ।

इदानीभावरण भंगाश्रयता ज्ञानाश्रयता वा सांख्य सिद्धान्तेन समर्थयति सत्कार्य वाद इति–असद करणात् उपादान ग्रहणात् सर्व सम्भवाभावात् शक्तस्य शक्य करणात् कारण भावाच्च सत्कार्यम् इति प्रमाणेन सांख्य मते सर्वकार्यं सदस्ति । अतः सकलं प्राति पदिकं भूते भाविनी वा काले'सत्' एव तिष्ठति । अत्र श्रुतिः प्रमाणम् "सदेव सौम्येदमग्र आसीत्" हे सौम्य इदं जगत् अग्रे पूर्वापर काले सत=सत्यं नित्यं शाश्वतिकं प्रकृति रूपेणासीत । इति श्रुत्या सत्कार्यवादोऽस्माकं वैयाकरणानामभीष्टमिति । अतः सर्ववेद पारिषदं हीदं व्याकरण शास्त्रम् । अतोऽध्यक्ष इव सर्व प्रियेण मुखमिव सर्वागोपकारकेण व्याकरणशास्त्रेण सांख्य मतमपि समाद्रियते ।

---

न कहिए अज्ञान भङ्ग तो वर्तमान काल में ही सम्भव है । क्योंकि विद्यमान घट ही आवरण भङ्ग का विषय बन सकता है । जहाँ भूत या भविष्य काल है उसमें अज्ञान भङ्ग सम्भव नहीं भङ्ग का आश्रय अनुपस्थित ।

नैयायिक लोग भूतकालिक और भविष्य कालिक घट के अज्ञान भङ्ग रूप फल की आश्रयता के लिये प्रत्यत्न करते है कि घट ज्ञान का विषय है विषयता सम्बन्ध से ज्ञान का आश्रय घठ होता है । जो तीनों काल में सम्भव है । बौद्ध अर्थ स्वीकार करने पर आवरण भङ्ग रूप फल की आश्रयता तीनों काल में सम्भव है । अथवा—

साङ्ख्य मत में सभी कार्य ( घट आदि ) तीनों काल में सत होने से ज्ञान की आश्रयता बनी रहती । इस सत्कार्य वाद को प्रमाणित करने के लिये उक्तञ्च—

भावानां=पदार्थों का केवल तिरोभाव ( अदर्शन, कारण में लीनता ) और प्रादुर्भाव=प्राकट्य होता है । शाश्वतिक अभाव अर्थ नहीं होता । जब पदार्थ तिरोभूत=अन्तर्लीन होते है तो उसे नास्तिता=अभाव, विनाश कहते हैं । वही कार्य के कारण स्वरूप में स्थित होने पर नास्ति की प्रतीति होती है । लब्धक्रमे=जब जायते, अस्ति बर्धते, विपरिणमते, अपक्षीयते, नश्यति का क्रम लब्ध होने पर तिरोभाव ही शुरू होता है तो उसे नश्यति कहते हैं क्रमशः तिरोभाव ही नाश है ? ऐसी प्रतीति से तीनों काल में घट सत है वह आश्रय बन सकता है ।

संयोगानुकूल व्यापार

**ननु चैत्रो ग्रामं गच्छतीत्यत्र ग्रामस्येव चैत्रस्यापि क्रियाजन्यग्रामसंयोग-रूपफलाश्रयत्वात्कर्मतापत्तौ चैत्रश्चैत्रं गच्छतीत्यापत्तिः, प्रयागतः काशी'**

---

एवं दधिनि सर्पिरिव तिलेषु तैलमिव, सम्पूर्णं कार्यं जातं स्व-स्व कारणेषु प्रबिलीनमस्ति। सर्वंकालीनश्चास्ति। एवं घटोऽपि स्वकारणे भृतिकायां सद्रूपेण समवस्थितोऽस्ति। पूर्वं सूक्ष्मस्तिष्ठति पश्चात्—जनक सामग्रीसमवधाने सति प्रादुर्भावात् स्थौल्यं संगच्छते।

ननु सम्पूर्णकार्यंकलापं सर्वदैव अस्ति तर्हि कथं नास्त्यस्ति नश्यति "इति व्यवहारः। आस्तिक्यन्नास्तिक्यं वा सत्तायामेव भवति अतो—भावाभावयोरूपभयोः समर्थने सत्कार्यवादसमर्थिकाहरिकारिका। तिरोभाव इति—

भावानां=घटपटादिपदार्थानां तिरोभावाभ्युपगमे=तिरोभावस्य=अन्तर्ध्यानस्य स्वकारणेष्वन्तर्लीनस्य अभ्युपगमे=सञ्जाते सति नास्तिक्यं=नास्तीति नास्तिक=तस्य भावो नास्तिक्यम्। यदा सर्वे पदार्थाः स्वस्व कारणेषु प्रवि लीयन्ते तदा नास्ति नष्टः अभावोऽप्राकट्यमुच्यते। यथा देहाभिव्यञ्जकानां पञ्चतत्वानां स्वकारणे समष्टौ शरीराभिव्यञ्जकसामग्र्यां संल्लीने सति लोपोऽदर्शनं मृत इत्यादि व्यवहारो दृश्यते। लब्धक्रमे=लब्धः=जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते इत्यादि क्रमो यस्मिन्ने-तादृशे तिरोभावे=स्वकारणलीनतायां नश्यतीति व्यवहारो दृश्यते। स्थानान्तरिते घटेऽपि नास्तिक्यमुच्यते। अवयवानां नाशे नश्यतीति प्रयुज्यते। तिरोभावशालिनां पदार्थानामप्राकट्यं क्रमेण लभ्यते एवम सदकरकात्, उपादानग्रहणात्, कार्यं सदिति सत्कार्यवादः। एव प्रसङ्गेऽपि भूतस्य भाविनो वा घटस्य सत्तास्वीक्रियते तस्या स्वकारण-भूतायां मृत्तिकायां सूक्ष्मरूपेणास्तित्वात् सत्ता। घटं जानामीत्यत्र सा धात्वर्थो योऽऽवरणभगस्तस्य भ्रमत्वं सुखेन स्वीकार्यम्। ततो न काचन विकृतिः।

द्वितीयार्थेऽव्याप्त्यतिव्याप्तिदोष संशोधनर्थमाह नन्विति—चैत्रो ग्रामं गच्छतीत्यादौ गम्धात्वर्थः संभोगानुकूलव्यापार इति। संयोगरुप फलाश्रयता यथा ग्रामे तथा चैत्रेऽप्यस्ति। संयोगस्य द्विनिष्ठत्वात्। गमन जन्य संयोग रूप फलाश्रयत्वात चैत्रस्यापि कर्म संज्ञा चौत्रश्चौत्रमिति रूपं सम्भवति। तत्रातिव्याप्तिस्तन्निवृत्तिश्चान्वेषणीया।

चैत्र में संयोग - विभाग दोनों है।





यच्छन्ति चैत्रे 'प्रयागं गच्छति' इत्यापत्तिश्च। क्रियाजन्यसंयोगस्य काश्यामिव ०विभागस्य प्रयागेऽपि सत्त्वादिति चेन्न। ग्रामस्येव चैत्रस्यापि फलाश्रयत्वेऽपि तदीय कर्तृसंज्ञया कर्मसंज्ञाया ०बाधेन चैत्रश्चैत्रमिति प्रयोगासंभवात्। द्वितीयोत्पत्तौ संज्ञाया एव नियामकत्वात् यदि संज्ञा नियामक हो तो ०अन्यथा गमयति कृष्णं गोकुलमित्यत्रेव पाचयति कृष्णेनेत्यत्रापि ०कृष्णपदाद् द्वितीयापत्तेः।

---

एवं प्रयागतः (पञ्चम्यर्थे तसिः) काशी गच्छति चैत्र इत्यत्र गमनक्रियया यथा संयोगरूपं फल जन्यते, तथा विभागोऽप्युत्पद्यते। यथा संयोगाश्रयः काशी कर्मत्वं लभते, तथा विभागाश्रय प्रयागोऽपि। कर्मत्वं लभताम्। आश्रये एव द्वितीयेति नियम इत्यनुरोधात्। इयमतिव्याप्तिः तस्याः निवृत्तिरन्वेषणीयेति प्रश्नः। समाधानं--चैत्रस्य फलाश्रयत्वेऽपि न कर्म संज्ञा। एकस्यैकैवसंज्ञेत्याकडारीयनियमात्। अत्र प्राप्तयोरुभयोः संज्ञयोः का संज्ञा भवतु: अनन्तरोपस्थितिकत्वेन बहिरङ्गात्कर्म संज्ञा। तेन चैत्रश्चैत्रमिति प्रयोगोऽसम्भवः अथवा परत्वात् कर्तृ संज्ञा कर्मसंज्ञां बाधते।

ननु कर्तृ संज्ञया कर्म संज्ञा बाध्यताम्। किन्तु चैत्र इत्यत्र वास्तविकेन कर्मत्वहेतुभूतेन संयोगाश्रयत्वं तु न हीयते। कर्मत्वं न बाध्यत इत्यर्थः। अत्र आस्तां द्वितीया, तन्न चैत्रस्य संयोगाश्रयत्वेऽपि द्वितीया नियभ्यते। कर्म संज्ञा सत्येव द्वितीयेति तदर्थः। द्वितीयोत्पत्तौ संज्ञाया नियामकत्व

---

(चैत्र ग्राम में जाता है) यहाँ ग्राम जैसे संयोगरूप फल का आश्रय है वैसे ही गम धातु का अर्थ भूत क्रिया से जन्य = उत्पन्न गाँव से संयोग रूप फल का आश्रय चैत्र भी हो रहा है। ग्राम से संयुक्त हो रहा है तो चैत्र को भी कर्म संज्ञा की उपत्ति होगी।। चैत्रश्चैत्रं गच्छति प्रयोग सपुष्ट होगा। ऐसे ही 'प्रयाग से काशी को जाता हुआ चैत्र' इस वाक्य में प्रयाग को कर्म संज्ञा होगी प्रयागं गच्छति यह असभ्य प्रयोग होगा। गम धातु के संयोग और विभाग दोनों फल हैं तो जैसे गमन क्रिया से जन्य संयोग रूप फल का आधार प्रयाग भी हैं। प्रयागं यह प्रयोग क्यों नहीं ? ऐपी बात नहीं है। ग्राम की तरह चैत्र भी संयोग रूप फल का आश्रय होने पर भी तदीय = चैत्र को हुई कर्तृ संज्ञा से कर्म संज्ञा का वाध हो जायगा। अतः चैत्रश्चैत्रं यह प्रयोग असम्भव है। क्योंकि द्वितीया विभक्ति की उत्पत्ति में कर्म संज्ञा का होना आवश्यक एवं नियन्त्रक तथा नियामक है। अन्यथा—यदि द्वितीया की उत्पत्ति में कर्म संज्ञा

०शाब्दबोधश्चैत्रश्चैत्रमित्यत्र स्यादिति चेन्न। तथा व्युत्पन्नानामिष्टापत्तेः। ०उच्यतां वा प्रकारतासम्बन्धेन धात्वर्थफलविशेष्यकबोधं प्रति धात्वर्थव्यापारानधिकरणाश्रयोपस्थितिर्हेतुरिति कार्यकारणभावान्तरम्। प्रकृते चैत्रस्य व्यापारानधिकरणत्वाभावान्न दोषः। प्रयागस्य कर्मत्वं तु संभावितमपि न। समभिव्याहृतधात्वर्थफलशालित्वस्यैव क्रियाजन्येत्यनेन विवक्षणस्योक्तप्रायत्वात्०।

---

कथनं कारकमात्रविभक्तीनामुपलक्षणम्। सर्वाः विभक्तयः संज्ञयैवोत्पद्यन्ते।

यदि संज्ञा द्वितीयोत्पत्तौ मियामिका न स्यात्, अथवा फलाश्रयत्व मात्र कारणञ्चेत्। यत्र-यत्र फलाश्रयत्वं तत्र सर्वत्र द्वितीया स्यादत आह अन्यथेति—गमयतिकृष्णं गोकुलमित्यत्र यथाणिजर्थव्यापारजन्यसंयोगानुकूल व्यापाररूपधात्वर्थं फलाश्रत्वमस्ति, तथा पाचयतिकृष्णेनेत्यत्रापिणिजर्थं व्यापारे विशेषणीभूतविक्लित्यनुकूलव्यापाररूपफलस्याश्रयत्वात्, कृष्णेऽपि द्वितीयासम्भवात्। अतो संज्ञायाः नियामकतास्वीकार्या।

ननु चैत्रस्य संयोगाश्रत्वेन यदि कर्मत्वे सति चैत्रश्चैत्रमित्यस्यसाधुत्वे, शाब्दबोधे च नास्ति कश्चन विप्रतिपत्तिः तर्हि कोदोषः। समाधानं—तथा व्युत्पन्नानां (चैत्रकर्तृकं चैत्रकर्मकं गमनमितीत्थमनुभवशालीनाम्) तथैवशक्तिग्रहवतामिष्टापत्तेः। तन्मते धात्वर्थफलविशेष्यता निरुपित प्रकारतासम्बन्धेन शाब्दबोध आश्रयोपस्थितिः कारणम्। बोधस्तु स्व-स्व व्युत्पत्यनुसारेणैव जायते। अतश्चैत्रश्चैत्रं गच्छतीतिवाक्ये चैत्रपदोत्तर कर्तृसंज्ञायाः बोधोऽस्तुनाम्; माऽस्तु वा किन्तु ग्राम इव चैत्रोऽपि संयोगरुपफलाश्रयत्वं भजते, इत्यनुभवसिद्धम्। चैत्रे संयोगाश्रयत्वं वारयितुं न कोऽपिक्षमः। अतः शब्दजन्यं ज्ञानमस्तुनाम यथा चैत्रनिष्ठा संयोगा-

---

को नियामक नहीं मानेंगे तो जैसे गमयति कृष्णं गोकुलं में कृष्णपद को कर्मता होने से द्वितीया हुई। ऐसे ही पाचयति कृष्णेन यहाँ पर भी कृष्ण पद को विना कर्मता के द्वितीया होने लगेगी। अतः जहाँ कर्मसंज्ञा वही द्वितीया सिद्धान्तित है।

नुकूलश्चैत्रवृत्तिवर्तमानकालिको व्यापारः। तेन संयोगरूपफलाश्रयत्वस्य फलजनकव्यापाराधारत्वस्य च चैत्रेसत्वात्। प्रथमाद्वितीययोः युगपत् सत्वे चैत्रश्चैत्रङ्गच्छतीति प्रयोगः कथं न स्यात्। तदाह ग्रन्थकारः, व्युत्पन्नानामिति तथा = चैत्रः संयोगाश्रयो व्यापाराश्रयोऽपीति व्युत्पन्नानां = एवं विधशक्तिग्रहवतां समवायसम्बन्धेन फलविशेष्यकशाब्दबोधं प्रति आश्रयोपस्थितिः कारणमिति ज्ञावनतामिष्टापत्तेः = इष्टस्य स्वाभिलषितस्य, आपत्तेः = लाभात्। यतोहि बोधविषयता स्व-स्वव्युत्पत्यनुसारिणी भवति।

यद्यपि पूर्वोक्तं शब्दजन्यंज्ञानं तथा व्युत्पन्नानां जायते, तथापि चैत्र पदार्थस्य द्वेधाभानप्रयोज्यदोषः सम्प्रशक्तो भवति। तथा शाब्दबोधस्त्वनुभव विरुद्धः। चैत्रकर्तृकं चैत्रकर्मशाब्दज्ञानं न क्वाप्यनुभूयते। अत आह—उच्चतामिति। अन्य समाधान दीयते। प्रकारतासम्बन्धेन धात्वर्थं फलविशेष्यक शाब्दबोधं प्रति ( चैत्रनिष्ठ संयोगानुकूलव्यापार इत्यत्रशाब्द बोधे चैत्रे प्रकारतासंयोगेविशेष्यताबोध्या ) धात्वर्थ व्यापारानधिकरणाश्रयोपस्थितिः कारणम्। अत्र धात्वर्थोव्यापारः = संयोगानुकूलोव्यापारः। तस्याधिकरणभिन्नो य आश्रयः तस्योपस्थितिकारणम्। इत्यन्यकार्यकारण भावः। चैत्रोग्रामं गच्छतीति वाक्ये क्रियाधिकरणाभावरूपाश्रयोग्रामः। तस्यैवोपस्थितिः, फलविशेष्यक शाब्दबोधं प्रतिकारणम्। तत्रैवाश्रयभूता द्वितीयाविभक्तिरूपतिष्ठते। चैत्रस्तुगमनानुकूल व्यापारस्याधिकरणमस्ति। तत्र गम् धात्वर्थव्यापारजन्यसंयोगरूपफलसत्वेऽपि चैत्रप्रकारकफल विशेष्यकबोधो न जायते। प्रकृते = प्रसंगे। चैत्रस्य = व्यापारानधिकरणत्वाभावान्नदोषः। एतेन व्यापाराधिकरणत्वे सति कर्तृवृत्तिक्रियानाश्रयत्वेसति फलाश्रयत्वं कर्मत्वं सिद्धम्। एवं चैत्र इत्यत्रापतितो दोषो वारितः।

---

अच्छा चैत्र पद से द्वितीया भले न हो किन्तु शाब्दबोध तो होना ही चाहिये, क्योंकि संयोगश्रयता चैत्र में कौन बारण करेगा? चैत्र में रहने वाला संयोग, उसका जनक चैत्र में रहनेवाला वर्तमान कालिक व्यापार। ऐसा शाब्दबोध क्यों न हो। उत्तर—ग्रन्थकारने इष्टापत्ति से समाधान किया यथा व्युत्पन्नानां = जिसको वैसी व्युत्पत्ति है उसको वैसा शाब्दबोध इष्ट है।

यद्यपि वैसा शाब्दज्ञान हो सकता है तथापि चैत्र पदार्थ का द्वेधाभान प्रयोज्य दोष प्रशक्त हो जायगा, अतः दूसरा समाधान = उच्चताम्वा—

ननूक्त कर्मलक्षणस्वीकारे प्रयागात् काशीं गच्छतीत्यत्र प्रयागपदेऽपि द्वितीया प्राप्नोति। यतो हि धात्वर्थभूतविभागरूपफलाश्रयत्वं भजते। गम् धातौ यथा—उत्तरदेशसंयोगस्तथापूर्वदेशविभागोऽप्यनुभूयते। विभागरूपफलाश्रयत्वात् प्रयागः कर्मत्वंभजताम्। कथं पञ्चमीत्याशंक्यसमाधत्ते। प्रयागस्येति उक्तवाक्ये संयोगानुकूल व्यापारावधिभूतस्य प्रयागस्य कर्मत्वं=विभागरूपफलाश्रयत्वं तु सम्भावितमपि न=सम्भावनामात्रमपि कर्तुं न शक्यते। यतोहि विभागो न गम् धात्वर्थः किन्तूत्तरदेश संयोगरुपोऽर्थो गम्यते। तथा च क्रिया जन्यफलाश्रयत्वेनेष्टं यत् कर्मत्वं तस्य समभिव्याहृतं=प्रसङ्गे प्रसक्तं यद् धात्वर्थं क्रिया जन्यं फलं तच्छालित्वं तदाश्रयत्वमिति लक्षणमवश्यंभवितव्यम्। तत्र समभिव्याहृतो गम धातुः तदर्थं फलशालिनी काशी भवितुमर्हति। न तु प्रयागः। विभागरूपोऽर्थंऽस्तूपलक्षितोऽर्थों न तु शक्यार्थः। तेन विभागोपलक्षितं धात्वर्थं फलाश्रयत्वं कर्मत्वमिति लक्षणं निष्पन्नम्। उक्तप्रायत्वात्=कर्तुरिप्सिततममिति सूत्रे क्रियाजन्यफलाश्रय इत्युक्तं वर्तते। यदि विभागोऽपि गम् धात्वर्थं इत्यर्थं इत्याग्रहस्तदा कर्म संज्ञायाः बाधिका अपादानसंज्ञा वर्तते तया तत्र पञ्चमीति वैयाकरणः।

---

प्रकारता (विशेषणता) सम्बन्ध से धातु का अर्थ भूत फल हैं विशेषण जिसमें ऐसे शाब्दबोध के प्रति धातु का अर्थ रूप जों व्यापार उसका जो अनधिकरण ऐसे आश्रय की उपस्थिति कारण हैं ग्राम धात्वर्थ व्यापार का अनधिकरण है (आधार नहीं है) और फल का शुद्ध आश्रय हैं। चैत्र तो व्यापार का भी आधार है अनाधार नहीं। गम धातु ही संयोग फल में प्रकार (विशेषण) चैत्र व्यापार का आधार हो कर भी गमन क्रिया जन्य संयोग का आश्रय होते हुए भी चैत्र प्रकारक फल विशेष्यक बोध नहीं होता। दोष नहीं है। इससे वैयाकरण के मत में चैत्रश्चैत्रं दोष का बारण हुआ।

प्रयाग को तो कर्म संज्ञा की सम्भावना भी नहीं है। उक्त वाक्य में (गमन क्रिया जन्य फल का आश्रय ही कर्म संज्ञा के रूप में अभीष्ट हैं) समभि व्याहृत—साक्षात प्रधान रूप से उपस्थित जो धातु तदर्थ जो फल उसका=आश्रय (फल का आश्रय ही क्रिया जन्य पद से विवक्षित है। संयोग वाच्य फल है विभाग उपलक्षण से भाषित अर्थ है। वाच्यार्थ फल (संयोग का आश्रय काशी है प्रयाग नहीं। कर्मसंज्ञा असम्भव है। इति वैयाकरणाः।

**नैयायिकास्त्वाद्यदोषवारणाय परसमवेतत्वं, द्वितीयदोषवारणाय धात्वर्थ-तावच्छेदकत्वं फले विशेषणं द्वितीयावाच्यमित्युपाददते। परसमवेतत्वं धात्वर्थक्रियायामन्वेति। तथैव कार्यकारणभावान्तरकल्पनात्। परत्वमपि द्वितीयया स्वप्रकृत्यर्थापेक्षया बोध्यते।**

जिस प्रकृति में द्वि० करनी है वो परसमवेत हो

नैयायिकाः प्रथम दोष वारणाय—चैत्रश्चैमिति द्वितीयां शाब्दबोधञ्च, अपाकर्तुं परसमवेतत्वं फले विशेषणं द्वितीयाः वाच्यमिति मानयन्ति। अर्थात् परसमवेतधात्वर्थतावच्छेदक फलशालित्वं कर्मत्वम्, अस्यार्थः—परो=भिन्नः, अन्येत्यर्थः। किमपेक्षया भिन्न; ? यत्र कर्मत्वमिष्टं तदपेक्षया भिन्नः। कुत्र कर्मत्वमिष्टम्? चैत्रस्तण्डुलं पचतीत्यत्र तण्डुले कर्मत्व-मिष्टम्। अतस्तण्डुलापेक्षया, परः=कर्ता चैत्र इति गृह्यते, तस्मिन् (चैत्रे) समवेतः=समवाय सम्वन्धेन वर्तमानो यो धातुवाच्यो व्यापारः। (विक्लित्यनुकूला क्रिया) तस्मिन् स्थितं धातु वाच्य व्यापारस्यावच्छेद-कम्=विशेषणीभूतविक्लित्तिरूपं फलं; एतादृशफलशालिकर्मत्वं तण्डुले एव भवितुमर्हति न तु चैत्रे। एवञ्च तण्डुलान्यसमवेत धात्वर्थता च्छेदकविक्लित्यनुकूलव्यापारानुकूलकृतिमान् वर्तमानकालिक एक संख्या विशिष्टश्चैत्र इति प्रथमान्तार्थमुख्यविशेष्यक शाब्द बोधो नैयायिकाः स्वीकुर्वन्ति।

---

नैयायिकगण प्रथम दोषवारण के लिए परसमवेतत्वं=जिसमें कर्म सज्ञा होना इष्ट है उमसे भिम्न (कर्ता) को पर कहते हैं। उस (कर्ता) में समवेत=समवाय सम्बन्ध से स्थित व्यापार से उत्पन्न फल के आश्रय को कर्म संज्ञा होती है। वही वाच्य हैं। जैसे 'तण्डुलं पचति चैत्रः यहां पर चैत्र हैं उसमें समवाय सम्बन्ध से पाकानुकूला क्रिया रहती है उस क्रिया से उत्पन्न विक्लत्ति रूप फल का आश्रय तण्डुल है चैत्र नहीं। ऐसे ही चैत्र चैत्र को जाता है ऐसा वाक्य फल में परसयवेतत्व के विशेषण से नहीं बनेगा। वहाँ जिसको कर्म संज्ञक बनाना है वहाँ कर्मता नहीं होगी। चैत्र में व्यापार भी है उससे कर्म संज्ञा नहीं होगी।

द्वितीय (प्रयाग में कर्मता का) दोष वारण करने के लिए फल में धात्वर्थ=धातु के अर्थ (व्यापार) का अवच्छेदअ=भेदक धर्म की विशेषणता ही द्वितीया का वाच्यार्थ है ऐसा स्वीकार करते हैं गम धात्वर्थ जो व्यापार है उसका अवच्छेदक संयोग रूप फल है विभाग नहीं वह तो अर्थात् लब्ध है। संयोग रूप फलाश्रय काशी

द्वितीयदोष वारणाय = प्रयागात् काशीं गच्छतीत्यत्र प्रयागस्य विभागाश्रयत्वात् प्राप्तकर्मसंज्ञावारणाय धात्वर्थतावच्छेदकत्वं फले विशेशण द्वितीयाः वाच्यम् । अस्यार्थः— धात्वर्थता = धात्वर्थोव्यापारः तत्रावच्छेदकं = विशेषणरूपेणविद्यमानं फलं ( तस्यभावः फलत्वं पाकः फले विशेषणम् ) तदर्थः । तदित्थं धात्वर्थयोः फलव्यापारयोर्मिथो जन्यजनकभावः गम् धात्वर्थस्तु संयोगानुकूल व्यापार एव । तत्र व्यापारो विशेष्य तस्यावच्छेदकत्वंविशेषणीभूते सयोग रूपे फले तिष्ठति । न तु विभागे, तस्य धात्वर्थत्वाभावात् । अतः प्रयागस्य कर्मता न प्राप्नोति । एवं पर समवेतत्वं धात्वर्थतावच्छेदकंत्वञ्चोभयं द्वितीयाऽर्थः । यतः द्वितीया कर्मणि विधीयते । तथा च धातु वाच्य व्यापारस्यावच्छेदक विशेषणीभूतं फलमेव धातु वाच्यम्, कर्मप्रातिपदिकवाच्यम् । अनन्यलभ्यो हि शब्दार्थ इति न्याय्यादाधेयत्वमात्रं द्वितीयावाच्यम् । धात्वर्थतावच्जेदकः संयोग एव तन्निरूपिताश्रयता प्रयागे न तिष्ठति । ततो नास्ति कर्मत्वापत्तिः ।

पर समवेतत्वमिति--परः = यस्य कर्म चिकीर्षितंस्मात् भिन्नः कर्त्ता । तस्मिन् समवायसम्बन्धेन स्थिता धात्वर्थक्रिया एवान्वेति । तथैव कार्यकारणभावान्तरं दृश्यतेऽनुभूयते च । एवं परसमवेतनिष्ठप्रकारतानिरूपित धात्वर्थव्यापारनिष्ठ विशेष्यताक् शब्दबोधं प्रति । विशेष्यता सम्बन्धेन धात्वर्थव्यापार जन्योपस्थिति कारणम् । एवं धात्वर्थतावच्छेदक फलनिष्ठ प्रकारता परिचायक फल विशेष्यक शाब्दबोधं प्रतिधातुजन्य फल विषयकोपस्थिति कारणम् ।

ननु भेदस्य केवलान्वयितया सर्वस्यैव परत्वेन मैत्रात् परश्चैत्र इति चैत्ररूपपरसमवेता या क्रिया, सा मैत्रान्यसमवेता तद्वाच्याङ्गीकारेऽप्युक्तदोषस्तथैव तिष्ठति । तदाह—परत्वाच्चेति— यस्मात् द्वितीया चितीर्षिता सा द्वितीया प्रकृतिः स्व स्व प्रकृत्यर्थापेक्षया = स्वं = द्वितीया

---

है प्रयाग नहीं । अतः प्रयाग को कर्म संज्ञा वारण के लिये धात्वर्थता = धातु का अर्थ व्यापार का अवच्छेद जो फल उसके आश्रय को कर्मता मानी जाती है । इस प्रकार परसमवतत्व और धात्वर्थतावच्छेदकं को द्वितीया का वाच्य अर्थ है । पर ( कर्ता ) में समवाय ( अभेद ) सम्बन्ध से स्थित व्यापार का विशेषण फल की धात्वर्थ क्रिया में अन्वय करते हैं । तथैव = वैसा ही कार्यकारणभाव अन्य रूप से कल्पित है ।

तथा च चैत्रस्तण्डुलं पचतीत्यादौ तण्डुलान्यसमवेतव्यापारजन्यधात्वर्थतावच्छेदक- विक्लित्तिशालित्वात्तण्डुलानां कर्मता । शाब्दबोधस्तु–तण्डुलसमवेतधात्वर्थतावच्छेदकविक्लित्यनुकूलतण्डुलान्यसमवेतक्रियाजनककृतिमांश्चैत्र इत्याहुः ।

---

तस्याः प्रकृतिः=प्रातिपदिकं तदर्थापेक्षया परत्वं=भिन्नत्वं भेदप्रतियोगि गृह्यते । अत्र द्वितीया कारकमात्र प्रत्ययानामुपलक्षणम् ।

तथा चेति ।–उक्त द्वितीयाऽर्थ स्वीकारे चैत्रस्तण्डुलं पचतीत्यादौ द्वितीया प्रकृस्तण्डुलः तस्मादन्यः कर्ता चैत्रः तस्मिन् समवेतः=समवाय सम्बन्धेन स्थितो व्यापारः, तज्जन्यं व्यापारादुत्पन्नं धात्वर्थतावच्छेदकं=धात्वर्थ व्यापारे विशेषणीभूतं विक्लत्तिरूपं फलं तच्छालित्वात्=तदाश्रयत्वात् तण्डुलस्य कर्मता=कर्म संज्ञया द्वितीयोत्पत्तिः । शाब्दबोधस्तु=शब्दजन्य ज्ञानन्तु न्यायनये तण्डुले समवेतं=समवाय सम्बन्धेन विद्यमानं धात्वर्थतावच्छेदकं=धात्वर्थव्यापारे धर्मभूतं विक्लत्तिरूपं फलं तदनुकूला तण्डुलान्य समवेत क्रिया=तण्डुलात् भिन्ने चैत्रे समवायसम्बन्धेन वर्तमाना क्रिया तस्या जनकः कृतिरूपो यत्नः । तद्वान्, एकत्वविशिष्टश्चैत्र इत्याहुः ।

---

परत्व=भिन्नत्व द्वितीया की जो प्रकृति जैसे तण्डुल या काशी उसकी अपेक्षा पर (कर्ता) को लेनी चाहिए ।

चैत्र तण्डुल को पकाता है । इत्यादि वाक्य में तण्डुल से अन्य=भिन्न (कर्ता) में समवाय सम्बन्ध से रहने वाला जो व्यापार उससे जन्य जो धात्वर्थ व्यापार का अवच्छेदक ( विशेषणी भूत धर्म ) विक्लित्तिरूप फल उसका शाली ( आश्रय ) होने से तण्डुल को कर्मसंज्ञा हुई । शब्द से उत्पन्न ज्ञान इस प्रकार है—तण्डुल में समवाय सम्बन्ध से रहनेवाली धात्वर्थ व्यापार जन्य विक्लित्ति उसके अनुकूल ( जनक ) जो तण्डुल से भिन्न ( कतर्त्ता, चैत्र ) में समवाय सम्बन्ध से रहने वाली क्रिया रूप व्यापार उसका जनक जो यत्न उसका आश्रय चैत्र है ऐसा नैयायिकों ने कहा । का खण्डन—

तन्न रोचयामहे। परसमवेतत्वादेः गौरवेणावाच्यत्वात्। अतिप्रसङ्गः किं-द्वितीयायाः शाब्दबोधस्य वा। नाऽऽद्यस्तावत्। ०वाचप्रकथनेऽपि तत्ताद-वस्थ्यात् गमयति कृष्णं गोकुलमितिवत्पाचयति कृष्णं गोप इत्यापत्तेः, तण्डुलं पचति चैत्र इतिवत्तण्डुल पचते स्वयमेवेत्यापत्तेश्च। [1]विक्लित्त्यनुकूलतण्डुलान्यसमवेताग्निसंयोगरूपधात्वर्थाश्रयत्वात्। शाब्दबोधातिप्रसङ्गोऽप्युक्तरीत्यैव निरस्तः। परसमवेतत्वस्य शक्यत्वेऽपि परत्वस्य चेष्टान्वयलाभायानेकशः कार्यकारणभावाभ्युपगमे गौरवतरत्वादिति स्पष्टं भूषणे।

---

न्यायमतखण्डनं नैयायिकेनोक्तं समाधानं ग्रथकाराय न रोचते। अत आह "तन्नं रोचयामहे" इति—परसम्वेतत्वस्य धात्वर्थतावच्छेदकत्वस्य च कर्मलक्षणकुक्षि प्रवेशेऽनुभवविरोधः शक्यतावच्छेदके गौरवात्तिश्चापतति। तस्मान्न परसमवेतत्वादिद्वितीयावाच्योऽर्थः। तथा सति खण्डशः शक्तिस्वीकारे कार्यकारणभावकल्पनायां गौरवं। परस्परवाच्यत्वस्य द्वितीयाऽर्थस्य च कल्पना सम्भाव्यते। विशिष्ट कल्पनायां तु शक्यतावच्छेदके गौरवम्। एतेषां दोषाणामस्तित्वसत्वेऽपि अपरे दोषा इत्युपस्थाप्यन्ते।

ननु परसमवेतत्वस्य द्वितीयाऽर्थत्वं बिना चैत्रश्चैत्रमित्यादावति प्रसंगो न निरस्यते। तर्हि गौरवं कथमुच्यते। तदाह अतिप्रसंग इति। किं द्वितीयायाः प्रसंगातिक्रान्तिः, अथवा शाब्दबोधस्य' नाद्यः—चैत्रश्चैत्र मित्यादौ द्वितीयापत्ति वारणाय पूर्वोक्तं नैयायिकलक्षणमङ्गीक्रियते। चेत् तर्हि दोषस्तथैव तिष्ठति। यथा—गोपः गमयति कृष्णं गोकुलमित्यत्र कृष्णे कर्मता जायते, तथैव गोपः कृष्णेन पाचयतीत्यत्र कृष्णपदेऽपि कर्मता सम्भाव्यते। तथा हि—भोः नैयायिकाः तव मते तण्डुलान्यसमवेतादि रूप कर्मत्व द्वितीयावाच्यं भविष्यत्येव तर्हि कृष्णान्यगोपसमवेत धात्वर्थता—उत्तर देशसंयोगानुकूलाक्रिया तज्जनकः प्रेरणाविषयी भूतो व्यापारः, तन्निष्ठा धात्वर्थता तदवच्छेदक उत्तरदेश संयोगानुकूल व्यापारौ। अत्र द्विविधं फलं गम्धात्वर्थव्यापारजन्यं फलं यस्याश्रयो गोकुल इति। णिजर्थं व्यापार जन्यं फलं (यस्याश्रयः कृष्णः इति) उभाभ्यां कर्मत्वं प्राप्नोति। गोपः कृष्णेन पाचयतीत्यादि कृष्णान्यगोप समवेतधात्वर्थता—विक्लत्त्युनुकूल व्यापारानुकूलो व्यापारः तन्निष्ठा—तदवच्छेदको विक्लतित्त्य

 


नुकूलो व्यापारः क्रमेण उभाभ्यां कर्मत्वे द्वितीयापत्तिः। तण्डुलं पचतीत्यत्र यथा पच्धात्वर्थतावच्छेदकविक्लित्तिरूपफलशालित्वेन तण्डुले कर्तृत्वं कर्मत्वञ्च तथैव तण्डुलः पच्यत इत्यत्रापि विक्लित्त्याश्रयत्वेन तण्डुले द्वितीया सम्भाव्यते। ततस्तण्डुलं पच्यते, स्वयमेव इत्यापत्तेः = अशुद्धं रूपं स्यादित्यर्थः। वैयाकरण मतेतु कर्तृत्वंविवक्षया कर्तृसंज्ञया परत्वात् कर्मसंज्ञाया बाधान्नदोषः।

न च कर्मकर्तृ विवक्षायां तण्डुलः पच्यते इत्यादौ परसमवेतक्रिया जन्य फलाश्रयत्वाभावान्न द्वितीयेति वाच्यम्। तत्राग्नि संयोगोऽपि धात्वर्थ, इति मते विक्लित्त्यनुकूलः तण्डुलान्यसमवेतः = अग्निसंयोग रूपो धात्वर्थः तज्जन्य फलाश्रयत्वेन कर्मतायाः सुवचत्वात्।

न द्वितीयः। शाब्दबोधातिप्रसंगोऽपि = चैत्रकर्तृकचैत्रकर्मकगमन रुपातिप्रसंगोऽपि उक्तरीत्या = विपरीतशक्तिग्रहवतां तथा बोधस्येष्टापत्तिरितिरीत्या, धात्वर्थ व्यापारानधिकरणाश्रयोपस्थितिरितिरीत्या च निरस्तः = ध्वस्तः।

परः समवेतत्वस्य शक्यार्थ स्वीकारे परत्वस्य भेदस्य कर्म प्रकृति भिन्नार्थस्य समवेतत्वस्य = समवायानुयोगिनः कर्तुः समवायशम्बन्धेन विद्यमान व्यापारस्याभीष्टसम्बन्धोपलब्धये अनेकशः = नानाविधः कार्यकारण भावः करणीयः स्यात्। यथा—यदि परत्वं भेदः परसमवेतत्वं समवायानुयोगित्वं द्वितीयाऽर्थस्तदा तण्डुलं पचतीत्यत्रतण्डुलपदार्थस्य स्वप्रतियोगित्वसम्बन्धेन परत्वे भेदेन्यः भेदस्य स्वरुपसम्बन्धेन फलेऽन्वयः चैत्रे स्वप्रतियोगिकत्व सम्बन्धेन समवायानुयोगिकत्वसम्बन्धेन फलेऽन्वयः। तत इष्टान्वयलाभः सम्भवेदित। प्रकृत्यर्थप्रकारकशाब्दबोधं प्रति विशेषणता सम्बन्धेन

---

नैयायिकों का समाधान ग्रन्थकार को अभीष्ट नहीं है। क्योंकि परसमवेत या धात्वर्थतावच्छेदक आदि से घटित कर्म का लक्षण अङ्गीकार करने पर वाच्यार्थ में विशेषणीभूत धर्म को मानने में गौरव है। वे द्वितीयार्थ नहीं हो सकते। खण्डशः शक्ति स्वीकार करना कार्यकारणभाव कल्पना करना आदि गौरव देखकर और भी नैयायिकमत में दोष देते हैं। कि क्या उक्त अतिप्रसंगदोष द्वितीया सम्बन्धी है या शाब्द-बोध सम्बन्धी है। अर्थात् चैत्रश्चैत्रं गच्छति या प्रयागात् में द्वितीया की आपत्ति वारण के लिये या शाब्दबोध की उपपत्ति वारण के लिये उक्त लक्षण किये हैं। नाद्यः—

एतच्च सप्तविधम्—

"निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम्।
तच्चेप्सिततमं कर्म चतुर्धाऽन्यत्तु कल्पितम्॥

---

द्वितीया जन्य पर सवेतत्वोपस्थितिः कारणम्। एवं परसमवेतत्व प्रकारक शाब्दो बोधं प्रति विशेष्यता सम्बन्धेन धात्वर्थं व्यापारोपस्थितिः कारणमितिगौरवम्। गौरवान्तरं तु विशेषज्ञाने सामान्य ज्ञानं कारणं; आश्रय आश्रयत्वं वा द्वितीयाऽर्थं इति सामान्य ज्ञानं, तन्निर्णयानन्तरं विशेष ज्ञानस्य जिज्ञासोदेति। विशेषश्च भेदोपभेदाद्यर्थकस्तस्य विशेषरूपेण ज्ञानस्येच्छायामाह एतच्चेति।

कर्तुः क्रिययोत्पन्न फलानुयोगि (फलाश्रयः कर्म) तस्य सप्तविधत्वं तु व्याख्यायते। ईप्सितं कर्म त्रिविधं। अनीप्सितंतु चतुर्धेति मिलित्वासप्तविधत्वं कर्तुरीप्सितममित्यनेन विधीयमानं क्रियाजन्यफलशालिकर्म

---

नतानद्वाच्य—द्वितया की आपत्ति वारण के लिए उक्त लक्षण नहीं कर सकते क्योंकि वह दोष वैसे ही बना हुआ है। तुम्हारी रीति से तण्डलान्यसमवेतादि रूप कर्मत्व वाक्यार्थ होगा तो यह लक्षण 'गमयति कृष्णं गोकुलं' में जैसे कृष्ण को कर्म संज्ञा हुई ऐसे ही पाचयति कृष्ण गोप इस वाक्य के कृष्ण पद में द्वितीया (जो अनिष्ट है) होने आपत्ति होगी। क्योंकि कृष्ण से अन्य गोप में समवाय सम्बन्ध से रहने वाली धात्वर्थता संयोगानुकूल व्यापार जन्य संयोगरूप फल का आश्रय गोकुल की तरह कृष्ण भी हैं। ऐसे पाक रूप फलाश्रय कृष्ण भी है द्वितीया अनिवार्य हो जायगी। जैसे चैत्रः ताण्डुलं पचति होता है वैसे ही स्वयमेव तण्डुलः पच्यते के स्थान में धात्वर्थतावच्छेदक व्यापारजन्य पाक रूप फल का आश्रय बने रहने से यहाँ भी तण्डल में द्वितीया की आपत्ति होगी। क्योंकि—विक्लित्ति रूप फल के अनुकूल तण्डुल से भिन्न (कर्ता) के आश्रय होने से कर्म संज्ञा हो जायगी। अतः द्वितीया के अति प्रसंग का दोष यथास्थित है।

उक्त रीति से शाब्दबोध से अति प्रसंग का दोष भी वारण हो गया परन्तु। परसमवेत के अर्थ को समझना उसको शब्दार्थ वाच्य अर्थ मानना परत्व और परसमवेतत्व को अभीष्ट सम्बन्ध जोड़ने के लिए नाना प्रकार का कार्यकारण भाव स्वीकार करना इत्यादि अनेक भिन्न-भिन्न गौरव उपस्थित होते हैं इत्यादि भूषण में स्वष्ट है।

औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥
इति वाक्यपदीयात् ॥

यदसज्जायते सद्वा जन्मना यत्प्रकाशते ।
तन्निर्वर्त्यं विकार्यं तु द्वेधा कर्म व्यवस्थितम् ॥

---

त्रिविधं निर्वर्त्यं विकार्यं प्राप्यञ्चेति त्रिधामतम् त्रिप्रकारेण सर्व सम्मत-मुत्कृष्टेच्छाभूतं कर्म । अन्यत्तु तथा युक्तश्चानीप्सितंकर्म चतुर्धा=भेद चतुष्कं कल्पितं=प्रतिपादितं यत्–औदासीन्येन=उपेक्ष्यभावेन उत्कृष्टेच्छा विषयं विना प्राप्तं कर्म तृणादिःग्रामं गच्छन् तृणं स्पृशतीत्यादौ । कर्तुः व्यापारस्य यदनीप्सितं=इच्छोद्देश्य विषयी भूतं विना कर्म विषादेः; ओदनं भुञ्जानो विषंभुङ्क्त इत्यादौ । संज्ञान्तरैः=प्राप्तापादानविषयभूतैः अनाख्यातं=अविवक्षितं; अकथितञ्चेत्याक्रान्तं गाम् दोग्धि पय इत्यादौ । यदन्य पूर्वकं=अधिशीङ्; क्रुद्ध द्रुहोरित्यादि सूत्रविषयाक्रान्तं; अन्य कारकत्वेनाविक्षायां किन्तु कर्मत्वेन विवक्षायां यत् कर्म तत् बोध्यम् । एते कर्मणो विभागाः क्रमेण विब्रीयन्ते । वाक्य पदीयेन प्रदर्शयन्ते च ।

इदानी मीप्सित कर्मणोर्लक्षणानि वाक्य पदीयतः व्याख्यायन्ते । नैया-यिकमतेऽसतः=असत् पदार्थात् कार्यं जन्यते । सर्वं कार्यं कर्तृ जन्यं; यद्यत् कार्यं तत्तदनित्यमित्यसत् कार्या बाध मवलम्ब्याह । सद्वेति=सांख्य मतेऽ-सदकरणात्; उपादान ग्रहणात्; कारणभावाच्च सत् कार्यम् । यतः तन्मते

---

द्वितीयार्थ कारक के सात भेद हैं ३ भेद ईप्सित कर्म के चार भेद अनीप्सित कर्म के हैं । क्रिया से उत्पन्न फलशालि कर्म दो हैं ईप्सित और अनीप्सित । प्रथम के तीन भेद निवर्त्य, विकार्य और प्राप्य । अन्यत्तु=अनीप्सित कर्म तो चार प्रकार से कल्पित है । १—जो अनीप्सितं से बोधित है । जो उदासीन होकर कर्म हो जैसे ग्रामं गच्छन् तृणं स्पृशति तृण उदासीन कर्म है । २—कर्ता को जो अनीप्सित=अनिष्ट हो जैसे द्वेष्य विष इत्यादि । ३—जो अन्य संज्ञःओं से अनाख्यात हो जैसे अकथितञ्च का विषय । जहाँ अपादानादि संज्ञाओं से अनाख्यात=अविवक्षित हो । ४—अन्य-पूर्वक कर्म जैसे 'अधिशीङ् स्थासां कर्म' 'क्रुद्धद्रुहोरित्यादि सूत्रविहितम् । ये सातो भेद वाक्यपदीय से समझें ।

समवायिकारण प्रकृत्युच्छेदसंभूतं किंचित्काष्ठादि भस्मवत् ।
किंचिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ दूसरे द्वितीया

सर्वं कार्यं स्व-स्व कारणे सँल्लीनं तिष्ठति । केवलं तेषामाविर्भावतिरोभावौ भवतः । अतो यत् कार्यं सद् भवत्वसद् वा भवतु । किन्तु जन्मना—कार्योत्पत्तिसामग्रया प्रकाशते—स्वरूपं दधाति; आविर्भवति वा तन्निर्वर्त्यम् । निर्वर्त्यते—निष्पाद्यते, व्यवहारविषयीक्रियते, यत् अथवा निर्वर्तितुं—स्वरूपमाविष्कतुं योग्यं निर्वर्त्यं । एवं प्रयत्न विशेषेणोपलभ्य मानत्वमुत्पत्तिमत्वं वा निर्वर्त्यम् । इदं लक्षणं प्रकृतिवाचकपदस्यासन्निहितेसत्येव; अन्यथा तण्डुलानोदनं पचतीत्यत्रापि निर्वर्त्य स्यात् । अथवा प्रकृतिबिवक्षायां निष्पाद्यं कर्म विकार्यमुच्यते । प्रकृत्यविवक्षायां निष्पाद्यं कर्मं निर्वर्त्यमित्युच्यते । उक्तश्च—

सती वा विद्यमान वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥

घटं करोतीत्यत्रोत्पत्त्याश्रयस्य घटस्य मृद्रूपा प्रकृति सत्यपि सा परिणामिनी—घट रूपेण परिणता इति नाश्रीयते यदा न विवक्षते, तदा निर्वर्त्यो घट इति बोध्यम् । अयं भावः। यदा प्रकृति परिणामिनीति विवक्षते, तदा विकार्यं कर्म; यदा प्रकृति परिणामिनीत न विवक्षते, तदा निर्वर्त्यं कर्म । एवमेकस्यापि कर्मणो विवक्षाभेदेनोभयं वक्तुं शक्यते । अत एव काष्ठं भस्म करोतीत्यत्र भस्म रूपस्य कर्मणः प्रकृतिः काष्ठं तत् भस्मदशायामविद्यमानं भवति । यदा प्रकृतेः (काष्ठस्य) भस्म इति परिणामम् तदा विकार्यं, यदा परिणामस्य विवक्षानास्ति, तदा निर्वर्त्यम् । ईदृशस्थले फलद्वय प्रयोजकव्यापारार्थकत्वं धातोरावश्यकम् । अतो द्व्यर्थः पचिरिति भाष्यम् । अन्यथा एकफलैकव्यापारयोरकर्मकेषु सत्वात् । ईप्सित कर्मणः विशेषोपादानमनर्थकं स्यात् ।

विकार्यमिति—यदा प्रकृति विकृतिः भावः सुस्पष्टं संल्लक्ष्यते । अथवा विकतुं-प्रकृति परिणामित्वेन रुपेण विवक्षितुं योग्यं विकार्यं (ऋहलोर्ण्यत्) घटं करोतीत्यत्र प्रकृति विकृति भावो न संल्लक्ष्यते । अतो न विकार्यं, यदा संल्लक्ष्यते, तदा तदर्हति ।

विकार्यं कर्म द्वेधा व्यवस्थितं—व्यवस्थया प्रतिपादितं विकृतं—यदा प्रकृतिरेव विकृति रूपेण परिणतम् । एतादृशं कर्म द्विविधं शास्त्रे समुद्भो-

षितं वर्तते। प्रथमं प्रकृत्युच्छेदसम्भूतं = प्रकृतिः कार्यस्य मूलभूतं कारणं तस्या उच्छेदो विनाशो विपरिणामो वा यत्र प्रकृतेः स्वरुपं कथमपि न प्रतीयते। अतो अप्रतीयमानप्रकृतिस्वरूपफलकेन सम्भूतं = प्रकृतिविनाशजन्योत्पत्तिशालिकर्म। एतेन घटं करोतीत्यादि। निर्बर्त्यक्रिया निर्बाह्योत्पत्तिमत्त्यपि प्रकृतिविकृतिभावाभावान्नातिप्रसंगः। अत्र दृष्टान्तः काष्ठादि भस्मवदिति। भस्मना तुल्यं भस्मवत्। भस्म शब्दः समेषां विकार जातानामुपलक्षणम्। प्रकृतिविनाशपूर्वकंसम्पूर्णकार्यजातम्। तुल्य पदेन ग्राह्यम्। अत्र साध्यं मूलकारणविनाशजन्योत्पत्तिमत्वं ज्ञेयम्। एतेन क्रिया निर्बाह्यभावः प्रतियोगितावच्छेदकधर्मवत्वं प्रकृतिकर्मत्वमिति ध्वनितम्। तत्र काष्ठं प्रकृतिरग्निसंयोगेन भस्म विकृतिः। एवं प्रकृतिः विकृतीनां कार्यकारणभावापन्नकाष्ठ भस्मादिविकार्य बोध्यम्। काष्ठं भस्म करोतीत्यत्र कृधातोः ( प्रतियोगित्व विशिष्टो ) नाश उत्पत्तिश्च फल द्वयं तदनुकूलव्यापारश्चार्थः नाशे प्रतियोगितया काष्ठस्योत्पत्तेः भस्मन आधेयतयान्वयात् काष्ठप्रतियोगिकनाशानुकूलो भस्मोत्पादको वर्तमानो व्यापार इति शाब्दबोधः।

द्वितीयं विकार्यं कर्म लक्षणं तु—किञ्चित् गुणान्तरोत्पत्त्या = अन्यो गुणः गुणान्तरं तस्योत्पत्तिस्तया; प्रकृतिविकृतिभावे प्रतीयमाने सति यत्र पूर्व कालिकावयव संस्थानानां विजातीयावयव स्वरूप विशेषेण परिवर्तनम् अथवा यत्र विलक्षण स्वरूपोत्पत्तिस्तत्र विकार्यं कर्म बोध्यम्। यथा—काष्ठं भस्म करोति, सुवर्णं कुण्डलं करोति, कुसुमानि स्रजं करोति काष्ठ रूप प्रकृतेरग्नि संयोगेन विकृतेः भस्म रूप कार्यं, तेन काष्ठभस्मनोः प्रकृति विकृतिः भावो भस्मनि दृश्यते। काष्ठप्रकृतेः सम्यगुच्छिन्ने सतिबिलक्षणोत्पत्तिमत्वं भस्मनि सम्पन्नम्। एवं कुण्डलस्य प्रकृतिः सुवर्णस्तस्य विकृतिभावोऽनभूयते। सुवर्णस्य यादृशंमवयवसंस्थानस्वरूपं वर्तते। तस्य कुण्डले बिजातीयावयवापेक्षेणदर्शनंजायत। अत उक्त वाक्य विकार पूर्वको-

---

जो असत् से जन्म ले, पैदा हो, नैयायिक मत में उत्पत्ति के पहले कर्म असत् रहता है कर्ता की क्रिया के पश्चात् उत्पन्न होता है। या साङ्ख्य मत में कारण में कार्य छिपा रहता है उसका जब जन्म = प्रादुर्भाव होने से वह प्रकाशित होता है। उसकी निवर्त्य कर्म कहते हैं। जैसे तण्डुल और घट ये क्रियाजन्य फल ( प्रकृति परिणाम के रूप से ) का आश्रय है कर्म है।

दर्शन से जिसमें क्रियाकृतविशेष न देखता हो वो प्राप्य

[1]क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनाद्नु[2]मानाद्वा तत्प्राप्यमिति कथ्यते ॥

इति च तत्रैवोक्तम् । घटं करोतीत्याद्यम् । काष्ठं भस्म करोतीति, सुवर्णं कुण्डलं करोतीति च द्वितीयम् । घटं पश्यतीति तृतीयम् । तृणं स्पृशतीत्युदासीनम् । विषं भुङ्क्ते इति द्वेष्यम् । गां दोग्धीति ०संज्ञान्तरैरनाख्यातम् । ०क्रूरमभिक्रुध्यतीत्यन्यपूर्वकम् । एकाहित च

---

त्पस्यनुकूल व्यापारः क्रिअर्थः । भाष्ये पुनगवृतः सुवर्णपिण्डः पुनरपरया आकृत्यायुक्तः खदिराङ्गार सवर्णकुण्डले भवतः ।

अद्येवं तर्हि द्वयीविकार्यकर्मणोः को भेदः ? प्रथमस्योच्छेदरूपो विकारः द्वितीयस्य आकारविशेषे विलक्षणोत्पत्तिविकार इत्थं भेदोऽवमन्तव्यः ।

प्राप्य कर्म लक्षणमाह—क्रिया कृतेति कर्तुः क्रियया = व्यापारेण कृतः = उत्पन्नो यो असाधारणो धर्मः क्रिया कृतो विशेषः = लक्षणं चिह्नं, परिचयो वा विशेषरूपेणानुगमविषयता नाश्रीयते । किन्तु फलाश्रयत्वं भजते । तद् प्राप्य कर्मत्वं सकर्मक निष्ठ विशेषो धर्मः । दर्शनात् = चक्षुरिन्द्रिय प्रमाणात् अथवा अनुमानात् = अनुमिति करणात् व्याप्तिज्ञानं पक्षधर्मताज्ञानं सत्यपि कर्मणि किञ्चित् विलक्षणता नानुभूयते । अतस्तत् प्राप्यं चन्द्रं पश्यतीत्यत्र दर्शनक्रियायाः कर्म चन्द्र इति । चक्षुरिन्द्रिय जन्यं यज् ज्ञानं तज्जनको व्यापारो दृश् धात्वर्थः यत्रासाधारणधर्मस्य प्रतीति विषयता नास्ति किन्तु फलाश्रयता वर्तते । तत् प्राप्यं कर्म विज्ञेयम् । एवं सुखमनुभावते वैज्ञानिक इत्यादौ उपग्रहप्रक्षेपण सफलता प्रसन्नमुखेन सुखमनुपीयते :

---

विकार्य कर्म दो प्रकार के व्यवस्थित है । १—प्रकृति (आश्रय, कारण) के उच्छेद = नष्ट होने से सम्भूत = उत्पन्न फल का आश्रम (कर्म) जैसे काष्ठ इत्यादि के जल जाने से भस्म राअ) कीं तरह भस्म की प्रकृति काष्ठ है वह समूल उच्छिग्न हो गया । २—वर्म (प्रकृति में कुछ गुणों की विचित्र उत्पत्ति से या रूपान्तर होने से जैसे सुवर्ग से कुण्डल बनाता है यहाँ सुवर्ण गुणान्तर = रूपान्तर की उत्पत्ति है । प्रकृति सा उच्छेद न होने से यहाँ विकार्य कर्म प्रथम की तरह न हो सकता हैं ।

क्रिया में उत्पन्न विशेषताओं की जहाँ सिद्ध त हो जैसे घट देखता है । यहाँ दर्शन क्रिया की कोई विशेषता घट में नहीं दिखाई पड़ती है । प्रत्यक्ष को अनुमान प्रमाण से, जहाँ क्रियाकृत विशेषता सिद्ध न हो उसे प्राप्य कर्न कहते है । यह भी जहीं कही गयी है । प्रथम का उदाहरण घट करोति है २ का काष्ठ को भस्म बनाना



प्राप्य

ईप्सितकर्मणां त्रयाणां मूलेक्रमिकोदाहरणं दीयते आद्यं निर्वर्त्यं, घटं करोतीत्यत्र निवेर्त्यं कर्म निर्मितिरुत्पत्त्याश्रयस्तदेव। काष्ठं भस्म करोति, सुवर्ण कुंडलं करोतीत्यादौ विकार्यं कर्म प्रकृतिविकृति भावदर्शनात्। तत्रापि भस्म कुण्डलयोः बिकार्य कर्म, सुवर्णं कुण्डलयोः निर्वर्त्यं कर्म, तत्र प्रकृति परिणामित्वेनाविवक्षणात्। यदा सुवर्णकाष्ठभृदादिनां प्रकृतीनामन्यथारूपेण विवक्षा। तदा विकार्यं कर्म विज्ञेयम्। द्व्यर्थः पचिरिव विकार उत्पत्तिश्च फलद्वयं धात्वर्थः। तथोराश्रयत्वात् कर्म संज्ञा। अत्र विकारो द्विविधः उच्छेदरूपोविकारो भस्मनिः आकार परिवर्तनं कुन्डलादौ प्रकृत्तिः विनाशस्थले भस्म सञ्जातदशायां प्रकृतिरविद्यमाना भवति। आकृति परिवर्तन दशायां प्रकृतिः विद्यमाना तिष्ठति। तृयीयं प्राप्यं कर्म यत्रक्रिया कृतो विशेषो गुणान्तरोत्पत्तिः प्रकृतिः विनाशो जन्मना स्वरूपप्रकाशो वा न लभ्यते न दृश्यते। तत्र प्राप्यं कर्म धोध्यम्।

अनीप्सितंकर्मणां चतुर्णां क्रमिकोदाहरण अनीप्सितमित्यस्योत्कृष्टेच्छाविषयत्वेनाविवक्षितत्वमर्थः। उदासीनस्योदाहरणं तृणं स्पृशतीति द्वेष्यो दाहरणं, विषं भुङ्ते। तत्र गलविलाधः संयोगरूप फलाश्रायता विषादौ सत्यपि ईप्सितमत्वेनाविवक्षाऽस्त्येव। एवं गां दोग्धि पय इत्यादौ संज्ञान्तरैः—अपादानादिसंज्ञाभिः अनाख्यातं—अविवक्षितं कर्म गामिति, तदप्रधानंकर्म। अन्यपूर्वकस्योदाहरणं 'क्रुरमभिक्रूध्यति'। तत्रान्येन शास्त्रेण प्राप्तसंज्ञावाधपुरस्सरं बाधकशास्त्रविधीयमानं कर्म संज्ञकमित्यर्थः। यथा—क्रुरमित्यत्र 'क्रुधद्रुहेर्ष्यासूयार्थानां, यं प्रतिकोप' इति सूत्रेण प्राप्त सम्प्रदान संज्ञायाः 'क्रुधद्रुहोरूपसृष्टयोः कर्म" इति वाधनात्। एवं 'वैकुंठमधिशेते' इत्यादावपि बोध्यम्। तथैव शिष्यं शास्त्रं बोधयति: ब्राह्मण मन्नं भोजनं कारयति। घटं जनयति नाशयति वेत्यादौ "गति बुद्धीति सूत्रेण कर्म संज्ञा विधानात् द्वितीयाया आश्रयोऽर्थो बोध्यः। "गति बुद्धीति सूत्रेण नियमनात् पाचयत्योदनं देवदत्तेनेत्यादौ न तथा? उक्तं च—

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मताङ्गतः। नियमात् कर्म संज्ञायाः स्वधर्मेणाभिधीयते—इति। इति द्वितीया विभक्त्यर्थः।

---

सोने का कुण्डलं करता है। ३—का घट देखता हैं, इससे प्रात्य के लक्षण घटते हैं। ४—का तृणं स्पुशति उदासीन का है। द्वेप्य का विष खाता है। अन्य संज्ञाओं से अबिवक्षित गौ से दूघ दूहता है। यहाँ पञ्चमी अविवक्षित करके कर्म हुआ अन्य पूर्वक कर्म जैसे क्रूर में प्राप्त सम्पादन संज्ञा को प्राप्त करके द्वितीया हुई। इति द्वितीयार्थ। कर्ता में तृतीया का भी आश्रय अर्थ हैं।

## ।। अथ तृतीया विभक्त्यर्थ निर्णयः ।।

कर्तृतृतीयाया आश्रयोऽर्थः। तथा हि—'स्वतन्त्रः कर्ता'' । स्वातन्त्र्यं च [1]धात्वर्थव्यापाराश्रयत्वम्।

०धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते।

इति वाक्यपदीयात्। ०अत एव यदा यदीयो व्यापारो धातुनाभिधीयते तदा स कर्तेति स्थालो पचति, अग्निः पचति, एधांसि पचन्ति, तण्डुलः पच्यते स्वयमेवेत्यादि संगच्छते।

---

द्वितीयातृतीया सप्तमीनामाश्रयोऽर्थ इति प्रतिज्ञया तृतीया विभक्ते-राश्रयोऽर्थः। तस्याः द्वौ भेदोस्तः। कर्तृ तृतीया करण तृतीया च। तयोः कर्तृ तृतीयायाः प्राधान्यमवगन्तव्यम्। तत्र कर्तुः स्वव्यापारे स्वातन्त्र्येणो-पस्थितत्वात्। यत्र-यत्र स्व व्यापारे स्वातन्त्रयं तत्र-तत्र कर्तृतृतीयात्वं। यथा धर्मेण लोकंक्ष्यतीत्यादौ तथा दर्शनात्। लोककर्मकरक्षणाश्रयः स्वतन्त्रोधर्म इति बोधः। करणं तु स्व व्यापारे कर्तृ पारतन्त्र्यमनुभवति। यथा—रामेण वाणेन हतो रावण इत्यादौ हननसाधनीभूतस्य बाणस्य कर्तृ परतन्त्रता अनुभव सिद्धा। एतेन कर्तृ तृतीयापेक्षया करणतृतीयाया, अप्राधान्यं वनितं। अतः प्राधान्यात् कर्तृ तृतीयाऽर्थः विवरणञ्च प्रथमं प्रस्तूयते। कर्तृ तृतोयेति।

आश्रयोऽर्थः—आश्रयमात्रमित्यर्थः। तस्याः आश्रयाऽर्थकत्वे प्रमाणं प्रस्तौति कौण्डभट्ट तथाहीत्यादिना—स्वतन्त्रःकर्ता, स्वक्रियायां स्वतन्त्रतया विवक्षितोऽर्थः कर्तृ संज्ञको भवति। यद्येषोऽर्थः सूत्रतो लभ्यते। तर्हि स्वतन्त्रस्तृतीयाऽर्थ इत्येववक्तुमुचितं न त्वाश्रयोऽर्थ इति। इतर व्यापारा-नश्रयत्वे सति, अन्यानधीनत्वे सति, स्वव्यापाराश्रयत्वं स्वातन्त्र्यम्।

---

अथ तृतीयार्थ निर्णयः। तृतीया कारक के दो भेद है कर्तृ तृतीतीया और करण-तृतीया। इन दोनों में कर्तृ तृतीया प्रधान है क्योंकि कर्ता अपने व्यापार में स्वतन्त्र है। करण परतन्त्र रहता है। प्रधान अर्थ का प्रथम निर्देश करते हैं कि 'स्वातन्त्रः कर्ता' स्वव्यापार में स्वतन्त्र को कर्तृ संज्ञा होती है तो तृतीया का स्वतन्त्र ही अर्थ करना चाहिए। आश्रय अर्थ क्यों ? ग्रन्थकार स्वतन्त्र का लक्षण करते है। धातु के

ईदृशस्य स्वातन्त्र्याश्रयस्य कर्तृ संज्ञा उच्यते। तर्हि काष्ठं पचतीत्यादौ। काष्ठस्य कर्तृ सज्ञा न प्राप्नोति। अन्यानधीनत्वाभावात्। काष्ठनिष्ठोयो-व्यापारः स चेतनव्यापाराधीनः। अतः प्रसङ्गसंगतं विलक्षणं लक्षण मुच्यते। स्वातन्त्र्यञ्चेति—पारिभाषिकं तदिति ग्रन्थ कर्तुंरभिप्रायः। तच्च प्रधानधातोर्थ भूतो यो व्यापारः तस्य स्वतन्त्रो आधार (कर्ता) इति लक्षणम्। तेन काष्ठं पचतीत्यत्र प्रधान धातुः पच धातुः तस्यार्थं भूतो व्यापारो विक्लित्यनुकूलो व्यापारः। तस्याश्रयः काष्ठमिति न कश्चन दोषः।

धात्वर्थं क्रियाश्रय भूतस्य स्वतन्त्रस्य कर्तृत्व विवक्षायां प्रमाणं हरि कारिकांशेन प्रददाति ग्रन्थकारः धातुनोक्तमिति। प्रसंगस्थेन धातुना उक्ता=प्रतिपादिता क्रिया यस्य कारकस्य तत् कारकं धातुनोक्तं क्रियं, तस्मिन् कारके=क्रियान्वविनि कर्तृता=धात्वर्थ व्यापाराश्रयता नित्यं= शाश्वतभिष्यते=इष्टोलभ्यते। यस्य कारकस्य क्रिया यदा धातुना प्रति पाद्यते तदा तत्कारकं कर्ता भवति। इत्येवाभिप्रेत्य ग्रन्थ कारेण यदा यदीयो व्यापार इत्युक्तः। यावन्ति कारकाणि सर्वाणि व्यापारश्रयकाणि भवन्ति। अतएव=धात्वर्थ व्यापारश्रयत्वरूप स्वातन्त्र्यस्वीकारादेव अर्थात् यदा वह्निस्थां विक्लित्यनुकूलां क्रियां धातुः प्रतिपादयति। तदा वह्नि धत्विर्थं व्यापाराश्रयः सन् कर्ता भवति। वह्निः पचतीति वाक्यं संगच्छते। यथा— चैत्रः चुल्लिकायां स्थाल्या ओदनं वह्निना काष्ठेन घटिकात् गुरवे पचति।

---

अर्थभूत व्यापार का जो आश्रय हो उसे स्वतन्त्र कहते है। वही कर्ता भी है। चैत्र में रहने वाली क्रिया यदि धातु से प्रतिपादित है तो उसका आश्रय कर्ता होगा (तण्डुल, काष्ठ या स्थाली जिसकी क्रिया स्वतन्त्र रूप से विवक्षित होगी वही कर्ता होता है। स्वतन्त्र के लक्षण में दो विषय आये। धात्वर्थ क्रिया जो धातु से ही उप-लब्ध है। दूसरा आश्रय जो कर्तृ तृतीया का अर्थ है।

धात्वर्थ व्यापार के आधार को कर्तृसंज्ञा में हरि कारिका प्रमाण प्रस्तुत करते हैं। धातुना इति—धातु से उक्त=प्रतिपादित हो क्रिया जिस सकारक की उसे कर्ता नित्य कहते है। इस वाक्य पदीप से धात्वर्थ क्रिया का आश्रय कर्ता कहाता है। इसीलिये जिस समय कारक की क्रिया धातु से कही जाती है उस काल में वही कर्ता होता है। जब स्थाली की क्रिया को धातु करेगी तो स्थाली पचति होगा अग्नि या लकड़ी की क्रिया को धातु कहेगी तो अग्निः पचति एधांसि पचन्ति बनेगा। तण्डुल स्वयं पकाता है यह वाक्य भी बनता है।

०नन्वेवं "कर्मकर्तृव्यपदेशाच्च" [ ब्र० सू० १-२-४ ] इति सूत्रे "मनोमयः प्राणशरीर" इति वाक्यस्थमनोमयस्य ०जीवत्वे वाक्यशेषे यस्य ०"एतमितः

अस्मिन् वाक्येऽन्तर्गतानां कारकाणां क्रिया, विक्लित्यनुकूलव्यापार एवास्ति सर्वस्मिन् कारके फलानुकूल क्रियाश्रयत्वमस्ति। एवं सर्वेषां कारकाणां स्वातन्त्र्यविवक्षया व्यापाराश्रयत्वेन कर्तृसंज्ञा प्राप्नोति। एतदर्थं स्वातन्त्र्यलक्षणे धात्वर्थं निवेशः क्रियते। अर्थात् धात्वर्थ व्यापाराश्रय सन् यः स्वतन्त्रः स कर्तैव। यथा—चैत्रस्थां क्रियां धातु वाचयति। तदा चैत्रः कर्ता इति मन्यते। भाव कर्म विवक्षायां चैत्रेण तण्डुलः पच्यत इत्यत्र चैत्र पदोत्तर तृतीयायाः धात्वर्थ व्यपाराश्रय इत्यर्थोऽस्ति। तत्र व्यापारस्य धातु लभ्यत्वात् आश्रयमात्रं •तृतीयार्थः। एकत्वसंख्याविशिष्टचैत्राभिन्नरूपो य आश्रय स्तन्निष्ठ तण्डुल निष्ठ विक्लित्यंनुकूलो वर्तमानकालिको व्यापार इति बोध्यम्। यदा कर्मणि प्रत्ययः, तदा कर्म ( तण्डुल ) वृत्ति व्यापारः प्रतिपाद्यते। तदा तण्डुलः कर्ता। वह्निना तण्डुलः पच्यत इति संगच्छते। एवं स्थाली—एधांसि—अग्निरित्यादौ यस्य क्रिया धातुना प्रतिपाद्यते तदा स कर्ता। तत्र व्यापाराश्रयकर्तृविवक्षा बोध्या। न तु सहैव सर्वे कर्तारो भवन्ति। कर्त्राख्यातस्थले ( कर्तृ प्रत्यये ) चुल्लिका तण्डुलं पचति। स्थाली तण्डुलं पचतीत्यादि भवति। कर्मणि प्रत्यये सति, कर्माख्यातस्थले स्थाल्या तण्डुलः पच्यते, काष्ठैः पच्यते, इत्यादिरीत्या सर्वेषां प्रयोगाणां व्यवस्था बोधनीया। तत्र गुण भूतैरवयवैक्रमः जन्मनां समूहस्तत्र बुद्धयाऽभेदो प्रकल्पितो व्यापार व्यपदिश्यते। एवं ( तण्डुलः पच्यते स्वयमेवेत्यादि संगच्छते ( कृत्याश्रयत्व रूप कर्तृत्वाश्रयणन्तु न संगच्छते )। न च पूर्वोक्त कर्तृलक्षणे ग्राममजां नयतीत्यत्र उत्तरदेश संयोगानुकूलव्यापाराश्रयता अजा शब्देऽपि वर्तते। तत्रापि कर्तृ संज्ञास्यादिति चेन्न। व्यापाराश्रयंता प्राधान्येन ग्राह्या। अन्यव्यापारानधीनत्वे सति धात्वर्थ क्रियाश्रयत्वं कर्तृ संज्ञात्वम्। एतल्लक्षणं कर्तृ देवदत्ते प्रवर्तते न तु कर्मणि। अजा शब्देऽजा निष्ठा क्रिया देवदत्त क्रियाऽऽधीना न तु स्वतन्त्रा।

नन्वेवं – प्रयोगे विवक्षयैव कर्तृनियामकत्वे धातोरर्थभूतक्रियाया आश्रयत्वं विवक्षाऽधीनं सञ्जातम्। एवं कर्ताऽपि वक्तुरिच्छाधीनेव क्रिया-श्रयः सन्। एक एव कर्ता भवितुमर्हति। न तु द्वयो त्रयाणां वा कारकाणा-मेकस्मिन् सहैव विवक्षा जायते। तत्र दोष आपतति। यथा—भगवता व्यासेन 'कर्तृ कर्म व्यापदेशाच्चेति सूत्रे एकस्मिन् कर्तृसंज्ञाकर्म संज्ञा च

मनोमय प्राणशरीर को प्राप्त कर्त्ता

प्रेत्याभिसंभवितास्मि" इति प्राप्तिकर्मत्वकर्तृत्वव्यपदेशो विरुद्ध इति भगवता व्यासेन निर्णीतं कथं संगच्छताम्? उच्यते—जीवस्यैव ज्ञेयत्वे प्राप्तिकर्मत्वमपि वाच्यम्। कर्तृत्वं च तस्याऽऽख्यातेनोक्तम्।

---

सहैव व्यवहृता वर्तते। तन्निर्णीतं कथं संगच्छतां, तथा हि—सूत्रस्य व्याख्या प्रसंगे वेदे ब्रह्मबोधकानि अस्पष्ट ब्रह्मलिङ्ग कानि वचनानि स्पष्ट ब्रह्म बोध कानि वचनानि च मिलन्ति। तत्र अस्पष्ट बोधक वाक्यं मनो मयः; प्राण शरीरः, भा रुपः सत्य संकल्पः, आकाश आत्मा; सर्वकर्मा, सर्वकामा इत्यादि विस्तृतमुक्तम्। तस्यान्ते एष में आत्मा अन्त हृदयः, एतद् ब्रह्म एतमितः प्रेत्याभिसम्भवितास्मि। अस्यार्थः—मनो मय इत्यत्र प्राचुर्ये मयट्। अयमात्मा अन्तः करणावच्छिन्नश्चैतन्यो मनोयोग प्राचुर्याद् ग्राह्यः। मनसै वेत्यर्थो न तु श्रोत्रादिना प्राणः=प्राणाख्यो वायुः शरीरं=ज्ञापकं, यस्य सः प्राण शरीरः। भा=ज्ञानं प्रकाशरुपश्च तेन रूप्यते, बोध्यते, योऽसौ भाः रुपः। ज्ञानं प्रकाश्य; सत्यं संकल्पं यस्य सत्य संकल्पः दृढ़प्रतिज्ञा, आकाश आत्मा निराकारा, सर्वं कार्य करोतीति सर्वकर्म सर्वेइच्छा विषयो भूतकामो यस्मिन्नसौ सर्व कामः। अत्र सन्देहो जायते। किं जीव उपास्यः अहोस्तित् ब्रह्म मनो मयः प्राण शरीर इत्यादि जीवे प्रसिद्धः न तु ब्राह्मणे। अतो उपास्यः तत्रैव

---

शका—यदि धातु का अर्थभूत व्यापार उस का आश्रय विवक्षित है तो कर्ता भी विवक्षाधीन हो गया। परन्तु, वह एक के व्यापार का आश्रय एक ही कारक हो सकता है। भगवान व्यास ने 'कर्म कर्तृ व्यपदेशाच्च' सूत्र में एकही चेतन में कर्ता और कर्म का व्यवहार कैसे? यथा— मनोमयः प्राणशरीरः इत्यादि वाक्य मे स्थित मनोमय शब्द का जीव अर्थ है, जो कर्ता रूप में व्यवहृत है। उसी वाक्य के शेष= अन्त में एतं= आत्मा को इतः= शरीर से प्रेत्य=निकल कर प्राप्त हूं। यहां एक ही चेतन (आत्मा) में प्राप्ति क्रिया का कर्ता और कर्म दोनो का व्यपदेश= व्यवहार जो विरुद्ध है। ऐसा भगवान व्यास का निर्णय कैसे सङ्गत होगा। जो चेतन कर्ता है वह कर्म-कैसे?

समाधान—यदि जीव को ज्ञेय= ज्ञान का विषय माना जाय तो वह प्राप्ति क्रिया का कर्म भी होता है; वहाँ "प्रेत्य" शब्द का 'प्रकृष्ट ज्ञान करके, ऐसा अर्थ होगा। "सम्भवितास्मि" में मिप् प्रत्यय से कर्ता उक्त है तो जीव कर्ता भी है इससे कर्ता और कर्म दोनो एक ही चेतन में संगत सिद्ध होते हैं।

**न चैकस्यैकदा संज्ञाद्वयं युक्तम्। कर्त्तृसंज्ञया कर्मसंज्ञाया बाधात्। तथा चैतमिति द्वितीया न स्यात्। कर्मकर्तृतायां च यगाद्यापत्तिरिति शब्द-**

---

सर्वाणि विशेषणानि कर्तृत्वेन संगच्छन्ते। इति पूर्व पक्षः। उत्तर सूत्रानुपपत्तेऽस्तु, न शरीर अर्थात् सत्य संकल्पादि गुणः जीवे न सम्भवन्ति। अतश्शारीरः (जीवः) न उपास्यः। किन्तु ब्रह्मैवोपास्यः। ब्रह्म कर्म किन्तु मनो मयः प्राण शरीर इत्यादिषु कर्मार्थे प्रथमा बोध्या। एवं चैतन्यस्य (आत्मनः) कर्तृत्वं जीवरुपे कर्मत्वं (ब्रह्म रुप चैतन्यं) गच्छति। वाक्य शेषे=वाक्यान्ते "एतमितः प्रेत्याभि सम्भवितास्यि"। इत्यस्मिन् वाक्ये प्राप्ति क्रियाया कर्मत्वं कर्तृत्वञ्चैकस्मिन् चैतन्ये प्रतिपादितं, तत् सिद्धान्त विरुद्धोपदेश इति। आत्मनि विरुद्ध धर्म द्वयकथनं भगवता व्यासेन कथं कृतिमिति प्रश्नः

विवक्षया जीवो ज्ञातः ज्ञेयश्च। यदा जीवो ज्ञेय=उपास्य रुपेण ज्ञान विषयस्तदा प्राप्ति क्रियाणाः कर्म भवति। एतं=जीवं, इतः=शरीरात्, प्रेत्य=निःसृत्य, शरीरं परित्यज्य, स्व प्रकाशक गुण विशिष्ट मात्मानम्=अभि सम्भवितास्मि=प्राप्तास्मि। यदा जीवो ज्ञाता तदा प्रेत्य=प्रकर्षेणात्मानं ज्ञात्वे त्यर्थः। अभिसम्भवितास्मि इत्यत्राख्यातेन (मिप् प्रत्ययेन) कर्ता उक्तो वर्तते। तेन जीवे कर्तृत्वमप्यस्ति। वैयाकरण सिद्धान्ते कर्तृत्व कर्मत्वयोः वक्तुरिच्छाधीनतया एकस्मिन् कालेऽपि संज्ञयोः सम्भवेन विरोधा भावात्।

न चैकदा=एकास्मिन् काले, एकस्य=केवलस्य, संज्ञा द्वयं=कर्तृ कर्म संज्ञे न सम्भवतः। यतः "आकाडारा देका संज्ञा" इति नियमविरोधात्।

---

**न कहिए कि एक ही चेतन में एक समय दो संज्ञायें अनुचित हैं, परन्तु कर्तृ संज्ञा से कर्म संज्ञा का बोध हो जाने से अथवा "आकाडारोय"—नियम के विरुद्ध होने से एक ही संज्ञा होगी—जिसमे कर्तृ संज्ञा के प्रबल होने से "एतम्" शब्द में द्वितीया नही होगी। यदि कर्म कर्तृ का विषय माना जाय तो यक, चिण, इत्यादि होने लगेगें। अतः—विवक्षा के भेद से एक ही में कर्म संज्ञा और कर्तृ—संज्ञा का माना जाना विरुद्ध नही है। यदि कर्म कर्तृ मानेगे तो शाब्द बोध में और शब्द स्वरुप में भी विरोध आवेगा। क्योंकि यक् चिण् की आपत्ति होगी एवञ्च =इस प्रकार व्यापार अंश धातु से उपलब्ध है। केवल आश्रय मात्र अर्थ शेष रहता है वही तृतीया विभक्ति का अर्थ है।**

**विशेषद्वारा भवति स चेद्धेतुः। एवं च व्यापारांशस्य धातुलभ्यत्वादाश्रयमात्रं तृतीयाऽर्थः। कारकचक्रप्रयोक्तृत्वं० कृत्याश्रयत्वं वा 'दण्डः करोति' इत्यत्राव्याप्तम्०।**

मीमांसकमत
मीमांसक को नहीं मानना
न्यायमत

---

एक कालावच्छेदेन संज्ञे न भवितुमर्हताम् परस्परबाध्यबाधकभावयोगात् कर्तृसंज्ञा कर्मसंज्ञा बाधिष्यते। अस्यां परिस्थितौ एतमित्यत्र कर्तृसंज्ञया कर्म-संज्ञायाः बधात् द्वितीया न सम्भविष्यति। यदि कर्म कर्तृ प्रक्रया (यत्र कर्म कर्तृ रुपेण विवक्षते) उच्यते। तदा यक्चिणादि र्भविष्यति विवक्षा भेदेन एकस्मिन् कर्तृत्व व्यवहारो न विरुद्धयते। तेन एतमात्मानं प्रेत्य= ज्ञात्वा, एतमभिसम्भवितास्मि=प्राप्तास्मीति न दोषः। यदि कर्म कर्ता स्यात्, तदा यगादीनां शाब्द बोधे विरोध आपतिष्यति। ततः सम्भाविता सम्भविता इति चिण् प्रयुक्तविकल्परुप भेदहेतवः स्युरेव श्रुति विरोधश्च स्यादेव। एतेन प्रयोग नियमाकत्वे विवक्षैव कारणमिति सिद्धान्त सिद्धो बोधः।

एवञ्च धात्वर्थं व्यापाराश्रयत्वं कर्तृत्वं विवक्षाधीनमिति स्वीकारे व्यपारो धातुलभ्यः, तृतीयाया आश्रय मात्रमर्थः सिद्धयति।

न्याय मीमांसा सम्मतकारककर्तृलक्षणखण्डनम्। तन्मते कारकचक्र प्रयोक्तृत्वं कर्तृलक्षणं कारकाणाम्=कर्मादिक्रियान्वयिनां, चक्रम्=समुदायः, तस्य प्रयोक्तृत्वं प्रवर्तकत्वम्; अर्थात् कर्तैव कर्मकरणसम्प्रदानादि

---

नैयायिक मत मेंकर्ता का लक्षण जो अभिमत है उसका खण्डन करते हैं। नैयायिक कहते हैं कि कारक चक्र (क्रियान्वयिसमुदाय) का जो प्रयोक्ता प्रेरक या प्रवर्तक है उसे कर्ता कहते है। परन्तु इस लक्षण में अव्याप्ति दोष है जहाँ लक्षण- जाना चाहिए वहाँ नहीं जाता है। जैसे "उपग्रहो गच्छति" यहाँ उपग्रह शब्द कर्ता नही बनेगा। क्योंकि कर्म करण सम्प्रदान इत्यादि कारक समुदायों का प्रयोक्ता चेतन ही हो होता है जड़ नही। उपग्रह जड़ है उसमें प्रयोक्तृत्व प्रेरकत्व शक्ति न होने से कर्ता नहीं बनेगा। 'यदि कर्ता का दूसरा लक्षण कृत्याश्रयत्वम् = कृति प्रयत्न का जो आश्रय वह कर्ता है तो कृति भी चेतन में रहने वाला धर्म है। अचेतन में बाधित है। इसलिए "दण्डः करोति" वाक्य में धात्वर्थ व्यापारक आश्रय को कर्ता मानने से जड़-चेतन सभी व्यापाराश्रय कर्ता हो सकते हैं।

कारकाणां प्रेरकोऽस्ति। एतल्लक्षणं कर्तृकारके संघटते। परन्त्वस्मिन् लक्षणे कारकचक्रप्रवर्तकत्वं चेतन निष्ठोऽस्ति। तथा च चैत्रः काष्ठैः तण्डुलान् स्थाल्यां पचतीत्यत्र चैत्रे तल्लक्षणं घटते। प्रवर्तकत्वस्य चेतन निष्ठत्वात् काष्टतण्डुलादिषु प्रवर्तकत्वशक्तिर्नास्ति अचेतनत्वात् एवं प्रकृतिः विश्वं विकाशयतीति वाक्यं शुद्धं न स्यात्। प्रकृतौ चेतनात्वाभावात् प्रवर्तकत्वाभावाच्च। यदि लाघवात् कृत्याश्रयत्वं कर्तृत्वमित्युच्यते। कृतिः—यत्नः तदाश्रयः कर्ता तस्य भावस्तत्वं वाच्यं तदपि न। कृतिरपि चेतननिष्ठोधर्मं कृत्याश्रयः कश्चन चेतन एव भवितुमर्हति। एवमचेतने दण्डादौ कृतिर्बाधिता। अत आह दण्डः करोतीत्यत्र अव्याप्तम्—प्रवर्तना कृतिश्च चेतनस्थो धर्म, अचेतने न व्याप्नुतः। तस्मादव्याप्तिदोषग्रस्तं नैयायिकोक्त कर्तृलक्षणमिति। तन्मते कृतिः क्रिया धातु वाच्या। आश्रय-मात्रं तृतीयाऽर्थः।

महाभाष्ये कारक चक्र प्रयोक्तृत्वरूपंस्वातन्त्र्यमिति पक्षोऽपि समर्थितो-ऽस्ति। तल्लक्षणं चेतने वास्तविकमचेतने आरोपितं; तेन दण्डादौ आरोपितं प्रवर्तकत्वमादाय दण्डः करोतीत्यत्र नातिव्याप्तिः। अतएव प्रधानेन समावाये स्थाली परतन्त्रा; किं पुनः प्रधानं? कर्त्ता। कथं ज्ञायते कर्ता प्रधानमिति? यत् सर्वेषु साधनेषु सन्निहितेषु कर्ता प्रवर्तयिता भवतीति 'कारके' इति सूत्रे भाष्येऽपि स्वेच्छाधीनप्रवृत्ति निवृत्तिकत्वमपि स्वत-न्त्रत्वम्। चेतनेऽनारोपितमचेतने चारोपितमित्युक्तम्। धात्वर्थ व्यापारा-श्रयत्वरूप कर्तृत्वं न भाष्यसम्मतम्। तादृश स्वातन्त्र्यस्याव्याख्यानात् पूर्वोक्ते द्वे लक्षणे लोके प्रसिद्धे स्तः। एतादृशः कर्तृस्थो व्यापारो धातु वाच्य इति। इत्यभिप्रायेण धातुनोक्तेति कारिका उक्ता। उक्तञ्च—

अचेतने आरोपस्य समर्थनं वाक्य पदीयेन क्रियते।

प्रागन्यतः शक्ति लाभान्यग् भावाऽऽपादनादपि।
तदधीन प्रवृत्तत्वात् प्रवृत्तानांनिवर्तनात्॥

अदृष्टत्वात् प्रतिनिधेः व्यतिरेके च दर्शनात्।
आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरिष्यते॥

इमे कारिके कारक चक्र प्रवर्तकत्वरुप स्वातन्त्र्यस्य समर्थिकेस्तः।

कर्म च कर्ता च

प्रयोज्य कर्ता

अयं च त्रिविधः—शुद्धः, प्रयोजको हेतुः, कर्मकर्ता च। मया हरिः सेव्यते। कार्यते हरिणा। गमयति कृष्णं गोकुलम्। मदभिन्नाश्रयको हरिकर्मकसेवनानुकूलो व्यापारः, हर्यभिन्नाश्रयक उत्पादनानुकूलो व्यापारः, गोकुलकर्मकगमनानुकूलकृष्णाश्रयकव्यापारानुकूलो व्यापार इति शाब्दबोधः।

करणतृतीयायास्त्वाश्रयव्यापारौ वाच्यौ। तथा हि—"साधकतमं करणम्"। तमबर्थः प्रकर्षः। स चाव्यव धानेन फलजनकव्यापारवत्ता।

वस वह धाया और फलजनक व्यापार उत्पन्न हो गया।

---

इदानीं तृतीयार्थाश्रयभूतस्य कर्तुविभागः क्रियते। कौण्डभट्टसम्मत प्रधान धात्वर्थो यो व्यापारस्तस्याधारःकर्ता त्रिविधोऽस्ति। शुद्धः, प्रयोजक, हेतु, कर्म कर्ता च शुद्धस्तावत् हेतोरनाश्रयत्वे सति कर्मत्वविशिष्टकर्तुरनधिकरणं शुद्धकर्तुर्लक्षणम्। यथा—दण्डेन घटं करोतीत्यत्र दण्डे हेतौ तृतीया, न तु कर्तृ तृतीयाश्रयः। घटस्य हेतु भूतो दण्डो न कर्ता तृतीयाश्रय। किन्तु करणे तृतीया। हेतोराधाराभात् तेन तत्र शुद्धकर्तुर्लक्षणं न याति। न चोक्त लक्षणे गमयति कृष्णं गोकुलमित्यत्र अण्यन्तावस्थायाः कर्तुः कृष्णस्य-ण्यन्तावस्थायां "गति बुद्धीति" सूत्रात् कर्म संज्ञा विधानेन कर्तुर्बाधेन कर्म-कर्ता न स्यात्। तन्न, प्रसङ्गगतप्रमुख धात्वर्थस्य (प्रधान क्रियायाः) आश्रयःकर्ता (कृष्णः) कर्म कर्तेति। तस्मिन्नपि लक्षणं न घटते। कर्म सहित कर्तुरनधिकरणमित्युक्तत्वात्। यथा—शुद्धकर्तुरुदाहरणम्—मया हरि सेव्यते। अत्र मदर्थः शुद्ध कर्ता। तेन तस्मिन्नर्थे तृतीया अस्मद्भिन्न कर्तृकोऽहमेवाश्रयो यस्य स मदभिन्नाश्रयकः प्रोत्याश्रयो हरि कर्म यस्यासौ। हरि कर्मकः प्रीत्यनुकूलो व्यापारः। कर्मणि प्रत्यये फलमेव मुख्मम्। मुख्यार्थबोधे नव्यमतेऽहमेवाभिन्नो आश्रयस्तत्र स्थितो यो व्यापारः तस्मात् सम्भूता। हरिरूपाश्रायस्था सेवा पादसंवाहनादि षोडशोपचारप्रयोज्या प्रीतिरूपफलजनिका इति बोधः।

प्रयोजक हेतुरुप कर्तुरुदाहरणं कार्यते इति। कुम्भकरः घटं करोति" कश्चित् प्रेरयतीति कश्चित् हरिणा हरिं वा घटः कार्यते। हृक्रोरन्यतर-

---

यह कर्ता तीन प्रकार का है शुद्ध, प्रयोजक हेतु और कर्म कर्ता। शुद्ध कर्ता का लक्षण है कि जो क्रिया में स्वतन्त्र हो और कारण में पराधीन न हो उसे शब्द को कर्ता कहते हैं, जैसे—मुझसे—हरि भगवान् सेवित हो रहे हैं। यहाँ मदर्थ—शूद्ध कर्ता है। प्रयोजक हेतु कर्ता का उदाहरण कार्यते हरिणा है। इस वाक्य में हरि घट को

स्याम्" इति सूत्रेण ण्यन्त कृधातोः सम्बन्धे कर्म संज्ञा विकल्प्यते )। भाव कर्मणि प्रयोज्य कर्मण्यन्येषामित्यादि बचनानुसारं प्रयोज्य कर्मणि प्रत्ययश्चेत्। केनचित् हरिः घटं कार्यते इति भवति। यदि हरौ कर्मता नास्ति तदा केनचित् प्रयोजकेन हरिणा प्रयोज्येन घटः कार्यते। एतदभिप्रेत्य मूले शाब्दबोध उक्तः। हर्यभिन्न इति।

कर्म कर्तुरुदाहरणं 'गमयति कृष्णं गोकुलमित्यत्र कृष्णस्य कर्म कर्तृविवक्षा यदा स्यात्। तदा कृष्णः स्वयमेव गोकुलं गमयतीति (गच्छतीत्यर्थः) प्रयोजक कर्तुरविवक्षायामपि णिच् तिष्ठति। गोकुलं कर्म यस्य तत् गोकुल कर्मकं यद् गमनं तज्जनको यः कृष्णाश्रयको व्यापारः। तज्जनिकाकश्चिन्निष्ठा प्रेरणेति बोधः। प्रयोजकस्याविवक्षयांतु कृष्णाभिन्नाश्रायकः गोकुल कर्मकः उत्तरदेश संयोगानुकूल व्यापार इति बोधः करण तृतीयायाः आश्रय व्यापारौ चार्थौस्तः। रामेण बाणेन हतोवालीत्यत्र राम कर्तृकं बालि कर्मकं हननमेव प्रधान किया सा हन् धातु बाच्या। तत् साधिका बाणस्था क्रिया तु न धातु वाच्या। किन्तु विभक्ति वाच्यैव सा क्रिया। अनन्य लभ्यत्वात्। राम एवाभिन्नाश्रयो यस्य व्यापारस्य सः रामाश्रयाभिन्नवृत्ति धात्वर्थं व्यापारः तज्जन्यो—बाण एवभिन्नाश्रयो यस्य करण तृतीयाऽर्थव्यापारस्य सः बाणाभिन्नाश्रय वृत्ति विभक्त्यर्थं व्यापारः तञ्जन्यो यः प्राणवियोगस्तदाश्रयो बाणः। आश्रयार्थस्तु प्रसिद्धैव।

ननु व्यापारो धातु लभ्यः। तत्र(व्यापारे) तृतीयाऽर्थता कल्पनमनुचितं। तंन्न कर्तृस्थो यो व्यापारः सः धातु लभ्यः। यस्त्वनुभूयमानः करणस्थो व्यापारः सः न धातु वाच्यः। किन्तु पदार्थान्तर प्रयत्नकल्प्यः। तेन व्यापारे तृतीयाऽर्थ कल्पना सङ्गतैव। अन्यथा करण क्रियायाः शाब्द बोध विषयता न स्यात्। आश्रयास्थंतु प्रसिद्ध एव। तेन तत्र बाणस्याभेदान्वयो भवति।

---

वनाता है। कोई उसे प्रेरित करता है कि तुम घट– बनाओ हरि से घट वनवाया जाता है यहाँ हरि हेतू भूत कर्ता है। प्रयोजक कोई व्यक्ति हुआ उसका हेतु भूत कर्ता हुआ। कर्म कर्ता का उदाहरण ( गमयति कृष्णः गोकूलम् ) जहाँ कर्म कर्ता के रुप में व्यवहृत हो उसे कर्म कर्ता कहते है जैसे – कृष्णम् पद में कर्म को कर्ता की विवक्षा जब करेगे तो कृष्ण स्वयं गोकूल जाते हैं एसा अर्थ होगा। प्रयोजक = प्रेरक कर्ता की अविवक्षा में भी णिच् वना रहता है। गति वृद्धि सूत्र से अण्यन्ता वस्था के कर्ता को णिच् के सन्निधान में कर्म संज्ञा हुई। विशेष विधान से कर्तृ संज्ञा का बाध हुआ

अत्र प्रमाणं प्रदर्शनार्थमाह तथाहीति। "साधकतमं करणमिति" सूत्रानुरोधात् साधयति-प्रधान क्रियां फलवतीं करोतीति साधकः तस्मादतिशयार्थे तमप्, तेन तमपाप्रकर्षोऽर्थो गम्यते। तादृश लब्ध प्रकर्षस्तु क्रिया गतः गृह्यते। तमबर्थप्रकर्षस्तु — करणक्रियागतोत्कर्षस्तु अव्यवधानेन — अव्यवहितेन फलोत्पादको यो व्यापारस्तद्वान् गृह्यते।

एवमव्यवधान कालावच्छेनदेन फलजनकं व्यापारवदसाधारणं करणम्। न च कारकाधिकारात् सर्वेषां कारकाणां विवक्षया करणत्वमपि भविष्यति; तेन करणमित्येव। कारकाधिकारात् करणार्थे लब्धे सूत्रे साधक ग्रहणं साधक तमार्थं भविष्यति। पुनः तमब्ग्रहणं व्यर्थीभूय ज्ञापयति। यदस्मिन् कारकाधिकाधिकारे शब्द सामर्थ्ये गम्यः प्रकर्षो नाश्रीयते। साधकशब्द सामर्थ्यात् प्रकर्षोऽर्थो लब्धुं न शक्यते। तेन गङ्गायां घोष इत्यादौ गौणाधारेऽपि अधिकरण संज्ञा सिध्यति। अतो यद् व्यापाराव्यवधानेन फलसिद्धिस्तत् करणमिति फलितोऽर्थः।

---

। तो भी प्रकरण प्राप्त धातु के अर्थ-भूत व्यापार का आश्रय होने से-कृष्ण कर्म कर्ता का उदाहरण बने। तीनो का शान्द वोध ग्रन्थकार प्रदर्शित करते हैं। मदभिन्न इति ——सेवन क्रिया का मैं ही हुं अभिन्न-आश्रय ओर हरि भगवान हैं कर्म (सेवन का फल भूत प्रीति का आश्रय) ऐसे सेवा के अनुकूल क्रिया जिसका आश्रय मैं हुं। हरि हैं। अभिन्न-आश्रय जिसका और उत्पादन का जनक व्यापार जिसमें हरि से उत्पादन क्रिया हो रही। यह शाब्द बोध हुआ। गोकूल है कर्म जिसमें हरि से उत्पादन क्रिया हो रही है। यह शाब्द बोध हुआ। गोकूल है कर्म जिस वाक्य में एसे — गनन फल को जन्म देने वाला और कृष्ण हैं—आश्रय जिसका एसे क्रिया अशुकूल क्रिया एसा शब्द जन्य ज्ञान होता है।

करण तृतीया का आश्रय और व्यापार दो अर्थ है जैसे "साधक तमंकरणम्" क्रिया का जो अत्यन्त साधक है विना व्यवधान के सफल है (उसे करण कहते हैं उक्त सूत्र के अनुरोध से तमप प्रत्यय से लब्ध जो प्रकर्ष प्रवल साधनता वह व्यापार गत लेते हैं। करण व्यापार में जो अतिशयित्व है वह विना व्यवधान के फल का जनक व्यापार तद्-रूप ही लेते हैं। अर्थात करण में- रहमे वाली क्रया विना व्यवधान के फल को उत्पन्न करती है। उस प्रकार के व्यापार की तरह जो असाधारण कारण है उसे करण कहते है। इसी वात को हरि कारिका से प्रभाणित करते हैं उक्तञ्च—

**तादृशव्यापारवत्कारणं च करणम् ।**

**उक्तं च वाक्यपदीये—**

**०क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।**
**विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ॥**
**०वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।**
**स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ इति ॥**

**विवक्ष्यत इत्यनेन सकृदनेकेषां तदभावाद् द्वितीयासप्तम्यादेरवकाशं ०सूचयति ।**

---

प्रायेण विवक्षया कारकाणि कर्तृ णि भवन्ति। इमां वार्ता हरि कारिका-प्रमाणयति क्रियायाः परिनिष्पत्तिरिति यद् व्यापारादनन्तरम्=यस्य कारकस्य क्रियाया अनन्तरं=पश्चात् अव्यवधानेन क्रियायाः=व्यापारजन्य फलस्य निष्पत्तिः=सिद्धिः, उत्पत्तिर्वा। यदा=यस्मिन् काले यत्र=स्थले विवक्षिता तत्करणं स्मृतं=स्मरण विषयं प्राप्तम्। अत्र क्रिया कीदृशी गृह्यते। धात्वर्थं फल जनक साध्यत्वेन प्रतीयमाना गृह्यते। क्रियते फलमुत्पाद्यते यया सा क्रिया इति क्रिययेति व्युत्पत्त्या फलरूपंवती। वस्तुतः सिद्धान्ते तु तत्=करणमनिर्देश्यं=निर्देष्टुमशक्यम्, इदमेवास्तु करणमिति व्यवस्था नास्ति। किन्तु यदा यस्मिन् यत्र विवक्षा तदा तत् करणमिति। तत्र कारणमाह नहीति—हि=यस्माद्धेतोः करण वस्तु व्यवस्थितं नास्ति, करणस्य वृत्तिः=शक्तिः क्वचित् वस्तु विशेषे अंगुल्या निर्देशेन विवक्षिता नास्ति। किन्तु यस्य व्यापारस्याव्यवधानेन फलस्य सिद्धिस्तदेवकरणम्। वस्तु विशेषे वृत्तिर्निश्चिता नास्तीत्यत्र प्रमाणंप्रस्तौति कौण्डभट्टः। स्थाल्येति—स्थाली पाकक्रियायांमधिकरण रूपेण सुनिश्चितापि किन्तु कृशतराधः अवयवाऽपि स्थाली। झटिति सन्तप्ता सति स्वव्यापाराव्यवहितोत्तरं पाकं निष्पादयति। तेन तत्र करणत्वविवक्षाऽपि भवितुमर्हति।

---

**जब यह व्यापारादनन्तरम्= जिस व्यापार=क्रिया केपश्चात् क्रिया= फल की निष्पत्ति= सिद्धि विवक्षित= वक्ता की इच्छा के आधीन हो तब उसे करण कहते है वस्तुतः करण क्या वस्तु है वह अनिर्देश्य= करण वस्तु अङ्गुलो से निर्देश= स्थिररुपः से प्रतियादन के योग्य नही है। उसकी व्यवस्था व्यवास्थित नही है। परन्तु विना**

**०न चैवं "कर्ता शास्त्रार्थवत्त्वात्" [ ब्र० सू० २-३-३३ ] इत्युत्तर-मीमांसाऽधिकरणे "शक्तिविपर्ययात्" [ ब्र० सू० २-३-३८ ] इति सूत्रेणान्तः-करणस्य कर्तृत्वे करणशक्ति ०विपर्ययापत्तिरुक्ता न युज्येतेति वाच्यम्।**

---

तेन स्थाल्यापच्यत इति प्रयुज्यते। विवक्षा दर्शनेन वक्तुरनुभव विषयः। करणम्। कारिकायां विवक्षते इति पदेन सकृत् = युगपदेक कालमनेकेषां कारकाणां करणत्वस्याभावात् विकल्पे द्वितीया सप्तम्योर प्यवकाशं सूचयति स्थाल्यादेरधिकरण विवक्षायां पचति, करणत्व विवक्षायां स्थाल्या पचतीत्याद्यवसरः।

नन्वेवं कारकाणां प्रयोगे विवक्षा शक्तिरेव नियामिका चेत्, तर्हि वक्तु-रिच्छाधीनं कारकमिति सिद्धयति। तदा उत्तर मीमांसाऽधिकरणे कर्तृ कर-णयोरेकत्र कल्पनेन विरोधः समापतति। तथाहि–तत्र "कर्ताशास्त्रार्थत्वात्" इत्युक्तं तत्र कार्ये किं जीवस्य प्रवृत्ति र्भवति? अथवा बुद्ध्यात्मस्वरूप विज्ञानस्य प्रवृत्तिर्भवतीति सन्देहे जीवस्यैव कर्तृत्वमुक्तम्। प्रवृत्ति निवृ-त्यात्मक कर्मणः ( हिताहितफलपरक कमर्णः) कर्ता जीव एव। शास्त्रस्य = हिताहितमुद्दिश्य विधिनिषेधात्मकस्य शास्त्रस्य अर्थत्ववात् साफल्यात्। अर्थात् जीवस्य कर्तृत्व एवविधि निषेधात्मकं शास्त्रमुपपन्नं भवति शास्त्रलक्षणत्—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसो येनोपदिश्येत शास्त्रं शास्त्रविदोविदुः॥

प्रवृत्तौ—हिते, निवृत्तौ = निषेधे, नित्येन = शाश्वतिकवेदस्वभावेन, कृतकेन = रचितेन स्मृत्यात्मकेन येन, पुमांस उपदिश्येन्ते तं शास्त्र विदो विद्वांस शास्त्रमित्युक्तवन्तः। शास्ति हिताहितमुपदिशत्यनेनेति शास्त्रम्।

---

व्यवधान के किया से फल की निष्पत्ति जब विवक्षित हो तब वही करण है जैसे स्थाली अधिकरण है करण रुप से विवत्रा हुई तो ( स्थाल्या ) इस करण का भी प्रयोग होता है कारिका मे विवक्षते पद से सकृत् = एक काल मे एक साथ अनेक कारको मे करण की विवक्षा असम्भव है इसलियेविकल्प द्वितीया और सप्तमी कारक को अवकाश = अवसर मिलता है इसको सूचित करते है।

शंका–यदिसम्पूर्ण कारक विवक्षाधीन हैं तो करण के भी विवक्षाधीन होने से विवक्षा से ही चल जाता करण अर्थ मे शक्ति विपर्यय क्यो प्रसङ्ग— एवं = विवक्षा

"तदेवैतेषां प्राणानां विज्ञानेन विज्ञानमादाय" इति श्रुत्यन्तरे करणतया क्लृप्तस्य कर्तृतां प्रकल्प्य शक्तिविपर्ययापत्तिर्निष्प्रमाणा॰ ॰कल्प्येतेत्यभिप्रायात् ।

---

अतएव विहितं कर्म रामादिवत् वर्तितव्यम् । न रावणादिवत् इव प्रभवन्ति जनाः । एवं जीवे कर्तृत्वं प्रसाधितम् । विज्ञाने च करणत्वशक्तिः स्वीकृता । विज्ञानमेव जीव इति वैषम्यमापतति । बौद्ध मते तु विज्ञानमेव जगत् सर्वम् । यद्येवं जीवः पृथक् कर्ता इति न मन्यतां तन्न ? जीवविज्ञानयोर-भेदसम्भवात् । वैयाकरणसिद्धान्ते तु विज्ञानं करणं न तु जीवः । एवं जीवः कर्ता इति संसाध्य विज्ञानस्यापि कर्तृत्वं साधयितु-माह । शक्तिविपर्ययादिति—विज्ञाने करणशक्तेः विपर्यय=शक्ति परिवर्तनं कदा भविष्यति । यदा अन्तकरणस्य = विज्ञान पद वाच्यायाः बुद्धे कर्तृत्वं स्यात् । ततोशक्ति विपर्ययः-विज्ञाने (बुद्धौ) या करणशक्ति सा कर्तृत्वेन विपरिणमते तारक विषये विवक्षाया महत्त्वे तु विवक्षयैव काष्ठं पचतितिवत् यथा विक्लित्यनुकूल-व्यापारे काष्ठं करणं किन्तु वाक्ये कतृत्वेन विवक्षितं तेन काष्ठं कर्तृत्वम-लभत् । एवं विज्ञानं करणं तद् विवक्षया कर्तृत्वमवाप्नुयिष्यति । सूत्रे तद् विपर्ययापत्तिरूक्ता तन्नयुज्यते । असङ्गतो भवतीत्यर्थं । समाधानम्—यत्रैष जीवः सुप्तोऽभूत्, य एव तदेतेषां मनोभयादीनां प्राणानाम्=जीवानां स्वाप् काले प्राणानां=चक्षुरिन्द्रियाणां विज्ञानं=विशेष ज्ञान जनन शक्ति मादाय= धारणं कृत्वा; विज्ञानेन=मनसा अन्तः करणेन वा, बुद्धिवृत्त्योत्पादकत्व-मादाय यः एषोऽन्त—हृदये आकाशः=परमात्मा, शेते इत्यर्थः । अस्यां सूक्तौ विज्ञानेन, इत्यत्र करणत्वशक्तिः कल्पिताऽस्ति । तत्र कर्तृत्वशक्ति कल्पयित्वा शक्तिविपर्ययापत्तिरप्रामाणिकी भविष्यति । यतः सिद्धान्ते विवक्षयैव कर्तृत्वशक्तेः करणत्व शक्तेर्वा लाभात् श्रुत्या शक्तिः विपर्यय कथनमनर्गलं स्यात् । जीवस्थ ज्ञानमयत्वाच्च न तुविज्ञानरुपत्वम् ।

---

केली नियामक होने से उत्तर भी मांसा अधिकरण मे एक सूत्र है कर्ता शास्त्रार्थ वत्वात् इसमें जीवको कर्ता सिद्ध किया हैं जीव और विज्ञान एक ही वस्तु है बौद्धो ने विज्ञान ही को सब कुछ माना है किसी कर्ममें प्रवृत्ति या निवृत्तिका कर्ता जीव है। हमारे यहाँ विज्ञान ही करण है शक्ति विपर्ययात् सूच से अतः करण के कर्ता हो जाने पर इसमे करण शक्ति का विपर्यय = आरोप परिवर्तन का विधान करना उचित नही होगा। क्यो कि वह कार्य विवक्षा से भी सम्भव है। उत्तर जो पुरुष विज्ञानभय है जिस काल

आरोपित
[1]वस्तुतस्त्वभ्युच्चयमात्रमेत[3]दिति "यथा च तक्षोभयथा" [ब्र० सू० २-३-४०] इत्यधिकरणे ०भाष्ये एव स्पष्टमित्यादि प्रपञ्चितं भूषणे।

---

वस्तुतः एकस्यां श्रुतौ कर्तृत्वेन अपरस्यां करणत्वेन विवक्षा चेत् न श्रुति विरोध इत्यत आह वस्तुतस्त्विवति शक्तिः विपर्ययादि सूत्रमभ्युच्चय मात्रं बोध्यम्। प्रतिपादनविषये प्रसंगे प्रकरणान्तरस्य दृष्टान्त रुपेण प्रवेशो ऽनुमन्तव्यः। अभ्युच्चयत्वश्च तात्पर्य विषयी भूतो योऽर्थः प्रसंगः तस्मिन्नर्थान्तरस्य प्रतिपादनमभ्युच्चयोऽन्वाचयो वा। अत्र दृष्टान्तः—यथा--तक्षा (बढ़ई) उभयथा—सुखित्व दुखित्वोभय प्रकारेण दृश्यते। यदा वात्स्यादिभिः (वसूला) साधनैर्युक्तो भवति। तदा परिश्रमजन्यदुःखेन दुःखी भवति। कर्ता च भवति यदा स्वगृहमागतः सन् वात्स्यादि साधनविमुक्तः सन् स्वस्थस्तिष्ठति, विश्रमते च। तदा सुखी भवति, अकर्ता च भवति। एवं जीवात्मा विज्ञान रूपः सन्, अन्तः करणावच्छिन्नः सन्; विक्षेप शक्त्या प्रभावितः सन्; नानाकर्म कुर्वन क्षुभ्यति दुःखी भवति। यदा स जीवात्मा स्व परिश्रम दूरी करणार्थं स्व गृहं परमात्मानं प्रविशति। तदा माया मोह विमुक्तः सन्; निर्वच्छिन्नान्तः करणः सन्; स्वस्थः सन्; सुखी भवति। अकर्त्ता च भवति। एवं विवक्षया करणत्व कर्तृत्वादि धर्मः स्वीकुर्वन्नपि न कश्चन श्रुति विरोधः एकमेव शक्तिहान्यापत्तिदूषणमप्यवगन्तव्यम्। तथा चेत्यत्र चकारात् परमते बुद्धेः कर्तृत्व निराशाय नहि परमात्मनो ऽन्यो जीवो नाम कश्चित् यः कर्ता भोक्ता वा सम्भवेत्। अन्यच्च शुद्ध बुद्ध नित्यमुक्तात्मनः कर्तृत्वासम्सवात्। अन्यथा तस्य अनिर्मोक्षप्रसंगात्। अग्नेरूष्णता इवात्मन उपाधि रूपधर्मस्य अध्यासेनैवात्मनः कर्तृत्वं न तु स्वाभाविकम्। अत्र प्रमाणम्—ध्यायतीव, लेलायतीव, आस्वादयतीव अयमात्मा आत्मन इन्द्रिय मनो युक्तः सन् भोक्ता इत्याहुर्मनीषिणः। आत्मा यदा इन्द्रियैर्मनसा च युक्तो (औपाधिको) भवति। तदा भोक्ता उच्यते। अविद्या अवस्थायां द्वैतो भवति। इतमितरः पश्यति। अविद्या निवृत्तो तु सर्वं खल्विदं ब्रह्म नेह नानाऽस्ति किञ्चन; सर्गमात्मैव स्यात्। तदा कः कं पश्येत् इति श्रुत्या सोपाधिकस्यैव कर्तृत्वं सिद्धयति। तक्षणो दृष्टान्तस्तु एतादंशेन द्रष्टव्या। तक्षणादि क्रियादिषु निश्चितानि साधनानि सन्ति तानि वात्स्या-

---

मे वह सोया ) तदैव = उसी काल मे ऐतेर्षा = मनोमयः, प्राण शरीर इत्यादि प्राणो = जीवों या इन्द्रियों को विशेष ज्ञान या बुद्धि से विज्ञान = विशेष ज्ञान जनन शक्ति

**सप्तम्या अप्याश्रयोऽर्थः । "सप्तम्यधिकरणे च" इत्यधिकरणे सप्तमी । तच्च "आधारोऽधिकरणम्" इति सूत्रादाधारः । तत्त्वञ्चाऽऽश्रयत्वम् । तत्राऽऽ-**

---

दीनि यथावसरमेकैकमादाय कर्ता भवति । केवलं स्व शरीरेण तु अकर्तैव भवति तक्षा । एवमेवायमात्मा सर्वं व्यापारेषु प्रवृत्तानि मनआदि करणानि तदा कर्ता भवति । अन्यथास्वयमकर्तैव तिष्ठति । अन्यरीत्या एकस्मिन्-चैतन्ये कर्तृत्वं करणत्वञ्चोभयं युज्यते । प्रसङ्गे तु जीवस्यौपाधिकं कर्तृत्वं, न तु स्वाभाविकम् । एतदेव तात्पर्येण श्रुतिरुक्ता न तु शक्तिः विपर्ययापत्तिः-रूपं दूषणमिति । इति तृतीयाऽर्थः ।

## ।। अथ सप्तम्याऽर्थः ।।

पूर्वं प्रतिज्ञतं यत् सप्तम्या आत्रयोऽर्थ इति । तदेव स्पष्टयति—अधिकरणे सप्तमी भवति । अधिकरण संज्ञा च आधारोऽधिकरणमिति सूत्रा-नुरोधेन आधारस्यैव जायते । नन्वेवमाधार एव सप्तम्यर्थ इति सिद्धयर्ति । तदेव शक्यर्थो भवतु । न त्वाश्रय भवति । यद्वा आधाराश्रययो र्भेदात् कथमाश्रयोऽर्थ इत्युच्यते । तदाह तत्वञ्च—आश्रयत्वम् । अर्थात् आधाराश्र-ययोर्मध्ये ऐक्यंवतेते । न तु भेदः । आश्रयस्य क आश्रयी (आधेय) इत्याका-ङ्क्षया कारके इत्याधिकारात् क्रियैव आधेयीति लभ्यते । किया च धातु

---

को लेकर जो हृदय मेंपरमात्मा सो रहा हैं उग श्रुति में तथा दूसरे स्थल में विज्ञान ने कारव की शक्ति कल्पित है । उसमें कर्तृत्व शक्ति की कल्पना करके शक्ति की विपर्ययापत्ति अप्रमाणिक होगी क्योंकि-जीवात्मा विज्ञानमय है विज्ञान रूप नहीं ।

वस्धुतः—यह शक्ति का विपर्यय अभ्युच्चय मात्र है । किसी विषय को प्रति-पादन करते समय प्रसंग में प्रसंगान्तर मर्थान्तर या दृष्टान्त का प्रवेश हो उसे अभ्युच्चय कहते हैं । जैने—तक्षा ( बढ़ई ) में उभयथा = सुखात्मक, दुःखात्मक दोनों प्रकार की अनुभूति होती है । जब बसुला लेकर काम करता है तो थक कर दुःखी होता हैं जब काम छोड़ कर विश्राम करता है तो खुशदिल दिखाई पड़ता है । ऐसे ही जीवात्मा अन्तः करण से युक्त होकर विशेष शक्ति के आधार पर नाना कर्म करके क्षुब्ध होता है । अन्तः करण से मुक्त निरवच्छिन्न हो कर स्वस्थ, सुखी एवं आनंद रूप हो जाता है । ऐसे ही कर्तृत्व करणत्व के विवक्षाधीन होने पर कोई श्रुति विरोध नहीं है ।

श्रयांश शक्यः । तत्त्वमवच्छेदकम् । न चाऽऽश्रयत्वमात्रेण कर्तृकर्मकरणानामाधारसंज्ञा स्यात् । स्यादेव यदि ताभिरस्या क्वचिन् बाधः स्यात् । "कारके" इत्यधिकृत्य विहितसप्तम्याः क्रियाश्रय इत्येव यद्यपि तात्पर्यं तथाऽप्यत्र कर्तृकर्मद्वारा तदाश्रयत्वमस्त्येव ।

---

लभ्या आश्रय एवावशिष्यते । स च सप्तम्यर्थः; अनन्य लभ्यत्वात् तदाह आश्रयांशः=आश्रय रुपोंऽशः शक्यः = वाच्यः, तत्त्वंतु वाच्यतावच्छेदकमर्थस्य धर्म इति ।

ननु आश्रयत्वं=आश्रय निष्ठो धर्मः, तदेव शक्यतावच्छेदं ( वाच्यार्थभेदकमिति स्वीकारे ) फल रुपाधारः कर्म कियाया आश्रयः कर्ता करण कारकस्प चाधिकरण संज्ञा प्रोप्नोति । यतो हि आत्रयत्वं कर्तृ कर्म करणे ष्वपि वर्तते । तदाह —आश्रयत्वमात्रेण कर्तृ कर्म करणानामप्यधिकरण संज्ञा प्राप्नोति । परन्त्वेष दोषस्तदा भवितुमर्हति । यदा ताभिः = निरवकाशाभिः, कर्तृ कर्म करण संज्ञाभिरस्याः = अधिकरणसंज्ञायाः बाधः=अवरोधो न स्यात् । अतएव स्वदेशं प्रविशति, मोक्षमिच्छति इत्यादौ अधिकरण संज्ञायाः बाधात् द्वितीया भवति । एवं ग्रामं गच्छतीत्यत्रापि नाधिकरण संज्ञा । तत्साक्षात् संयोगाश्रयत्वं तु कर्मद्वारा जायते । न च कारके इत्यधिकारात् सप्तम्यऽधिकरणे इति विहित सप्तम्या व्यापाराश्रय एवार्थः । एवं साक्षात् क्रियाश्रययोः कर्तृ कर्मणोरेवाधिकरण संज्ञा । नन्वेवं साक्षात् क्रिया स्वीकारे कट स्थाल्यादेरधिकरण संज्ञा न प्राप्नोति । तदाह तथापीति अत्र = प्रसंगे, कर्तृ कर्मद्वारा कर्तृ द्वारा व्यापाराश्रयस्य कर्म द्वारा फलाश्रयस्य चाधिकरण संज्ञा । परम्परया यः क्रियाश्रयः सः सप्तम्यर्थ इति लभ्यते । न तु साक्षादिति फलितोऽर्थः ।

ननु परम्परया व्यापाराश्रयो सप्तम्यर्थः तथा सति कथं तज्ज्ञायते इति चेच्छृणु ? सूत्र सामर्थ्यात् कारकाधिकारीयेण "आधारोऽधिकरणमिति"

---

सप्तमी विभक्ति का भी आश्रय अर्थ है । सप्तम्यधि करणे सूत्र से अधिकरण (आश्रय, आधार) अर्थ में सप्तमी होती है । तच्च = वह अधिकरण संज्ञा आधारोऽधिकरणम् सूत्र के अनुसार आधार ( आश्रय ) को होती है तत्वञ्च = अधिकरण संज्ञा क्या है वह आश्रयत्व ( सप्तमी ) रूप हैं तत्र = वहाँ आश्रय सप्तमी का शक्य (वाच्य) अर्थ है । तत्व = आश्रयत्व उसकी धर्म संज्ञा है ।

**स्थाल्यादेर्भूतलकटादेश्चेति 'स्थाल्यां पचति' 'भूतले वसति' 'कटे शेते' इत्याद्युपपद्यते ।**

**उक्तं च वाक्यपदीये—**

---

सूत्रेण यः क्रियान्वयी तद्रूपो यः आधारस्तस्याधिकरण संज्ञा विधीयते। यतो हि यत्र साक्षात् क्रियाया आधारस्तत्र पराभ्यां कर्तृकर्मसंज्ञाभ्यां परत्वाद्बाधादधिकरण संज्ञा विधायकं शास्त्रमनर्थकम् । अनवकाशश्च स्यात् । तद् व्यर्थीभूय ज्ञापयति । यत्—परम्परया यो धात्वर्थ व्यापाराश्रयः सोऽधिकरण संज्ञकः ज्ञापनफलं तु मोक्षे इच्छास्तीतिवत्, मोक्ष इच्छतीति न प्रयोगः । यथा—निर्धनः कटे शेते" अत्र कर्तरि विराजमाना शयन क्रिया तस्या साक्षादाधारः कर्त्तैव एवं स्याल्यां तण्डुलं पचतीत्यत्र तण्डुल शिथिली भवनं पचक्रियायाः साक्षादाधारः कर्म ( तण्डुलैव ) एव—तथापि कर्तृद्वारा शयन क्रियाया अधिकरणं कट इति—शयनं निर्धनः कटमाश्रयते । कर्मद्वारा (तण्डुलद्वारा) पाकरूपक्रियायाआश्रयः स्थाली" इति । एवं भूतले वसतीत्यत्र बोध्यम् । एवं स्थाली कट भूतलेष्वधिकरण संज्ञा सिद्धयति । यत्र साक्षात् क्रियाया आधारः तत्र कर्तृ कर्मसंज्ञाभ्यामाधारसंज्ञा वाध्यते ।

न च कर्तृ कर्माधिकरणानामाश्रयमात्रार्थं स्वीकारे साङ्कर्यं मिश्रत्वाद भेदः स्यादिति वाच्यम् । तन्न तेषां निरूपके ( परिचायके हेतौ ) भेदोऽस्ति । तथाद्वितीयाऽर्थं आश्रयार्थस्य निरूपकं फलम् । तृतीयाऽर्थं विभक्त्यर्थस्याश्रयाधारस्य निरूपको व्यापारः सप्तम्यर्थस्याधारस्यनिरूपक; ( परिचायकः ) कर्तृ कर्म द्वारा व्यापारफले अथवा फलनिरूपित ( ज्ञापितो ) धात्तोः द्वितीयाऽर्थः इत्यादिः । व्यापार परिचायिताधारतृस्ती-

---

नच = न कहिए कि सप्तमी का आश्रयत्व अर्थ स्वीकार करेंगे तो कर्ता कर्म करण के भी आश्रय होने से उनको भी अधिकरण संज्ञा हो सकती है । जब ताभि, = उन संज्ञाओं से अधिकरण संज्ञा का वाध न हो तो । "कारके' सूत्र का अधिकार होने से विधान की गयी सप्तमी का यद्यपि उसका आश्रय ही अर्थ है तथापि—( साक्षात् आश्रय नहीं है ) अतः यहाँ पर कर्ता कर्म के माध्यम से क्रिया का आश्रय होती ही है । जैमें—चैत्र चटाई पर सोता है । शयन क्रिया कर्ता में है कर्ता कट पर है तो क्रिया कर्ता के माध्यम से चटाई पर सिद्ध हुई । चावल को बटुली में पकाता है पाक रूप फल कर्म ( तण्डुल ) में है । उससे माध्यम से बटुली ही में क्रिया सिद्ध युई । अत- कट और स्थाली को अधिकरण संज्ञा हुई ।

कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् ।
उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरण स्मृतम् ।। इति ।।

एतच्च त्रिविधम् । औपश्लेषिकं वैषयिकमभिव्यापकं च । कटे शेते, गुरौ वसति, मोक्षे इच्छाऽस्ति, तिलेषु तैलमिति । एतच्च "संहितायाम्" इति सूत्रे भाष्ये स्पष्टम् ।

---

यार्थः । कर्तृ कर्म द्वारा व्यापार फल निरूपिताऽऽधारस्याधिकरण संज्ञा भवति । स्थाल्यादेर्भूतल कटादेश्चेत्यत्र या सप्तमी सा कर्तृ कर्म द्वारा क्रियाश्रयस्य ज्ञापिका ।

एतत् सर्व वाक्य पदीय द्वारा प्रमाणी क्रियते । कर्तृ कर्म व्यवहितां = क्रियायाः आधारस्य च माध्यमः । कर्ता कर्म च एते द्वयोर्मध्यस्थे स्तः । तयोर्व्यवहिताम् साक्षात् = अप्रत्यक्षेण परम्परया वा क्रियाभूतसाध्यां धारयत् । क्रिया सिद्धौ = आधारस्य व्यापाराश्रयत्व सिद्धौ उपकुर्वत् = सहायः सन् धारयत तच्छास्त्रे ( साधुत्वबोधक शब्दशास्त्रे ) अधिकरणं ह्यर्यादिभिः स्मृतं = प्रतिपादितम् ।

नन्वेवं समये तण्डुलान् पचतीत्यत्र कालःसाक्षात् क्रियायाआधारः । तत्र कथं सप्तमी ? एतेन यत्र कालस्योपलक्षणतया परम्परया वा क्रियाधारः तत्र सप्तमी, तद् तद् ।

एतदधिकरण त्रिविधं बोध्यम् । एकमौपश्लेषिकं = संयोगसम्बन्ध निबन्धनम् = उपसमीपे श्लेषः संयोग सम्बन्धः, इति उपश्लेषः ततआगतमौपश्लेषिकम् । या उपगतः = सम्प्राप्तः श्लेषः = संयोगः, संयोगाधारः अधिकरण संज्ञकः । यथा—कटे शेते, गृहे तिष्ठति, कक्षायां पठति, अत्र शयन, स्थान, पठनानां संयोगाधारः कट, गृह, कक्षा इति तेन तत्रधिकरणसंज्ञा । ननु गुरौ वसति, वृक्षे गावस्तिष्ठन्तीत्यत्र गुरुः वृक्षो वा संयोगस्याधारो न

---

न कहिए आश्रय = आधार को अधिकरण संज्ञा स्वीकार करने पर द्वितीया तृतीया सप्तमी विभक्तियों का भी आश्रय अर्थ होने से साँङ्कर्य = मिलावट, सन्देह, संङ्कीर्णता, आदि दोष होंगे । तो नहीं, निरुपक = परिचायक बोधक भेद से भेद को मानना चाहिये । जिससे सांकर्य दोष नहीं होगा, सभी विभक्तियों के कारण है । कारण भेद से अर्थ भेद होता हैं अतः सांकर्य दोष नहीं है । जैसे—फल-रूप आधेय भूत द्वितीयार्थ का निरूपण फल है, कर्म द्वारा जहाँ परिचायक व्यापार है वहाँ व्यापार का आश्रय तृतीयार्थ समझना चाहिये ।। अर्थात् फल से परिचायित आधार द्वितीया

भवितुमर्हति। कथमधिकरणता तत्र। तन्न संयुक्तदेशसंयोगस्याधारता ज्ञेया गुरुसंयुक्तो यो देशः तस्य यः संयोगः यस्याधारता गुरौ वर्तते। तेनाधिकरण संज्ञकः एवं गोसंयुक्तदेशसंयोगस्याधारता वृक्षे वर्तते। तेन तत्र तत् संज्ञा। अत्र सामीप्यसम्बन्धः, तेन "इकोयणची" त्यत्र इकाव्यवहितसामीप्यसम्बन्धेन संयोगोऽचि वर्तते। तेनौषश्लेपिकाधिकरणं बोध्यम्।

द्वितीयं वैषयिकमधिकरणं — विषयतासम्बन्धसम्बद्धम्। विषयात्—विषय रूपेण वर्तमानसम्बन्धादागतं वैषयिकम्। अथवा औपश्लेषिकाभिव्यापक भिन्नाधिकरणंवैषयिकम्। यथा मोक्षे इच्छास्ति, मोक्ष विषयिणी इच्छा मोक्ष एको विषयस्तत्रेच्छाघटते। अत एव घटकत्वं सप्तम्यर्थं इत्युच्यते। इच्छायाः विषयः विषयतासम्बन्धेनाधारो मोक्षः। तेन तत्रोक्त संज्ञा। एवं घटे ज्ञानमपि बोध्यम्।

तृतीयमभिव्यापकं — सर्वावयवव्याप्तस्याधेयस्याधेयतासम्बन्धेन य आधारः सोऽधिकरण संज्ञकः। यथा—तिलेषु तैलम्, अत्र सर्वावयव व्याप्तो आधेयस्तैलम्। तस्याधारस्तिलः, इति तेन तत्रसंज्ञा एवं दध्नि सर्पिः। आधेयः सर्पिः सर्वावयवव्याप्तम्। तस्मात् दधीत्यत्र सप्तमी।

सर्वावयव व्याप्तमधिकरणं मुख्यमन्यत् सर्वं गौणमधिकरणम्। भाष्ये आचार्यः कीदृशमधिकरणं न्याय्यं मन्यते। यदि सर्वावयव व्याप्तमधिकरणं गृह्यते चेत् तर्हि इहैव स्यात् तिलेषु तैलं, दध्नि सर्पिः, इति। गङ्गायां गावः, कूपे मण्डूक इत्यत्र न स्यात्। तस्मात् स्वरितेनाधिकं कार्यं भवति। अधिक पदेन गौणाधारस्यापि ग्रहणम्। एतत् सर्वं संहितायामिति सूत्रे भाष्येऽधिकरणं नामत्रिप्रकारकं—अभिव्यापकमौपश्लेषिकं वैषयिकञ्च शब्दस्यच शब्देन कोऽन्यः सम्बन्धोभवितुमर्हति, उपश्लेषं बिना। "इको यणची" त्यत्र औपश्लेषिकाधिकरण सप्तमीति। इति सप्तम्यर्थः।

---

का शर्थ है। कर्त्ता-कर्म के द्वारा व्यापार और फल के आधार को सप्तम्मर्थ कहते है।

जैसे—स्थल्यादि का भूतल कटादि का कर्त्ता-कर्म के द्वारा क्रिया की बोधिका सप्तमी होती है ( 'स्थाल्यां' पद में कर्म के द्वारा क्रिया का आधार मान कर अधिकरण संज्ञा हुई। भूतले और कटे पदों में कर्त्ता के द्वारा क्रिया का आधार मानकर अधिकरण संज्ञा होती है। उसका समर्थन वाक्यपदीय से किया जाता है। कर्त्ता और कर्म के व्यवधान में या माध्यम से क्रिया का आधार जो साक्षात रूप से क्रिया का आधार जो साक्षात् रूप से क्रिया को न धारण करता हो किन्तु क्रिया की सिद्धि

अवधिः पञ्चम्यर्थः। "अपादाने पञ्चमी"। तच्च "ध्रुवमपायेऽपादानम्' इति सूत्रादपायो विश्लेषस्तज्जनकक्रिया तत्रावधिभूतमपादानमित्यर्थकाद् अवधिभूतमिति भावः।

उक्तं च वाक्यपदीये—

अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥
पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते ॥
उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मके।
विभागे प्रविभक्ते तु क्रिये तत्र व्यवस्थिते ॥
मेषान्तरक्रियापेक्षमवधित्वं पृथक्पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक्पृथक् ॥ इति।

---

॥ अथ पञ्चम्यर्थ ॥

पञ्चमी विभक्तेरवधिरर्थः। अपादाने पञ्चमीति सूत्रात् अपादानार्थके कारके द्योत्येङ्यन्तादाबन्तात् प्रतिपादिकाच्च। यद्यपि सूत्रेऽपादाने (अर्थे) पञ्म्युक्ता वर्तते। कथं तस्यारवधिरर्थः क्रियते? अवधिरुपार्थ लाभाय अपादानावध्योर्नास्ति भेदस्तदाह—तच्च = अमादानञ्च, अपाये = विश्लेषे; विभागे यद् ध्रुवमवधिभूतं, तदेवापादानम्। अपैति पृथक् भवति, यस्मा-

---

में वह उपकार कर रहा हो उसे शास्त्र मे अधिकरण रूप से स्मरण किया गया है। एतच्च = यह अधिकरण तीन प्रकार का है, १—औपश्लोषिकम् २—वैषैषिकं, ३—अभिव्यापकञ्च। उप=समाप में श्लेश=संयोग को उपःलेष कहते हैं उससे जो सिद्ध हो उसे औपश्लेषिक कहते है।

वेषैयिकः—जहाँ जोई विषय ईच्छा का आधार बने उस आथार को वैषयिक अधिकरण कहते हैं। मोक्ष विषय है। उसमें इच्छा विषयता सम्बन्ध से रहती है। अतः उसे अधिकरण संज्ञा हुई।

अभिव्यापक :—जो किसी वस्तु के सम्पूर्ण अवयपों में पूर्ण व्याप्त हो, उसे आश्रय को अभिव्यापक अधिकरण कहते हैं।

जैसे—तिल के सम्पूर्ण अवयों में तेल भरा हुआ है। अतः तिल में अधिकरण संज्ञा हुई। ये सब बातें संहितायां सूत्र में भाष्य में कही गयी हैं। इति सप्तम्यर्थः।

दित्यपायः; विश्लिष्यति = वियुज्यते, अस्मादिति विश्लेषः। अप् पूर्वक इण् धातुः वि पूर्वक श्लिष् धातुश्च, "अकर्त्तरि च" कारके संज्ञायामिति घञि कृते रूपं सिद्धयति। यस्यार्थो विभाग इति। घञ् प्रत्ययोऽपादानकारकार्थे भवति। तेन अपाय इत्यस्य = भूतेऽर्थे विश्लेष इतिं दीयते। तज्जनिका, विभागजनिका क्रिया तत्र यदवधिभूतं तदेवापादानम्। तस्यैवापादानसंज्ञा; अपादानमेबावधि पदार्थः तदेव पञ्चम्यर्थः। अर्थात् विभाग जनकक्रियायां यदवधिभूतमपादानं तदर्थात् पञ्चमी विधीयते। यथा—प्रयागात्काशीं गच्छति चैत्रः" यदा चैत्र उत्तरदेश संयोगानुकूलां क्रियां करोति। तदा तया = क्रियया, पूर्व देशस्य ( प्रयागस्य ) विभाग उपलक्षितो भवति। विभागस्यावधिभूतं ( अपादानं ) प्रयाग इति। प्रयाग पदोत्तर पञ्चमी विभक्तेस्तदेवार्थः। पूर्वोक्तनिर्देशानुसारेण पञ्चम्या अवधिभूतार्थेऽभेदेनान्वयः। तत्र प्रयागोऽवधिस्तस्य यो विभागः तस्योपलक्षकत्व सम्बन्धेन चैत्रवृत्ति

---

अथ पञ्चम्यर्थं—

जहाँ से किसी क्रिया का आरम्भ हो प्रधान क्रिया का आश्रय न हो उसे अवधि कहते हैं। वही पञ्चमी विभक्ति का अर्थ है। अपादान अर्थ में पञ्चमी विभक्ति होती है अपादान संज्ञा उसे होती है जहाँ अपाय = विभाग की अवधि ध्रुव=निश्चित हो, इस अर्थ में ( ध्रुवमपायेऽपादानम् ) का अनुरोध है। सूत्र में ऊपाय शब्द का विश्लेश=विभाग की जनिका=उत्पन्न करने वाली क्रिया अर्थ है, उस क्रिया में जो अवधि=आरम्भ की सीमा है उसको अपादन संज्ञा होती है। इसी भाव में अवधिभूत का अर्थ समझना चाहिये। घर से विद्यालय जाता है, यहाँ गंनन क्रिया की अवधि घर है वहीं से विभाग की शुरुआत होती है। गुह—गमन क्रिया का आश्रय भी नहीं है। वाक्यपदीय में कहा भी गया है—कि अपायं = विभाग-रूप फल में जो उदासीन तटस्थ प्रधान क्रिया का आश्रय न हो, उसे ध्रुव कहते हैं। वह ध्रुव ( अवधि ) चल = क्रियाशील हो या अचल ग्राम कुडय पर्वत की तरह अचल हो और अतदावेशात् = वह क्रिया का आश्रय न हो और ध्रुव हो विभाग स्थिर हो, उसी को अपादान कहते हैं। और पहाड़ से गिरते नुए घोड़े से देवदत्त गिर रहा है, यहाँ देवदत्त में विद्यमान पतन क्रिया की अवधि सीमा अश्व है, उस अश्व के पतन की अवधि = आरम्भिक सीमा पहाड़ या दीवाल ध्रुव है—अवधिभूत है कर्त्ता में निद्यमान क्रिया का आश्रय भी नहीं है इस लिए पञ्चमी हुई। जहाँ दो मेष ( भेड़ः ) आपस में टकरा रहे हैं वहाँ एक दूसरे में एक ही क्रिया का आधार समझ कर क्रिया का अनाश्रय न होने से दोनों के अपसरण क्रिया का आश्रय होने से पञ्चमी विभक्ति नही हो

अस्यार्थः—अपाये—विश्लेषहेतुक्रियायाम् । उदासीनम्—अनाश्रयः । अतदावेशात्—तत्क्रियानाश्रयत्वात् । एवं च विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्रयत्वं फलितम् । वृक्षात्पर्णं पततीत्यत्र पर्णस्य तद्वारणाय सत्यन्तम् । धावतोऽश्वात्पततीत्यत्राश्वस्य क्रियाश्रयत्वाद्विश्लेषहेत्विति ।

---

व्यापारेऽन्वयः । तत्रैवोत्तर देशसंयोगस्यानुकूलत्व सम्बन्धेनान्वयः । चैत्रस्य तिवर्थाश्रयेऽभेदेनान्वतः चैत्रे एकसंख्यायाः समवायसम्बन्धेनान्वयः । तिवर्थाश्रयस्य वृत्तित्व ( आधेयत्व ) सम्बन्धेन व्यापारेऽन्वयः । तिवर्थवर्तमानकालस्य परिच्छेद्य परिच्छेदक ( विभाज्य-विभागक ) भावसम्बन्धेन व्यापारेऽन्वयः कालस्य व्यापारेविशेषणत्वात् । आनुपूर्वीशाब्दबोधस्तु—प्रयागावधिको विभागोपलक्षितोत्तर देश संयोगानुकूलश्चैत्राभिन्नैकत्व विविष्टाश्रय वृत्तिः काशीकर्मकोवर्तमानकालिको व्यापारः । नैयायिकमतेतु प्रयागावधिको विभागोपलक्षितोत्तरदेश संयोगानुकूल व्यापारस्तदनुकूलः कृति मानेकत्व विशिष्टश्चैत्रः ।

ग्रन्थकारमते ध्रुवत्वस्य ( अपादानत्वस्य, अवधित्वस्य ) लक्षणंत्विथम्–प्रस्तुत धात्वर्थप्रधानीभूतविभागजन्य क्रियाया अनाश्रयत्वे सति प्रस्तुत धात्वर्थप्रधानीभूतक्रियाजन्यविभागाश्रयत्वंध्रुवत्वमित्यवधेर्लक्षणम् । स्वदशात् विदेशं गच्छतीत्यत्र, प्रस्तुत धातुः तस्य वाच्यार्थः = प्रधानीभूतोत्तरदेश (परदेश) संयोगानुकूलव्यापारस्तस्य अनाश्रयः ( तदाश्रयावधिभूतः) स्वदेश इति । तथैव प्रस्तुत धात्वर्थ व्यापारजन्य विभाग रूपार्थस्य आधारः स्वदेशोऽस्ति, तस्मात् पञ्चमी । इदमपादानं ध्रुवमित्युच्यते, तदेव विभागावधिः, तस्य = अवधित्वस्य परिचायिका ( निरूपिका ) पञ्चमी विभक्तिरस्तीति प्राचीनाः । नवीनास्तु अपाये = गतिविश्लेषेसति, यद्ध्रुवं ( ध्रुव-स्थैर्ये इत्यस्मात् ध्रुवति, तिष्ठति, स्थिरोभवति, ध्रुवमवधिभावप्राप्ताश्रयत्वे सति, तदतिरिक्तावधित्वोपयोगि, व्यापारानाश्रयत्वं ध्रुवत्वम् । यथा—वृक्षात् पर्णं पततीत्यत्र पतन्क्रियायामवधिभावप्राप्तिरूपो व्यापारो अवध्यर्थजनिकाक्रिया तस्या आश्रयः सन्नपि, तस्मादतिरिक्तोऽवधित्वो-

---

सकती । अवधि का लक्षण नहीं घट रहा है अतः दोनों मेषों ने पृथक, पृथक् अपसरण क्रिया माननी चाहिये । एक में जो क्रिया है उसका अनाश्रय होने से दूसरा भेड़ा अवधि बनेगा । दूसरे में विद्यमान क्रिया का अनाश्र य प्रथम मेष होने से अवधि बनेगा । इस लिए स्व-स्व क्रिया की अपेक्षा से दोनों में अलग-अलग कर्तृत्व भी है, एक दूसरे में अवधित्व भी है ।

कुड्यात्पततोऽश्वात्पततीत्यत्राश्वस्य विश्लेषजनकक्रियाश्रयत्वेऽपि तन्न विरुद्धमित्याह—यस्मादश्वादिति। तद्विश्लेषहेतुक्रियानाश्रयत्वे सतीति विशेषणीयमिति भावः। एवमश्वनिष्ठक्रियानाश्रयत्वात्कुड्यादेरपि ध्रुवत्वमित्याह—तस्यापीति।

---

पयोगिपर्णम्। तन्निष्ठो व्यापारः पतनरूपः, तस्यानाश्रयो वृक्ष इति तदेव ध्रुवं, एवं ग्रामात् गच्छतीत्यत्र ग्रामेऽवधित्व प्राप्त्याश्रयत्वे सति, तद्भिन्नावधित्वोपयोगि उत्तरदेशसंयोगानुकूलव्यापारानाश्रयत्वस्य सत्वेन ध्रुवत्वम्। कर्तुंश्च तादृश व्यापाराश्रयत्वान्न ध्रुवम्।

प्राचीन लक्षणे व्यापारानाश्रयत्वे सतीति पदोपादानंकर्तुंरवधित्व व्यावृत्यर्थं विशेष्यदलस्य कर्मणोर्व्यावृत्यर्थंग्रहणम्। नन्वेवं प्रधानधात्वर्थं व्यापारानाश्रयो ग्रामोऽप्यस्ति। तस्य ध्रुवत्ववारणाय व्यापारजन्य विभागाश्रयपदस्य ग्रहणम्। अनयारीत्या नवीन लक्षणेऽपि अवधित्वोपयोगमाश्रयत्वेसतीति पदोपादानं कर्म व्यावृत्त्यर्थंथ्। विशेष्य दले तदतिरिक्तावधित्वोपयोगिव्यापाराश्रयत्व पदोपादानं कर्तुर्व्यावृत्त्यर्थंम्। एतत् सर्वमभिप्रेत्य वाक्यपदीये प्रोक्तम्—अपाय इति। अपाये=विश्लेषे, विभाग करणक्रियायां यदवधिः उदासीनं=विश्लेषकारकक्रियाया अनाश्रयः (तटस्थः) सन् प्रधानीभूतां क्रियां नाश्रयते, न दधाति। तादृशावधिः चलं=क्रियाशीलं, अश्वजङ्गमादिर्यावत्, अचलं=स्थावरं ग्राम कुड्यादि (एतेन सक्रियं निष्क्रियं वोभयात्मकं ध्रुवं गृह्यते) अतदावेशात् प्रधानीभूत

---

अपाय का अर्थ है बिभाग में कारणीभूत क्रिया। उस क्रिया का जो आश्रय न हो और तटस्थ हो उसे अपादान कहते। इस प्रकार विभाग में कारणीभूत क्रिया का आश्रय न हो और विभाग का आश्रय अवश्य हो यह अवधि का लक्षण फलित हुआ। वृक्ष से पत्ती गिरती है" यहाँ पत्ती की अवधि का लक्षण वारण करने के लिए अन्तिम पद दिया, और" दौड़ते हुए घोड़े से चैत्र गिरता है" यहाँ पर अश्व धावन् क्रिया का आश्रय होते हुए भी विभाग में कारणीभूत पतन क्रिया का अश्व आश्रय नही है, किन्तु धावन् क्रिया का आश्रय है। इसी लिए लक्षण में प्रथम दल विष्लेश हेतु-इत्यादि कहा। लक्षण के पूर्ण सफलता कुड्य (दिवाल-) से गिरते हुए अश्व से गिरता है" इस वाक्य में है। यहाँ अश्व का विभाग जनक पतन क्रिया का आश्रय होते हुए भी कोई बिरोध नही है इसी

क्रियाया अनाश्रयः सन् ध्रुवमुच्यते । तदेव वैयाकरणैरवधिभूतमपादानं कथ्यते । चैत्रो अश्वात् पततीत्यत्र यस्मात्—अवधिभूतात् अश्वात्—घोटकात् असौ—कर्ता चैत्रः पतति । पततः—पतनशीलस्य चैत्रस्य, असावश्वः ध्रुवमेव, अपादानमेव, पञ्चम्यर्थएव । असौ चैत्रः कुड्डयातपततोऽश्वात् पततीत्यादौ तु अश्वकर्तृक पतनस्यावधिः कुड्डयम्, चैत्र कर्तृक पतनस्यावधिः पतनश्व इति । अत आह तस्याप्यश्वस्य पतने कुड्डयादिः ध्रुवमुच्यते ।

पूर्वोक्त ग्रन्थ व्याख्यानेनेदं निश्चीयते, यत् ग्रन्थसंदर्भेऽपादानत्वलक्षणं तु—विश्लेषहेतु क्रियानाश्रयत्वे सति विश्लेषाश्रयत्वं ध्रुवत्वम् । अस्मिन् लक्षणे विश्लेष पदस्य विभागोऽर्थः यतोहि विश्लेषणं—विभागकरणं, ( अपादानेघञ् ) तस्य हेतु भूताक्रिया चैत्राश्रयिका तस्या आश्रयोऽश्वो नास्ति । किन्तु चैत्राश्रयकोव्यापारः । कर्तुः ( चैत्रस्य ) यो विभागः तस्याश्रयस्तु अश्वोऽस्त्येव । तेन तत्र ध्रुवत्वं, वृक्षात् पर्णं पततीत्यत्रपर्णस्य ध्रुवत्व वारणाय सत्यन्तं पदं विश्लेषहेतुक्रियानाश्र यत्वे सतीति पदं दत्तम् । पर्णं तु वृक्षावधिकविभागस्य हेतु भूतक्रियाया आश्रयोऽस्ति । तत्रापादानत्वलक्षणं न घटते, अथवा धात्वर्थोपलक्षितोयो विभागस्तस्याश्रयत्वं ध्रुवत्वम् । अपादानसन्निधाने विभागोऽपि धात्वर्थे एव तस्याधारत्व स्वीकारेण करणादिकारके नातिव्याप्ति । प्रयागतः काशीं गच्छतीत्यादौ काश्याः अपादानत्व वारणाय यद्यपि धात्वर्थ विभागाश्रयत्वमुक्तम् । विभागस्य गम् धात्वर्थाभावात् न दोषस्तथापि परत्वात् कर्म संज्ञा प्रवर्तत इत्यपि वक्तव्यम् । अथवा धात्वर्थविभागसामानाधिकरणेऽपादानत्व शक्तिरिति बोधनाथ विशेष्यदलम् ।

---

लिए कहा कि "यस्मादश्वात् पतत्यसौ,, विभाग में कारणीभूत क्रिया का आश्रय न हो इस विशेषण देने का यही भाव है कि चैत्र में रहने वाली पतन क्रिया का आश्रय अश्व के न होंने से अश्व अबधि बना इसी प्रकार अश्व में रहने वाली क्रिया का आश्रय कुड्य के न होने से उसमें ध्रुवत्व का लक्षण गया इस प्रकार दोनों ध्रुव हों जाते हैं ।

उभयकर्मजविभागस्थले विभागस्यैक्यात्तद्विश्लेषजनकक्रियानाश्रयत्वाभावा-त्परस्परस्मान्मेषावपसरत इति न स्यादित्याशङ्क्य समाधत्ते—उभावपीति। मेषान्तरेति। यथा निश्चलमेषादपसरद्द्वितीयमेषस्थले निश्चलमेषस्यापसर-

---

लक्षणे विश्लेष हेतुरिति किमर्थम् ? यदि विभाग जनक क्रिया नाश्रयत्व मात्रमित्येवार्थः स्यात्, तर्हि धावतोऽश्वात् पततीत्यत्रअश्वः धावन्क्रियाया आश्रयोऽस्ति। तेन तस्मादपादान संज्ञा न स्यादतएव विश्लेष हेतुरिति पदं दीयते। तेनाश्वःधावनाश्रयः सन्नपि तत्र ध्रुवत्वं वर्तते। यतो हि विभाग हेतुभूतकिया पतनमस्ति न तु धावनम्, विभागकारणभूतायाः पतनक्रियाया अनाश्रयोऽश्वोऽस्त्येव। पतनस्याश्रायस्तु चैत्रोऽस्ति, तेनाश्वस्य अपादानत्व सिद्धिः। एतादृशस्यापादानस्य संसिद्धये ध्रुवत्व लक्षणान्तर्गतं यत् क्रिया नाश्रयत्वे इति पदं दत्तं तस्य विशेषणम्। विश्लेष हेतुरिति, फलं तु कुड्यात् पततो, अश्वात् पततीत्यत्र, अश्वस्य विश्लेषजनकक्रियाश्रयत्वेऽपि = विभाग कारणीभूत स्ववृत्तिपतनस्याश्रयः सन्नपि तदपादानं न विरुद्धम्। यतोहि अवधिलक्षणे तद् विश्लेषजनकक्रियानाश्रयत्वे सतीति पदं विभागाश्रय विशेषणमस्ति। अत आह—यस्मादश्वादिति। अनयारीत्या कुड्यात् पतत इत्यादावश्ववृत्ति विभागकारणीभूतक्रियायाः (पतनस्य) कुड्योऽनाश्रयः सन्नपादान संज्ञको भवति। एवं चैत्रस्थायाः क्रियायाः विभागजनकव्यापारस्य अश्वोऽप्यनाश्रयः। अतस्तत्राप्यपादान संज्ञा ज्ञायते। एतदेवाह तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते।

ननु परस्परान् मेषावपसरत इत्यत्र विश्लेष हेतुक्रियानाश्रत्वे सतीति लक्षणं न घटते। यतोहिद्वौ मेषौ परस्परमपसरतः; विभजतः; पृथक् भवतः, तत्र विभागो मेषद्वयक्रियानिष्ठः। यत्र एक एव व्यापारस्तदा-श्रयस्य मेषद्वयस्यापि अपसरण क्रियाश्रयत्वात् विश्लेष हेत्वनाश्रयत्वरूपं ध्रुवत्वं नास्ति। अस्यां परिस्थितौ विभागस्यैक्यात् = द्वयोरपसरतोः मेषयोः या अपसरणक्रिया सा एकैव। उभयकर्मज विभागस्थले = द्वयो मेंषयोरपस-रणस्थले विश्लेषकारणक्रियाया अनाश्रयाभावात्परस्परादित्यत्र

---

शङ्का—जहाँ उभयकर्मज = दो व्यक्तियों की क्रियाओं से जन्य विभाग रूप फल है, ऐसे स्थल में दोनों में विभाग रूप फल एक है दोनों में क्रियाएँ भी एक हैं। विश्लेष = विभाग को जन्म देने वाली क्रियाओं का आश्रय दोनों हैं; मुख्य क्रिया का अनाश्रय लक्षण का यह अंश न घटने से जहाँ दो भेड़ा एक दूसरे से

**न्मेषक्रियामादाय ध्रुवत्वं तथाऽत्रापि विभागैक्येऽपि क्रियाभेदादेकक्रियामादाय परस्य ध्रुवत्वमिति। तथा च विश्लेषाश्रयत्वे सति तज्जनकतत्क्रियानाश्रयत्वं तत्क्रियानाश्रत्वं तत्क्रियायामपादानत्व वाच्यम्। क्रिया चात्र धात्वर्थो न तु स्पन्दः। तेन वृक्षकर्मजविभागवति वृक्षाद्वस्त्रं पततीति संगच्छते।** पतति वाली क्रिया

---

ध्रुवत्वा भावात् अपादानेन न भवितव्यम्। एतद् समाधातुमाह, उभावपीति—उभौमेषावध्रुवौ (अनवधिभूतौ) विभाजिकायाः कियाया आश्रयोस्तः कथ पञ्चमीति सन्देहः। यद्यपि द्वयोर्मेषयोः कर्मजन्ययोः विभाग एकत्वविशिष्ट एव प्रतीयते। तथापि कर्त्रोर्भेदेन अपसरणक्रिययोः भेदात्। अतो विभागे=एकस्मिन् विश्लेषे प्रविभक्ते=पृथक् भूते एवविवक्षिते=द्वेक्रिये पृथक् व्यवस्थिते। मेषान्तरक्रियापेक्षं=प्रथम मेषस्य क्रियापेक्षया द्वितीय मेषो ध्रुवः (अवधिः) द्वितीय मेषस्य क्रियापेक्षया प्रथममेषो ध्रुवः स्वक्रियापेक्षे=मेषयोः स्व-स्वनिष्ठ क्रियापेक्षं कर्तृत्वमपि पृथकबृथगस्ति बोध्यम्। परस्य क्रियापेक्षया स्वस्मिन्नवधित्त्वम्। अत आह निश्चलमेषात्=यथास्थिरमेषादपसरतः=बृथक भवत, द्वितीयमेषस्थल निश्चल मेषस्य क्रियामादाय ध्रुवत्वम्। तथा च=व्यक्तिनिष्ठ क्रिया च विभागैक्येऽपि एकस्य क्रियामादाय अपरस्य ध्रुवत्वं स्थिरम्। उक्त वाक्यानुरोधेन ध्रुव लक्षणं क्रियते। विश्लेष इति। विश्लैषाश्रत्वे=विभागाश्रयत्वे सति तज्जनकः=विभाग जनकः सचासौ क्रिया च तत् क्रिया=तत्तद् व्यक्ति निष्ठ क्रिया। अर्थात् तत्तद् व्यक्ति निष्ठ क्रिया नाश्रत्वेन अपादानत्वं स्वीकर्त्तव्यम्।

---

अलग हो रहे हैं यहाँ (परस्परात्) में पञ्चमी असम्भव हो जायेगी। इसी शङ्का को उपस्थित करके समाधान— कारिका से करते हैं। दोनों भेष उमयकर्मज विभाग स्थल में ध्रुव ध्रूव (अवधिभूत) नही हैं क्यों कि दोनों भेड़ों का विभाग होने पर भी उनमें क्रिया व्यवस्थित है पञ्चमी में मेषान्तर से समाधान निश्चल अवधि भेड़ में रहने वाली क्रिया की अपेक्षा दूसरा भेष बनेगा, दूसरे भेष में रहने वाली क्रिया की अवधि प्रथम भेष में माना जायेगा। इस प्रकार क्रिया के पृथक्-पृथक् माने जाने से ध्रुवत्व भी पृथक-पृथक माना जायेगा और कर्त्ताओं के भेद से दोनो में क्रियाऐं भिन्न हुई। वस्तुतः क्रिया और विभाग में कोई भेद नही है, किन्तु कर्त्ता के भेद से अपनी-अपनी क्रिया की अपेक्षा अवधित्व कर्तृत्व के भिन्न-भिन्न होने से पञ्चमी होती है। उसी प्रकार से दीवाल से गिरते हुएघोड़े से गिरता है। इस वाक्य में भी पतन क्रिया निरूपित विभाग

**वस्तुतो नैतावत्पञ्चम्या वाच्यम्, किं त्ववधेर्लक्षणमात्रम्। द्वितीयार्थोक्तिरीत्या प्रयोगातिप्रसङ्गस्यासंभवेन वाच्यकोटौ प्रवेशस्य गौरवेणा संभवादिति**

ननु यत्र वृक्ष कम्पनेन विभाग उत्पद्यते। यथा—वृक्षात् वस्त्रं पतति, यत्र वृक्षकम्पनेन वस्त्रस्य पतनं जातम्। तत्र विभागकरणक्रियाश्रयत्व मस्ति। क्रियानाश्रयत्वाभावात्। कथमवधित्वम्। तदाह क्रिया चात्र=अत्र प्रसंगे क्रिया धात्वर्था ग्राह्या। प्रस्तुतधातुवाच्यैव तया भवितव्यम्। न तु स्पन्दः कम्पनंवा, वाक्ये तु यथा कथञ्चित् प्रतीयमानव्यापरेण कम्पनादीना वस्त्रं पतितम्। अत्र विभागकरणक्रिया=स्पन्दन क्रिया, तस्या आश्रयोवृक्षः धातुवाच्या तु पतनक्रिया। वृक्षः तस्यानाश्रयोऽस्त्येव। स्पन्दनं तु प्रत्यक्षमस्ति। न तु शब्दजन्यबोध विषयः धातु वाच्य इति। कथमपादान संज्ञया भवितव्यम् वृक्ष कर्मज विभागवत् वस्त्रे वृक्षात् वस्त्रं पतति उदाहरणं दत्तम्। भिन्नरीत्या अपादानत्वं तत्र। पञ्चम्याः विभागे आश्रये च शक्तिः। अत एव त्यजिगम्यो र्न पर्यायिता। तेन विशुद्धमपादान लक्षणमुच्यते। तद्विश्लेषानाश्रायत्वे सति विश्लेषजनक तद्धात्वर्थ क्रियानाश्रयत्वं तत्क्रियायामपादानत्वं तदेव पञ्चम्यर्थः।

पूर्वोक्त लक्षणकमपादानं (न पञ्चन्याः वाच्यम्) वाच्यतावच्छदके गौरवात्। अतो ग्रन्थकारेणोच्यते वस्तुतइति--किन्त्ववधेः=अपादानस्य लक्षणमात्रं=परिचायकमात्रधर्मः। अवधेस्तात्पर्यग्राहकमितिभावः। ननु विभागाश्रययोर्वृक्षपर्णयोः पर्णस्यापि पञ्चम्यापत्तिः विभागाश्रयत्वात्। तदाह--द्वितीयार्थोक्तिरीत्या--यथाकर्म संज्ञायांमीप्सितानीप्सितयोर्नद्वितीया वाच्यत्वम्। किन्तु कर्मलक्षण (परिचायक) मात्रमस्ति। एवमवधेर्लक्षणे तद् विश्लेष हेतुक्रियानाश्रयत्वादिपदंपरिचायक मात्रपरम्। तेन प्रयो-

के एक होने पर भी क्रिया भेद से अवधि में भी भेद मानकर एक दूससे में ध्रुवत्व सिद्ध होता है। और भी विभाग का आश्रय होते हुए विभाग जनक क्रिया का आश्रय न होकर उस क्रिया का विभाग जहाँ से शुरूहो उसको—अपादान कहते हैं। यहाँ पर क्रिया धातु का अर्थ रूप में लेनीं चाहिये। स्पन्द (कम्पन) मात्र क्रिया नहीं परन्तु वृक्ष कर्मज = वृक्ष में कम्पन क्रिया से उत्पन्न जो विभाग उससे विभक्त वस्त्र के होने पर वृक्ष से वस्त्र गिरता है यह प्रयोग भी होने लगेगा। विभाग की अवधि वृक्ष भले ही हो किन्तु प्रयोग में प्रयुक्त पतन की अवधि वृक्ष नही है। यहाँ वस्त्र के पतन में स्पन्दन कारण है वृक्ष नही।

क्योंकि कर्ता का अध्याहार कर लिया जाता है।



तु प्रतिभाति। न चैवमपि वृक्षात्स्पन्दत इति स्यादिति शङ्क्यम्। [1]आसनाच्चलित इतिवदिष्टत्वात्। एतेन पञ्चमीजन्यापादानत्वबोधे सकर्मकधातुजन्योपस्थितेर्हेतुत्वमिति समाधानाभासोऽप्यपास्तः।

---

गाति प्रसङ्गस्य—पर्णादौ अतिव्याप्तिदोषस्य असम्भवेन—विश्लेषहेतु क्रियानाश्रयत्वयोरवाच्यत्वेनदोषाभावेन वाच्यकोटौ—लक्षणस्य वाच्यार्थेऽप्रवेशेन। प्रवेशे तु गौरवात्। अति प्रसङ्गसम्भवाच्च। लाघवात् बिभागमात्रं पञ्चम्यर्थः। अवधित्वञ्च अखण्डोपाधिः निर्धर्मकत्वं विशेषण विहीनता। प्रकृत्यर्थस्य (वृक्षस्य) अवधावभेदेनान्वय; अवधेश्च स्वाश्रयत्व सम्बन्धेन क्रियायामन्वयः। अत एव ग्रामं पतति पतङ्ग इतीष्यते। ग्रामस्याधोदेशसंयोगादवधेरखण्डोपाधित्वस्वीकारे शक्तिः कारकं शक्तिमत् कारकञ्च पूर्वमुक्तं वर्तते। तत्रशक्ति कारकं पक्षे प्रयागात् काशी गच्छतीत्यत्रप्रयाग पदोत्तर पञ्चम्याः अवधिरर्थः प्रयागस्य प्रत्ययार्थविधौ अभेदेनान्वयः। तस्य स्वनिष्ठावधित्व निरूपकतया व्यापारेऽन्वयः। प्रयागः भिन्नोयोऽवधिस्तन्निष्ठावधितानिरूपिका काशीनिष्ठोत्तरदेशसंयोगानुकूलश्चैत्र कर्तृको वर्तमान कालिको व्यापारः। शक्तिः कारकं पक्षे प्रयागपदार्थस्य निष्ठत्व सम्बन्धेन पञ्चम्यर्थावधौअन्वयः, तस्य व्यापारेऽन्वयः। प्रयागनिष्ठावधित्वनिरूपकोत्तरदेश संयोगानुकूला काशी कर्मकश्चैत्र कर्तृको व्यापार इति बोध्यः।

---

वस्तुतः विश्लेश हेतु और क्रिया का अनाश्रय जो लक्षण में कहा गया हैं वह पञ्चमी का वाच्य अर्थ नही हो सकता किन्तु अवधि का लक्षण = परिचय कराने वाला धर्म है। जैसे—द्वितीयार्थ कारक के लक्षण में ईप्सित और अनीप्सित कहा गया हैं किन्तु वे वाच्य अर्थ में ग्राह्य नही है।

किन्तु ईक्षण का परिचायक मात्र धर्म है। इसीं प्रकार पञ्चमी के वाच्यार्था कोटि में उक्त लक्षण का प्रवेश करने से गौरव होगा और प्रयोगातिप्रसंङ्ग—विभागाश्रय मात्र पञ्चमी का अर्थ मानने से पर्ण भी विभाग का आश्रय है उसमें भी पञ्चमी का अति प्रसंङ्ग दोष हो जायेगा। द्वितीया असम्भव होगी इसलिए अवधि का लक्षण नही है। यदि विभागाश्रय को अवधि मानने हैं तो वृक्षात् स्यन्दते वृक्ष जल चू रहा है इस वाक्य में विभाग का आश्रय वृक्ष के होने से पञ्चमी हो जायेगी ? हो जायइष्ट ही है। जैसे आसनात् चलित, राज्या चलितः प्रयोग की तरह अभिष्ट ही है। चल

वृक्षात् त्यजति - प्रयोग होना चाहिये।
वृक्षं " - ठीक है।





**न चैवमपि वृक्षात्त्यजतीति दुर्वारम्। कर्मसंज्ञयाऽपादानसंज्ञाया बाधेन पञ्चम्यसंभवात्। भ्रमात्कृते तथा प्रयोगे यदि बोधाभावोऽनुभवसिद्धस्तर्हि।**

न चैवं विभागाश्रयस्यावधेरपादान संज्ञा नियामकत्वे वृक्षात् स्यन्दते जल विन्दुः। यत्र वृक्षः विभागाश्रयत्वे न पञ्चम्यन्त प्रयोगः सम्भाव्यते? इति सन्देहः। परमते तु स्यन्दनस्य (क्षरणस्य) द्रवद्रव्य कर्मकाधोदेश संयोगानुकूल व्यापारः न तु विभागः; अतो न पञ्चमी। ग्रन्थकारमते तु तत्र पञ्चमीष्टैव। यथा—आसानाच्चलितः, रांज्याच्चलितः। यथा–चल धातोः विभागानुकूल व्यापारोऽर्थः (राज्यावधिक विभागानुकूल व्यापाराश्रय इति वाक्यार्थः)। एवं स्यन्द धातोरपि विभागानु कूलार्थं विवक्षा चेत् तदाश्रय-त्वेन वृक्षस्यापि अपादानत्वं बोध्यम्। एतेन=पूर्वोक्त पञ्चम्यर्थं विवरणे राज्याच्चलितादि प्रयोगोऽपादानेन पञ्चमीजन्यापादान बोधे=पञ्चम्यर्था-वधि निर्णये सकर्मक धात्वर्थं ज्ञानं कारणमिति यदुक्तवन्तः ते परास्ताः। समाधानाभासत्वात्। यद्येतत् कार्यकारण भावानुरोधेन समाधानं स्यात्, तर्हि वृक्षात् स्यन्दत् इत्यादि प्रयोगो न सिद्धयेति। नागेशमते तुकम्पन मात्रार्थकः स्यन्द धातुः। न विभागानुकूलार्थक इति। वृक्षात् स्यन्दत इत्या-निष्टमेव। प्राचीन मतेत्विष्टमेव।

न चैवं=धात्वर्थविभागाश्रयस्यापादान संज्ञा स्वीकारे "वृक्षात् स्य-न्दते" इतिवत् वृक्षात् त्यजतीति प्रयोगो दुर्वारः। वृक्षावधिक त्यजनार्थं-कस्य सत्वात्। वृक्षस्य च त्यजर्थ क्रियाजन्य विभागाश्रयत्वमस्ति। कथन्न पच्चमी? एवं तदा भवितुमंर्हति, यदा कर्म संज्ञया बाधो न स्यात्। प्रबलं कर्मत्वमपादानत्वं बाध्यते। अतो वृक्षं त्यजतीत्येव भवति। यदि भ्रम-वशात् त्यजतीति प्रयुज्यते वृक्षावधिक त्यजनरूपार्थविषयकबोधस्या-भावो, यद्यनुभव सिद्धः। अर्थात् त्यजधातोः पंतत्यर्थे शक्तिभ्रम दशायां वृक्षात् पर्णं त्यजतीति माभूदेतर्थम्। पञ्चमी जन्या अपादान बोधे त्यज-धातुभिन्न धातुजन्योपस्थिति कारणं मन्तव्यम्।

---

धातु का विभाग जनक क्रिया अर्थहोने से आसनात् में पञ्चमी ऐसे ही स्यन्द का भी विभागनुकूल क्रिया ही अर्थ हैं तो वृक्ष भी विभागाश्रय हुआ। एतेन =पूर्वोक्त युक्तियों से जो लोग पञ्चमी जन्य अपादान संज्ञा के बोध में सकर्मक धातु से जन्य फल और व्यापार की उपस्थिति को कारण मानते थे वे परास्त हो गये उनका समा-धान मृगमरिचिका मात्र है वास्तविक नही।

पञ्चमी से यदि अपादान होगा तो त्यजादि भिन्न धातु होगी। यदि त्यजादि धातु होगी तो द्वितीया हो जायगी।



**पञ्चमीजन्यापादानत्वबोधे त्यजादिभिन्नधातुजन्यबुद्धेर्हेतुत्वं वाच्यम्। बलाहकाद्विद्योतते विद्युदित्यादौ निःसृत्येत्यध्याहार्यम्। रूपं रसात्पृथगित्यत्र तु बुद्धिपरिकल्पितमपादानत्वं द्रष्टव्यम्। पृथग्विना इति पञ्चमी वा।**

---

न च बलाहकाद् विद्योतते विद्युत् इत्यत्र विभागार्थक संकेतस्याभावेन अवधेरभावात् कथं पच्चमीति वाच्यम् (वलाहकानां धूमज्योति सलिल मरुतां समूहो मेघः तत्र विद्युत चकास्तीतिप्रतीयमान काले विभागार्थस्य प्रतीतिर्न जायते। अवधे र्विविक्षापि नभवितुमर्हति। कथं पच्चमी) अतआह निः सृत्य इति अध्याहार्यम्। तेन निरूपसर्गकसृधातोः निस्सरणपूर्वक विद्योतनमर्थः। विद्योतनरूपधात्वर्थे विशेषणीभूता निरस्सरणक्रिया विभागस्तदपेक्षया। अतः बलाहके विभागावधित्वविवक्षायां पच्चमी भवति। यदा निस्सरण पूर्वक विद्योतने धातोः शक्तिः तदा तत्र सप्तमी बलाहके विद्योतते विद्युदिति।

एवं रूपं रसात्पृथगित्यत्र रूप पदार्थे विभाग पूर्वक संयोगानुकूल व्यापार पूर्वक निस्सरण क्रियायाः बाधेन रूपं रसात् पृथगिति प्रयोगोनुपपद्यते। तस्मात् बौद्ध संलेषोग्राह्याः। अर्थात् बुद्धकल्पितमपादानत्वं ग्राह्यम्। अर्थात् बौद्धो यो विश्लेषः तज्जनकरुपाश्रयकः बौद्धः। व्यापारः कल्पनीय, एतादृश कल्पनायां भवत्यपादानत्वंमथवा पृथग्योगे "पृथक् नाना" सूत्रेण पच्चमी एतत् (आरोपित) विभागावधित्वकल्पने मानम्।

---

न कहिए विभागश्रय को पञ्चमी स्वीकार करने पर–त्यज वृक्षात्यजति जो वाक्य नहीं बनना चाहिये वह दुर्वार हो जायेगा त्यज में विभाग है जिसका आश्रय वृक्ष है, पञ्चमी का करण कैसे ? त्यज धातु के योग में कर्म संज्ञा का बाध हों जाने से वृक्ष में पञ्चमी विभक्ति असम्भव होगीं। यदि भ्रमसे वृक्षात्त्यजति का प्रयोग हो गया हो और वास्तविक बोध जा अभाव अनुभव सिद्ध हो, तो पञ्चमी जन्य अपादान संज्ञा के ज्ञान में त्यजधातु ये भिन्न धातु से उत्पन्न जो ज्ञान उसे कारण मानना चाहिए। यदि यह कहिये कि वलाहक में पञ्चमी बोध के लिये कोई धातु जन्य उपस्थिति नही है पञ्चमी कैसे ? तो वहा निःश्रित्य का अध्याहार करना चाहिये उससे वलाहक विभाग का आश्रय हैं जायगा, रुप रसात् पृथक्" यहा रसात् में पञ्चमी (अवधि) सिद्ध करने के लिए वृद्धि में परिकल्पित विभागाश्रय रुप अपादान संज्ञा को देखना चाहिए या पृथग विना नाना सूत से पञ्चमी समझना चाहिये। यह तीन प्रकार का है वाक्यपदीय से प्रमाणि हैं **निर्दिष्ट** हैं विषय = विभागाश्रय (अवधि) जिसकी उसको निर्दिष्ट विषय कहते है। जिसकी साक्षात् धातु से गति निर्दिष्ट हो।

**इदं च—**

**निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।**
**अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते ॥**

**इति वाक्यपदीयात्त्रिविधम् । यत्र साक्षाद्धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयम् । यथा-अश्वात्पतति । यत्र धात्वन्तरार्थाङ्गः स्वार्थं धातुराह, तदुपात्तविषयम । यथा-बलाहकाद्विद्योतते । निःसरणाङ्गे विद्योतने द्युतिर्वर्तते । अपेक्षितः क्रिया यत्र तदन्त्यम् । यथा-कुतो भवान् पाटलिपुत्रात् । अत्राऽऽगमनमर्थमध्याहृत्यान्वयः कार्यः ।**

---

इदं त्रिधा अनुभूयते । यथा—निर्दिष्ट विषयं = निर्दिष्टाः साक्षात् धातुना उपदिष्टो गतिः विषयो परिचायकोऽर्थोयस्य तत् वृक्षात् पतति पत् धातुना गतिः साक्षादुपदिष्टोऽस्ति । वृक्षात् पतति, प्रयागात् काशीं गच्छतीत्यादौ साक्षाद् विभागाश्रयत्वमुपदिष्टं वर्तते ।

किञ्चिदुपात्तविषयम्—उपात्तः स्वस्मिन् निवेशितः धात्वन्तरस्य = अन्याधातोरर्थः स्वस्मिन्नङ्गीकृतः, गर्भायितः, विषयोऽर्थः स्वाङ्गतया स्वीकृतोऽर्थोयस्मिन् तदुपात्त विषयम् । अर्थात् अन्यधातोरर्थः स्वस्मिन् विशेषणं कृत्वा क्रिया रूपमर्थं बोधयतीत्यर्थः । यथा बलाहकात् विद्योतते विद्युत अत्र द्युतधातु निःसरण पूर्वक विद्योतनार्थे, दीप्त्यर्थे शक्तिमनुभूयते । अर्थात् बलाहकात् निःसृत्य विद्युत विद्योतते । अत्र निःसरणक्रिया द्युत् धातौ गर्भायिता वृक्षे सन्निविष्टा बलाहकावधिकं निःसरण पूर्वकं विद्युतकर्तृकं वर्तमान कालिकं विद्योतनं (दिप्तिः)। इदमुपात्त विषयापादानस्योदाहरणम् ।

अपेक्षितक्रियं = अपेक्षिता = धातोरग्रहणेऽपि आकाङ्क्षाविषयीभूताक्रिया अर्थात् गम्यमाना (आकाङ्क्षिता) क्रिया कारकविभक्तौ प्रयोजिका यस्य तत् यथा—कुतो भवान् पाटलिपुत्रात् आगमनक्रियामध्याहृत्य अर्थादागतोस्मि इत्याध्याहृत्यवाक्ये गम धातुः गृहीतो नास्ति, किन्तु तस्य क्रिया आकाङ्क्षाविषयिणी भूतास्ति । सा गम्यमाना प्रतीयमानाक्रिया उच्यते सैवकारक विभक्तौ हेतु भूतास्ति, तामाश्रित्य पाटलिपुत्रादित्यत्र पञ्चमीति अपेक्षितक्रियमपादानम् । "स्पृहेरीप्सितः" इति सूत्रवलात् शब्दाध्याहारः क्रियार्थोपपदस्येति सूत्रबलादध्याहारः । इति पञ्चमी

---

जैसे– घोड़े से गिरता है' यहा पतन क्रिया साक्षत् धातु से निर्दिष्ट है पतन की अवधि अश्व के होने से निर्दिष्ट विषयक हुआ ।

20

उद्देश्यश्चतुर्थ्यर्थः। तथा हि—संप्रदाने चतुर्थी। तच्च "कर्मणा यमभिप्रैति स संप्रदानम्" इति सूत्रात्कर्मणा करणभूतेन यमभिप्रैति ईप्सति तत्कारकं संप्रदानमित्यर्थकादुद्देश्यः। इदमेव शेषित्वम्। तदुद्देश्यकेच्छाविषयत्वं च शेषत्वमित्येव पूर्वतन्त्रे निरूपितम्। अत एव "प्रासनवन्मैत्रावरुणाय दण्डप्रदानम्" [अ० ४ पा० २ अधि० ६] इत्यधिकरणे क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति विहितं दण्डदानं न प्रतिपत्तिः, किन्तु चतुर्थीश्रुत्याऽर्थकर्मेति तत्र निर्णीतम्। रजकाय वस्त्रं ददातीत्यपि खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति भाष्योदाहरणादिष्टमेव। वृत्तिकारास्तु सम्यक्प्रदीयते यस्मै तत्संप्रदानमित्यन्वर्थसंज्ञया स्वस्वत्वनिवृत्तिपर्यन्तमर्थं वर्णयन्तो रजकस्य वस्त्रमित्येवाऽऽहुः।

---

उद्देश्यश्चतुर्थ्यर्थः, कः 'इत्याकाङ्क्षायामुद्देश्योर्थः। तत्तद्धात्वर्थं यत् फलं तदाश्रयनिष्ठं फलसाधकत्वेन इच्छाविषयत्वमुद्देश्यत्वम्। चतुर्थ्यर्थ शब्देन कारक चतुर्थी ग्राह्या, नतूपपदचतुर्थी भिन्नार्थत्वात् क्रियान्वयित्वाभावात्। सम्प्रदाने चतुर्थीति सूत्रात् सम्प्रदानवाचकेऽर्थे चतुर्थीविधान कारणात् सम्प्रदानं तद् धात्वर्थ कर्मत्वप्रकारिकाया इच्छाया उद्देश्यत्वरूपम्, अर्थात् धातोरर्थभूतं यत् फलं तस्याश्रय एव प्रकारोविशेषणं यस्या सा एतादृशाः इच्छायाः यः उद्देश्यः कामनाविषय इत्यर्थः। यथा—धार्मिक विप्रायगां ददाति इत्यत्र दा धातोरर्थ भूतं फलम्, 'अयंविप्रः गोमान् भवतु' इति रूपं तस्याश्रयो गौः (गोमान् भवने गौरेवे हेतुः) सास्ति यस्या सा स्वस्वत्वनिवृत्ति पूर्वक परसत्वोत्पत्तिरूप फलाश्रयत्वप्रकारिका इच्छाप्यस्ति तस्यां गोवृत्तिदानकर्मत्वं विशेषणरूपेण न भासते यस्मिन् क्षणेऽयंविप्रः गोमान् भवतु इति इच्छा जागर्ति तस्मिन्नेवकाले इयं गौः मम स्वत्वनिवृत्ति

---

२—दूसरे धातुओसे उपात्त=गृहीत हो अवधिका विषय जिसमें उसे उपात्त विषय कहते है। जैसेः—यथा—बादल से बिजली चमकती है यहा निःश्रित्य का अध्याहार होता हैं। यहां धात्वन्तर अन्य = धन्तु निःशरण हैं। उसके अर्थको अपना अङ्ग बनाकर विद्योतन क्रिया अपने अर्थ को कह रही है अतः इसको उपात्त विषय मानते हैं।

३—अपेक्षित क्रिया हो जहाँ उसे अपेक्षितक्रिया कहते हैं। जैसेः—आप कहा से ! पाटलिपुत्र से। यहाँ को धात्वन्तरबोध में क्रिया अपेक्षित हैं इसलिए आगमन रुप अर्थ का अन्वय करके पञ्चमी का विधान किया जाता है। इति पञ्चमी।

पूर्वक परसत्वोत्पत्याश्रया भवतु इति इच्छाऽपि जायते। यदा गौः कर्म संज्ञको भवति तदा फलाश्रत्व प्रकारिका इच्छा 'अयं विप्रः गोसान् भवतु' तस्या उद्देश्योविप्रइति स एव सम्प्रदान संज्ञकः। सम्प्रदान बोधकपदात् चतुर्थी जायते। अतः क्रियाया यत् कर्म तत् सम्बन्धेनोत्पन्नं यत् फलं तदाश्रयत्वेन इच्छायाःविषयत्वमुद्देश्यत्वम्।

यदि कामना विषयत्वमुद्देश्यत्वमुच्यते। तर्हिः गौरित्यत्रापि कामना विषयत्व सत्वात् अतिव्याप्तिःस्यात्। कर्मणोऽपीच्छा विषयत्वात्। तस्मात् सम्प्रदानलक्षणे प्रमाणं प्रस्तूयते। कर्मणा इति। करणभूतेन कर्मणा (गवा) राजादिः कर्ता यं (पुरुषं विप्रं वा) अभिप्रैति=सम्बद्धं वाञ्छति तत् कारकं सम्प्रदानसंज्ञं भवतीत्यर्थे कर्मसंज्ञाविशेषणकेच्छोद्देश्यत्वरूपं सम्प्रदानं लब्धम्। यथा—धार्मिकः गोरूपकर्मणा सह विप्रं सम्बन्धुमिच्छधि "अयं विप्रः गो वृत्तिधनत्वसाधक स्वामित्ववान् भवतु" गोरूप धनेन धनवान् भवत्वित्यर्थः। अत्रोद्देश्यो (विशेष्य) विप्रोऽस्ति, तत्रैवोद्देश्य-ताख्या विषयताऽपि वर्तते। एवं सूत्रानुसारं कर्मत्वप्रकारकेच्छोद्देश्यत्वं सम्प्रदानत्वं सिद्धम्; फलितञ्च।

ननु चैत्रो ग्रामं गच्छतीत्यत्रगमनक्रियायाः कर्म ग्राम इति। ग्राम सम्बन्धितं सुखं मे जायतामितीच्छा वर्तते चेत् तर्हि गमनक्रियायाः कर्म ग्रामः। तस्य सयोगसम्बन्धेनजन्यं यत् सुखं, तत् फलाश्रयता मित्रेऽपि वर्तते। इच्छाविषयत्वसत्वेन सम्प्रदानसंज्ञा प्राप्नोति। तन्नग्राम संयोग जन्यं सुखं तु स्वाभाविकमस्ति। नतु शब्द वाच्यम्। करणत्वञ्च सम्बन्ध क्रियापेक्षम्; उद्देश्य वृत्ति फलस्य धात्वर्थफलद्वारैव कर्मरूप कारण जन्य-स्यापेक्षणात्। ग्राम जन्य सुखं तु धात्वर्थफलद्वारा जन्यं नास्ति। एवं यः धात्वर्थ कर्मकारकादुत्पन्नकर्मशालि तत् सम्प्रदानमिति सूत्रार्थं।

---

चतुर्थी विभक्ति का उद्देश्य अर्थ है सम्प्रदाने चतुर्थी का विधान है उस सम्प्रदान में कर्म विशेपण है, वह इच्छाका विषथ भी है वही उद्देश्य है जैसे–विप्र को गाय देती हैं' यहाँ विप्र ही गोदान में इच्छा का विषय बन रहा है जहाँ अपने अधिकार की वृत्ति अन्य के अधिकार के उपलब्धि। जहां कर्म हो विशेषण जिस इच्छा के उद्देश्य में उसको सम्प्रदान संज्ञा होती है इसी अर्थ में उद्देश्य का प्रयोग है इसको ही शेषित्व कहते हैं।

विप्राय गां ददातीत्यादौ परस्वत्व जनकः (अन्यस्याधिकारसाधक) स्वस्वत्वध्वंसकः = आत्मनोऽधिकारनिवर्तकः स्वेच्छात्मकस्त्यागः तदा दा धात्वर्थः यमुद्दिश्य त्यागो विधीयते, सोद्देश्यः गोवृत्ति परस्वत्वजनक = गवि यस्याधिकारोत्पादकः स्व स्वत्वध्वंसानुकूलः = स्वाधिकारच्युतिजनको विप्रः स्वभिन्नोद्देश्यकस्त्यागः। गोवृत्तिस्वत्वरूप फलभागिताया इच्छायाः विषयो विप्रः, तत्रोद्देश्यत्वम्। एवं वृक्षायोदक मासिञ्चतीत्यत्र, उदके विद्यमाना सिञ्चन क्रिया तया जन्यं यत् संयोग रूपफलं, तत्फल शालितया इच्छायाः विषयो वृक्षः। एवं शिष्याय चपेटां ददातीत्यत्र चपेटायां विद्यमाना दानक्रिया तया उद्भूतं यद् दुःख रूपं फलं, तत् फलभागितया इच्छाविषयः शिष्यः तस्य सम्प्रदानत्वम्। चपेटा संयोगजन्यदुःखाश्रयो भवतु शिष्यः। इतीच्छाविषयः। रजकाय वस्त्रं ददातीत्यत्र दाधातोः नाशानुकूलाधीनीकरणमर्थः। वस्त्रानिष्टं यन्मलं तस्य नाशप्रक्षालनरूपं फलसम्बन्धे रजकः भृतिमान भवतु, इतीच्छया भृति रूपफलाश्रयत्वेन सम्प्रदानत्वम्।

मीमांसकास्तु इदमेव = धातोरर्थभूतायाः क्रियायाः यत् कर्म तत्र स्थितं यद् धात्वर्थफलं तस्य सम्बन्धेनोत्पन्नफलाश्रयकत्वमिच्छाविशेष्यत्वमेव। शेषित्वं = चतुर्थ्यर्थत्वं सम्प्रदानत्वमुक्तम्। स्वं विशेष्यत्वरूपं शेषित्वं विप्रे वर्तते। तदुद्देश्यकेच्छाविषयत्वं = विप्रोद्देश्यकेच्छा विषयत्वं

अपरे तु—विजातीय त्याग जन्य (गोविप्रभिन्नोविजातीयः, तद्द्वारा त्यागो दानं तज्जन्यम्) फलशालितया उद्देश्यत्वं सम्प्रदानत्वं चतुर्थ्यर्थं। उक्तवाक्ये त्यागजन्यफलभागित्वस्य विशेष्यतावान् ब्राह्मणोद्देश्यताक गोविषयक त्यागाश्रयः। नैयायिक मते—दा धातोरर्थदानन्तु पर सत्वेच्छाधीन स्वस्वत्व ध्वंसेच्छा त्याग इत्यर्थः। दानमिति मतेन स्वस्वत्वध्वंसावच्छिन्न त्यागो ददात्यर्थः। इयं गौ पर (विप्र) निरूपित स्वत्ववती भवतु, इतीच्छाधीनस्वस्वत्वध्वंसेच्छा जाता। अर्थात् अस्यां गवि मदीय स्वत्व ध्वसो जायतामितीच्छा प्रयोज्य त्यागो धात्वर्थः।

---

शेष = विशेषण कर्म हैं कर्म रुप शेष हो जिसमें उसे शेषी = उद्देश्य संम्प्रदानको कहते मीमांसा के पूर्वतन्त्र में कहा गया है कि तदुद्देश्यक = विप्रआदि उद्देश्य हैं जिसके ऐसी जो ईच्छा का विषय उसे शेषी कहते हैं इसलिए प्राशन (भोजन करते हुए या पीते हुए मैत्रावरुण के लिए दण्ड प्रदान किया जा रहा है।

शेषित्व पदेन, पूर्वं तन्त्रे = पूर्वं मीमांसायां चतुर्थाध्यायस्य द्वितीय पादे षष्ठाधिकरणे सम्प्रदानोद्द्श्यिकेच्छा विशेष्यमुक्तम्। यथा–अयं विप्रः गोवृत्ति स्वाधिकारसाधको भवतु। इतीच्छायाः विषयत्वं गवि वर्तते। तेन गौरिति शेषः। एवं निरूपितं तत्र विप्रस्तु शेषी भवति। शेषः = गौरस्ति, अस्येति। इदं शेषित्वमर्थं कर्मणः प्रयोजकं = अत्र प्रमाण प्राशनवन्मैत्रा वरुणाय दण्डप्रधानम्। अस्मिन्नधिकरणे सोमलतायाः क्रयणान्तरं मैत्रा वरूणाय दण्डं प्रयच्छति। अस्मिन् वाक्ये विहितं दण्डदानं नहिप्रतिपत्ति कर्म। किन्तु चतुर्थीश्रुत्यार्थ कर्म इत्थं पूर्व मीमांसायां निर्धारितम्। तत्राग्निष्टोम यागप्रकरणे "नीताषु दक्षिणासु कृष्णविषाणं चत्वाले प्रास्यति। अयं भावः यदा यजमानः ऋत्विजे दक्षिणामददात्। ऋत्विजश्च दक्षिणां गृहीतवन्तः। तदा यजमानः यज्ञे शरीरस्या कण्डूयनार्थं स्वहस्ते गृहीतं कृष्णमृगश्रृंगं चत्वालसंज्ञकयज्ञगर्ते निक्षिपति। तदा इदं प्राशनम्।

सप्रयोजनं भूत्वा अर्थं कर्म उच्यते। एवं मैत्रा वरुणाय दण्डं प्रयच्छतीति श्रुतिवाक्ये दण्डदानमर्थः कर्म। दण्ड ग्रहणोत्तर दण्डी प्रैषान्वाह प्रैषान् = प्रैषनामाख्यान् मन्त्रानस्यां श्रुतौ प्रैष मन्त्राणां प्रवचनरूप प्रयोजन वशात्। इदं दण्ड प्रदानमर्थं कर्म। प्राशनवद्बोध्यम्। अर्थ कर्म उपयोक्ष्यमाणः संस्कारः। अर्थात् करिष्यमाणोपयोगस्य वस्तुतः उपयोगात् पूर्वं क्रियमाणोऽदृष्ट जनकः संस्कारः विशेषः। भावि कालात्मकः। भूतकालिकस्तु प्रतिपत्ति कर्म, यथा—यदा क्रीतो सोमः तथा च मैत्रा वरूणाय दण्डः प्रयच्छति। तदा दण्डदानं प्रतिपत्ति कर्म। अर्थात् उपयोगकृतस्य वस्तुनोऽदृष्टजनकः संस्कारविशेषः :

---

इस अधिकरण में खरीदे गये सोमरस ( मदिरा ) का प्राशन करने पर ( अपराधजन्य ) दण्ड मैत्रा वरुण को देते हैं यहाँ विधान किया गया इच्छा के विषय बनने से प्रतिपत्ति ( यज्ञ में प्रयुक्त पात्र को प्रतिपत्तिकर्म कहते हैं ) कर्म नही है किन्तु वाक्य में चतुर्थी विभक्ति का श्रवण होने से अर्थ कर्म का निर्णय उक्त अधिकरण में किया गया हैं। क्यों कि दण्ड दान में इच्छा का विषय मैत्रा वरुण ही हैं दा धातु के योग में कर्म का सम्बन्धजोड़ने के लिए इच्छा का विषय ही संप्रदान है इसलिए रजकाय ( धोबी को वस्त्र देते हैं ) यहाँ पर वस्त्र रूप कर्म कों सम्बन्धित करने के लिए इच्छा का विषय रजक रहा हैं। और खण्डितकोपाध्याय जी अपने शिष्य को चतेंटा दान कर रहे हैं चपेटा रूप कर्म से सम्बन्धित करने के लिए इच्छा

इदं च—

अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम ।
प्रेरणानुमतिभ्यां च लभते संप्रदानताम् ॥

ननु स्वस्वत्वनिवृत्तिपूर्वकपरसत्वोत्पादानं दा धात्वर्थश्चेत् तर्हि रजकाय वस्त्रं ददातीत्यादौ वस्त्रे स्वाधिकार निवृत्तिर्न दृश्यते । उक्तलक्षणं न संघटेत् । कथं चतुर्थी ? अत्र मलापकर्षणाय यत्कालिक स्वत्वस्येच्छा दा धात्वर्थः । अथवा पराधिनीभवनानुकूलव्यापारो दाधात्वर्थः अत्र स्वस्वत्वनिवृत्तिरर्थान्तरस्यापि, उपलक्षणं मन्तव्यम् । तेन किञ्चित्कालिकोऽअधीनीभवनानुकूल व्यापारोऽपि दाधात्वर्थः । उभयत्र सम्प्रदान संज्ञा सम्भविष्यति ।

अधीनोभवनानुकूलव्यापारे प्रमाणं प्रस्तूयते । खण्डिकोपाध्यायः = कक्षाध्यापकः, (कुद्धोपाध्यायः बालकोपाध्याय इति वा) शिष्याय चपेटां ददाति । अत्र चपेटायाः संयोगानुकूल व्यापारो दाधात्वर्थः । करतल भागो = चपेटा, अयं शिष्यः चतेटावान् भवतु । चपेटा मद्वृत्तिव्यापारजन्य संयोगाश्रयो भवतु । एते द्वे इच्छेस्तः । तयोः संयोगरूप फलाश्रयत्वप्रकारक इच्छोद्देश्यत्वं वर्तते । चपेटायाः कर्मसंज्ञा तत् संज्ञकचपेटाप्रकारकः, इच्छोद्देश्यः शिष्यः । तेन तत्र सम्प्रदानसज्ञा जाता । चतुर्थ्यन्त प्रयोगश्च सम्पन्नः । अनेन भाष्य प्रयोगेण सिद्धयति । यत् उपलक्षणतया भासमानः । अन्य प्रकारेण भासमानो धात्वर्थ,योगेऽपि चतुर्थीष्टैव । अतः रजकाय वस्त्रं ददातीति प्रयोगोऽपीष्टैव ।

वृत्तिकार मते सम्यक् = स्वाधिकारनिवृत्तिपूर्वकं सम्प्रदीयते = परस्वत्वमुपपाद्यते, यस्मै तत् इत्यान्वर्थसंज्ञकं सम्प्रदानं बोध्यते । "कर्मणा यम्" सूत्रस्य स्वस्व = स्वाधिकारनिवृत्तिपूर्वकं मित्याद्यर्थं वर्णयन्तः । रजकस्य

का विषय शिष्य है। यहां संप्रदाने चतुर्थी हुई। इस भाष्य के उदाहरण से इच्छा का विषय ही मानना ईष्ठ हैं और अपने अधिकार की निवृत्ति पर सत्ता सी सिद्धि है यद्यपि दा धातु का अर्थ है किन्तु वह इच्छा का विषय अर्थ में उपलक्षण भी है। वृत्तिकार के मत में संप्रदाए संज्ञा के गुरुभूत होने से अन्वर्थ = शब्दार्थ का महत्व हो जाता है सम्यक् प्रदान किया जाय जिसके लिए उसको संप्रदान कहते हैं। स्व स्वत्व = अपने अधिकार की निवृत्ति दूसरे के अधिकार की उपलब्धि पर्यन्त अर्थ का वर्णन करते हुए रजकरणस्य वस्त्रम् यही कहा, चतुर्थी विधान नहीं किया क्यों कि वस्त्र में स्व-स्वत्व की विवृत्ति नहीं होती।

**इति वाक्यपदीयात्त्रिविधम्। "सूर्यायार्घ्यं ददाति" इत्याद्यं। नात्र सूर्यः प्रार्थयते, नानुमन्यते, न निराकरोति। प्रेरकं-"विप्राय गां ददाति"। अनुमन्तृ-"उपाध्यायाय गां ददाति"।**

---

वस्त्रमित्येवाहु। परन्तु भाष्यविरोधे सति अरुचिर्बोध्या। तदुक्तम्—ददाति दण्डं पुरुषो।

ददाति दण्डं पुरुषो महीपते न चाति भक्त्या न च दान काम्यया॥
यद्दीयते दानतया सुपात्रे तत् सम्प्रदानं कथितं मुनीन्द्रैः॥

परन्तु शिष्याय चपेटामित्युदाहरणेन नात्रान्वर्थसंज्ञा।

त्रिविधं सम्प्रदानं वर्धते। अनिराकरणात्कर्तुः कर्मणा ईप्सितं त्यागाङ्गं=दानांगविशेषणं कर्तुरनिराकरणात्=कर्मणा सह सम्बन्धुं यद्दानं तस्योद्देश्यः सम्प्रदानतां प्राप्नोति। यथा—सूर्यायार्घ्यं ददातीत्यत्र कर्तुरनिराकरणात्=प्रवृत्तिनिवृत्तिव्यापारशून्यत्वादप्रत्याख्यानात् सूर्योऽर्घ्यार्थं न प्रार्थनां करोति। न चानुमोदनं करोति, नचावरोधमुत्पादयति। प्रेरणा=प्रवर्तना दानेऽप्रवृत्तस्य इष्टसाधनतापि ज्ञायते इदं गो ग्रहणं तवेष्ट साधनं भविष्यतीति प्रेरयितृ सम्प्रदानम्। प्रेरयितुः=कर्तुःप्रेरणया कर्मं

---

यह संप्रनान तीन प्रकार का होता है। अतः संप्रदानता भी तीन तरह से लब्ध होती हैं। कर्ता के त्याग—दान का अंग भूत जो ईप्सित कर्म है इच्छा का ईप्सित कर्म यानि इच्छा का विषय संप्रदान संज्ञक हो और कर्त्ता का निराकरण न हो और कर्म के साथ सम्बन्ध करने के लिए जो दान का वियय होता है। जैसे—सूर्य के लिए अर्घ्य देते हैं, यहां पर दान का कर्म अर्घ्य है उसमें ईच्छा का विषय सूर्य हैं जो न प्रार्थना करते है कि मुझे अर्घ्य दो न अनुमोदन करते हैं न निराकरण करते है इससे संप्रदान का लाभ हो जाता हैं। प्रेरणा से भी संप्रदानता का लाभ होता है जैसे—"विप्राय मां दक्षति', यहाँ विप्र की प्रेरणा से गोदान हो रहा हैं। जहां अनुमति लेकर दान दिया जाय वहाँ भी सप्रदानता लब्ध होती है। यथाः—उपाध्याय के लिए गोदान करते हैं, यहाँ उपाध्याय से अनुमति लेकर दान किया जा रहा है वे तीनों सम्प्रदान वाक्यपदीय में प्रमाणित हुए।

**अत्र सर्वत्र—इस प्रकरण में या सभी स्थल में प्रकृति और प्रत्यय के अर्थ में अभेद सम्बन्ध होता है क्योंकि विभक्तियों का धर्मो अर्थ हैं धर्म शक्ति या विशेषण**

**अत्र सर्वत्र प्रकृतिप्रत्ययार्थयोरभेदः संसर्गः। विभक्तीनां धर्मिवाचकत्वात्। धर्ममात्रवाचकत्वे "कर्मणि द्वितीया" इति सूत्रस्वरसभङ्गापत्तेः। कर्मार्थककृत्तद्धितादौ तथा दर्शनाच्च। द्वितीयाद्यर्थकबहुव्रीहौ 'प्राप्तोदक' इत्यादौ धर्मिवाचकतालाभाच्च।**

---

जन्यफलाश्रयस्य इच्छोद्देश्यः कर्म "विप्रायगां ददाति"। अत्र कर्तुः श्रेष्ठिनः प्रेरणया गोवृत्तिधर्म कर्मजन्य फलाश्रयस्य इच्छोद्देश्यो विप्रः तेन तत्र चतुर्थी।

मा अनुमन्तुः स्वीकर्तुरनुमत्त्या (स्वाभिलषने स्वयं प्रवृत्तस्येष्टसाधनताबोधनं) दीयते, यस्मै तदनुमतिप्रयोज्यसम्प्रदानं, फलभागितया इच्छायाः विषय इत्यर्थः। यथा—उपाध्यायायगां ददाति, स्वीकारे उपाध्यायस्यानुमतिं गृहीत्वैव गो कर्मक फल भागितया इच्छायाः विषय उपाध्याय एवानुमन्ता (स्वीकर्ता) अत्रोद्देश्यताद्वयोरनुमतिप्रयोज्या तत् सम्प्रदानम्।

इदानीमिदं विचार्यते। यद्विभक्तीनामर्थः धर्मोऽस्ति, धर्मी वा। प्रथम धर्मी पक्षमादाय विचार्यते, ग्रंथकर्ता—अत्र=प्रसंगे सर्वत्र=कारक विभक्तिस्थले अथवा तत्तत् सूत्रविहितद्वितीयान्तप्रयोगेषु। यथा—द्वितीयाया अर्थः फलाश्रयः, इत्यनुभूयते। तत्र फलं धात्वर्थ आश्रय मात्रं शिष्यते। स एव द्वितीयाऽर्थः। एवं कर्तृकरणाधिकरणस्थलेष्वपि आश्रयार्थकता लभ्यते। एवमवधिः पञ्चम्यर्थः। उद्देश्यश्च चतुर्थ्यर्थः। सम्बन्धः षष्ठ्यर्थः एतेषु प्रसंगगतेषु कारकेषु विभक्त्यर्थेषु सर्वत्र वा या प्रकृतिः यः

---

हों जिसमें उसे धर्मी कहते हैं जैसेः—शक्ति-फल व्यापार-जाति-गुण ये सब धर्म है इनका आश्रय धर्मी है अतः इन विभक्तियों का धर्मी (आश्रय) अर्थ है।

यदि धर्म—शक्ति विशेषण मात्र वाचक स्वीकार करेगे तो कर्मणि द्वितीया सूत्र का स्वरस (निजी अर्थ) नष्ट होने लगेगा वहाँ कर्म अर्थ में द्वितीया का विधान सूत्र का स्वरस है। यदि कर्मत्व के द्वितीया करेंगे तो सूत्र का स्वाभाविक अर्थ बिगड जायेगा इस लिए धर्मी (कर्म) अर्थ मानना चाहिये। कर्मार्थक—कर्म अर्थ में जहाँ कृत् प्रत्यय तद्धित् प्रत्यय का धर्मी (आश्रय) अर्थ भी देखा गया है। पक्वः तण्डुलः यहां पर दो प्रातिपदिकों का अभेद संबन्ध होता है इसके लिए धर्मी वाचक मानना

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम्।

इति भाष्याच्चेति दिक्।

---

प्रत्ययो वा दृश्यते; तयोः परस्परमभेदः सम्बन्धो ग्राह्यः। तदाह—प्रकृति प्रत्ययार्थयोरभेद संसर्ग इति। अभेदः=अभेदात्मकः संसर्ग=सम्बन्धः विशिष्टबुद्धिनियन्त्रको धर्मविशेषो मन्तव्यः। अभेद सम्बन्ध जनकः प्रकृतिविशेषणक शाब्दबोधं प्रति सम्बन्धार्थकविभक्तिरूपप्रत्ययजन्योपस्थितिः कारणम्। यथा तण्डुलाभिन्नाश्रया विक्लित्तिः। चैत्राभिन्नाश्रयः कर्ता एवं कर्तृकर्मद्वारा क्रियाया आश्रयः=आधारः प्रकृत्यर्थेन सह प्रत्ययार्थस्याश्रयस्य अभेदोऽर्थः। यतो हि सर्वासां विभक्तीनां धर्मी वाच्यार्थः। अर्थवत् सूत्रे भाष्ये—एषां पदानां सामान्ये वर्तमानानां यदि विशेषे पर्यवसानं स वाच्यार्थ इत्युक्तम्।

ननु सर्वतन्त्रेषु विचारक्षेत्रेषु विभक्तयः धर्मवाचिका इति प्रसिद्धिररित। तत्र प्रकृत्यर्थस्याभेदान्वयो न भवितुमर्हति, अयोग्यत्वात्। तदाह—विभक्तीनां धर्मवाचकताऽपीत्यादि। कारक विभक्तीनां कर्मादिवाचकत्वात् व्यापरस्य फलस्य वा आश्रय वाचकत्वमिति भावः। शक्ति मतः बोधकत्वम्। नतु धर्म वाचकत्वम्।

ननु कारक विभक्तीनां धर्म मात्रमर्थोऽस्तु। यथा—आश्रयत्वं=मवधित्वमुद्देश्यत्वमिति को दोषः? धर्मस्य स्वरूपसम्बन्धेन प्रकृत्त्यर्थस्य परिचायकतासम्बन्धेन फले व्यापारेऽन्वयः। एवं विभक्तीनामर्थस्वीकारे दोषमाह। "कर्मणि द्वितीया" सूत्रस्य स्वस्य स्वकीयस्य (आत्मीयस्य) यो रसः=अभिप्रायः तात्पर्यम्वा तस्य भङ्गापत्तेः नश्यतीत्यर्थं। अर्थात् कर्मवाचिका द्वितीया भवतु। इति सूत्रस्य स्वरसः मुख्योऽर्थःमन्यते। कर्मत्वे द्वितीया इत्यवार्थः स्यात्। धर्मी वाचकतायां तु धर्म वाचकतां विनाऽपि उक्ताऽर्थ लाभो भवति।

ननु "कर्मणि द्वितीया" इत्यत्र विषय सप्तमी। तत्र तण्डुलादीनां फलाश्रयत्वं कर्मत्वादिना बोधात्। न सूत्रस्वरस संगमः। अत आदेः कर्मार्थक=धर्मिवाचक कृतः—कृत प्रत्ययः कृतः कटः इत्यत्रेव कृतोघटः इत्यत्रापि समान विभक्तिकः सन्। अभेदान्वयोऽनुभूयते। घटाभिन्न कर्मिका कृतिः, एतेन विभक्त्यर्थो धर्मीति प्रतीयते। धर्म वाचकतायां तु कर्मत्वस्य एक

देशत्वात् कटादावन्वयी न स्यात्। एवं तद्धित स्थलेऽपि शत्योऽश्वः इत्यादौ। शतेन क्रीत इत्यर्थे, "शताच्च ठन्यतावश्ते:" इत्यनेन यत् प्रत्ययस्य विधाने सति, शतकरणक्रयणकर्म रुपश्शक्तिरिति। तद्धितान्त पदस्यार्थस्य अश्वेन सह अभेदान्वय उपपद्यते। यदि धर्ममात्रमर्थमंगी क्रियते, च तदा शत्य इत्यस्य शतकरणक–क्रयण कर्मत्वमर्थो भविष्यति। तस्याश्वेन सह अभेदान्वयोऽपि न भविष्यति। तथा च–समानविभक्तिक नामार्थयोरभेदान्वय इति व्युत्पत्तिविरोधोऽपि अनिवार्यते। धर्मस्य एक-देशत्वात्। तथा दर्शनात्, धर्मिवाचकता दर्शनात्। न च कृत्तद्धितस्थले तथा दर्शनेऽपि (सामानाधिकरण्येन सह अभेदान्वय दर्शनेऽपि) "कर्मणि द्वितीया' इत्यत्र लाघवात्। कर्मत्वे द्वितीया इत्येवार्थः स्यात्। तदपि न; धर्म मात्राऽर्थे द्वितीयाद्यर्थक: (द्वितीयादिरेवार्थो यस्य) एवं भूते बहुव्रीहि समासे प्राप्तो-कादिस्थले। प्राप्तमुदकं यमिति विग्रहे, उदककर्तृकप्राप्तिकर्म इति विशिष्टार्थस्य लाभः। तद् धर्मवाचकता मन्तव्येति सम्भवात्। धर्मवाच-कतायान्तु उदककर्तृक प्राप्ति कर्मत्व मिति समासार्थः, एवं ग्रामादावभेदा-न्वयो न स्यात्।

ननु शेषषष्ठ्यर्थः सम्बन्धः सर्वसम्मतः। एवं षष्ठ्यर्थ बहुव्रीहौ पीता-म्बर इत्यादौ पीताम्बरस्य अन्य पदार्थे (विष्णौ) अभेदेनान्वय बाधे सति। अभेदार्थे लक्षणाविशिष्टशक्ति र्वा मन्यते। तेन सामानाधिकरण्यं जायते। तद्वात् ग्रामादावपि अभेदान्वयो जायताम्। तदपि न –भाष्याच्चेति धर्मि वाचकतायां भाष्यसम्मतिर्दीयते। सुपामिति नत्र कर्मादयोऽर्थाः इत्युक्तं न तु कर्मत्वादय इति भाष्ये सुपां यो धर्मी कर्मादिः स एव वाच्यः। यदि धर्मार्थं एव वाचकता धर्मिण्यर्थे लक्षणाऽनुमोदते। अभेदान्वयश्चोपपाद्यते। तर्हि नायं युक्तः सिद्धान्तः। यतः विभक्तौ न परः शब्दार्थः (न लक्षणे तितदर्थः) तस्यां लक्ष्यार्थो न करिष्यते। इति रीत्या धर्मे वाच्यता धर्मिणि लक्षणेति विरुद्धो मार्गः।

---

आवश्यक है। (धर्मरूप अर्थ मानने पर समानाधिकरण ओर अभेद सम्बन्ध नहीं बनेगा। द्वितीयादि विभक्तियों के अर्थ प्रधान बहुव्रीहि समास में जैसे प्राप्त है उदक जिस ग्राम में उसे प्राप्तोदक कहते हैं इत्यादि स्थलों में धर्मी वाचकता अर्थ मानना चाहिए तभी प्राप्त पदार्थ का उदक पदार्थ में अभेद सम्बन्ध होगा।

**आश्रयस्यापि प्रकृत्यैव लाभान्न विभक्तिवाच्यता, किंत्वाश्रयत्वमात्रं; वाच्यम। तदेव च तादात्म्येनावच्छेदकम् करणतृतीयायाञ्च व्यापारोऽपि पञ्चम्या विभागमात्रं, चतुर्थ्या उद्देश्यत्वमात्रम्।**

---

अत्र धर्मिणि वाचकत्वेऽभेदस्य सम्बन्धत्वाभावात्। नाभेदान्वयस्तन्न। सम्बन्धों हि सम्बन्धिभ्यांभिन्नो द्विष्ठो विशिष्टबुद्धिनियामकश्च भवति। अथवा इतरसम्बन्धभिन्नत्वे सति विशेषणविशेष्यभावः एवाभेद संसर्गः।

दिगिति--प्राप्तोदकः शत्योऽश्व इत्यादौ सत्तामात्राभिप्रायेण सिद्धिसम्भवात्। तेन धर्मि वाचकत्वं न सिद्धयति। सामानाधिकरणेनान्वयार्थमपिधर्मि वाचकत्वं न वक्तुं शक्यते, धर्मं वाचकत्व पक्षेऽपि तथा सम्भवात्।

इदानीं विभक्तीनां धर्मवाचकत्वं समर्थ्यते। ननु द्वितीयानां धर्मि वाचकत्वं न शक्यते। शब्दार्थस्तु, स भवति योऽन्यलभ्यो न भवति धर्मी--(धर्माश्रयः) अस्तु यथा--फल व्यापारौ धातु लभ्यौ एवं स सुपः प्रकृति (प्रातिपदिक लभ्यः। अत आह आश्रयस्यापि प्रकृत्त्यैव लाभात्। न विभक्ति वाच्यता किन्त्वाश्रयत्व (धर्मं) मात्रविभक्तेरर्थो मन्तव्यः। अर्थात् आश्रयत्वरुपधर्ममात्रे शक्तिः। धर्मं धर्मिणोः ( आश्रयत्वाश्रययोः ) परस्परमभेदसम्बन्धः एवं "कर्मणि द्वितीया" इति न विरुद्धयते। एवं शक्तिः तदभिन्ना शक्तिः विभक्त्यर्थेति सिद्धः। तेन प्राप्तोदकादि बहुब्रीहौ न दोषः। पचति पक्ता, पक्व, इत्यादौ भवतु नामाश्रयः (धर्मि वाचकत्वं) कन्त्वत्र न विभक्ति वाच्यता आश्रयस्य लाभः प्रातिपदिकादेव भविष्यति। ननु आश्रयत्वं शक्यार्थेति मन्यते। चेत् शक्यतावच्छेदकं (भेदकधर्मं आश्रयत्वत्वं भविष्यति। तदितरेषु आश्रयत्वेष्ववृत्तित्वे सति सकलाश्रयावृत्तित्वरुपं स्यात्। तेन शक्यतावच्छेदके गौरवं स्यात्। अत आह तदेवेति = आश्रयत्वमेवेत्येवकारेणोक्तयाश्रयत्वनिवृत्तिः अवच्छेदकं = भेदकमित्यर्थे। अर्थात् य आश्रयत्व रूपो शक्यार्थस्तदेव तादात्म्यसम्बधेनावच्छेदकः। अधिकरणभूतमाश्रयत्वं शक्यं तत्र तादात्म्यसम्बन्धेनवच्छेदकम्। करणतृतीयाया आश्रयोऽर्थस्त्वस्त्येव व्यापारोऽप्यर्थः। यतः व्यापारवत्कारणं करणं "रामेण वाणेन हतो रावणः" अत्र बाणपदार्थस्य धर्मिवाचकता पक्षे तृतीयाऽर्थाश्रयेऽभेदेनान्वयः। तृतीयाऽर्थाश्रयस्य तृतीयाऽर्थ व्यापारे वृत्तित्व सम्बन्धेनान्वयः। तस्य व्यापारस्य स्वसमानकर्तृकत्वे सति। स्वाव्यवहितोत्तरत्व सम्बन्धेन धात्वर्थव्यापारेऽन्वयः। बाणभिन्नाश्रय वृत्ति व्यापाराव्यवहितोत्तरत्व

अत एवाऽऽकृत्यधिकरणमपि न विरुध्यत इत्यभिप्रेत्याऽऽह शक्तिरेव वेति । षण्णामपीति शेषः । "षष्ठी शेषे" इति सूत्रात्तस्याः सम्बन्धमात्रं वाच्यम् । कारकषष्ठ्यास्तु शक्तिरेवेत्यूह्यम् ।

---

समानकर्तृक (राम कर्तृक) भूतकालिकव्यापारजन्यप्राणवियोगाश्रयो रावणः ।

पञ्चम्याः विभाग मात्रमर्थः । मात्रशब्दाश्रयत्वव्यवच्छेदकः । अतः प्रयागात्काशीं गच्छतीत्यत्र प्रयागनिष्ठव्यापारजनकोत्तरदेशसंयोगानुकूलकाशीकर्मकः चैत्र कर्तृको व्यापारः। वस्तुतः अवधित्वमेव पञ्चम्यर्थः अवधित्वस्य निरूपकतया धात्वर्थेविभागेऽन्वयः ततो न कश्चन दोषः एवं चतुर्थ्याउद्देश्यमात्रमर्थः । तथा च विप्रायगां ददातीत्यत्र चतुर्थ्यर्थे उद्देश्यतायां (कर्मण – अधीनी करणतायाम्) विप्रपदार्थस्य निष्ठत्व सम्बधेनान्वयः। उद्देश्यत्वस्य निरूपक तया (साधकतया) दाधात्वर्थ व्यापारेऽन्वयः । अतः राजकर्तृक विप्रनिष्ठोद्देश्यता निरूपक – राजकर्तृकस्व स्वत्व निवृत्ति पूर्वक परसत्वोत्पत्यनुकूलेच्छारूपो व्यापारः ।

अतएव – धर्ममात्रस्य वाचकत्वं स्वीकारादेव – जातिबोधक प्रकरणं न विद्यते—शक्ति ग्रहदशायां ज्ञाते – व्यक्तेश्च भानेऽपि जातिरेव शक्यार्थः न तु व्यक्तिः । आनन्त्याननुगमात् अतएव व्यभिचारात् नागृहतविशेषणाबुद्धिः विशेष्यमवगाहते । बुद्धिः विशेषणज्ञानमकृत्वा विशेष्यज्ञानं न करोतीत्यर्थः । विशेष्यं नाभिधा गच्छेत् क्षीणं शक्तिर्विशेषणे । अभिधाशक्तिः विशेषणज्ञनं कारयित्वा क्षीणशक्तिर्भवनि, ततो विशेष्यं (व्यक्तिम्) नच्छेत् बोधयेदिति न्यायात् । किन्तु विशेषणीभूते धर्मे जातौ एव शक्तिः । इत्यभिप्रेत्यं कौण्डभट्टः सुबर्थनिर्णयस्य प्रथमकारिकायां शक्तिरेवेत्युक्तम् । अर्थात् षण्णां कारकविभक्तीनां कर्मत्वकर्तृत्वकरणत्व; सम्प्रदानत्व, अपादानत्व, अधिकरत्वेत्येवार्थः ।

इदानीं प्रसङ्गवशात् षष्ठ्यर्थं विवृणोति—षष्ठीशेषे" इति सूत्रात् विहितायाः षष्ठ्याः सम्बन्धमात्रमर्थः । अत्र कारकं प्रातिपदिकात् स्वस्वामिभावादि सम्बन्धः शेष पदार्थः । तत्र धर्मो वाच्यः धर्मी (आश्रय) वा इति मतभेदो नास्ति । अत्रायं विवेकः शेषषष्ठ्याः क्वचिद् सामान्यसम्बन्धत्वेन सम्बन्धवाचकता यथा—"मातुः स्मरति" अत्र मातृसम्बन्धिस्म-

"सप्तमीपञ्चम्यौ कारकमध्ये" इति सूत्रे शक्तिः कारकमिति पक्षस्य भाष्ये दर्शनात् ।

---

रणमिति बोधेन मातृपदोत्तरषष्ठीसम्बन्धसामान्यरूपेण प्रतीयते क्वचिद् विशेषरूपेण । यथा—स्वत्वत्वादिनाराज्ञपुरुष इत्यत्र राजपदोत्तरषष्ठ्या स्वत्वसम्बन्धरुपो विशेषोऽर्थः प्रतीयते। यदि सर्वत्रसम्बन्धसामान्येनैव षष्ठ्याः प्रतीति, पक्षो तु चैत्रण पालिते मैत्रीय हस्त्यादौ अर्थात् मैत्र स्वामिक हस्यादौ नेदं चैत्रस्य धनमिति न संगच्छते। चैत्र निरूपित स्वत्वाभाववद् धनं मैत्त निरुपित स्वत्ववद् धनं न तेन दोषः। अन्यथा = षष्ठ्याःसम्बन्धविशेषार्थकानङ्गीकारे चैत्रनिरुपित सम्बन्धस्य रक्ष्य रक्षकत्बात्मकस्य तत्र हस्त्यादौ सत्वेन नेदं चैत्रस्य धनं निषेधानुपपत्तिः। स्वत्वेन विशेष रुपेण स्वत्वस्य माने तु चैत्रीय रक्ष्य रक्षकभाव सम्बन्धस्य सत्वेऽपि तदीय स्वत्वस्याभावात् निषेधो प्रवर्तते ।

कारक षष्ठ्यास्तु = कर्तृकर्मणोरिति बिहितषष्ठ्या इत्यर्थः शक्तिः (धर्मः) एवार्थः। परन्तु शेषषष्ठीव कारकषष्ठ्यामिव धर्मवाचकस्यौचित्यात् शक्तिरेव = कर्मत्वादि शक्तिरेव ।

ननु कारक विभक्तीनां कर्मादौ धर्मवाचकत्वप्रमाणं नास्तीत्याह—भाष्ये सप्तमीति—शक्तिः कारकमिति पक्षो भाष्ये दृश्यते। धर्मस्य = कारकत्वव्याप्यकर्तृत्वादेः। भाष्यसम्मतम् अतो विभक्तिवाचकत्वमुचितमेव ।

---

सुपाङ् सुप विभक्तियों का कर्मादि अर्थ है ( कर्मत्व अर्थ नहीं ) और संख्या भी अर्थ है इसी तरह तिङ् प्रत्ययों का आश्रय और संख्या अर्थ है। इस भाष्य से कर्म ( आश्रय ) धर्मी अर्थ ही वाच्य सिद्ध होता है।

इसके पश्चात् ग्रंथकार विभक्तियों की धर्म—शक्ति वाचकता सिद्ध करते हैं कि आश्रव का भी प्रकृति से ही लाभ हो जायेगा वह ( आश्रय, धर्मी, विभक्ति का वाच्य नहीं हो सकता। किन्तु आश्रयत्व = धर्म मात्र विभक्ति का वाच्य अर्थ है तदेव = धर्म ही ( शक्ति ही ) तादात्मेन = अभेद सम्बन्ध से अवच्छेदक प्रेरक या भेदक है इसी प्रकार करण अर्थ में तृतीया विभक्ति का आश्रयत्व = शक्ति अर्थ तो है ही व्यापार भी अर्थ है पञ्चमी विभक्ति का केवल विभाग मात्र ही अर्थ हैं ( विभागाश्रय नही ) वहाँ विभाग ही धर्म = विशेशण है। चतुर्थी विभक्ति का उद्देश्यत्व मात्र अर्थ है अत एव धर्म मात्र वाच्यार्थ स्वीकार करने पर आकृति अधिकरण=जातिवादपक्ष भ

अयमभिप्रायः यत् "सप्तमी पञ्चम्यौ कारकमध्ये" इति सूत्रे कारक मध्ये इति पदे कारकशब्दस्य क्रिययोरित्यर्थः। यतः करोति कर्तृकर्मादि-व्यपदेशान् यत्तत् कारकमिति व्युत्पत्यनुसारं कारकशब्दःक्रियार्थःपरः सिद्ध्यति। सिद्धान्तपक्षस्तु कारकयोर्मध्यं कारकमध्यं तस्मिन् कारकमध्ये तेन पूर्वपक्षेक्रियामध्य इति वक्तव्यम्। इहापि यथा स्यात्, अद्यदेवदत्तो भुक्त्वा द्व्यहे द्व्यहाद्वा भोक्ता। भोजनस्य अद्यतनीयाः क्रिया द्विदिवसाना-न्तरीया च क्रिया। अनयोर्क्रिययोर्मध्ये यो वर्तमान कालस्तस्य वाचकं द्व्यह पदं तस्मात् सप्तमी पञ्चमी च विधीयताम्। अतएव मध्ये शब्दः कर्तव्यः। यदि द्रव्यंकारकं पक्षमनुमन्यते तदा देवदत्तरूपं कर्तृकारकमेकमेव स्यात्। तत्र भेद निबन्धनः। भेदकः शब्दः द्वयोर्कारकमध्य इतिरूपः कालवाची शब्दोऽभवन् सप्तमी पञ्चमी च न भविष्यति। अतः क्रियामध्ये वक्तव्यमिति वार्तिकमवश्यम्मन्तव्यम्। एवञ्च क्रिययोर्मध्ये वर्तमानो यो कालः तद् वाचकात् शब्दात् सप्तमीपञ्चम्यौ भवतः, इत्यर्थे कृतेसति (यद्यपि) कालोऽखण्डो निर्विशेषोऽभिन्नश्च तथापि क्रियैव काल इति पक्षे अद्यतनीय भोजनस्य द्विदिवसानन्तरीयस्य भोजनस्य च मध्ये योकालः स उपाधि भेदाद्भिन्नः। एवं क्रियाभेदेनकाल भेदात् तयोर्मध्ये द्व्यहरूपः कालस्तिष्ठति तत्र सप्तमी पञ्चमी च भवतः।

"क्रियामध्ये वक्तव्यमिति" वार्तिकप्रत्याख्यानाय भाष्यकारेणोक्तं तर्त्तहिवक्तव्यम्। नवक्तव्यम्। यतः कारकं बिना क्रियाया प्रवृत्तिर्भवत्येव न। तत्र यदि क्रियायाः मध्योस्ति तर्हि कारकयोरपि मध्यमवश्यम्भवि-ष्यति। अयं भावः, नान्तरेण साधनं क्रियायाः प्रवृत्तिर्भवति। अत्र साधनं शक्तिपरम्। अतः कालभेदात् = भिन्नायाः भुजिक्रियाया अनुमितायाः कर्तृत्व शक्तेः कर्मत्वशक्तेश्च लाभोऽभावि गलविलाधः संयोगानुकूलव्यापाराश्रयत्वे न कर्तृत्व शक्ते स्मरणम्, गलविलाधः संयोगाश्रयत्वे न कर्मत्वशक्तेस्मरण-मर्थात् कारक मध्य इति। अत्र कारकयोर्कर्तृत्वशक्तिकर्मत्वशक्त्योर्मध्ये इत्यर्थः। द्वभोर्मध्य एव मध्यव्यपदेशसत्वे कालवाचकात् द्व्यहशब्दात्

---

विरुद्ध नहीं होता, इसी अभिप्राय से बोले शक्तिरेव वा इति" छवों विभक्तियों का शक्ति ही अर्थ है।

षष्ठी विभक्ति का "षष्ठी शेषे" इस सूत्र के अनुरोध से केवल सम्बन्ध ही अर्थ है, जो दो में रहने वाला धर्म है, जैसे—माता का स्मरण करता है। दोनों में स्मार्य स्मारक भाव सम्बन्ध है। कारक षष्ठी का शक्तिमात्र ही अर्थ है सम्बन्ध नहीं। सभी

सप्तमी पञ्चम्यौ भवतः। द्वयोर्क्रिययोर्भेदेन शक्तिमान् देवदत्तः एकः सन्नपि शक्तिभेदेन कर्तृत्व शक्ति साधिकाया भुजि क्रियाया अपि भेदेन कर्तृत्व शक्तिः भेदादद्यतनीया या भुजक्रिया तन्निरूपिता कर्तृत्वशक्ति दिनद्वयानन्तरीया या "भुज्क्रिया तन्निरुपितकर्तृत्वशक्तेश्च भेदाद्द्वयोर्शक्त्योर्मध्ये द्व्यह रूप कालस्य वर्तमानात् लक्ष्य सिद्धिर्भविष्यति। अतः "क्रियामध्ये' इति वार्तिकं कर्तव्यमेव।

अनभिहिते सूत्रस्य भाष्यादपि शक्तिः कारकमिति पक्षः सिद्धयति। यथा उक्तसूत्रोपरि भाष्यकारोऽशङ्कत्, यत् द्वयोर्क्रिययोर्बोधकवाक्यस्थले अद्य भुक्त्वा द्वयहे द्वयहाद्वा भोक्ता इत्यादि स्थले ) एकया क्रियया उक्तमधिकरणमुक्ते प्रथमा भवति न तु सप्तमी। एवं सप्तमीविभक्तेरभावो भविष्यति। क्व न प्रप्नोति। "प्रासादे आस्ते, शयने आस्ते" इत्यत्र प्रपूर्वक सद्धातोरधिकरणरूपार्थं घञ् प्रत्यय उक्त एव शीङ्धातोरपि अधिकरणार्थं उक्तः। अस्ति क्रियया प्रतिपादितमधिकरणमेकमेव, लड्विधानेनात्र सप्तमी न भविष्यतीत्याशङ्क्य तत्र सिद्धान्त रूपेणोक्तं यत् शक्ति कारकमिति पक्ष अधिकरणमेकं सदपि किययोभेदेन शक्तिभेदं मत्वा द्वेऽधिकरणत्वे शक्ति भिन्ने स्तः। एकं सदिनिरूपिता सा उक्ता वर्तते। अपरा अस्तिक्रियानिरूपिताधिकरणत्व, शक्तिः सा अनुक्ता वर्तते। अस्यां परिस्थितौ "प्रधानेतरयोर्यत्र" द्रव्यस्यक्रिययोर्पृथक्। शक्तिः गुणाश्रयातत्र प्रधानमनुरुध्यते। अस्याः कारिकाया अनुरोधेन कृदन्तक्रियाऽपेक्षाया तिङन्त क्रियायाः प्राधान्यं भवति। अतः प्रधानीभूतक्रिया अस्तिक्रिया तन्निरूपिता अधिकरणत्वशक्तिरनुक्ता एवमप्रधानीभूता या सदिक्रिया सा तन्निरुपिता

---

कारकों का शक्ति ही अर्थ है, इसमें "सप्तमीं पञ्चम्यौ कारक मध्ये" सूत्र के भाष्य को प्रमाण रूप में प्रस्तुत करते हैं। सूत्र में कारक शब्द का शक्ति अर्थ भाष्य में देखा गया है, क्योंकि जो कर्ता कर्मादि के व्यवहार को उपस्थित करे उस क्रिया को कारक कहते हैं। "क्रिया मध्ये" इस वातिक से जहाँ देवदत्त आज भोजन करके दो दिन बाद भोजन करने वाला है, यहाँ कर्तृ कारक कर्म कारक के मध्य में जो देश और काल उससे सप्तमी पञ्चमी होती है। यह विधान शक्ति अर्थ मानने पर ही सम्भव है, यहाँ साधन शक्ति परक है, कौमुदी में कर्तृ कर्म शक्त्योर्मध्ये कहा है, कारकयोर्मध्ये न ही कहा अन्यथा देवदत्त रूप कर्तृ कारक एक ही होने से दो कारकों के मध्य मे कालवाची शब्द न होने से सप्तमी पञ्चमी न होगी।

धर्मी ( आश्रय ) को विभक्ति का अर्थ मानने पर ही शाब्द बोध यहाँ संगत होगा यथा---देवदत्त की गाय को ब्राह्मण के लिए घर से ( निकलकर ) गंगा जी में

एवं च 'देवदत्तस्य गौर्ब्राह्मणाय गेहाद् गङ्गायां हस्तेन मया दीयते' इत्यत्र देवदत्तसम्बन्धिनो या गौस्तदभिन्नाश्रयकत्यागानुकूलो ब्राह्मणोद्देश्यको गेहनिष्ठविभागजनको गङ्गाधिकरणको हस्तकरणको मन्निष्ठो व्यापार इति बोधः। यथायथम् —उक्तप्रकारेण। अत्र मानमुपदर्शयन् "घटं जानाति" इत्यादौ द्वितीयाया विषयतायां लक्षणेति बह्वाकुलं वदतो नैयायिकादीन्प्रत्याह—सुपां कर्मेति।

विषयता में लक्षणा न्याय वाले

---

(तद्ज्ञापिता) अधिकरणत्वशक्तिरुक्ता सत्यपि अनुक्तवत् प्रतिभाति। अस्मात् भाष्यात् प्रथितोऽयं शक्तिःकारकमिति पक्षः। कैपटेनापि यदि द्रव्यं साधनं स्यात् तदा तस्यैकरूपत्वात्तनिबन्नधनप्रत्यभिज्ञाविषयात् नानार्थ क्रियाकारक निबन्धेन "घटेन जलमाहर" घटं कुरु घटोस्ति व्यपदेशो न स्यात्। दृश्यते चाऽसौ तस्मान्नानाशक्ति भावागमः सिद्धः। एवञ्च शक्ति पक्षस्य भाष्य सम्मतत्वात् द्वियीयादीनाङ्कर्मत्वादौ शक्तिरिति वदतामतमपि साधु।

विभवित वाच्यता सिद्धौ देवदत्तस्य गौ ब्राह्मणाय गेहात् गंगायां मया हस्तेन दीयत इत्यत्र स्व स्वामिभावरूपे सम्बन्धे षष्ठी प्रकृतिदेवदत्तस्योक्त सम्बन्धेनान्वयः, तस्य गवि अन्वयः गोश्चाभेदेन दीयते इत्यत्र तिङर्थाश्रयेऽन्वयः। आश्रयस्य स्वाधिकारच्युति समानाधिकरण परस्वत्वरूपफलेऽन्वयः फलस्यजनकत्व सम्बधेन व्यापारेऽन्वयः। ब्राह्मणायेत्यत्रचतुर्थ्या उद्देश्योऽर्थः तत्र ब्राह्मणस्याभेदेनान्वयः। ब्राह्मणस्य परिचायकता सम्बन्धेन धात्वर्थ व्यापारेऽन्वयः। गेहस्याभेदेनान्वयः तस्य जनकतासम्बन्धेन व्यापारेऽन्वयः। गंगायामित्यत्र सप्तम्यर्थोऽधिकरणं तत्र गंगाया अभेदेनान्वयः। एवं हस्तस्य

---

हाथ से मेरे द्वारा दी जाती है। इस वाक्य में सभी विकृतियाँ धर्मी (आधार) अर्थ को कह रही हैं, कि देवदत्त से संबन्ध रखने वाली जो गाय उससे अभिन्न है आश्रय जिसका ब्राह्मण है, उद्देश्य—दान की कामना विषय और गृह रूप आश्रय में रहने वाले विभाग का जनक और गंगा है अधिकरण जिसका, हाथ है करण साधन जिसका ऐसा मेरे में रहने वाला व्यापार एसा शाब्द वोध होता है। इस प्रकार यथा योग्य आश्रय अर्थ या शक्ति अर्थ को मानना चाहिए।

इस प्रकार उक्त अर्थ में प्रमाण प्रस्तुत करते हुए विपक्ष का खण्डन करते हैं, जैसे—'घटं जानाति' इस वाक्य में घट जड़ है वह ज्ञान का आश्रय न ही हो सकता तो द्वितीया कैसे इस प्रश्न पर द्वितीया विभक्ति का विषयता में लक्षणा करते हैं। घट को ज्ञान का विषय बनाकर द्वितीया का विधान बोलने वाले नैयायिकों के प्रतीक है कि 'सुपामिति'।

**अथ भावः—**

**सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ।**
**प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥**

तृतीयार्थे करणे तस्य निरूपकतया, मया इत्यस्मदर्थस्याभेदेन तृतीयार्थाश्रये तस्य आधेयतया व्यापारेऽन्वयः। एवञ्च देवदत्त स्वामिका या गौः तस्माद-भिन्नाश्रयो यस्य एवम्भूतस्त्यागः तज्जनको ब्राह्मणोद्देश्यकः। गेह निष्ठो यो विभागस्तज्जनकः गंगा एव अधिकरणं यस्य स गंगाधिकरणकः। हस्तौ करणं यस्य हस्तकरणकः दातुरधिकारध्वंसको ब्राह्मणस्वत्वसम्पादकः मदभिन्नाश्रयको व्यापार इति शाब्दबोधः। एवं पूर्वबोधानुसारेण यथा यथम् —यथायोग्यविभक्त्यर्थाः—सप्रमाणम्प्रदर्शिताः।

तत्तदर्थेषु प्रमाणं प्रदर्शयन् नैयायिकमीमांसक मतविघटनार्थमग्रिमा-कारिकोच्यते—तदित्थम्, "शत्रून् जहि" त्यत्र द्वितीयाया लक्षणयाकरण-मर्थः। घटं जानातीत्यादौतिङ आश्रयोऽर्थः, घटपदोत्तर आम् विभक्तेः विषयत्वमर्थः। लक्षणया "रथेन गम्यते" इत्यत्र तृतीया व्यापारश्च लक्ष-णया परिज्ञायते। एवं सुपांतिङाश्चार्थः लक्षणयाक्रियते यदा वैयाकरणा अयं सिद्धान्त प्रकटितवन्तः यद् विभक्तौ न लक्षणेति तदा बहुव्याकुलाः (अतिव्यग्राः) ये विपक्षिण आसन् तान् प्रति भाष्यवार्तिक सम्मतं तत्तदर्थ वचनप्रामाणिकं वचनं (लक्षणा ध्वंसकवचन) मुदाजहार सुपां कर्मादयोप्यर्थाः संख्या च एवं तिङामपि।

कर्मादयीऽर्थाः संख्या च। कर्म-आदय इत्यत्र आदिपदेन कर्त्रादीनां संग्रहः। आदिपदेन शक्तिरेव वा इत्यस्य संग्रहः। इतिभाष्यप्रमाणेन सुपतिङोःकर्मादिकसंख्यायाश्चार्थसाधितः। तथा च प्रस्तुतार्थेऽर्थनियमपक्षः प्रसिद्धयति। लक्षणया प्रत्ययनियमस्य खण्डनश्चकृतम्। येन नियमेनार्थो नियम्यते सोऽर्थनियमः। यथा-कर्मणि द्वितीयैवकरणे तृतीयैव उक्ते कर्मादौ प्रथमैव एकत्वे एकवचनमेवनान्यत। अत्र कर्मरूपोऽर्थद्वितीयायामेव लभ्यते।

भाव यह है कि सुप विभक्तियों का कर्म करण आदि आश्रय अर्थ है, संख्या भी। ऐसे ही तिङ् का भी वही अर्थ है। इस सम्वन्ध में दो नियम प्रसिद्ध है (१) स्वभावतः (२, प्रसङ्गनः। इसी को प्रत्यय नियम और अर्थ नियम भी कहते हैं। वार्तिकार और भाष्यकार से कर्म आदि की वाच्यता और उक्त नियम का लाभ होता है। अर्थ नियम पक्ष को प्रामाणिकता में भूषणकार तथा हि बोलते हैं। जब "स्वौज़समौट्" कर्मणि द्वितीया। "द्वेकपोर्द्विवचनैकवचने" इत्यादि की एक वाक्यता होने से कर्म आदि कारकों की ओर उनकी संख्याओं की वाच्यता उवलब्ध होती है।

इति वार्तिकतद्भाष्याभ्यां कमादेर्वाच्यतायास्तन्नियमस्य च लाभः। तथा हि—"स्वौजसमौट्" "कर्मणि द्वितीया" "द्व्येकयोर्द्विवचनैकवचने" इत्यादेः "लस्य" "तिप्तस्झि" "तान्येकवचनद्विवचन" इत्यादेश्चैकवाक्यतया कर्मादेस्तत्संख्यायाश्च वाच्यता लभ्यते। तथा तन्नियमश्च द्विविधो लभ्यते। द्वितीया कर्मण्येव, तृतीया करणे एवेत्येवमादिरर्थनियमः। कर्मणि द्वितीयैव, करणे तृतीयैवेत्येवं शब्दनियमश्च। उभयथाऽपि सिद्धनियमविरुद्धं लक्षणादिकमसाधुत्वप्रयोजकमिति याज्ञे कर्मणि "नानृतं वदेत्" इति निषेधविषयो भवत्येवेति स्वेच्छया लक्षणाऽपि विभक्तावप्रयोजिकैव। अत एव "विभक्तौ न लक्षणा" इत्यादिर्नैयायिकवृद्धानां व्यवहार इति दिक्॥ १॥ (२४)

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरण-
भूषणासारे सुबर्थनिर्णयः समाप्तः।

---

एवं कर्मादीनां वाच्यतानियमस्य च लाभोऽर्थनियममाश्रित्य जायते। उभयथापि=शब्दनियमार्थनियमोभयप्रकारेण सिद्धी यो नियमस्तद् विरुद्धम् तत् लक्षणादिकरणं तत् सर्वमसाधुजनकं यत् कर्मणि लक्षणयाकृतेऽसाधु प्रयोगः। नानृतं वदेत्। इति निषेधोल्लंघनप्रयुक्तविषयोभवत्येव। अशास्त्रीयत्वात्। यदिस्वेच्छया लक्षणा क्रियते तदा नाधिकारः विभक्तौ लक्षणा अप्रयोजिका (अप्रमाणिका) नास्ति प्रयोजकं प्रमाणं यस्या सा भवति। अत एव=स्वेच्छयाकृतलक्षणाया साधुत्वेऽप्रयोजकादेव विभक्तौ (विषये) लक्षणा न भवतीति। नैयायिकानुभविनोब्रुवन्तिः व्यवहरन्ति च। "सुपंकमादयोऽत्यार्थाः इत्यत्र कर्मादि पदस्य गौण मुख्या साधारणपरतयाप्युपपत्तेर्न" न तद् विरोधस्तदाह दिगिति=दिगर्थस्तु मुख्यार्थमादाय शास्त्रचरित्तार्थ्ये गौणेतद्व्यवहारेमानाभावः।॥ इति सुबर्थ निर्णयः॥

---

यह नियम दो हैं। (१) द्वितीया कर्म में ही हो तृतीया करण में ही हो यह शब्द नियम हुआ। कर्म में द्वितीया ही हो करण में तृतीया ही हो यह अर्थ नियम है। दोनों नियमों के अनुसार जो सिद्ध नियम है, जैसे—एकत्व विशिष्ट कर्म में द्वितीया ही होती है, इत्यादि के विरुद्ध जो लक्षणा इत्यादि करना है उसमें असाधुत्व प्रमाणित होता है। असाधु होने से यज्ञ कर्म में मिथ्या न बोलने के नियम का उल्लंघन हो जायगा और दोष लगेगा। यदि यह कहें कि मैं स्वेच्छा से लक्षणा करूँगा तो लक्षणा विभक्ति के विषय में अप्रामाणिक मानी गई है। इसलिए 'विभक्तौ न लक्षणा" इत्यादि नैयायिक अनुभवी लोगों का व्यवहार देखा गया है॥ २४॥ इति श्री वैयाकरण भूषणसारे प्राभाकारी हिन्दी टिकायां सुबर्थ निर्णयः।

# अथ नामार्थनिर्णयः —

प्रकरणावतरणम्—स्मृति विषयत्वे सति उपेक्षानर्हत्वं प्रसङ्गः सङ्गतिः वा सर्गस्य सर्गान्तरेण सह सम्बन्धाभिधानं सङ्गति। सुब्विभक्त्यर्थं निर्णयानन्तरं स्वादि प्रत्ययेन प्रकृतेः स्मरणं स्वाभाविकम्। का सुपां प्रकृतिः। कश्च तस्यार्थं इति नैसर्गिकी विचारणा प्रस्फुरति। स्वादीनां प्रकृतिः (ङ्याप्प्रातिपदिकात् इति सूत्राधिकारे पाठात्) ङ्यन्तावन्त प्राति पादिकानीति। अर्थवतः प्रातिपदिक संज्ञापि विधीयते। तत्र किमर्थवत्वमिति तन्निर्णायकं प्रकरणमारभ्यते कौण्डभट्टेन नामार्थं इति।

को नामार्थः?। नाम जन्यप्रतीति विषयो नामार्थः नाम=प्रातिपदिकं तज्जन्य प्रतीतिः=प्रातिपदिकादाविर्भूत बोध। तस्य विषयोऽर्थः जाति व्यक्त्यादि स्तदेव नामार्थः। अत्र प्रातिपदिकं कारणं प्रातीतिः=कार्यम्। तयोः सहकारिकारणं शक्तिज्ञानम्। तं विना पदं स्वार्थं स्वसम्बन्धिनञ्च न स्मारयति। यथा कृष्णपदं स्वार्थं=वसुदेवापत्यरुपार्थं स्वसम्बन्धिनं=मातरं, भ्रातरं स्वसुरं स्वसारञ्च आकाशञ्च स्मारयति। तेषां बोधो मा भवतु इति शक्त्याऽर्थ स्मारकत्वम्। अतः कृष्णपदस्य वसुदेवस्य अपत्यार्थे शक्तिः। यदर्थे शक्तिः तत्तस्यार्थः। तस्मान्नामस्था या शक्तिः तस्याः ज्ञानं शाब्दबोधे कारणम् एवं नाम्नो=प्रातिपदिकस्यार्थो नामार्थ इत्यपि। अथवा नमन्ति आख्यातार्थं व्यापारं प्रति विशेषणीं भवन्तीति नामार्थाः। व्यापार विशेष्यक बोधे नामार्थाः नमन्ति, विशेषणी भवन्तीत्यर्थः।

अतः नामार्थप्रस्ताविका कारिका प्रारभ्यते एकमिति=एकं जातिः, द्विकं=व्यक्तिः, त्रिकं=लिङ्गं, चतुष्कं संख्यासहितं, पञ्चकं कारकसहितम् एते पक्षाः शास्त्रे मिलन्ति।

प्रकरणावतरणम्—पूर्व प्रकरण से पर प्रकरण की संगति स्मरण का विषय होने से 'उपेक्षा' के योग्य नहीं है। सुप के अर्थ का निर्णय हो जाने पर प्रत्यय से प्रकृति का स्मरण स्वाभाविक है। स्वादि की प्रकृति ङ्यन्त आबन्त प्रातिपदिक है। इसलिए प्राति पदिकार्थ की निर्णय शालिनी कारिका कौण्डभट्ट प्रस्तुत करते हैं। नामार्थमाह इति।

पाँच नामार्थ हैं जिनको जाति, व्यक्ति, लिङ्ग, संख्या, कारक कहते हैं। ये ही एकं द्विकं त्रिकं चतुष्कं पञ्चकम् इत्यादि पाँच पक्ष शास्त्र में वर्णित हैं जिनका विवेचन अधोलिखित है।

जातिपक्ष २९० का समर्थन



अथ नामार्थानाह—

**एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा ।**
**नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥१॥ (२५)**

मीमांसक **एकं—जातिः, लाघवेन तस्या एव वाच्यत्वौचित्यात् । अनेकव्यक्तीनां वाच्यत्वे गौरवात् ।**



संक्षिप्तः । एते पञ्च पक्षाः व्याकरणशास्त्रे तत्तत्सूत्रेषु अभिव्यक्ताः सन्ति । एकं जाति–अत्र प्रमाणं जात्याख्यायामिति १।२।५८ सूत्रम् । तत्र पदार्थस्य जातिराख्या–अर्थश्चेत् बहुवद्भवति । अतएव सम्पन्नो यवः इत्यादौ बहूनां यवानां बोधो जायते ।

अथवा एकपदेन व्यक्ति र्ग्राह्याः । अत्र प्रमाणं एकशेष विधायकं सूत्रं, यत्र व्यक्ति शिष्यते सा एव लुप्यमानानामर्थमभिधत्ते ।

नहि आकृतिः पदार्थः द्रव्यं न पदार्थः । उभयोरुभयं पदार्थ इति भाष्य वचनात् जाति विशिष्टा व्यक्तिः पदार्थ इत्यभि प्रायेण द्विकमुच्यते ।

लिङ्गस्य नामार्थत्वन्तु 'स्वमोर्नपुंसकात्' इति सूत्रात् नपुंसकार्थे विद्यमानात् प्रातिपदिकात् स्वमोर्लुग्विधानेन अवगन्तव्यम् । प्रातिपदिके एकत्व-द्वित्व-बहुत्व-विवक्षा सत्येव द्वेकयोर्द्विवचनकैवचने, बहुषु बहुवचनमिति प्रवर्तन्ते । 'संख्याया अतिशदन्तायाः कन्' इति प्रमाणम् कारकस्य नामार्थत्वे प्रातिपदिकादनुक्ते कर्मणि द्वितीया इति प्रमाणम् उक्ते, प्रथमैव प्रातिपदिके करण शक्तिद्योतिका तृतीया, अधिकरण शक्ति प्रकाशिका सप्तमीत्यादि ।

इदानीमेते नामार्थाः विशेषेण विव्रीयन्ते—

यथा—एकं जातिः = यहाँ एक शब्द एकत्व गुण विशिष्ट अर्थ का वाचक है, जो जाति रूप है । इसका लक्षण जो प्रसव काल से जन्म के वह जाति है । और असाधारण धर्म है । मनुष्यत्व, पशुत्व पक्षित्व आदि धर्म वस्तु के जन्म काल से ही उत्पन्न होते हैं । गुण क्रिया तो वाद में प्रकट हैं । या, समान रूप से अनेक व्यक्ति में नित्य हो समवाय सम्बन्ध से रहे, एक हो अनेक आश्रय में समान रूप से प्रतीत हो उसे जाति कहते हैं । नरत्व सभी नर में समान रूप म प्रतीत । अथवा जो प्राण प्रदान करे, सुनिश्चित अर्थ वोध रूप प्राण का प्रदान करने वाली जाति है । क्योंकि जाति के विना सभी शब्द सभी अर्थ के वाचक हो जायेंगे, अव्यवस्था दोष होगा । अतः सुनिश्चितार्थ ( अमुक शब्द का यही अथ है ) पर जाति ही नियन्त्रण

नामार्थानाह—एकमिति। अत्र एक शब्दः एकत्वगुणविशिष्टार्थं बोधको गुण (विशेषण) मात्रपरः। प्रथमं मीमांसकमतमवलम्ब्य एकं—जातिः। सा पदार्थेषु घटपटादिषु असाधारणी धर्मः। तस्याः लक्षणन्तु—जननाज्जयते या सा जातिः या जन्म कालाद्रव्येषूपतिष्ठते मनुष्यत्वं हिन्दुत्वं द्रव्यस्य (पदस्य) जन्मकालिको पाधिः। गुणक्रियादयः पश्चात्प्रादुर्भवन्ति। अमूर्तत्वेसति प्रत्यक्षाविषयत्वं जातित्वम् जाति नं प्रत्यक्षा अमूर्तत्वात्। 'वा' नित्यमनेकानुगतं सामान्यम्। या नित्या एका अनेकाश्रयेषु समवेता, अनुगत (समानाकार) रूपेण अनेकाश्रयस्य नियामिका एकरूपेण अनेकस्मिन् प्रतीतिविषया। यथा-घटत्वं सकलघटनियामकं एकमनेकस्मिन्नाश्रये समानरूपेण प्रतीयते। अथवा "प्राण प्रदत्वं जातिः" (काव्यप्रकाश) प्राणं—सुनिश्चितार्थं प्रददाति—बोधयति या सा जातिः, तस्या भावः प्राण प्रदत्वम्—निर्णयार्थबोधकत्वम् पदनिष्ट स्वरस (सुनिश्चितार्थ) रूपप्राणस्य प्रदायिका इत्यर्थं। यतः यस्या अभावे सर्वेशब्दाः सर्वार्थवाचकाः स्यु। अतः व्यावर्तिका जातिः। हिन्दुत्वं यवनादीनां व्यावर्तकम्।

अथवा समान प्रसवात्मिका जातिः समानरूपेण अनेकस्मिन् भासमानोधर्मो नित्योऽनेकाश्रये समवेतश्च। या समानेन—समानाकाररूपेण प्रसवः—बुद्धिजननं घटोऽयं घटोऽयमित्याकारकं यज्ज्ञानं तदेव आत्मास्वरूपं यस्या सा, अत्र जाति, शब्दस्य प्रवृत्ति निमित्तमात्रस्यापेक्षणं बोध्यम्। धर्ममात्रं (यावद्विशेषणं) सर्वं प्रवृत्तौ—निश्चितार्थबोधे निमित्तमन्तव्यम्। शब्दस्य स्वशक्त्योपस्थित यावद्विशेषणं तत्सर्वं शक्यतावच्छेदको धर्मं इत्युच्यते। अतः सर्व धर्माणां (विशेषणानाम्) उपलक्षिका जातिः। स्व बोधकत्वे सति स्वेतर (यावद्गुणबोधकत्वम्) शब्दार्थयोः वाच्यवाचक भाव एव प्रवृत्तिः। तत्र निमित्तं सर्वो धर्मः। सः जाति-गुणक्रिया यत्किञ्चिद् वा भवेत्) सर्वं जातिपदग्राह्यम्। अतः पदपदार्थयोः शाब्द बोध नियामिका वाच्यवाचक भावरूपा प्रवृतिः सवत्र जातिरेव न भवितुमर्हति। किन्तु गुणमात्रस्य— यावन्तो विशेषणीभूताः, जाति द्रव्य गुण क्रिया यदृच्छा शाब्दानां पदप्रवृत्तौ निमित्तता बोध्या। इयं जातिः शब्दवाच्याः। शब्दवाच्य (व्यक्तौ) विद्यमाना, समवायसम्बन्धेन स्थिता च। विशिष्ट बोधे विशेषणतया

करती है। यहाँ जाति शब्द शब्दोक्त सभी विशेषणों का उपलक्षण है, अतः शब्द, अर्थ सम्बन्ध ही प्रवृत्ति में निमित्त कारण है। जिनमें धर्म हैं वे सभी विशेषण जाति शब्द से ग्राह्य हैं।

स्वार्थ, द्रव्य, लिङ्ग, संख्या, कारक भेद से पाँच प्राति पदिकार्थ हैं। जातिवाद मीमांसकों का पक्ष है। व्याकरण शास्त्र सभी शास्त्रों का अध्यक्ष है जो सबका

देदीप्यमाना। अतः वाच्यत्वेसति वाच्य वृत्तित्वेसति वाच्योपस्थितीय प्रकारता वत्व जातिः। सा शब्दस्य वाच्योऽर्थः (व्यक्तिः) तत्र तिष्ठति वाच्यार्थविशिष्ट शब्दे विशेषणरूपेण विद्यमानां सर्वेषा प्रवृत्ति निमित्तधर्माणांमुपलक्षिका वाच्य रूत्तेणो पस्थित प्राकारताश्रय भूता। यथा—कौपीनत्वं कौपीन पद वाच्यम् कोपीनपद वाच्य व्यक्तौ समावायेन (अमेदेन) सन्तिष्ठते। तथा च कौपीनत्वावच्छिन्न कौपीनं प्रकारतया प्रतीयमाना।

प्रवृत्तिनिमित्तार्थस्य फलन्तु, आकाशत्वमभावत्वञ्च न जातिः। किन्तु प्रवृत्ति निमित्त रूपो धर्मो मन्यते। जात्यर्थमनेकाश्रयत्वमावश्यक म्। आकाशत्वन्तु न तथा। यथा घटत्वं घटपदवाच्यं घटस्यवाच्ये कम्बुग्रीवादिमदर्थे स्थितमपि घटत्व विशिष्टस्योपस्थितौ विशेषणरूपेण नाना घटेषु भासते। अतः घटत्वं जातिरप्यस्ति प्रवृत्तिनिमित्तमपि।

आकाशत्वमभावत्वन्तु अनेकानुगतंनास्ति। अतो न जातिः। आकाशत्वं आकाशवाच्यम् तस्याश्रय आकाश इति एवमभावत्वम् अभावपद वाच्यं तस्याश्रयोऽभाव इति। घटाकाशाभ्यां वृत्तिज्ञानाधीनोपस्थित्तिः—भेदिकाशक्तिर्भवति। आकाशत्वम् अभावत्वञ्च प्रकारताश्रयः अतस्तत्र प्रवृत्तिमात्रस्य लक्षणं गच्छति। अत्र जाति शब्दस्य धर्ममात्रोपलक्षकत्वेऽपि आकाशत्वाभावत्वयो र्जातित्वाभावेऽपि न कश्चन दोषः।

स्वार्थद्रव्यलिङ्गसंख्याकारकभेदेन पञ्चप्रातिपदिकार्थः। तत्रस्वार्थपदेनं जातिर्ग्राह्या। षड्ङ्गेषु मुखमिव मुख्यं व्याकरणम्, मुखं सर्वानङ्गननुमोद्यति एवं जातिवादिमीमांसकानां सन्मानं कर्तुं पाणिनिः जातेः पदार्थत्वे प्रमाणं प्रस्तौति जात्याख्यायामिति 'जातेरस्त्रीति सूत्रे आकृतिग्रहणा जातिः लिङ्गानाञ्च न सर्वभाक्।

अणुदित् सूत्रे 'भाष्ये' अण् ग्रहणमपरिभाष्यम्। तत्सूत्रेऽण् ग्रहणं न कार्यम्, आकृति ग्रहणात् सिद्धम्। अक्रियते—व्यावर्त्यते या सा जातिः। आकृति

**सम्मान करता है। इसलिए पाणिनि ने जाति पदार्थत्व में प्रमाण रूप में "जात्यख्यायाम्" सूत्रकों प्रतिपादित किया। जिस शब्द मे जाति अर्थ को कहना हो वहाँ सूत्र से ङीप् का विधान होता है। ग्रन्थकार युक्ति भी देते हैं कि जाति अर्थ की स्वीकृति में लाघव है, इसलिए 'जाति में वाच्यता' उचित है। क्योंकि उसमें एक शक्ति एक धर्म मन्तव्य होता है। जो लाघव का स्वरूप है। यदि व्यक्ति को पदार्थ मानते हैं तो व्यक्ति अनेक हैं, असीम हैं, अननुगत हैं। जितनी व्यक्ति उतनी शक्ति उतने धर्म की कल्पना करनी पड़ेगी तो अनन्त दोष अननुगत (असीम) व्यभिचार भी होगा गौरव भी।**

वाजप्यायनः जाति पक्षमाश्रित्य सरूप सूत्रं खण्ड्यते। तस्य सूत्रस्य प्रत्याख्याने उक्तप्रमाणैश्च जातिपदार्थः समर्थ्यते। सूत्रकार-भाष्यकारवाजप्यायनादीनां प्रवलसमर्थने सत्यपि ग्रन्थकारयुक्तिरपि दीयते कारिकाया व्याख्या प्रसङ्गे उक्तं यत् तस्या (जातिः) लाघवेन वच्यत्वौचित्यात् लघ्वर्थमध्येयं व्याकरणम्। लघुना उपायेन शब्दाः शक्याः विज्ञातुं इयमेव लाघवमूलिका पदार्थानां वाच्या। अस्या एकत्वे शक्तिरप्येकैवेत्यपरं लाघवम्। यद्यपि शक्ति बोधक शिरोमणि र्व्यवहार एव। तत्र व्यक्तेरेव विलासः। तथापि तस्यां शक्ति र्नोचिता गौरवात्। यतः असंख्याताः व्यक्तयः। अतोऽनन्ताश्रयाः यावानाश्रयः तावतीः शक्तिकल्पनाः। आनन्त्यदोषः अननुगमरूपो व्यभिचारश्च समापतिष्यति। इत्येव गौरव स्वरूपम्।

लाघवन्तु गौरव सापेक्ष्यम्। गौरवनिवर्तकं लाघवं प्रशस्तम्। व्यक्तौ शक्तिमत्वे सम्भावितं गौरवनिवर्तकं लाघवं जातौ व्यक्ति स्वीकारे सन्निवेष्यते। यद्यपि जातिशक्ति पक्षे नरशब्दे नरत्वं शक्यार्थः (वाच्यार्थ) शक्यातावच्छेदकं (वाच्यार्थो धर्मः) नरत्वत्वं वाच्यं स्यात्। तस्य सकलवृत्तित्वे सति नरेतरेषु पश्वादिषु अवृत्तित्वम्। किन्तु त्वत्वस्य अनेक व्यक्तिषु पदार्थतया घटितत्वेनातिगौरवम्। तथापि शब्दार्थयो र्नरनरत्वयोः इतरेतराध्यासस्सम्बन्धेन यश्शब्दः सोऽर्थो योऽर्थः सशब्द इत्यादि रूपेण नरत्वरूपायाः जातेरेव शक्यतावच्छेदकत्वम्। व्यपदेशिवद्

शङ्का न कहिए सभी व्यक्तियों के एक-एक व्यक्ति में एकत्व धर्म अनुस्यूत (माला में सूत्र की तरह) जैसे जाति पक्ष में एक शक्ति जो सब में अनुविद्ध है, जैसे व्यक्ति पक्ष में एकत्व धर्म एक है। सभी व्यक्ति में समवाय सम्बन्ध से समाया हुआ है। जब दोनों पक्षों में समान रूप से एक ही शक्ति कार्य कर रही है तो एक तरफा पक्षपात करने वाली युक्ति के बिना जाति पक्ष में लाघव कैसे, विपक्ष में गौरव कैसे।

समाधान एवंहि—यदि एक व्यक्ति में एकत्व शक्ति स्वीकार करेंगे तो दूसरे व्यक्ति के बोध में लक्षणा करनी पड़ेगी, क्योंकि एक की शक्ति दूसरे के वाच्यार्थ रूप से उपस्थित नहीं होगी। लक्षणा में स्वसमवेताश्रयत्व सम्बन्ध होने पर गौरव होगा; यहाँ स्व = एक व्यक्ति उसमें समवाय सम्बन्ध से कल्पित शक्ति का आश्रय उसका भेदक धर्म आश्रयत्व होगा। इसमें पेचीदा अर्थ का गौरव होगा। लक्षणा भी करनी पड़ेगी इसलिए व्यक्ति अवाच्य है। हमारे मत में जाति अर्थ मानते हैं, तो सहाश्रयत्व ही सम्बन्ध होगा। अर्थात् जाति का जो यह आश्रय (व्यक्ति) है 'उसका अवच्छेदक सम्बन्ध मानने पर लाघव है अतः जाति ही वाच्यार्थ। व्यक्ति की अपेक्षा इस लक्षण में लाघव की विशेषता है।

**न च व्यक्तीनामपि प्रत्येकमेकत्वा द्विनिगमनाविरहः, एवं ह्येकस्यामेव व्याक्तौ शक्त्यभ्युपगमे व्यक्त्यन्तरे लक्षणायां स्वसमवेताश्रयत्वं संसर्ग इति गौरवम् । जात्या तु सहाऽऽश्रयत्वमेव संसर्ग इति लाघवम् ।**



भावेन वाच्यार्थ भेदकत्वेन न गौरवम् । शब्दार्थयोः तादात्म्यसम्बन्धेन गोत्वगोत्वत्वस्य च अखण्डरूपोपाधित्व स्वीकारेण अवच्छेदकत्वेन गौरवम् । अथ च शक्ते निर्दशिकायाः ( निरूपिकाया ) जातेरैक्यात् शक्तिरप्येकैव । एवं जात्याख्यायामिति सवर्णेऽण् ग्रहणमपरिभाष्यमिति आकृति ग्रहणात् सिद्धमित्यादि वचन प्रमाणेन जातेर्नामार्थत्वं=नामजन्य प्रतीति विषयत्व प्रमाणितं तथापि मीमांसकमतं सङ्गमयितुं तैः स्वीकृतां संगतिं साधयितुमाह लाघवेनेति—

एवं जातौ शक्तिर्लघीयसी यद्यपि किन्नरः किन्नरपदवाच्यः । अत्र व्यक्ति विषय बोधिकाशक्तिः तथापि विशेषणे विधिनिषेधौ भवतः । विशेषण सत्वे विशेष्य बोधस्य बोधो भवति । सत्ता विशेषणं सङ्क्राम्यति न तु विशेष्यम् । एतेन वाच्यविधानं विशेषणे विनिश्तिम् । जातिविशेष्यक एव शक्तिज्ञानं जायते । पुस्तकं पुस्तक पदशक्यम् । इति जातिपक्षे शक्तिबोधः ।

ननु जातिव्यत्त्योर्को विशेषः ( भेदः ) यतोंहि जातेर्वाच्यत्वेऽपि लाक्षणा व्यक्तौ कर्तव्यैव यथा-परमाण्विन्धनं प्रापय इत्यादौ इन्धनस्य प्रापण कर्मत्वसिद्धये जातौ शक्ति सत्वेऽपि नान्तरीयकतया, अर्थापत्या वा आश्रयत्वेन व्यक्ति बोधाय व्यक्तौ लक्षणैव शरणम् । वाच्यत्वं लक्षणा चोभयत्र समानम् । अतो व्यक्ति पक्षेऽपि न गोरवम् । अपितु एकत्वरूपो धर्मः सर्वस्यां व्यक्तावनुविद्धमस्ति । एकं व्यक्तिनिरूपितैव शक्तिरस्त शक्तिनिर्दशिकाया व्यक्तयेरैक्येन शक्तिरप्येकैव यथा । जाति पक्षे एका शक्तिः सर्वस्मिन्ननुस्यूता एकमेव व्यक्तिपक्षे एकत्वरूपो धर्मः सर्वत्र व्यक्तौ समवायसम्बन्धेन समानः तदाह न चेति, यदा द्वयोः पक्षयोरेकैव शक्तिः कार्यं करोति तर्हि विनिगमनाविरहात् एकतर पक्षे प्रबलप्रमाणाभावात् व्यक्तिरेव वाच्या न जातिः । जतिरेव वाच्या न व्यक्तिरिति वक्तुं न शक्यने । जातिव्यत्त्योः वाच्यत्व साम्येऽपि जाति पक्षे लाघवे किंमूल मिति विचिन्त्यताम्—

**भो जाति वादिन—मेरे मत में भी एक ही व्यक्ति की परिचायिका शक्ति एक ही में नहीं है। जिससे व्यक्त्यन्तर में लक्षणा करनी पड़े। किन्तु किस व्यक्ति में शक्ति है? इस व्यक्ति में, या उस व्यक्ति में। पक्षपात पूर्ण प्रमाण के अभाव में**

मीमांसक

किञ्च विशिष्टवाच्यत्वमपेक्ष्य नागृहीतविशेषणन्यायेन जातिरेव वाच्येति युक्तं, व्यक्तिबोधस्तु लक्षणया। एवं च तत्र विभक्त्यर्थान्वयोऽप्युपपद्यत इति दिक्।



यद्यपि व्यक्तिपक्षे जातौशक्तिपरिहायैंव जातिहीने शुष्कव्यक्तिशक्तिस्वीकारे आनन्त्यादयो दोषाः समापतन्ति। आनन्त्याच्छक्तिग्रहोऽपिनजायते आवश्यकत्वात् जात्येव वाच्या। यद्येवं तर्हि सर्वासु व्यक्तिषु शक्ति सिद्धौ जातिशून्यव्यक्तेरभावेन व्यक्तौशक्ति कल्पनाऽपि निर्दुष्टैव। तथाचावश्यकत्वादन्त रङ्गत्वात् प्रथमोपास्थिति-

ज्ञान नहीं करा सकती। यदि विशेषण का ज्ञान कराती है। तो क्षीण शक्ति होरक विशेष्य का ज्ञान नहीं करा पायेगी। जैसे—भोजन के पश्चात बुभुक्षा शक्ति क्षीण हो जाती है। दूसरा भोजन ग्रहण वहीं करती, इस तरह व्यक्ति में लक्षणा करनी ही पड़ेगी। अतः जाति ही पदार्थ सिद्ध हुई। यदि व्यक्ति में लक्षणा होने के कारण व्यक्ति की उपस्थिति पदनिष्ट वृत्ति ( पद में रहने वाली योग्यता, बोधकता, वाच्य, वाचक भाव. इच्छारूपा, शक्ति ) ज्ञान के आधीन है। अतः "घटमानय" इत्यादि स्थल में घटत्वाश्रय घट व्यक्ति का विभक्त्यर्थ ( अमर्थाश्रयत्व ) में अन्वय उत्पन्न होता है। यह वैयाकरणों का सिद्धान्त है। व्यक्ति बोध तो लक्षणा से होगा। न कहिए, व्यक्ति समानसम्विद ( समान रूप से सबमें अनुभून, अनुस्यूत, अनुगतो जाति है। उससे सम्वेद्य व्यक्ति है। जो जाति का भासक सामग्री हो जैसे—अग्नि लाइये" यहाँ हाथ पर अग्नि का आनयन असम्भव होने से विवश होकर किसी पात्र का अश्रय लेना पड़ता है। पात्र अग्नि आनयन की सामग्री है। ऐसे ही व्यक्ति जाति बोध की सामग्री है। तो व्यक्ति बोध के लिए लक्षणा क्यों? समाधान— "गोत्वमस्ति" इत्यादि वाक्य में जहाँ जाति मात्र की सत्ता सम्वेद्य ( शाब्द बोध विषय ) है। वहाँ जाति सहित व्यक्ति की सत्ता सम्वेध हो जायगी, जो अभीष्ट नहीं है। अतः "घटमानय" इत्यादि स्थल में विवश होकर आनयन क्रिया में कर्मतया अन्वय के लिए व्यक्ति में लक्षणा करनी पड़ी। शंकादल का सारा तर्क आक्षेप में अन्तर्भूत निहित है। जो शब्द जन्य ज्ञान न होने से अनुपयुक्त है। अतः लक्षणा से बोध संगत है। अथवा लक्षणा न की जाये, यद्यपि जाति का आनयन और अन्वय असम्भव है। तथापि व्यक्ति साहित्य ( सहविवक्षा ) जाति में सिद्ध है। भाष्य में ( आलम्भनादि क्रिया जाति में सम्भव नहीं, तथापि जाति सह चरित व्यक्ति का आलम्भन सम्भव है )। अथवा जाति व्यक्ति में कोई अन्तर नहीं।

जातिपक्षे लाघवे मूलं सम्बन्ध एव। तत्रैव जाति पक्ष पातिनीयुक्तिः स्फुरति। तत्रैव लाघवे एकतर पक्षपातिनी युक्तिर्विद्यते। सम्बन्ध लाघवेन जातिपक्षपातिनी विनिगमना हृद्या। इत्यभिप्रायेणाह—एवंहीति—

व्यक्तौ शक्ति स्वीकारे एकस्यां व्यक्तौ सुसम्पन्नो वाच्यार्थ बोधः। अपरस्यां व्यक्तौ शक्तिग्रहाय ( शाब्दबोध विषयता संसिद्धये ) लक्षणैव शरणम्। नान्यागतिः सा वाच्यार्थ बोधे वाच्याथं सम्बन्ध रूपैव। लक्षणायाः सत्वे शत्त्यभ्युपगमः लक्षणाया अभावेऽपि शक्तेरेप्यभावः इत्यन्वयव्यतिरेकाभ्याम् अन्यस्यां व्यक्तौ शत्त्या अर्थो नोपतिष्ठने। अतः व्यक्तिपक्षे शक्यार्थ सम्बन्धः स्वसमवेताश्रयत्वं संसर्गइति भविष्यति। यस्मिन् शक्तिकल्पना करणीया सः स्वशब्द ग्राह्यः। स्वं=वाच्यव्यक्ति। तस्यां समवेता=समवाय सम्बन्धेन विलसिता ( विद्यमाना ) जातिः तदाश्रयः=अन्या व्यक्तिः। सैव समवायेनाधिकरणम्। यथा-नेताशब्दे एकत्वरूपो पलक्षिता जातिः कल्पिताऽस्ति। नेता इत्यत्र समवायसम्बन्धेन ( असाधारण कारण रूपाशक्तिः ) स्थिता जातिः नेतृत्वमिति। सा स्वाश्रये व्यक्तौ स्वरूपसम्बन्धेन व्यत्यन्तरेऽपि शक्ति प्रविशति। अनयारीत्या सर्वेषां बोधः ततो ऽन्यस्यामन्यस्यां व्यक्तौ स्वसमवेताश्रयत्वं संसर्ग इतिस्यात्। एवं पुनः पुनः सः। ततो व्यक्त्यानन्त्य इव सम्बन्धानन्त्ये गौरवम् एवं शक्तेः लक्षणायाश्च मान्यतायामतिगौरवम्।

जातिशक्ति पक्षे व्यक्ति वोधाय सहाश्रयत्वं 'ससर्ग इति विशेषलाघवमेकाकारता वच्छेदेन आधेयेन सर्वव्यक्तिषु सबन्धस्तिष्ठति। शक्य सम्बन्ध एव लक्षणा। व्यक्तिवोधे तु लक्षणास्वरूपे गौरवम्।

निर्णय असम्भव होगा। अतः सम्पूर्ण शक्तियों में अनुगत = समान रूप से एकत्व जाति की प्रतीति है। उसका आश्रय होने से व्यक्तियों का बोध शक्ति से ही हो जायगा। न लक्षणा करनी पड़ेगी, न तो व्यक्तियों के आनन्त्य की कल्पना; इस रहस्यमय विचार पर जाति वादी बोले, किञ्चइति—यदि जाति से अनुगत (व्याप्त) व्यक्ति में शक्ति स्वीकार होगा, तो जाति विशिष्ट व्यक्तियों शक्ति में सिद्ध हो जाएगी। विशिष्ट बुद्धि में विशेषण ज्ञान कारण होता है। गोत्व विशिष्ट गौः के ज्ञान में विशेषण ( गोत्व ) का ज्ञान अनिवार्य है। यत् किञ्चिन्निष्ठ प्रकारता निरूपित विशेष्यता शालिनी बुद्धि होती है। विशेषण ज्ञान पूर्वक विशेष्य का ज्ञान होना नियम है। हिन्दुत्व विशिष्ट ज्ञान में हिन्दुत्व का ज्ञान कारण होने से जाति का वाच्यार्थ होना युक्ति सङ्गत है। इस अभिप्राय की प्रामाणिकता वाक्यपदीय से प्रस्तुत की जा रही है। ना गृहीत इति—जब तक विशेषण का ज्ञान नहीं होगा, तब तक विशिष्ट बुद्धि में विक्षेष्य का अवगाहन ( बोध ) नहीं होगा। यदि अभिधा शक्ति विशेषण का ज्ञान करायेगी। तो अभिधा शक्ति विशेषण ज्ञान में क्षीण होकर विशेष्य का

कत्वाच्च । तथापि मास्तु व्यक्तिभानं, परमाण्विन्धन प्रापयेत्यादौ प्रापणक्रिया केवलायां जातावसम्भवा ।

तथा स्वसहचरित व्यक्ति साहित्येन संसाध्यते । यथा गन्धः स्वसहचरित पुष्प साहित्येन प्रापण क्रियायाः विशेषीभविष्यति । अतएव तद्धितार्थोत्तर पद । २-१-५१ सूत्र भाष्ये आकृतौ आलम्भनादीनां ( प्राशनादीनाम् ) सम्भवो नास्ति । इति कृत्वा आकृतिसहचरिते द्रव्ये आलम्भादीनि क्रियन्ते, अव्यतिरेकात् द्रव्याकृतिरनयोरिति । तथा च अग्निरानायतामित्यादावप्रेरितमपि पात्रभानीयते । पात्राधारंबिना आनयनासम्भवात् । एवम प्रेरिताऽपिव्यक्तिः बुध्यते । तस्या क्रियायामन्वयः । सरूप सूत्रे 'व्यक्तौ कार्याणि संसृष्टा जातिषु प्रतिपद्यते' तथाऽपि व्यक्तिः लक्ष्यार्थ एवं नशक्यार्थ इति । अताह किञ्च जात्याश्रयत्वेन सर्वासु व्यक्तिषु शक्तिनिरुपितमाश्रयत्वमनुगतीकृतम् । ज्यात्याऽनुगतीकृताशक्तिः न लक्षणा, नानन्त्यादि दोषः ।

व्यक्तिषु जात्यानुगतीकृताशक्तिरितिस्वीकारे, विशिष्टे शक्तिः समुपलभ्यते । तत्र यदिशेषणं तस्य ज्ञानं कारणं पूर्वोक्तेन विशिष्टस्य वाच्यताऽपेक्षते । तत्र नागृहीत विशेषणन्यायेन जातिरेववाच्या । अयं न्यायः जातिपक्षपाती । 'नागृहीतविशेषणावुद्धिः विशेष्यमवगाहते' इतिन्यायशरीरं विशेषणेशक्तिगृहीताबुद्धिः विशेष्यमाश्रयते । विशिष्टबुद्धौ । विशेषणेशक्तिज्ञानंकारणं तदर्थः । तेनविशेषणी भूतजातिशक्तिरितिलभ्यते । विशेषणे शक्तिस्वे विशिष्टेशक्तिरित्यन्वयः । विशेषणस्य वाच्यत्वाभावे विशिष्टे वाच्यत्वाभावाव्यतिरेकि'उक्तश्चभट्टैः—

अन्वय व्यतिरेकाभ्यामेकरूप प्रतीतितः ।
आकृतेः प्रथम ज्ञानात् तस्या एवाभिधेयता ॥
विशेष्यं नाभिधा गच्छेतक्षणिशक्तिर्विशषणे ।
नागृहीत विशेषणा बुद्धिः विशिष्टमवगच्छति ॥

प्रथमं आकृतेः (जातेः ) ज्ञानं तस्याभिधेयत्वंवाच्यता बोध्या ।

ननुजातींशक्तिस्वीकारे धनं ददाति, शत्रूनहन्ति, शिष्यानुपदिशति, इत्यादौदानहननमुपदेशश्च जातें नं भवति, अमूर्तत्वादन्वयाऽयोग्यत्वात् एव जात्यंशे शक्ति स्वीकारे व्यक्ति बोधो न स्यात् । कर्मत्वोपस्थितिश्च न स्यात् । न च जात्याश्रयत्वेन आक्षिप्तव्यक्तौ दानादीनां कर्मतयाऽन्वयः संभविष्यति । यथा स्थूलो यवनः स्वव्रते ( रोजायां ) दिवा न भुक्ते । तेन रात्रि भोजनमाक्षिप्यते । स्थौल्यन्तु ससुखभोजनस्य परिणामम् । रात्रिभोजनाक्षेपेणैव जातेराधारभूतायाः व्यक्तेराक्षेपेण कर्मत्वं धनादौ सुलभम् । तत्र प्रत्ययाः ( कर्मत्वबोधकाः कर्मत्वाद्यर्थाः ) स्वप्रकृतिगतायाः शक्तिस्तया उपस्थिते ऽर्थे कृतसम्बन्धाः सन्तः स्वार्थंबोधयन्तीति

नियमः। प्रकृतिनिष्ठ-वृत्त्या तु जातिः तिष्ठति न तु व्यक्तिः अत आक्षिप्तांशे व्यक्तौ कर्मत्वाद्यन्वयो नोपपद्यते। येनकेनाऽपि प्रकारेण उपस्थितस्यार्थस्य ग्रहणेन गुरुं गोविन्दञ्च पश्यतीत्यादौ शब्दाश्रयत्वेन आकाश त्वेऽपि कर्मत्वम्। दर्शनरूपफला श्रयत्वात्। गुरुंरिवगोविन्द इव। अतो वृत्त्यीपस्थितताऽर्थे प्रत्ययाऽर्थाऽन्वये। न तु यथा कथंचिदर्थे। संवित्ति सम्वेद्यत्वमपि न वक्तु शक्यते। यतो हि जातिः स्वाभि व्यञ्जक सामग्र्यासहैवबोध विषया भवति। अत जात्यर्थ प्रकाशिका सामग्री व्यक्तिरेव, तया सहैव बोधः स्यात्। जाति विशिष्ट बोधे जाति शक्तिज्ञानम् कारणम्। ततः कर्मत्वमस्तु नाम, तदपि न। सर्वत्र विशिष्टबोधसम्भवात्। जाति मात्रस्य बोधो न स्यात्। अत आह–व्यक्ति बोधस्तु=लक्षणया ( निरूढलक्षणया ) इत्यर्थ। यत्र अन्वथानुपपत्तोरपेक्षा नास्ति। अनुपपत्ति प्रतिसन्धानमन्तराऽपि भवति। इयमनादिता पयं बोधिका। अप्रसिद्धाः शक्तिः। पदस्य स्वशक्त्या उपस्थितार्थस्य ( जातेः ) य आश्रयस्तदर्थरूपा। एवं शाब्दबोधेपदस्य स्वगत शक्ति साहितस्योपास्थितिः कारणम्। व्यक्ती शक्त्यभावेऽपि लक्षणया तत्र शक्तिः समाविष्टा। ततः धन, शत्रु, शिष्याणां कर्मत्वं। एवञ्च लक्षणा स्वीकरेविभक्तीनां=सुवादीनामऽर्थाः संख्याकर्मादयो अन्वीयन्ते। विभक्त्यर्थान्वय, लक्षणया व्यक्ति बोधेः, तस्य लक्षणाख्यवृत्त्या उपास्थित्वात्। तत्र प्रत्ययार्थकर्मत्वादींना-मन्वये न कश्चन नियम विरोधः।

यद्यपि नर शब्दाद् नर नरत्वयोः ( जातिव्यक्तो ) बोधः सार्वजनीनः। उभय विषयक बोधेः अगत्या वृत्तिद्वयाश्रयणम्। यन्नयुक्तम, वृत्ति द्वयप्रसङ्ग विरोधात् तथापि गंगायां मनीघोषौ स्तः। इत्यादो एककालावच्छेदेनान्वयदर्शनाद् विरोधे भानाभावः अन्यथा मीनस्य प्रवाहे घोषस्य च तटे लक्षणा कथं स्यात्। शक्तिः तात्पर्यज्ञापिका लक्षणा च दुरूपपन्नेति न्याय विग्रहः। यत्र तु वाच्यार्थबाधस्तत्र तात्पर्यानुरोधिनी लक्षणा तेन न न्यायविरोधः। यद्यपि गो-शब्दात् व्यक्ति र्ध्वन्यते, न तु गोत्त्वम। तत्र विद्यमान-प्रातिपदिकार्थाभावे प्रथमा न स्यात्। तथापि प्रातिपदिकशब्दजन्यं ( उत्पन्नम् ) व्यापकं यज्ज्ञानं, तस्य विषयितावच्छेदकस्य प्रतियोगिनोऽर्थस्य प्रातिपदिकार्थनामार्थपदेन ग्रहणात्। व्यक्तेरपि बोधात्-प्रथमा सिध्यति। ततो प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्व नियमोऽपि संङ्गच्छते। प्रकृत्यर्थः, आकृति पक्षे स्व शक्त्योपस्थिता जातिः, तस्यामेवान्विताः सन्तः प्रत्ययाः स्वार्थबोधकाः भवन्ति। लक्षणयोपस्थितायां व्यक्तौ विभक्त्यर्थे संख्याकर्मादीनामन्वयो न स्यात्। पदस्यार्थान्तरत्वेनासम्भवात्। लक्षणा त्वर्थान्तरा शक्तिः। व्यक्तावार्थी, ( अर्थतः प्राप्ता ) आक्षिप्येत्यर्थः। निराश्रयाजातिः न तिष्ठति। तदर्थं व्यक्तिराक्षिप्यते। प्रतीयमानोऽर्थ इत्यर्थ। प्रतीयमानेऽन्वय कार्यं

**यद्वा केवलव्यक्तिरेवैकशब्दार्थः । केवलव्यक्तिपक्ष एवाण्ग्रहणस्यैकशेषस्य चाऽऽरम्भेण तस्यापि शास्त्रसिद्धत्वात् युक्तं चैतत् । व्यवहारेण व्यक्तावेव तद्ग्रहणात् सम्बन्धितावच्छेदिकायाः जातेरैक्याच्छक्तिरप्येकैवेति न गौरवमपि ।**

❀

सम्भवति । उक्तञ्च—गम्यमानस्यार्थस्य नैवदृष्टं विशेषणम् । शब्दानन्तरौ विभक्त्यावा धूमोऽयं ज्वलतीतिवत् ॥

यथा 'धूमो ज्वलति' इति कथनं निरर्थकं धूमे ज्वलनान्वयो न तवति तथैव लक्षित तटे स्नानं न भवति । एवं प्रतीयमाना आक्षिप्ता उपलक्षिता वा व्यक्तिः प्रत्यार्थं प्रति न सम्बद्धते ।

व्यक्ति पक्षस्पावतरणम् ।

न ब्राह्मणं हन्यात् । सुरां न पिवेदिति । श्रुतिवचनं व्यक्तिवादे प्रमाणम् । तत्र व्यक्तेरेवहननपानसम्भवात् । न तु जातेः द्रव्याभिधानं व्याडिरिति सरूपसूत्रस्य भाष्य वचनात् । सूत्रकारमतेऽपि एक शेषस्यापि ग्रहणस्य चारम्भात् । एकस्मिन्पदे शक्यतावच्छेदकलक्षतावच्छेकयोः जातिव्यक्त्योरसम्भवात् । अन्वयानुपपत्ति स्तात्पर्यानुपपत्ति-मूलिकां लक्षणां विनाऽपि गां दद्यादित्यादौ व्यक्ति बोधात् । गोत्वादे र्दानासम्भवाच्च एकवद द्रव्यमरमित्या शयेनाह यद्वेति-केवलव्यक्तिरेवैक शब्दार्थः । अवधारणार्थकमेव पदं व्यक्ति पक्षस्य दार्ढय द्योतकम् । अथवा एक पदं द्विवद्धं सुवद्धं भवतीति प्रत्यायकम् । यतोहि विशिष्ट वादिमते जाति प्रकारकाश्रयविशेष्यकशाब्दबोधस्यावश्यकत्वात् । जाति प्रकारक व्यक्ति विशेष्यक बोध प्रति जाति विशिष्टव्याक्तिनिष्ठशक्तिज्ञानं कारणम् । यथा अत्वावच्छिन्न सकलाकारबोधे अत्वविशिष्टमकारनिष्ठशक्तिज्ञानं कारणम् । जात्याश्रयाः सकलव्यक्तयो भवन्ति तेन अणुदित-सूत्रेऽण ग्रहणं व्यर्थ मेवेति स्फुटम् । जातिशक्तिमत्तेतु तन्नैष्फल्य स्फुटतरमितिभावः । अण्ग्रहण निरर्थकं सज्ज्ञापकं, यत् केवल व्यक्तिरेव पदार्थ इति । एवं सरूप सूत्रमपि, जात्या एकस्य द्वयोर्बहूनाम्बा बोंध सम्भवात् । जात्यैव सकलेष्टि सिद्धावेकशेषोव्यर्थः सन्व्यक्ति पक्षं समर्थयनि । ताभिः युक्तिभिः शास्त्रानुमोदिनोऽयं पक्ष इति ।

जाति व्यक्ति के परस्पर विवक्षा और जाति से व्यक्ति, व्यक्ति से जाति का अन्योऽन्याश्रयसम्बन्ध होने से एक दूसरे के ज्ञान में परस्पर ज्ञान की कारणता से जाति का बोध स्वतः सिद्ध है । सभी क्रिया में व्यक्ति ही उपयोगी है, जाति नहीं ।

यद्यपि (अण्ग्रहणमरिभाष्यम्) इति भाष्यप्रमाणेनाण् ग्रहणस्य प्रत्याख्यानात्, एकशेषस्यापि शास्त्रप्रक्रिया निर्वाहायोपयोगित्वात् व्यक्तिपक्षोऽप्रामाणिकः। अत एव उक्तञ्चैतदिति पूर्वज्ञापनं सयुक्तिकं ज्ञेयम्। युक्ति स्वरूपस्तु व्यवहार एव यथा-रसमयीं (रसगुलां) भुंक्ष्व मिष्ठानं गृहाण, मार्जारीं ताडय, इति वाक्य प्रयोगान्तरं भोजन, ग्रहण, ताडन क्रियां दृष्ट्वा बालकस्य रसमयी, मिष्ठान्न, मार्जारीषु व्यक्तिषु प्रथमं शक्ति ज्ञानं जायते। अतो बालकस्य जाति व्यक्ति लिङ्ग संख्याकारकेषु अन्येषां ज्ञानमन्तराऽपि व्यवहारेण व्यक्तिबोधो जायते। अत आह व्यक्तावेव तद्ग्रहणात्=शक्तिसम्बन्धाऽग्रहणादित्यर्थः। न च व्यक्तिपक्षे आनन्त्यादीनां दोषाणां काः गतिरभविष्यतीत्याह। सम्बध्नातीति = द्वयोः संयोजयतीति सम्बन्धः। सोऽस्त्यस्मिन्निति सम्बन्धी (शब्दः) तत्र अवच्छेदिका=शक्यार्थ भेदिका जातिरेकैव। जात्यनुगतीकृतानां समानरूपेण प्रतीयमानानामेक धर्मावाच्छिन्ननानां व्यक्तीनां बोधात् शक्तेरैक्यात् न नानात्वापत्तिर्न च व्यभिचारः। अतो गौरवमपि न।

सम्बन्धितावच्छेक धर्म स्वीकारे सति जातेरपि वाच्यत्वसंभावना निरासायाह न चेति शक्तिबोधस्यावश्यकतया घटत्वस्य घटवृत्ति शक्यता वच्छेदकत्व स्वीकारात्। अर्थात् विशेषणे शक्तिस्वीकारे विशिष्टस्यबोधो न जायते, तन्न, यथा घटं प्रतिदण्डः कारणं न दण्डत्वम्। किन्तु दण्डत्वस्याकारणत्वेऽपि कारणत्वावच्छेदकं विना दण्डःकार्यक्षमो न तवति। यत्र दण्डस्तत्र अचोदितमपि दण्डत्वं

इसलिए कहा "यद्वेति"—केवल व्यक्ति ही एक शब्द का अथ है। केवल शब्द दाढर्य का सूचक जाति का निवर्तक "अणुदित्" सूत्र में अण् ग्रहण और एक शेष प्रकरण व्यक्ति पक्ष का समर्थक होने से वह उपउक्त एवं आवश्य क है। व्यक्ति ही पदार्थ है। शास्त्र सम्मत युक्ति संगत शिष्ट मर्यादित व्यवहारोपयोगी है।

न कहिए अण् ग्रहण और एक शेष का भाष्य में प्रत्याख्यान है, तो प्रमाण कैसे ? तब बोले युक्तञ्चैतत्—व्याडि विद्वान का मत है, कि व्यक्ति ही पदार्थ है। शक्ति के ज्ञान में शिरोमणि व्यवहार है। जो व्यक्ति से ही सम्भव है।

शङ्का—व्यक्ति में शक्ति स्वीकार करने पर जितनी व्यक्ति उतनी शक्ति के होने से अनन्त की कल्पना होती है। जहाँ शक्यतावच्छेदक ( अर्थ में विशेषणीभूतधर्म ) एक हो, समान रूप से उपलब्ध हो वहाँ शक्ति एक मानी जाती है। जैसे—द्राक्षामानय वाक्य में द्राक्षाशब्द में रहने वाली शक्ति से अनेक व्यक्ति का बोध होने पर भी विशेषणी भूत धर्म द्राक्षात्व एक है। तो शक्ति के भी एक और अनुगत होने से अनन्तशक्ति की कल्पना गौरव भी नहीं होगा। इसी लिए मूल में सम्बन्धितावच्छेदिका जाति के एक होने से शक्ति भी एक हुई, गौरव भी नहीं हुआ।

जाति

न चैवं घटत्वमपि वाच्यं स्याच्छक्यतावच्छेदकत्वात्। तथा च नाग्रहीतविशेषणन्यायात्तदेव वाच्यमस्त्वति शङ्क्यम्। अकारणत्वेऽपि कारणतावच्छेदकत्ववदलक्ष्यत्वेऽपि लक्षतावच्छेदकत्ववत्तथाऽत्रापि संभवात्। उक्तं च—

आनन्त्वेऽपि-हि भावानामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति ॥इति॥

❀

समवायसंबन्धेन स्वाश्रयद्रव्ये सन्निविशते,। अतो न तत्र गौरवम्। यथालक्षणया गंगापदेन तीरं बुद्धयते.तीरत्वन्तु न लक्षितमस्ति। अलक्षितमपि तीरत्वं लक्ष्य तावच्छेदकत्वेन समवायसम्वधेन तीरं समाश्रयते। अनयारीत्या घटत्वस्यावाच्यत्वेऽपि अगत्या, नान्तरीयाकतयावाच्यविशयत्वं प्राप्नोति। समवायेन घटः द्रव्यमाश्रयते। शक्यार्थस्य विशेषणताभापन्नाद् गौरवम्। अत्र श्रीभर्तृहरेः सम्मतिः आनन्त्येऽपीति– भावानां=पदार्थभूतानां व्यक्तोनां आनन्त्येन अपरिच्छेद कत्वेऽपि एकं–समानेन सर्वव्यक्तौ प्रतीयमानमनुगतजात्यादिं धर्म मुपलक्षणम्– जातेरवाच्यत्वेऽपि वाच्यार्थस्य व्यक्तेः व्यावर्वकमिति कृत्रा शब्दः–गोरूपः गीनिष्ठा वाच्यता सम्बन्धं सुखेन दधाति एवं सर्वासु व्यतिषु शत्त्यव धारणान्न व्यभिचारः।

प्रसङ्गे व्यक्तिपदेन द्रव्यमेव गृह्यते सर्वनाम परामर्श योग्यत्वात्। द्रव्य लक्षणन्तु— वस्तुपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवसितः॥

शक्यतावच्छेदकधर्म अनुगत रूप से स्वीकार करने पर अर्थ का विशेषणीं भूत धर्म ही शक्यतावच्छेदक होता है। इस प्रकार विशिष्ट शक्ति की वाच्यता स्पष्ट सिद्ध होती है। अतः मूलकारं नच घटत्वमपिवाच्यम्" से शंका करते हैं कि व्यक्ति वाच्य तो है ही जाति भी वाच्य होने लगेगी। तथा घ=जाति के वाच्यार्थ होने से ना ग्रहीत विशेषण न्याय से विशिष्ट बुद्धि में विशेषण का प्रथम ज्ञान उपजीव्य होगा। इसलिए तदेव=शक्यतावच्केदक घटत्वजातिरेव वाच्यार्थ बनेगी। इस आशङ्का पर, कि व्यक्ति ही वाच्यार्थ है, उसमें धर्म अन्यथा (स्वभावतः) सिद्ध है। प्रमाण के रूप में "दण्डेन घट" इस वाक्य में घट के प्रति डण्ड ही कारण है। उसमें रहने वाला दण्डत्व नहीं, वह तो स्वभाव सिद्ध है। परन्तु कारणता का अवच्छेदक

यद्यपि सर्वनामनि सर्वार्थवाचकता वर्तते तथापि स्वभावतः बुद्धि विषयकार्थस्योपलक्षितधर्मावच्छिन्न बोधकं सर्वनाम। यस्मिन्नभीष्टधर्मः प्रवृति निमित्त रूपेण भासते। इदं तदिति परामर्श योग्यं यत्तत्-द्रव्यं विशेष्यत्वेन यद विवक्षितं तदपि द्रव्यम्। इयं जातिरित्यत्र विशेष्यत्वेन विवक्षिता जातिरपि द्रव्यम्। किं पठसि त्वमित्यत्र क्रियाऽपि द्रव्यरूपेण विशेष्यरूपत्वात। अधिकरणमपि द्रव्यम् चादिवाऽसत्वे "इत्यत्र लिङ्ग संख्यान्वितं सत्वं द्रव्यम्। व्यापकं द्रव्यलक्षणं तु लिङ्ग संख्यान्वियित्वे सति, सर्वनाम परामर्श योग्यत्वे सति, सिद्धस्वातन्त्र्याद्यनारोपितं सारोपितत्वा धर्मवत्वं व्यापकद्रव्य लक्षणम्। एकस्मिन्पक्षे जाति व्यक्त्योः पृथक विचार उपरिष्टात् प्रस्तुतः। उक्तपक्षद्वयं द्विकंनामार्थ इति पक्षे न सह्यते जातौ शक्तिरिति मते हिन्दुत्वं जातिः शक्ति बोधको धर्मः। शक्यतावच्छेदकं वा हिन्दुत्वं स्यात् तदनुभव विरुद्धम्। एकस्य हिन्दु पदस्य जातौ शक्ति व्यक्तौ लक्षणेति वृत्तिद्वयविरोध आपतति। निराश्रया जातिर्न तिष्ठति आश्रये लक्षणा करणीयैव। सा जघन्याऽगतिकगतिका, गौरव भारवहा च।

एवं व्यक्ति पक्षेऽपि पद मात्रेण व्यक्ति बोधश्चेत् न कश्चन विशेषः, स्वाभाविकत्वात् व्यक्त्यन्तरे लक्षणा अपरिहार्यैव। तथा च व्यक्त्यन्तरे सम्बन्धज्ञानेऽपि, यत्र हस्तिपके ( पीलवाने ) न गृहीतस्तत्रहस्ति दर्शनेन अन्यस्यापि हस्तिपकस्य स्मरणात्, व्यवस्थाभङ्गापतिः। अभीष्ट नियामकविरोधात्। एवमेव मेघो नीलो वृष्टिशीलश्च इत्यादौ नीलचलशब्दाभ्यां व्यक्तो बोधात्, मघेन सह प्रयोगो न युज्यते, मेघत्वेन नीलत्वेन सह प्रयोगाऽत्राव्यः। व्यक्तिवादेः मेघत्वनीलत्वे वा शक्त्यभावात्। तथा व्यक्तिवादे मनुष्यत्व प्रकारक मनुष्य विशेष्यक बोधं प्रति मनुष्य व्यक्तिविषयक शक्ति ज्ञानं कारणम्। अनया रीत्या मनुष्यपदात् द्रव्यत्व

अवश्य माना जाता। दण्डत्व के कारण न होने पर भी कारण गत धर्म माना जाता है। जैसे—"गङ्गायां घोष." में गंगा पद का लक्ष्य अर्थ तट है। तटत्व नहीं किन्तु तटत्व तट में अनादि काल से अविभजनीय है। वह अलक्ष्य होने पर भी, लक्ष्यतावच्छेदक माना जाता है। ऐसे ही घटत्व ( जाति ) आदि के वाच्यार्थ न होने पर भी शक्यतावच्छेदक वास्तविकार्थ बोधक माना जाता है। जाति व्यक्ति में अनादि काल से सिद्ध, सम्वेद्य और अभेद्य है। इसका समर्थन हरि कारिका से करते हैं। उक्तं चेति—व्यक्ति पक्ष में भावनां ( पदार्थों की )=व्यक्तियों के अनन्तअसंख्य होते हुए भी एक=जाति को उपलक्षणं=लक्षणा से बोधक मानकर अर्थात् धर्ममात्र अवाच्य होने पर भी जातिको उपलक्षक मान कर जो शब्द हो, वह सुकरः =सुग्राह्य सम्बन्ध से सम्पन्न होता है। यहाँ सम्बन्ध शक्ति ग्रह परक है। कोई व्यभिचारका ( असम्बद्ध ) बोध नहीं होगा।

जातिव्यक्ति दोनों का समर्थन
व्याकरण पक्ष



**वस्तुस्तु "न क्ह्यातिपदार्थकस्यद्रव्यं न पदार्थं" इति भाष्या-द्विशिष्टंवाच्यम् ।**

❀

प्रकारक शाब्दबोधापत्ति संभवात् । तत्रद्रव्यत्व प्रकारक बोधे द्रव्य पद जन्यो-पस्थितिरिति वक्तुं न शक्यते जातौ । शक्तिं विना द्रव्यत्वार्थकं पदज्ञानमसंभवम् । असंभवमित्याद्यरूचेराह—

वस्तुत. = जाति में शक्ति हो या व्यक्ति में दौनों पक्ष दूषित एवं एकाङ्गी है । जाति पक्ष की अनेक अनुपपत्तियाँ, जैसे—ब्राह्मण का हनन न करे, मदिरा न पिये, इस वाक्य में ब्राह्मण पद से जाति का बोध होगा । जिसका हनन असम्भव है । जाति का पान भी, दान भी, कुट्टन भी असम्भव है । व्यवहार कार्य में अनुपयोगी है । अर्थ में विशेषण भूत धर्म का गौरव आदि दोष है । व्यक्ति पक्ष में भी आनन्त्य-दोष, नाना शक्ति कल्पना आदि अनेक दोष हैं । इससे दोनों पक्ष दुष्ट सिद्ध होते हैं । अत: जाति विशिष्ट व्यक्ति ही पदार्थ है । द्रव्य नहीं, या द्रव्य ही पदार्थ है, जाति नहीं । ऐसा नहीं कह सकते, दोनों-दोनों प्रकार से पदार्थ हैं । जाति विशिष्ट व्यक्ति या व्यक्ति विशिष्ट जाति । दोनों में अभेद सम्बन्ध है । 'जात्याकृतिव्यक्तय: पदार्थ:" से भी विशिष्ट व्यक्ति सूचित होती है । इससे घटत्व विशिष्ट में शक्ति स्थापित हुई । विशिष्ट वाच्य माना गया यदि जाति विशिष्ट व्यक्ति मे शक्ति मानते हैं तो 'एकं' इस ग्रंथ की क्या गति होगी ? जाति विशिष्ट शक्ति के बोध में एक जाति का ही ज्ञान कारण दल में प्रविष्ट है, व्यक्ति नहीं अत: विशिष्ट बोध में विशेषण ( जाति ) निष्ठ शक्ति का ज्ञान कारण रूप में सिद्ध है, कारणता भी घटत्व शक्ति ज्ञान में लघुभूत है, शक्ति ज्ञान में शक्ति ज्ञानीय विषयता . की अविच्छेदिका जाति एक ही है, इसी अभिप्राय से एकं पद का उपन्यास किया । यहाँ कार्य कारण भाव केवल जाति के नामार्थ पक्ष म होता है, यदि एकं पद का व्यक्ति ही अर्थ माने तो घटत्व विशिष्ट बोध में केवल घट की शक्ति का ज्ञान कारण होगा, क्योंकि घटत्व घट और दोनों का समवाय तथा शक्ति । ये शक्ति ज्ञान के विषय हैं, इस प्रकार व्यक्ति रूप कारणता वच्छेदक एक हीहै । अत: इस पक्ष में भी कोई विरोध नहीं है । इस प्रकार घटत्व वशिष्ट घट को वाच्यार्थ स्वोकार करने पर घटत्व विशिष्ट बोध के घटत्व अंश में घटत्व शक्ति का ज्ञान कारण है, अन्य = द्रव्यत्वादिक ( घट में द्रव्यत्व रहने पर भी ) का प्रकारतया बोध नहीं होता, ऐसा कार्य कारण भाव भूषण नामक ग्रन्थ में प्रपञ्चित: विस्तृत है ।

वस्तुतस्तु विशिष्टे शक्ति; जतिविशिष्टा व्यक्ति, व्यक्तिविशिष्टा जतिरित्यर्थः। अत्र भाष्य प्रमाणमाह—नहि आकृतिरिति—जातिरेव द्रव्यं द्रव्यमेव जातिरिति नार्थः किन्तुभयोरुभयं पदार्थं इति। जातिः विशिष्टा व्यक्तिरित्यत्र, व्यक्तेः प्रधान्यम्। व्यक्तिविशिष्टा जातिरित्यत्र जातेः प्राधान्यम्। तस्यास्तात्पर्यग्रहसापेक्षं प्राधान्यं बोध्यम्। यथा ब्राह्मणत्वं नित्यं तदाश्रयो ब्राह्मण व्यक्तिस्तन्नित्यं न भवितुमर्हति। अतो नित्य पदस्य ब्राह्मणत्व जातावन्वये, तात्पर्यार्थं, तदेव नित्यं प्रधानञ्च। यद्यपि जातेः प्राधान्ये विभक्त्यर्थसंख्याकर्मादीनां तत्रान्वयो नार्हति, तथापि स्वाश्रय ( द्रव्य ) गत संख्या कर्मादीन् आदय द्विवचनं, बहुवचनं क्रियान्वयित्वञ्च जातौ बोध्यम्। अत्र प्रमाणं कैयटः यथा—भवतः, भवन्तीत्यादौ क्रिया प्रधान्येऽपि द्वित्वं बहुत्वं वा क्रियायां न सम्भवति। तथापि कारक गतां संख्यामादाय, यथा तत्र तथात्रापि क्रियायां द्वित्वादिकमन्वेति। एवमाकृतौ द्रव्यगतसंख्या कृत भेदो बोध्यः। द्रव्य प्राधान्ये तु क्वचित् विपरीतं बोध्यम्। यथा—ब्राह्मणं न हन्यादित्यत्र ब्राह्मणपदोत्तरद्वितीयैकवचनस्य ब्राह्मण व्यक्तावान्वयश्चेदेकं ब्राह्मणमहत्वा अन्येषां हननं सिद्धं स्यात्। ब्राह्मणहनननिषेधश्च व्यर्थः स्यात्। तस्मातत्र जातिगत संख्यामादायैकवचनेन ब्राह्मणत्वाश्रयमात्रं न हन्तव्यमिपि तदाशयः। जातेः प्राधान्येऽप्रि तया व्यक्तेरनुगमो भवत्येव। वस्तुतस्तु जाति विशिष्ट व्यक्तिरेव नामार्थः। व्यक्तिविशिष्टा जातिस्तु न नामार्थः, अनुभव विरोधात्। तथापि विशिष्टे शक्तेरवधारणदुभयोरूपादानेऽपि न विरोधः। अन्यथा पृथक शक्तौ गोत्वं व्यक्तिश्चेति द्वन्द्वात्मकस्समूहालम्बनात्मकोवा बोधः स्यात्।

विशिष्टस्य वाच्यत्वे 'गौतमोक्तं' प्रमाणम्। यथा—जात्याकृतिव्यक्तयः पदार्थ इति त्रयाणां विशिष्टे शक्तिरिति द्योतनायैकवचनात्मकं पदार्थपदमुच्चारितम्। तथा च यदंशे शक्ति ज्ञानं कारणं तदेव शक्यं ( शक्त्याशाब्दबोधविषयी भूतम् ) जात्यंशे शक्ति ज्ञानं कारणं तदा जातिः शक्या, एवं व्यक्तिरपि शक्यैव। एवं विशिष्टांशे शक्तिज्ञानं कारणं चेत्। तदा विशिष्टांशः शक्यः।

ननु द्विकं नामार्थ इति पक्षे एकमित्यस्य निरालम्बनत्वापत्तिः स्यात्। यतो हि नामनिष्ठशक्तिज्ञान जन्यबोधविषयो नामार्थः ( प्रातिपदिकार्थः ) तत्र विद्यमाना या शक्तिस्तस्याः ज्ञानजन्यो यः शाब्दबोधस्तस्य विषयो नामार्थः। अत्र शक्तिज्ञानं कारणम्, शाब्द बोधश्च कार्यम्। इत्थं कार्यं कारणभावः एकं नामार्थ इति पक्षे कथं सम्भवेदित्याह—शक्तिज्ञान इति—शाब्दबोधे कारणी भूतशक्तिज्ञान विषयतया ( वशेष्यतया ) तन्निरूपिता या प्रकारता तदवच्छेदिका=व्यावर्त्तिका ( समानप्रसवात्मिका, स्वाश्रयमात्रव्यापिका, निर्विशेषा, अखण्डोपाधिस्वरूपा, अनु-

**एकमित्यस्य चायमभिप्रायः—शक्तिज्ञाने च विषयतयाऽवच्छेदिका जातिरेकैव। तथा च घटत्वप्रकारकघटत्वविशिष्टबोधे घटत्वांशेऽन्याप्रकारकघटत्वशक्तिज्ञानत्वेन हेतुतेति कार्यकारणभाव इत्यादि प्रपञ्चितं भूषणे।**

❀

गामात्मिका ) जातिरेकैवेत्यभिप्रायेण एकमित्याह। कारणकोटावेकस्या जाते हेंतुता नतु व्यक्तेः नरत्व विशिष्ट नरविषयक बोधे नरत्वगत शक्तिज्ञानं कारणम्। तत्रैव लाघवमस्ति। यदि नरत्व शक्तिः ज्ञानमस्तु, तर्हि तद्ज्ञानगतकारणता नरत्वंविशिष्टे नरे कल्पिता स्यात्। कारणता चोभयनिष्ठा स्यात्। द्वयो विशेषणत्वात्। एकमिति कथनमसंगतं स्यात्। नरत्वमात्रस्य शक्तिज्ञानं कारणं चेत्= नरत्व विशिष्टशक्तिज्ञाने कारणतावच्छेदकमेकं नरत्वं कारणं स्यात्तदा न काप्यनुपपत्तिः। शाब्दबोधे एकं नामार्थं रूपं ( नरत्वं ) कारणीभूतम्, इत्याभिप्रायेणैकमुच्यते।

यद्यपि बोधकत्व शक्तिवादे बोधो विषयी ( विषयोऽस्त्यस्य विग्रहे विषयस्यैव बोधदर्शनात् ) विषयितावच्छेदको नरः एवं बोधः प्रकारी ( प्रकारोविशेषणमस्येस्य ) प्रकारितावच्छेदकं नरत्वं एकमेव। बोधः संसर्गी ( संसर्गोऽस्त्यस्य ) संबन्धीत्यर्थः। संसगतावच्छेदकः समवायः। नर नरत्वयोः समवाय, नरत्वस्य विषयतावच्छेदकत्वं जातिरेव। सैव विषयाणांप रिचायिका, दर्शिका, निरूपिकेत्यर्थः नरत्वं नराणां परिचायकम्। नर नरत्व समवायेषु विषयेषु सत्सु शाब्द बोधांशे लाघवेन प्रकारितया अवच्छेदिकायाः शक्तेराश्रयत्वात्, जातेरैक्यादेकं नामार्थ इत्युक्तम्। बोधकत्वं शब्दनिष्ठमर्थनिष्ठं वा भवतु। बोध्यस्यापि शक्तित्वमवगन्तव्यम्। 'अस्माच्छब्दादयमर्थो बोधव्य' इत्यत्र शक्तिज्ञाननिष्ठकारणतायां प्रकारितया अवच्छेदिकाऽपिजातिरेकैव न तु विशिष्टा। अत एकः पक्षो भाष्यतः समर्थितो भवति। केवलाजातिरेव नामार्थ इतिभावः।

एवं व्यक्ति पक्षे सेवकत्व धर्मविशिष्टसेवक विषयक बोधंप्रति व्यक्ति ( सेवक ) विषयक शक्तिःज्ञानं कारणम्। बोधांशे विशेष्यितावच्छेदिका व्यक्तिरेव अवच्छेद्यश्च शाब्दबोधः। यथा—कपित्वावच्छिन्न कपिबोधे विशेष्यो बोधः, विशेष्यिता बोधे तिष्ठति। तत्र व्यावर्तिका व्यक्तिः ( कपिः ) व्यावर्त्यः=अवच्छेद्यः कपित्वावच्छिन्नो बोध्यः। एवं कपित्वस्य सर्वस्यां व्यक्तावनुगमात्, ( अनुकूल ज्ञानसत्त्वात् ) अनुभवाच्च, आनन्त्य व्यभिचारौ न भवतः। कपित्वावच्छिन्न कपिबोध प्रति कपिनिष्ठ शक्तिज्ञानं कारणमिति सम्बन्धोऽप्येकैव। अनयारीत्या केवलव्यक्तिरेवैकशब्दार्थः।

यथा शक्तिज्ञाने व्यक्ति विषयः कारणं, एवं जाति विषयोऽपि कारणम्। मीमासंक मते जातौ शक्तिः। तत्र शाब्दबोधे घटपदजन्यघटत्व प्रकारकघट वशेष्यकशाब्दबोधे घटत्वज्ञानं कारणम्। कारणीभूते घटत्वशक्तिज्ञानेऽपि घटत्वांशेऽन्यःकश्चन धर्मः प्रकारो विशेषणं न स्यादित्येवं भूते विशिष्टबोधे घटत्व शक्ति ज्ञानं कारणं विशिष्ट बोधः कार्यम्। अतो मूले घटत्वांशेऽन्या प्रकारकत्व विशिष्टं घटत्वशक्ति ज्ञानं कारणम्। एतादृश शक्तिज्ञाने या प्रकारता तस्याः विषयविधया अवच्छेदिका घटत्वजातिः तादृश शक्तिज्ञाने स्व निरूपितविषयिता सम्बन्धेन जातेरूपस्थितत्वात् जातिः कारणतात्वावच्छेदिका।

ननु सिंहोऽस्तीत्यत्र। यथासिंहत्वावच्छिन्ने सिंहत्व विशिष्टे शक्तिरेवं सिंहत्व मस्ति, इत्यत्रापि बोधापत्तिः स्यात्। तन्निराशायाह तथाचेति, सिंहत्वविशिष्ट-सिंहस्य वाच्यत्वे च यथा घटत्वविशिष्टबोधे–घटोघटपद–वाच्य इत्यत्र घटपद विशेषणीभूते घटत्वांशे अन्यः कश्चनधर्मः प्रकारो विशेषणं वा न स्यात, तदा निरवच्छिन्नं निर्विशेषं वा यद् घटत्वं तन्निष्ठशक्तिज्ञानं कारणम्। एव सिंहपद· बोधे निरवच्छिन्नं विशेषणविहीनं यत् सिंहत्वं तन्निष्ठ शक्ति ज्ञान कारणम्। जातो निरवच्छिन्नत्वन्तु यत् किञ्चिन्निष्ठ प्रकारता निरुपितविशेष्यतानाश्रयत्वम्। सिंहोऽस्तीत्यत्र सिंहत्व विशिष्ट सिंहपदबोधे सिंहत्वगत शक्ति ज्ञानस्य कारणतायां विषयतया प्रकरि तया वा अवच्छेदिका। या जाति सा न धर्मावच्छिन्ना। यतः तस्यां प्रकारता नास्ति। अतः सा न विशेष्या। एतेनविशेष्यतानाश्रयत्वं सुतरां सिद्धम्। यदिसिंहत्वं सिंहपदशक्यं, जातिः घटपद शक्या चेत्, तर्हि सिंहत्वे सिंहत्वत्वं प्रकारः स्यात्। जातिमान्घट इत्यादो जातित्वं प्रकारः स्यात्। ततः सिंहत्वे जातौ वा निरवच्छिन्नत्वं निर्विशेषगत्वमन्याप्रकारकत्वं न स्यात्। उक्त कार्य कारणभावश्च भज्येत। प्रपञ्चितं भूषणे यत्र निर्वच्छिन्नत्वप्रकारक जातिगत शक्ति ज्ञानंकारणम्। यत्र सावच्छिन्ना जातिस्तत्र सावच्छिन्नप्रकारताक जातिगत शक्ति ज्ञानं कारणम्।

पूर्वोक्तं सर्वमनुभूय विशिष्टे शक्तिं प्रकल्प्यद्विकं नामार्थ इति पक्षः समर्थितः। अत एव प्रवृत्ति निमित्तं तदाश्रयश्च प्रातिपदिकार्थ इति नव्याः। प्रवृत्तौ—व्यवहार कार्ये प्रवर्तनायां वा यन्निमित्तं कारणं प्रवर्तकं वा, यथा 'शिष्यमध्यापय' इत्यत्र। शिष्यत्वविशिष्ट शिष्योऽध्ययनकर्मत्वं भजते। अन्यथाशिष्य सम्बन्धिनोऽपि अध्यापनकर्मतां भजताम्।

ननु द्विकं पक्षाङ्गीकारे एकमिति पक्षोविरुद्धेत्। तन्निरस्यन्नाह पूर्वपक्षादिति शाब्दबोधे शक्ति ज्ञानं कारणं, तत्र बोधांशे प्रकारितावच्छेदकत्वं शक्तिरिति। अत्र बोधः प्रकारी तदवच्छेदिका जातिर्वाच्या। बोधो विशेष्यस्तदा

एदेतदभिप्रेत्याऽऽह—द्विकमिति। जातिव्यक्ती इत्यर्थः। पूर्वपक्षविरोधपरिहारः पूर्ववत्।

❀

विशेष्यितावच्छेदिका व्यक्तिर्वाच्या द्विकं नामार्थ पक्षे तु प्रकारिताविशेष्यिते विषयितात्वेनानुगमय्य विशयितया अवच्छेदकत्वं शक्तिरिति जाति व्यक्तयोर्नामार्थत्वे न कश्चन विरोधः।

अथवा जातिः पदार्थः व्यक्ति पदार्थ इति च पक्षे बोधांसे विषयितया शक्तिज्ञान कारणं विशिष्टपदार्थ पक्षे, प्रकारितया विशिष्यितया शक्तिज्ञानं कारणम्। त्रिकं पदार्थपक्षें विषयि तयावच्छेदकत्वं शक्ति विशेषणतारूपेण सर्वत्रावच्छेदकत्वं धर्मः, एवं विरोधः स्वत एव परिह्रियते। विषयो बोधः विषयितावच्छेदकानि बोद्यांशे यावन्ति विशेषणानि जातिव्यक्तिर्लिङ्ग संख्याकारकादीनि तेविषयाः शाद्बवोधे अवच्छेदकाः धर्माः व्यावर्तकाश्च भवन्ति।

त्रिकं प्राति प्रदिकार्थो जाति-व्यक्ति-लिङ्गरुपः। जातिव्यक्ती प्रदर्शिते। किं लिङ्गस्य नामार्थत्वे प्रमाणमिति-चेच्छृणु—"तस्माच्छसो नः पुंसि" ६।१।१०३। स्त्रियां क्तिन्" ३।३।९४। "स्वर्मोन पुंसकात" ६।१।२३। इत्यादीनि प्रमाणानि पुंस्त्वे संति नत्वम्, स्त्रीलिङ्गवाच्थे क्तिन्, नपुंसक लिङ्ग एव विद्यमानात् प्रातिपदिकात् स्वर्मोलुक्त्वम्। इतीत्थं शास्त्रेण त्रिकं पक्षः समर्थितः। 'ह्रस्वोनपुंसके प्राति पदिकस्यति सूत्रेण नपुंसकलिंगे वर्तमानस्य प्राति पदिकस्य ह्रस्वविधानात्

विशिष्ट शक्ति वादका समर्थन एवं एकं पद का समन्वय करते हैं की उक्त अभिप्राय को लेकर द्विकंनामार्थं ( जाति व्यक्ति ) पक्ष का प्रतिपादन करते हैं। शेखरकार ने प्रातिपदिकार्थ सूत्र में प्रवृत्ति निमित्ति ( धर्म जाति ) उसका आश्रय ( व्यक्ति ) को प्रतिपदिकार्थ कहा, पूर्वपक्षति = प्रथम उक्त एक नामार्थ पक्ष का द्विकं नामार्थ पक्ष से विरोध का परिहार करते हैं, पूर्ववत् प्रत्येक पक्ष में द्विकादि विषयक शाब्द बोध में जाति शक्ति का ज्ञान कारण है कारणतावच्छेदक जाति एक है, सर्वानुगत है, लघुभूत है, इस प्रकार विरोध परिहार हो जाता है।

जाति व्यक्ति और लिङ्ग तीनो प्रातिपदिकार्थ हैं. "स्वमोर्नपुंसकात" सूत्र लिङ्ग के प्रातपदिकार्थ में प्रमाण है। धुग्, वांगु, दधि, इत्यादि में प्रकृति मात्र से पुलिङ्गादि का बोध होता है. भूषणकार ने भाष्य में निर्णीत लिङ्ग का लक्षण प्रस्तुत किया है, कि सत्व रज तम के न्यून आधिक्य होने से लिङ्ग भेद हुआ करते हैं, प्रकृति त्रिगुणात्मक है, तीनों गुणो की सम अवस्था नपुंसक है, क्योंकि साम्य दशा में सृष्टि नहीं होती व्यवहार नहीं होता, केवल गुणों की स्थिति मात्र रहता है। सतोगुण का

**त्रिकमिति । जातिव्यक्तिलिङ्गानीत्यर्थः । सत्वरजस्तमोगुणानां साम्यावस्था नपुंसकत्वम्, आधिक्यं पुंस्त्वम्, अपंचयः स्त्रीत्वम्, तत्तच्छब्दनिष्ठं तत्तद्वाच्यं च । तमेव विरुद्धधर्ममादाय तटादिशब्दा भिद्यन्ते ।**

❀

वेधाः ( ब्रह्मा ) वाक मधु इत्यादौ लिङ्गबोधक प्रत्ययं विनाऽपि प्रकृतिमात्रेण पुंस्वादि लिङ्गानां बोधने लिङ्गमपि नामार्थः सुतरां सिद्धः ।

अथ किं लिङ्गलक्षणमिति विचारणायाम् तद् द्विविधं लौकिकं शास्त्रीयञ्च । लौकिकं लक्षणंतु न नामार्थः यतोहि—

स्तनकेशवती नारी लोमशः पुरुष स्मृतः ।
अनयोरन्तरं यच्च तदभावे नपुंसकम् ॥

इत्यवयव संस्थानं विशीषरूपं लक्षणं, तन्न शास्त्रोपयोगि । उक्त लौकिक लिङ्ग-लक्षणे केशपदं योनिपरं, लोमश पदं पुरुष चिह्नपरम् एवं केशादि परत्वे गवादिष्वव्याप्तेः ।

न च स्वसा, दारान् इत्यादौ आहर्यारोपेण पुंस्वं प्रतीत्या नत्वमस्तुनाम । आरोपं विनाऽपि दारान् स्वसा इत्यादीनामावश्यकत्वात् । अविद्यमानधर्म मादाय-अपकृष्य यत्रारोपः स आहार्यारोपः (बाधसमकालिकेच्छांजन्य ज्ञान विषयस्तदर्थः । यथा रक्तः स्फटिको रक्तपुष्पयोगात् किन्तु स्फटिके रक्तत्वबाधो भवति । तस्य सत्वे यदा वाधसमकालम् रक्तत्ववान् ( रक्तगुणवान ) स्फटिक इतीच्छाजन्यं ज्ञानं तदातत्र अविद्यमानं रक्तगुणमाहार्यते आकृयते) तदा आहार्यारोप एवं दारान् स्वसाइत्यादौ अविद्यमानं पुंस्तमाहार्यं नत्वं क्रियतामिति न, यतः आरोपाभावेऽपि दाराः पुलिङ्ग एव । 'दाराः पुंसि' इति प्रमाणिकाः ।

अधिक्य पुंस्त्व है अपचय ( न्यूनता ) स्त्रीलिङ्ग है । प्रत्येक पदार्थ की त्रिगुणात्मिका प्रवृत्ति होने से सृष्टि होती है । किसी गुण की न्यूनता किसी का आधिक्य कहीं समानता उसी को उपचप ( वृद्धि ) अपचय ( ह्रास ) आदि समझें ।

"यहाँ लिङ्ग अर्थ वासी और केवलान्वयी है । सभी लिङ्ग सभी अर्थों में रहते हैं, इसलिए एक ही अथ में तीनों लिङ्गों का प्रयोग भी दृष्ट है, जैसे अपचयार्थ इस व्यक्ति भूषणकार ने लिङ्ग को शब्द निष्ठ माना है, क्योंकि उपचय अपचय विरुद्ध धर्म आत्मा ब्रह्म आकाश आदि निर्विकारों में उपलब्ध नहीं होते । अर्थ में पुंस्त्व आरोपित है, तत्तत् लिङ्गादि स्वाश्रय शब्द के वाच्य हैं, तभेव—शब्द में स्थित पुलिङ्गादि विरुद्ध धर्मों को लेकर तटादि शब्दों भेद हो जाता है, जैसे तटः तटी तटम् लिङ्ग का ज्ञान लोक व्यवस्था के अनुसार जड़ चेतन साधारण माना जाता है

॥ सांगुदायिक शब्द अधिकतर स्त्रीलिङ्ग वाचक होते हैं॥





तट, तटी, तटम्

**केषांचिदनेकलिङ्गत्वव्यवहारस्तु समानानुपूर्वीकत्वेन शब्दानामभेदारोपात् । एवं च पदार्थपदे पुंस्त्वमेव, व्यक्तिपदे स्त्रीत्वमेव, वस्तुपदे नपुंसकत्वमेवेति सर्वत्रैव 'अयं पदार्थः' 'इयं व्यक्तिः' 'इदं वस्तु' इति व्यवहारः तटः तटी तटमिति चोपपद्यते ।**

❀

गोधा खट्वा कमण्डलूः, इत्यादौ स्तनकेशयोः=पयोधरभगयोरभावात् अदर्शनात् । टाबादीनामभाव प्रसङ्गात् । यदि स्तन केश शद्वस्य योनौ ( भगे ) वा लोम शद्वस्य लिङ्गे लक्षणा चेत्तदपिन, आहार्यारोप स्यामार्जनात् दारानित्यत्र निर्दुष्टं लक्षणं भाष्यकारोक्तमेवेति न दोषः । अतः शास्त्रीयं लक्षणमुच्यते । सत्वेति सत्वरजतमोगुणानां यदि सममात्रासु स्थितिः समा नावस्थायां तेषां तदानपुंसक लिङ्गम् । गुणानां साम्याव स्थायां क्षोभनिमित्तक विकाराभावेन सृष्टे रभावात् न कश्चन व्यवहारःकर्म वा जायते । अतो गुणत्रयस्य स्थितिमात्रं, तस्य । यदा तेषामुपचयापचयः, न्यूनाधिक्यं तदा स्त्री पुंनपुंसक व्यवहार वृद्धया सतोगुणस्याधिक्येन पुलिङ्ग व्यवहारः । यदा सत्वस्यन्यूनता=अपचयः ह्रासो वा तदा स्त्रीत्व व्यवहारः रजसः, आधिक्यात् । इदं लिङ्गं प्रकृतिप्रदत्तोगुणः धर्म विशेषी वा बोध्यः धर्म विशेषस्तु पुंस्त्व स्त्रीत्व न पुंसकत्वादि रूपेण बोधः ।

जातिगुणक्रियाभिन्नत्वेसति शब्दनिष्ठ धर्मवत्वं लिङ्गलक्षणम् लिङ्गः शब्दे तिष्ठति, शब्दः लिङ्गस्य वाचकः लिंगम् वाच्यं तस्मान्नामार्थः ।

ननुलिंग रूपोधर्मस्त्वेक एव । कथं स्त्रीपुंनपुंसकानिस्युः, तदाह तमेवेति—शब्दनिष्टं तं विरूद्ध धर्मं त्रिगुणात्मकम् उपचयायचय ( न्यूनाधिक्य पुरः सरम् ) स्त्रीत्व पुंस्त्व नपुंसकत्वं रूपं शब्दात्मकं परस्पर विरोधिधर्मं पदार्थात्मानं विषयीकृत्य तटादि शब्दाः भिद्यन्ते । ते भिन्नानां लिंगानामितरनिवृत्ति पूर्वक बोध विषयाः भवन्ति ।

न च एकास्मिन् शब्दे परस्पर विरूद्धानां सत्वादि गुणानामवस्थानमसंभवम् । उभयलिंगोऽयं त्रिलिंगाऽयं शब्द इति व्यवस्था च न स्यात् । तट शब्दे कथमनेकानि लिंगानि संभवन्ति । तदाहकेषाञ्चिदिति—कश्मिश्चित पदेऽनेक लिंगव्यवहारस्तु समानं तुल्यमानुपूर्वी, आद्यान्तभागौयस्याऽसौ समानानुपूर्वीकत्वेनाभेदारोपात् । यथा ( तटं त्रिषुलिंगेषु ) इति कोशेन तटः, तटी, तटम्, एते शब्दाः त्रिलिंगेषु पृथक्-पृथक् बोध्याः । एते शब्दाः स्व स्वलिंगात्मकाः स्वतन्त्राः पृथक् २ शक्तिसम्पन्नाः । यद्यपि शक्यतावच्छेदकः तटत्वरूपोधर्म एकैव, तथापि लिंगानि धर्मान् परिच्छिन्दन्ति । अभेद व्यवहारस्तु काल्पनिक आनुपूर्वीकः । आनुपूर्वीकत्वेन उच्चारणञ्च । अतस्तेष्वभेदारोपः । तटादि शब्दानाम् । अपरे तु सर्वेषामर्था-

नामवस्था भेदेन गुणानां भेदः सर्वसम्मतः। अर्थ भेदात् शब्दोऽपि भिद्यते। वस्तुतस्तु सत्वादिभिः सभन्यूनाधिक्य धर्मवतां लिंगानां परस्परं विरुद्धत्वेऽपि तट शब्दे समानानुपूर्वीकत्वसम्बन्धादभेदस्य निश्चयात् विभिन्नानिलिंगादीनि भासन्ते एव। "स्तन केशवती" इत्यादि लौकिकन्तु अर्थ निष्ठमिति। स्मृत्यादिषु प्रतिपादितम्, तत्तटादिषु नाश्रायितुं शक्यम्। अतएव भाष्ये एकार्थशब्दे शब्दान्यत्वात् दृष्टं लिंगान्यत्वमवयवान्यत्वञ्च। क्वचित्वेकस्मन्नर्थे तु नानात्वं लिंगानां दश्यते। यथा पुष्याः तारका नक्षत्रमिति। हृस्वाकुटीः इत्यादौ हृस्वार्थकस्य रेफस्यावयवाद्यिक्येऽपिलिंग भेददर्शनादन्यदेवेदं शब्दष्ठिं लिङ्गम्। अर्थगतलिंगञ्चेत् कुटीर शब्दः पुलिंगः स्मात्। समानाधिकरणञ्च न स्यात्।

लिङ्ग द्विविधं—शब्दनिष्ठंमर्थनिष्ठञ्च लिङ्गनिर्णये गुणानां समन्यूनाधिक्यवर्णनमथ व संभवति। गुण सत्वे लिंग सत्वभन्वयः, एवमर्थ गतं लिङ्ग, यतः केवलान्त्र ी, अतः सर्वेष्वर्थेषु विद्यते। अत एव एकस्मिन्नपि वस्तुनि "अयं पदार्थः, व्यक्तिः" त्रिलिंगमपि व्यज्येते अर्थापि लिंगे पुंलिंगाऽयं शब्दः इत्याऽस्थे। दौ शब्दगत लिंगदर्शनं व्यवहार कारणेनारोपाद्वोध्यम्। शब्दे आरोपितं पुस्त्वमित्यर्थः पुस्वादिकं लिंगं गभ्यते बोध्यते अस्मादिति व्युत्पत्या पुलिंगः शब्द इति प्राचीनाः नवीनास्तु—आत्मा, ब्रह्म, चैतन्यंशुद्धमित्यादौ विकाराणां सत्वरजस्तमसां गुणानामदर्शनात् तेषु तेषां न्यूनाधिक्यस्यासंभवात् शब्दस्य लिंगाश्रयत्वात्। शब्दनिष्ठमेव लिंगम्। एवं शब्दस्येऽपि लिंगे पुलिंगोऽयमर्थ इति, ईदृशो व्यवहारोडऽर्थे पुस्त्वारोपात् बोध्यः पुंस्त्वादिकं लीनं गम्यते बोध्यते अस्मिन्निति पुंलंगोऽर्थः।

वस्तुतस्तु शब्दोऽपि त्रिगुणात्मा–अर्थोऽपि। तत्र कस्य चिद् गुणस्य न्यूनता, कस्यचिदाधिक्यं स्वाभाविकम्। एवमेकत्र एककालावच्छेदेन उपचयापचययोः

यदि लिङ्गों में गुणों की वृद्धि ह्रास से भेद मानेंगे तो किस शब्द में कौन लिङ्ग है इसका निर्णय कैसे तब भूषणकार बोले केषाञ्चिदिति—किन्हीं शब्दों में अनेक लिङ्ग का व्यवहार यदि वे शब्द समान स्वरूप के अनुरूप हों तों उनमें अभेद का आरोप होता है, जैसे तट प्रातपदिक में तीनों लिङ्ग होने से तीनो तट शब्द तुल्य रूप हैं, आरोप से अभिन्न प्रतीत है, उनका भेदक विसर्ग टाप् अम् होता है, अतः लिङ्ग भेद से शब्द भिन्न होता है, एवञ्चेति यह परिभाषिक लिङ्ग शब्द निष्ठ है, तीनो गुणों के वृद्धि ह्रास से भिन्न एवं व्यवहारोपयोगी होता है, जो शब्द एक स्थिति में रहता हुआ अर्थ को धारण करता है वह नियत स्थाई या व्यापक लिङ्ग वाला होता है, जो शब्द दो अवस्था से विशिष्ट होकर अर्थ धारण करता है, वह उभय लिङ्गक होता है, अनेक अवस्था वाले शब्द में अनेक लिङ्ग होता है, पदार्थ शब्द में पुलिङ्ग व्यक्ति में स्त्री लिङ्ग वस्तु शब्द में नपुंसकता नियत एवं स्थाई है, इसलिए स्तन केशव ती नारी इत्यादि लोकिक लिङ्ग शास्त्र में नहीं घटते।

सम्भवति। निधर्मके, निरवयवे, निर्विशेषे निर्गुणे आत्मनि ब्रह्मणि च न्यूनाधिक्यस्य प्रश्न एव नास्ति। किन्तु आत्मा ब्रह्मवाचको यः शब्दः स त्रिगुणात्मा तत्रोपचयापचययोः सम्भवेन न कश्चन दोषः। शब्दो अर्थो वा त्रिगुणात्मेति नाग्रहः। अथवा पदार्थ व्यक्ति वस्त्वादीनां नियतलिङ्गानां लौकिकलिङ्गस्यानादरो दृश्यते। तथापि लौकिकलिङ्ग विशिष्टस्यापि यथा बोधो जायते। एवं पशुशब्दे शास्त्रीय पुंस्त्व सत्वेऽपि लौकिक पुस्त्वानादर। किन्तु लौकिक स्त्रीत्वमपि पशु शब्दे अस्तु। परन्तु पशुना इत्यत्र नाभाव दर्शनेन न केवलं पुंस्वनिर्णय तदाह तच्चेति–यदा शब्दार्थोरभेदस्तादात्म्यं वा तदाजातिरूपं लिङ्गभिन्नमपि स्वरूप सम्बन्धेनार्थस्यपरिच्छेकं ( व्यावर्तकमित्यर्थः )। यदि शब्दार्थ योरभेदस्तदा लिङ्ग स्वाश्रय ( स्वं लिंग तदाश्रयः शब्दोऽर्थोवा ) वाच्यत्व सम्बन्धेनार्थं परिच्छिनत्ति। इतरेभ्य आत्मानं व्यावर्तयति। पशुशब्दे यदिलौकिक पुलिंगविशिष्टव्यक्ति बोधयतीति नियमः स्यान्तदा छाग्यपि तथा किन्तु नायं नियम अतआह।

न चेति जातिगुणक्रियादिभिन्नत्वे सति गुणानां न्यूनाधिक्य विषयत्वं पारिभाषिकं लिंगलक्षणम्। अस्य शब्दात्मनो गुणत्रयापचयादि रूपस्य लिंगस्य व्यवहारोपयोगित्वे नेत्यर्थः। इदमेव लक्षणं पदार्थ इत्यत्र पुंस्त्वं–प्रकाशयति। व्यक्ति शब्दे स्त्रीत्वं स्थापयति वस्तु शब्दे नपुंसकत्वं निश्चिनोति। अन्यमियं, इदं-सर्वनाम सर्वत्र लिंगभेद नियामकं, व्यवहारे केवलान्वयित्वात्। शास्त्रीय लक्षणं शब्द निष्ठं तदेव नामार्थः लौकिकं त्वर्थनिष्ठम्। स्तनकेशा द रूपस्य लौकिक लक्षणस्य लिंग बोधेनियामकत्वं चेत्तर्हि इयं व्यक्तिरित्यत्र व्यक्ति शब्दे पयोधर स्याभावात्। अयं पदार्थ इत्य लोम्नोऽभावात् खट्वादौ स्तन केशादीनामभावात् स्त्री प्रत्ययान्ताट्टाव ङीवादीनामभावादसाधुत्वापत्तिः। तटादौ परिभाजः लिंगस्य नियामकत्वं परस्परमसमानाधिकरणः तटः तटादि शब्दाः तत्र-त्रिलिंगभाजो भवन्त्येव।

यदि व्यवहार कारणं शब्दनिष्ठं लिंगं स्यात्तर्हि यास्मेन् पशु शब्दे लिंग द्वयं स्त्रीत्वं पुंस्त्वञ्च तत्र पशुना यजेदित्यादे। तथा पुम्पशुः यागाङ्ग स्यात् स्त्री पश्वपि यागस्य कारणत्वेन अदृष्ट साधकः स्यात्। औचित्यं तु पुम्पशोरेवादृष्ट साधकत्वम्।

जैसे पदार्थं आदि शब्दों में लौकिक लिङ्ग का अनादरपूर्वक प्रयोग सर्वत्र देखा जाता है, ऐसे ही पशु शब्द में लौकिक लिङ्ग का अनादर करके उसकी पुंस्त्व स्त्रित्व आदि विशिष्ट में प्रवृत्ति होने लगेगी तो, पशुना यजेत् में नाभाव से पुंस्त्व का निर्णय कैसे ? इस पर बोले तच्च······यद्यपि लिङ्ग. कहीं शब्द निष्ठ होना है कहीं अर्थ निष्ठ, किन्तु यहाँ शब्द निष्ठ ही ग्राह्य है। वह अर्थ का परिच्छेदक ( भेदक )

मीमांसक

तच्च लिङ्ग मर्थपरिच्छेदकत्वेनान्वेतीति पश्वादिशब्दोक्तं पशु स्त्रियां नास्तीति पशुनेत्यादिविधिर्न च्छाग्यादीनङ्गत्वेन प्रजोजयतीति विभावनीयम्। न च व्यक्त्यादिशब्दोक्तलिङ्गस्येव पश्वादिशब्दोक्तस्यापि साधारण्यं शङ्क्यम्। व्यक्तिशब्दस्य नित्यस्त्रीलिङ्गत्वेन तथा सम्भवेऽपि पशुशब्दस्य नित्यपुंल्लिङ्गत्वे प्रमाणाभावात्।

❀

अथवा साधारण्येनोभयोः यागाङ्गत्वं स्यात्। तत् सभाधातुमाह तच्चेति–परिच्छिनत्ति=लिगान्तरं व्यावर्तयतीति परिच्छेदकम्। अयं भावः यल्लिगानुसाशनमनुशास्ति यलिंगे सति शब्दोह्यर्थ वाचकः। लिगविशेषणत्वेन परेऽन्वेति एवं "पशुना" इत्यत्र "ना" भावस्य पुंस्त्वे विधानात् "आङो नास्त्रियामिति" स्त्रियां "ना" भावस्यवर्णनात् पुम्पशोरेव यागंङ्गात्वं यदि स्त्री पशोः यागांगत्वविवक्षा स्यात्तर्हिपुंस्त्वनियामकं नादेशं न कुर्यात्। नादेशपुंस्त्वं परिच्छेदकत्वेन स्त्रीलिंग ब्यावर्त केनान्वितं, पुम्पशुः पुम्व्यक्तिवाचकस्तेन छाग्यादीनां स्त्रोवाचकानां याग करणत्वं न भवति।

यथा व्यक्तिवादेर्थंगत लौकिक लिंगास्यानादरः, एवं पशु शब्दस्यापि व्यक्ति पद वत् प्रकृतो वाधकाभावात् पशु शब्दस्य नित्य पुम्वाचकत्वात्। पशुना यजेदित्यादे। स्त्रीलिंगस्थापि यागांङ्गत्वं भवतु, इत्याशंवयाह न चेति यथा व्यक्ति वस्तु पदार्थादौ केवलान्वयिनां स्त्रीत्व नपुंसकत्व पुस्त्वादीनां लिंगानां क्रमेण यथा संख्य साधारण्यं स्वाश्रय पद दाच्यत्वे (स्वलिंगंतदाश्रयः प्रातिपादिक संज्ञकं पदं तद्वाच्योऽर्थो लिंगम्) एवं पश्वादि शब्दस्तस्य लिंगस्य स्वाश्रय पद वाच्यत्वेन साधारण्यमस्तु को दोषस्तः। यत्र नित्यमेकञ्चलिंङ्ग तर्हि स्वाश्रय पद वाच्यतेन साधारण्यं वक्तुं शक्यते।

होकर अन्वित होता है, शब्द और अर्थ का अभेद सन्बन्ध होने से लिङ्ग जाति रूप है, भेद पक्ष में वह अर्थ का परिच्छेदक है, जब अर्थ का भेद होता है, तव शब्द गत लिङ्ग स्वाश्रय सम्बन्ध से अर्थ का परिच्छेदक समझें। जैसे पशुना यजेत यहाँ पर पशुः स्त्रियाँनास्ति इस वचन के प्रमाव से, या नाभाव से पशु शब्द पुलिङ्ग है, स्त्रीलिङ्ग नहीं, तो उक्त विधि वाक्य में छागी आदि पशुका अंग नहीं हो सकती, ऐसा सबको समझना चाहिए। जैसे व्यक्ति, वस्तु, पदार्थ, आदि शब्द स्वयं नित्य लिङ्ग होते हुए, साधारणतया सभीं अर्थों में प्रयुक्त होते हैं, ऐसे ही पशु आदि शब्दों को भी लिङ्गत्रय साधारण मानकर सभी लिङ्गों में प्रयोग होना चाहिए, तन्न, व्यक्ति शब्द नित्य स्त्रीलिङ्ग है क्योंकि स्त्रियाँक्तिन सूत्र से अनुशासित है, वह तीनो लिङ्गक बोध में साधारणतः प्रयुक्त हो सकता है किन्तु पशुशब्द के नादेश से पुलिङ्ग का संकेत मिलने पर भी नित्य पुलिङ्ग होने में कोई प्रमाण नहीं है।

**"पश्वानतायुं गुहा चरन्तम्" "पश्वे नृभ्यो यथा गवे" इत्यादि वेदे दर्शनाच्च। मीमांसायां चतुर्थे पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोर्विवक्षितत्वान्नानेकपशुभिः पशुस्त्रिया वा याग इति प्रतिपादितत्वाच्च।**

❀

"पश्वानतायुं, गुहाचरन्तम् नभो युजानम् नभो वहन्तम्। पश्वेत्यत्र 'टा' यणि 'पश्वा' इति सिद्ध्यति। तदेव स्त्रीत्वे प्रमाणमस्ति। अन्यथा नित्य पुंस्त्वे स्त्रीत्वभावे नाभावो दुर्वारः स्यात्। यथा पश्वा अपहृतेन समं गच्छन्तं गुहा चरन्तं गिरि गह्वरं प्रविशन्तायुं=चौरं गौरक्षार्थमनुसरन्ति बुद्धिमन्तः। एवं न इवार्थे युजानं=यजमानेभ्यः प्रदत्तं नमः=हविर्लक्षणमन्नं नमः=देवेभ्यः वहन्तं प्रापयन्तं अग्निम् एवं पश्वे, इति। यथा 'नोऽदितिः करत् पश्वे नृभ्यो यथा गवे यथा तोकाय रुद्रियं यथा अदितिः (भूमिः) नः=अस्माकं रुद्रियं=रुद्र सम्बन्धे भेषजं करत=अकरोत्। तथा अस्माकं वह्वे=मदीय अश्वगोमहिषादिभ्यः नृभ्यो अस्मत् पुरुषेभ्यः गवे=गोजातये तोकाय=अवत्याय रुद्रियं कल्याण मस्तु अत्र पश्वे इत्युदाहरणेन नित्य पुंस्त्वाभाव इति वक्तुं शक्यते। यतः पशु शब्दे स्त्रीलिंगसत्वे नदी संज्ञया घिसंज्ञायाः बाधोजातः ततो घेर्ङितीति गुणोन भवतीति। नित्य पुंलिंगत्वे तु ङितिह्रस्वश्चेति नदी संज्ञा न प्रवर्तते स्त्रीत्वाभावात्। छागो वा मंत्र वर्णात्, इत्यनेन पुंस्त्वविशि ष्टछागस्य ग्रहणमिति निर्णयः। मंत्र वर्णस्तु= यागस्य प्रकाशन समर्थो वाक्य शेषेति न्यायेन पशु विशेष निर्णय इति पुंलिंगस्यापि निर्णयः। यथा व्यक्तिपदे नित्यमिह स्त्रीलिंगम्। अजैषा, विद्यमाना यथा "स्त्रियाँ क्तिन्" नित्य स्त्रीलिंग बोधेक्तिन् विधीयतेइति प्रबलानुशासनं प्रमाणं, तथा पशुशब्दे नादेशेन पुंलिंगस्य प्रामाण्येऽपि नित्यपुंलिंगत्वे प्रबलप्रमाणाभाव इत्याशयः। यद्यपि (पशुना) इप्यत्र ना विधान सामर्थ्यात् नित्य पुंलिंगेति बक्तुं न शक्यते। एवं वैदिक प्रयोगेनापि नित्य पुंस्त्वाभाव एवोपलभ्यते।

ग्रन्थकार नित्य पुलिङ्ग के अभाव में वेद प्रमाण प्रस्तुत करते हैं पश्वा नतायुं, इस वाक्य में पशु शब्द नित्य स्त्रीलिङ्ग देखा जाता है, और पश्वे नृभ्यों इत्यादि वेद में (रुद्र सम्बन्धी औषधि) जैसे गौवों पर लाभ करती है वैसे पशु मनुष्यों के लिए लाभकारी है इस मन्त्र में पश्वा कहा गया, पशवे। नहीं। यदि पशु शब्द ङिति ह्रस्वश्च इति सूत्र से नदी संज्ञक नहीं होता, परन्तु नदी संज्ञा होने से आकडारीय रीति से घी संज्ञा के बाध से स्त्रीत्व सिद्ध है। मीमांसा के चतुर्थ अध्याय में पशुनायजेत् इस विधि वाक्य में एकत्व और पुंस्त्व विवक्षित होने से अनेक पशु स्त्री से याग नहीं ही सकता इस मीमांसा ग्रंथ से स्त्री पशु का अनङ्गत्व सुस्पष्ट प्रतिपादित होता है।

वैयाकरण

वस्तुतस्तु विशेषविध्यभावे उप्रत्ययान्तानां पुंस्त्वस्य व्याकरणे निर्णीतत्वाद्वेदभाष्येऽपि "जसादिषु च्छन्दसि वा वचनम्" इति नाभावाभाव इत्युक्तेः पशुशब्दस्य नित्यपुंस्त्वनिर्णयात्, प्रकृते "छागो वा मन्त्रवर्णात्" इति न्यायेनैव*निर्णयः। मन्त्रवर्णो हि "छागस्य वपाया मेदसः" इति श्रूयते। तत्र च्छागस्येति च्छाग्यामसंभावितमिति भवति ततः पुंस्त्वनिर्णय इति * विस्तरेण प्रपञ्चितं भूषणे ॥ चतुष्कंसंख्यासहितं त्रिकमित्यर्थः। पञ्चकं-कारकसहितं चतुष्कमित्यर्थः ।।।

यहाँ से संख्या का प्रारम्भ

*

तथापि वेदे स्त्रीलिंग स्यापि पशुशब्दस्य दर्शनेन व्यक्त्यादि शब्देन सह साम्यं साधारण्यं वा वक्तुं न शक्यते। 'पश्वा, पश्वे' इत्युदाहरणे नाभावो गुणश्च। कृत्वा यत् यन् विधीयते, तेन स्त्रीलिंग पक्षयातो जायते। मीमांसायाः चतुर्थेऽधिकरणे "पशुना" इति प्रयोगे एकवचनं पुम्पशुश्चाविवक्षित स्तेन स्त्रीपशु द्विवचनादीनामविवक्षा सिद्धैव। एतेन स्त्रीपशुव्यावर्तनमेव स्त्रीत्वे प्रमाणम्।

इदानी पशु शब्दो व्यक्ति शब्दवत् नित्य पुलिङ्ग एवेति निर्णयस्य निर्णय द्योतयितुमाह वस्तुत-इति विशेष शास्त्रेषु स्त्रीत्वस्य विशेषेण विधानं नचेत् तर्हि सामान्येन शास्त्रैण उ प्रत्यान्तानां शब्दानां नित्य पुंस्त्व प्रतिपादनम् वैयाकरण सिद्धान्तः। यद्यपि "उ" प्रव्ययान्तानां नित्य पश्वा पश्वे इत्युदाहरणयोः का गतिः तत्र नादेशगुणे प्राप्नुतस्तन्न, वेदभाष्येऽपि नादेशस्य विकल्पेन विधायकं 'जसादिषु नादेश कर्तव्ये वा बचनम्' वार्तिकं वर्तते। तेन पश्वादीनां पुंलिङ्गत्व निर्णयोऽपि जायते। यथा व्यक्ति पदे नित्यं साधारण्यं स्वाश्रय पद वाच्यं स्त्रीलिङ्गमस्ति, तथा पशु शब्देऽपि नित्यत्वं पुंस्त्वं स्वाश्रय पद वाच्यत्वं प्रति भाति।

जहाँ विशेष विधि से लिङ्ग आदि का विधान हो वहाँ उप्रत्ययान्त को पुलिङ्ग ही व्याकरण से निर्णीत होता है। यहाँ प्रमाण 'उ प्रत्यय न्ताः पुंसि' यह शिक्षा वचन है। वेद भाष्य में भी जसादिषु छंदसि वा 'वचनम्' इस वचन से पश्वा शब्द में जसादि विभक्तियों के परे रहते विकल्प मे नाभाव का विधान ही पशु शब्द के नित्य पुलिङ्ग होने से प्रनिष्ठित है। इससे पुंस्त्व का यज्ञाङ्गत्व निर्णीत हुआ, और छागी आदि का अङ्गत्व भी सिद्ध हुआ, इसका विशेष विस्तार भूषण ग्रंथ में देखो, चतुष्कं नाभार्थ में जाति व्यक्ति लिङ्ग के साथ संख्या भी है पञ्चकं नामार्थं में कारक सहित्य उक्त चारों हैं।

तब -१- प्रत्यय को वाचकरूप से सिद्ध करता है
२- " " द्योतकरूप " " " "।



परन्तु प्रत्यय वाचक हो तो ज्यादा अच्छा है।



वाचकता पक्ष - प्रत्यय के वाचक का पक्ष

**नन्वन्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तद् वाच्यम् । तत एव लिङ्गा- दीनामुपस्थितौ प्रकृतिवाच्यत्वे मानाभावाच्चेति चेत्सत्यम् । प्रत्यय- वर्जिते दधि पश्येत्यादौ प्रत्ययमजानतोऽपि बोधात्प्रकृतेरेव वाचकत्वं कल्प्यते । लिङ्गानुशासनस्य प्रकृतेरेव दर्शनाच्चेति ।**

द्योतक पक्ष

प्रत्यय के द्योतक का पक्ष

❀

ननु लिङ्गसंख्या करकाणां प्रकृति वाच्यत्वं प्रत्ययवाच्यत्वम्वेति संशयः। यद्यपि तेषां नामार्थत्वसंसाधनेन प्रकृतिवाच्यत्वं प्रतिपादितम् तदर्थत्वात्। यथापि कस्यापि पदस्य वाच्यनिर्णये नियामकं अन्वय व्यतिरेक्यनुमानम्, कारण- सत्वे कार्यसत्वमन्वयः कारणाभावे कार्याभावो व्यतिरेकि। तदाह—नन्वन्वय इति लिंगबोधे लिंगबोधकप्रत्ययजन्योपस्थितिः कारणम्। कृष्णा, कमण्डलूः खड्गिनी इत्यादौ स्त्रीत्वबोधे टाप्, ऊङ् ङीपि प्रत्ययजन्यस्त्रीत्वोपस्थितिः कारणम् तथा नेता, नेतारौ, नेतारः इत्यादौ संख्याया बोधे एकवचन-द्विवचन-बहुवचन बोधक विभक्ति जन्योपस्थितिः कारणम्। एवं कर्तृकर्मकरण सम्प्रदानापादानाधिकरणानां बोधे कारक प्रत्यायक विभत्युत्पत्तेः कारणत्वम्। उपर्युक्तोदाहरणेषु बोधक प्रत्ययाना- भावे बोध्यानां लिंगादीनामप्यभावः। एतेन प्रत्ययानां वाचकत्वमिति पक्षः समर्थितः। ततः लिंगादि त्रयस्य न प्रकृतिवाच्यत्वम् तेन ते नामार्थाः न स्युः प्रकृतेरानन्त्यात् प्रत्ययानामानन्त्यम्। अतः प्रवृत्ति निमित्त तदाश्रय ( जातिव्यक्ती) एव नामार्थ इति नव्याः भानाभावात् = प्रमाणाभावादर्थः प्रकृतेर्वाचकत्व समर्थ- नायाह सत्यमिति—प्रत्ययं विनाऽपि दधि पश्य, मधु आस्वादय, इत्यादौ नपुंस- कस्य एकवचनस्य कर्तृकारकस्य मध्यिलस्य कर्मकारकस्य च दर्शनात् प्रत्ययसत्वे लिंगादि सत्वमिति नियमो न सार्वत्रिक इति कल्पयितुं शक्यते। टावादि सत्वे लिंगादि सत्वमिति न वक्तुं शक्यते। अनन्य लभ्योहि शब्दार्थः। लिंगादिकं प्रकृति लभ्यम् प्रत्यय वर्जितेऽपि पदे तद्दर्शनात् शीतलं वारि पिबतीत्यादौ वारि ( प्रकृतेः ) लिंगदीनाम् लक्षणाऽपि न वाच्या। यत्रवाच्यार्थबाधः तात्पर्यानुपपत्तिः तत्रैव लक्षणा। 'वारि" इत्यत्र शक्यार्थवाधं विनाऽपि स्वभावेन लिंगार्थबोध दर्शनात् कृष्णः गीतामुपदिशत्ति प्रकृति दर्शनमात्रेण लिंगादीना बोधवकता शक्तिरूदेति। इत्यनुभवः। प्रकृतीनामानन्त्यात् प्रत्ययानन्त्यानन्त्य कल्पनन्तु फलमुखगौरवं न दोषा- वहमिति न दोषकृत्। लिंगानुशासनभ्येति–लिंगानि अनुशिष्यन्तेऽनेनेति। व्युत्पत्त्या स्वमोर्नपुंसकात्, तस्माच्छसो नः पुंसि, स्त्रियामित्यादीनि शास्त्राणि प्रकृतिभागे लिंगमनुशासति। नपुंसकमिति प्रातिपदिकविशेषणं ननु स्वमोः प्रत्यययोः। इति

लिंगानुशासन प्रामाण्यात् लिट् धुक् इत्यादौ अनुभवसिद्ध बोधात् प्रकृत्यर्थत्वमेव। अत एव अनिष्टिर्थाः प्रत्यया स्वार्थे भवन्तीति न्याय संगच्छते येषां प्रत्ययानामर्था अनिर्दिष्टाः = असंकेतिताः सन्ति ते स्वंप्रकृतिः तस्यार्थे स्वार्थेभवन्ति। स्वौजसादयः अनिदिष्टार्थाः सूत्रे कर्मादयो न निर्दिष्टा सन्ति। अतस्ते स्वार्थे (नामार्थे) भवन्ति अतः संख्या कारकयोः प्रत्ययार्थप्रतिपादकानां द्वेकयोः, कर्मणि द्वितीयेत्यादीनां नियमार्थत्वमुक्तम्।

अत एव—प्रकृतेः प्रत्ययस्य वाचकत्वप्रमाणसाभ्येन समानयुक्त्युपलम्भादेव न निर्बन्धः = निःशेषेण सर्वप्रकारेण बन्धः = एकतर पक्षयातो नेत्यर्थः 'अस्यैव पक्षस्य प्राबल्यं प्रामाण्यं वेति न। प्रत्ययस्यैवेति—यद्यपि प्रकृतेरननुगमात् आनन्त्याद्वा प्रकृतिस्थायाः शक्तेरान्त्यम्। तेन परिगणितानां स्वादीनां वाचकत्वे शक्तत्वे लाघवम्। अल्पतरधर्मेषु शक्त्यनुभवात्। प्रत्ययस्यैव वाचकतायाः औचित्यम् तथापि फलमुख गौरवं न दोषावहम्। अथवा मूले 'न निर्बन्धः' इत्युक्त्या वाक्यपदीय कारिका समर्थिना भवति। अन्यथा = (एकतरपक्षपात सत्वे) द्योतिका वाचिका वेति कारिका कुत्सिता स्यात्।

उक्त नामार्थं के निरूपण से जाति व्यक्ति, लिङ्ग, संख्या, कारक ये प्रातिपदिकार्थ हुए। किन्तु लिङ्ग सँख्या कारक के बोधक प्रत्यय भी होते हैं, ये प्रत्यय लिङ्गादि अर्थ के वाचक क्यों न माने जायँ? ये नामार्थ ही क्यों, ? क्योंकि प्रत्यय के रहने पर ही लिङ्गादि का बोध होता है। जैसे रमा गौरी में टाप ङीप् के रहने पर ही स्त्रीत्व जान पड़ता है, न रहने पर नहीं। रामौ रामाः में औ जस विभक्ति की उपस्थिति से द्वित्य बहुत्व संख्या जान पड़ती है अन्यथा नहीं। इसी प्रकार कारक भी दधि पश्य वाक्य में बिना विभक्ति के भी कर्ता कर्म का बोध हो रहा है, इसलिए अन्वय कारण रहने पर कार्य की सत्ता है,- व्यतिरेकी कारण के अभाव में कार्य का अभाव। प्रत्यय कारण है लिङ्गादि अर्थ कार्य हैं, प्रत्यय की सत्ता में लिङ्गादि अर्थ की सत्ता। उदके अभाव में उनका अमाव होता, इससे सुस्पष्ट है लिङ्गादि अर्थ प्रत्यय के वाच्य हैं। अतः लिङ्गा सँख्या कारक रूप अर्थ प्रत्यय के हैं प्रकृति के नहीं तो नाभार्थ कैसे? तन्न प्रत्यय के अभाव में भी दधि मधु आदि उदाहरणों में लिङ्ग का बोध अनुभूत है। अतः प्रकृति में ही लिङ्ग की वाचकता कल्पनीय है। प्रकृति का लिङ्गादि में लक्षणा भी नहीं होगी उसका वीज नहीं है, लिङ्ग का अनुशासन प्रकृति में होता है प्रत्यय में नहीं, इससे लिङ्गादि का नामार्थता स्पष्ट है।

अत एवैषु न निर्बन्धः प्रत्ययस्यैव वाचकतायां युक्तत्वात् । "द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः" ।

इति वाक्यपदीयेऽपि पक्षद्वयस्य व्युत्पादनात् । शास्त्रे इति वहुषु स्थलेषु व्युत्पादनं व्यञ्जयितुम् । प्राधान्येन सरूपसूत्रदौ व्यक्तम् ॥ १ ॥ (२५)

❀

केवचितु लिङ्ग विषये द्योतकवं प्रत्ययस्य संख्याकारक विषये वाचत्कं समुल्लापितम् । तत्र लिंगो नामार्थ : वाग्-विष्णु-वस्तु शब्देभ्यः स्वभावतः स्त्रीत्व-पुंस्त्व-नपुंसकत्वानामिनुभवस्य सार्वजनीनत्वात् दधि, मधु इत्यादौ लु विभक्तिस्थलेऽपि "यः शिष्यते सः लुत्यमानार्थाऽमिधायीति" न्यायेन प्रकृतिः शिष्यते सा लुप्यमानस्य प्रत्ययस्याप्यर्थाभिधानं करिष्यत्येव । किन्तु संख्या कारकयो विर्भक्तिवाच्यतैव ।

अत्र प्रमाणम्—स्वार्थोद्रव्यञ्च लिङ्गञ्च संख्याकर्मादिरेव च ।
अमी पंचैव नामार्थास्त्रयः केषांचिदग्रियाः ॥

केषाञ्चिन्मते अग्रिमाः लिङ्गन्ता एव नामार्थाः । किन्तु संख्या कारकयोर्वाचिका विभक्तिरेव । त्रयः नामर्था इति पक्षे तु । द्योतिका । अतः वाक्य पदीयकारिकायां द्योतिका वाचिका वास्युः द्वित्वादीनां विभक्तयः इत्युक्तम् । अत्र विभक्तयः इति शब्दोच्चारणात् विभक्तिसंज्ञकाः सुप्तिङादयः एव पक्षाः आश्रयन्ते । तत्रैव मतभेदस्तिष्ठति लिङ्गस्यनामाथत्वं निर्विवादमेव । अत एव स्त्रीत्वे द्योत्ये टाबादयो भवन्ति । एतेन लिङ्ग प्रतिपदिकार्थ इति ध्वन्यते ।

न च उच्चरितः शब्दः प्रत्यायको ( भोधको ) भवति नानुच्चारित इति न्थायेन । यत्र विभक्तिर्लुप्ता यत्र वाचकस्य प्रत्ययस्योच्चारणांऽभावात् । संख्याकारकयोः शाब्दबोधौ नस्यात् । स्मरणमच्युच्चारणाधीनम् अतोस्मृतया विभक्तया बोधो नेति वाच्यम् । यस्त्र सन्निधौ प्रत्ययोलुप्तः स तस्यार्थ ( प्रत्ययार्थ ) स्य लुग्विधायकसस्य ज्ञापनात् प्रकृतौ लुप्यमानस्य शक्तिः कल्पते । विभक्तिस्मर णाद्बोध इति न वक्तुं शक्यते शबद्गुणकस्याकाशस्यापि स्मरणेन बोधसम्भवात् ।

यद्यपि विभक्तिषु सुत्व औत्व जास्त्वादयोऽनेकधर्माः सन्ति तत्र शक्तिषु नानास्वायेक्षया सर्वासु प्रकृतिषु प्रातिपदिकसंज्ञायाः (अस्तित्वात्) तत्र सर्वत्र प्रतिपदिकपदसङ्केतसत्वेन प्रातिपदिक पदवत्व मेको धर्मस्तेन न प्रकृतेरानन्त्यम् न च शक्तयानन्त्यम् । तथापि संकेत सम्बन्धेन नामपदवत्तायाः घटादिपदवत्तायाः

ग्रहणमिति निश्चयाऽभावात् शक्तिज्ञाने गौरवः तदवस्थ एव।

शास्त्रे-इति अत्रैक वचनं जात्यभिप्रायेणेति मत्वा तद्विवरणं बहुस्थलीयमाह-बहुषुस्थलेषु = भाष्याद्याकरग्रन्थेषु। तत्रहि पञ्चकचतुष्कपक्षौ 'तत्रापदं' सूत्रे कैयटेनोपन्यस्तौ। त्रिकमिति पक्षस्तु वृत्तिकरेण। एवं व्यञ्जयितुं 'शास्त्रे' इत्यत्र जात्यभिप्रायकमेकवचनम्। प्राधान्येनतु सरूपसूत्रादौ व्यक्तम् तत्र सर्वेषामेव पक्षाणां भाष्यकृतोपन्यासात्। सूत्रादावित्यत्रादि पदेन अनभिहित सूत्रसंग्रहः तत्रापि पञ्चक चतुष्क त्रिकपक्षत्रयो पन्यासात्॥ २५॥

नैयायिकास्तु गां पाठय इत्यादौ गोकर्मक पठनानुकूलव्यापारार्थबोधे गोशब्द-स्य न भानं प्रमाणाभावा तस्मात् शब्दो न शाब्दबोध विषयो, न च प्रातिपदिकार्थः, इतीत्थं भ्रमवारणाय शब्दस्य नामार्थत्वं द्रढयितुं शाब्दबोध विषयत्वं व्यञ्जयितुं तदाशंकां परिहर्तुमाह शब्दस्तावदिति—

शाब्दबोधे ( शब्दश्रवणादुद्बद्धज्ञाने ) यथा नामार्थानां जातिव्यक्ति लिंगसंख्या-कारकाणां ज्ञानं कारणम्। एवं दुग्धमुच्चारय इत्यादौ दुग्धकर्मकोऽच्चारणार्थबोधे दुग्धशब्दस्यबोधः परिहर्तुं न शक्येत। अतः शब्दः शाब्दबोध विषयः विषयतया अवच्छेकत्वात् बोधे विषयतया विशेषणत्वाद्भानात्। शब्दाभावे बोधाभावः। अतः पदज्ञानं करणमित्युक्तम्। सर्वं ज्ञानं शब्दाश्रितम् उक्तञ्च—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते
अनुविद्धमिवज्ञानं सर्वंशब्देन भासते

अत एव = प्रकृति के वाचकत्व एवं प्रत्यय की वाचकता में तुल्य बल ( समान प्रमाण मिलने से ) एषु पक्षेषुं = एकं द्विकं त्रिकं चतुष्कं पञ्चकं नामार्थ इन पाँचो पक्षों में कौन पक्ष उपयुक्त है ऐसा कोई निबन्ध = आग्रह या पक्षपात नहीं हैं, सभी पक्ष शास्त्र में प्रसिद्ध हैं, लिङ्गादि का प्रकृत्यर्थ एवं प्रत्ययार्थ भी प्रसिद्ध है, किसी के मत में प्रत्यय की ही वाचकता उचित है क्योंकि लिङ्ग संख्या कारकों के प्रकृत्यर्थ होने में आनन्त्य का दोष आवेगा। विशेषण में वर्तमान धर्म के अननुगत असीमित होने से गौरव होगा, प्रत्ययों के ससीम परिगणित अल्पतम होने से लिङ्गादि के बोध कारणता में लाघव होगा, प्रकृति और प्रत्यय दोनों के अर्थ बोधकता में समान प्रमाण से उत्पन्न विरोध का परिहार करने के लिए दोनों पक्ष का समर्थिका हरि कारिका प्रस्तुत करते हैं, विभक्तियाँ डित्थादीनां = लिङ्ग संख्या कारक की द्योतिका ( प्रकाशिक व्यंञ्जिका ) और वाचिका भी हैं, इस प्रमाण से दोनों पक्ष प्रमाणित है, शास्त्रों में सभी पक्ष निरूपित हैं, बहुत से स्थलों में इनका व्युत्पादन (मूल्यांकन) हुआ है, 'सरूप, सूत्र में विशेष रूप से अभिव्यक्त हैं।

(शब्दसूचक अर्थ शब्द भी होता है
शब्दबोध में प्रथम कारक शब्द)



शब्दस्तावच्छाब्दबोधे भासते ।

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

इसी कारिका से व्याकरण का शब्दानुवेग सिद्धान्त सिद्ध होता है।

यथा ब्रह्माधिष्ठानं जगत्सर्वमेव शब्दाधिष्ठानं सकलं ज्ञानम् ।

सः प्रत्ययः प्रत्ययनं प्रत्ययः = ज्ञानम् शाब्दबोधश्च लोके = व्यवहारे नास्ति यः शब्दानुगमात् = शब्दस्य = अनुगमं = अनुभवं बोधं बिना स्यात् । शब्दम् अविषयं कृत्वा न तिष्ठेदित्यर्थः । शब्दो विषयितयाऽवच्छेदकः सन् भासते । एतादृश एव लोक व्यवहारः । तथा ( मयि सर्वमिदं प्रौतं सूत्रेमणिगणाइव ) सर्वजगत् ब्रह्मणि प्रोतं-व्याप्तं यथा मणिगणाः सूत्रेऽनुस्यूताः एवं सर्वं ज्ञानं शब्देऽनुविद्धम् । तादात्म्येन सम्बद्धम् । शब्दज्ञानयोः भेदेऽपि अभेदेन प्रतीयमानम् । विशिष्टम् अनुविद्धमिव—अत्र इवपदं ज्ञाने शब्दस्य सम्बन्ध आरोपित इति द्योतकम् । यः शब्दः यस्यार्थस्य बोधकः स एव ज्ञातः सन्नर्थं प्रकाशयति । तदेव बोधे कारणम् । तेन शब्दोऽपि शाब्दबोध विषयः तथा अनुपश्चात् व्यवसीयते बोध विषयीक्रियते इत्यनुव्यवसायः पश्चात् ज्ञान विषयः अर्थं विशिष्टंज्ञानं विषयीकरोति एवं शब्दविशिष्टं ज्ञानमपि विषयी करोति । शब्दोऽर्थद्वारा ज्ञाने विशेषणम् ।

वस्तुतस्तु शब्दार्थयोरभेदसम्बन्धे वास्तविकं तादात्म्यं वा ( तयोरात्मा तदात्मा तस्य भावः ) मत्वा अर्थज्ञाने शब्दोऽपि विषयतया भासते इतीत्थ मुपपाद-

शब्द के नामार्थत्व प्रातिपादन विरोधी नैयायिक शब्द को शाब्द बोधका विषय नहीं मानते, कहते हैं कि शास्त्रं जानाति' वाक्य में शब्द के भान में काई प्रमाण नहीं । अत: षोढा प्रगतिपदिकार्थं असंगत है, इस आशङ्का के निरूपणार्थ ग्रंथकार बोले शब्द भी शाब्द बोध में भासता है । बोध का विषय बनता है, यहाँ तावत् शब्द का प्रथम अर्थ है शाब्द बोध में प्रथम शब्द ही बोध का विषय बनता है. किसी नाम के उच्चारण में प्रथम शब्द तब अर्थ पश्चात् सम्बन्ध का क्रम से बोध नैसर्गिक है । पाँचो अर्थो की भांति शब्द भी बोध का विषय है हरि कारिका से प्रमाण ∵ लोके=व्यवहार में ऐसा कोई प्रत्यय ( शब्द जन्य ज्ञान ) नहीं है, जो शब्द के अनुगमन के बिना ही कोई भी ज्ञान शब्द से सम्बद्ध होकर प्रतीत होता है । प्रथम शब्द का ज्ञान पश्चाद् अर्थ का ज्ञान या ज्ञान सम्पूर्ण ज्ञान में अनुविद्ध=अनुस्यूप है, शब्द और ज्ञान में अभेद सम्बद्ध है, जो शब्द ज्ञात होता हुआ अर्थ को उपस्थित है वही प्रकार तथा शब्दान्तर नही इस प्रमाण से शब्द की शाब्द बोध बिषयता सिद्ध होती है ।

23

"विष्णुमुच्चारय" इत्यादावथो च्चारणासम्भवेन विना शब्दविषयं शाब्दबोधासंगतिश्चेति सोऽपि प्रातिपदिकार्थः। न च लक्षणया निर्वाहः। निरूढलक्षणायाः शक्त्यनतिरेकात्। "जबगडदशमुच्चारय" इत्यादौ शक्याग्रहेण शक्यसम्बन्धरूपलक्षणाया अग्रहाच्च।

विष्णुमुच्चारय में लक्षणा कर लेंगे

❀

नीयः। न च चाभेद सम्बन्धस्वीकारे खड्गशब्दोच्चारणे मुखस्यकर्तनम्, अग्निशब्दोच्चारणे आस्यज्वलनम् ज्वरोच्चारणे ज्वरता, रोगशब्दाच्चारणे रुग्णता इत्याद्यापत्तिः स्यात्। तन्न—अतः एते दोषाः संयोगसम्बन्धावच्छिन्नाः। संयोगे सत्येव कर्तनंज्वलनं ज्वरतादि संभवति। शब्दो न क्वचित्संयुज्यते। अतः शब्दः संयोगाभावात् अमूर्तत्वात्। ज्ञानवत् यो यः संयोगवान् सः सः क्रियावान्। शब्दोच्चारणे उच्चारणवर्ती क्रियाऽनुभूयते नतु कर्तनज्वलनादिः। बौद्ध एवार्थो नतु वाह्यार्थः दाहकतादिः वाह्यार्थे नतु बौद्धार्थे। अतो नोक्तदोषः अभियुक्तोक्तेः = प्रमाणिकोक्तिः।

यद्यपि शब्दोऽपि शाब्दः, शब्दार्थः बोधे विषयतावच्छेदकः। साधु संसाधितः तेन शब्दस्य शाब्दबोध विषयत्वमस्तु नाम। तथापि शब्दः विशेषणत्वेन अप्राधान्येन भासते न तु विशेष्यत्वेन रसालः रसालत्वावच्छिन्नै रसालगुणयुक्ते रसाले शक्तः सन् रसालपदशक्यः। अत्र शक्यो रसालः रसालत्वञ्च न तु शब्दे, कथं शब्दास्य शब्दार्थत्वमुच्यतेऽत आह—विष्णुमिति—यथा अग्निशब्दात् ढक् भवति न दाहकता रूपार्थात्। एवं बिष्णुशब्दस्योचारणं सम्भवति न तु व्यापकस्य ब्रह्माडात्मकस्य। अर्थमात्रस्य बोधे तस्योच्चारणासम्भवेन फलाश्रयत्वरूपं कमत्वं नौत्पद्येत् 'कर्मद्योतिकायाः विभक्तेरभावात् विष्णुकर्मकोच्चारणानुकूलव्यापरेत्यर्थो नस्यात्। यदिशब्दोऽपि शक्यार्थस्तदा विष्णुशब्दस्योच्चारण कर्मत्वेन-अन्वयः विष्णुमच्चारयेत्यस्य विष्णुरुपार्थं बोधकं शब्दमुच्चारयेत्यर्थः। अतएव शब्दजन्य बोधः शाब्द इत्युच्यते जन्य जनकभावात् शब्दो भासते शब्दस्य बोध विषयत्वादेव–उदेति सविता ताम्रः ताम्र एवास्तमेति च इत्यादौ न पुनरुक्तिदोषः अन्यथा द्वयोः ताम्रशब्दयोः रक्तिमा एकैकार्थात् पुनरुक्तिः स्यात्। शब्दस्य बोधविषयतायांन्तु अर्थस्यैक्येऽपि द्वौ ताम्रशाब्दौभिन्नौ अतः एकः उदयनक्रियाम-परोऽस्तमयनक्रियां विशेषणम्। उदयास्तम योकाले महतामेक रुवताद्योतकार्थं तत न पुनरुक्तिः। ताम्रपदभिन्नार्थं कस्यर क्तादिपदोपादाने भिन्नपदस्य बोधविषयत्वेन न एकरुपता। अतआह शब्दं बिना इति—शब्दे शदस्तुयावद्विषयो न भवति यावत् शाब्दबोधः = शब्दजन्यंज्ञानंतस्य असङ्गति = अनुपपत्तिरित्यर्थः। सोऽपि = शब्दोऽपि

प्रातिपदिकार्थं = नामजन्य प्रतीतिविषय इत्यर्थं। प्रकारान्तरेणाप्युपस्थितोऽपि प्रकारतयैवभासते न तु विशेष्यत्वेन।

शब्देऽर्थे च खण्डशः शक्तिः। अर्थः वाचकत्व सम्बन्धेन शब्दे विशेषणम् विष्णुमुच्चारय इत्यत्र अर्थो विशेषणम् शब्दो विशेष्यः तेन कर्मत्वम् अर्थो वाच्यः शब्दस्य, हनुमन्तं पश्यः इत्यत्र शब्दः स्ववाच्यत्वसम्बन्धेनार्थं नुसरति अत्रार्थो विशेष्यः।

मूले अर्थोच्यारणाऽसम्भवेन इत्युक्त्या लक्षणायाः सम्भावना संसूच्यते। अत आह—न चेति—शब्दस्य शाब्दत्वे नामार्थंता शक्तिः न स्वीकार्याः अपर शक्तिस्वीकारापेक्षया लक्षणया निर्वाहो लघीयान्। लक्षणया = स्वावाच्यवाचकत्वरूप सम्बन्धात्मिकया तादृश सम्बन्ध मूलिकया वा। न च पदगतशक्त्या उपस्थितौयोऽर्थः तस्य वाधेसति सम्बन्ध्येऽर्थे लक्षणाभवति। अत्र विष्णुपदेशक्यार्थं वाधाऽभावान्न लक्षणा। अतः शाब्दस्य पद वाच्यत्वं न सिद्धयति। तस्माच्छब्दोऽपि शब्दार्थ। निरुढ़ालक्षणातु शक्तिरूपैव। यतोहि निः निश्चयेन अनादिकाल तात्पर्येणार्थं उत्यते यथा सा निरूढ़ा—शक्तिसमाना अनादितात्पर्यग्राहिणी यतः अनादि तात्पर्याहिणी अतश्शक्तितुल्या।

रूढ़त्वञ्च—शक्ति समानत्वमनादिकालत्वञ्च। अनादितात्पर्यविषयकस्य बोधजनकत्वस्य निरूढ़लक्षणायां शक्तौ च सत्वेन निढ़त्वस्य स्वजन्य शाब्दबोध समानाकारक शाब्दबोधध्वंस कालिक स्वजन्य शाब्दबोधसामान्यकत्वरूपत्वे स्वपदेन लाक्षणिक निरूढ़लक्षणा स्थले गंगापद निष्ठ लक्षणाज्ञानजन्य तट विषयको बोधः। तादृश बोधसमानाकरकप्रवाहत्वप्रकारक तटविषयकोबधः। कस्यचित्पूर्वं जात एव गंगा पदेन तादृश बोधस्य अनादित्वात्। प्रवाहत्व प्रकारक प्रवाह विशेष्यक बोधध्वंस समान कालिक एव सर्वोऽपि गंगा पदजन्य तटविषयको बोधः इति रीत्या निरूढ़त्वलक्षणसमन्वयो बोध्यः

यदि निरूढ़ालक्षणा शक्तितः भिन्ना स्यात्तदा तस्या सर्वार्थं संग्राहकत्वं न स्यात् अन्यथा यत्र लक्षणा कथमपि न सम्भवेत तत्र शक्त्यभावेन लक्षणायाः अभावात् शक्य (वाच्य) सम्बन्धरूपा लक्षणा न स्यात् शब्दस्य शाब्दत्वं च न स्यात्। असम्भवलक्षणास्थलमाह—जवगऽदेति यथा जवगऽदशमुच्चारय इत्यादौ जवगऽदशेति समुदायस्य सर्वथाऽशक्तत्वात्। कुत्रापि शक्तिर्नास्तीति तत्र लक्षणा असम्भवा। जवगऽदेति समुदायस्य उच्चारण कर्मत्वं न स्यात्। तस्मात् शब्दस्य नामार्थता सुसिद्धा।

पूर्व प्रकार से शब्द में शब्द जन्य ज्ञान की विषयता सिद्ध हुई। किन्तु शब्द घट पद का वाच्य है नहीं तो उसमें बोध विषयता कैसे।

यदि शब्द को प्रातिपदिकार्थ नहीं मानोगे तो विष्णु का उच्चारण करो, इस वाक्य में अर्थ का उच्चारण असम्भव है उसमें कर्मता भी बाधित है जो शब्द में ही हो सकती है। इसलिए शब्द को भी शब्दार्थ मानने से विष्णु रूप अर्थ बोध के लिए शब्द का ज्ञान आवश्यक है इसलिए शब्द भी प्राति पदिकार्थ है।

**अज्ञातायाश्चवृत्तेरनुपयोगात् । "गावमुच्चारय" इत्यादिभाषाशब्दानामनुकरणे साधुतासम्प्रतिपत्तेस्तेषां शक्त्यभावेन परनये लक्षणाया असम्भवाच्चेत्यभिप्रेत्य षोढाऽपि क्वचित्प्रातिपदिकार्थं इत्याह–**

**शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा ।**

**नो चेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थोऽवभासते ।।२।। (२६)**

**यद्यनुकार्यानुकरणयोर्भेदविवक्षा तदा शब्दोऽपि प्रातिपदिकार्थः । यदि न भेदविवक्षा तदा श्रोत्रादिभिरुपस्थितोऽप्यर्थवद्भासते । अपिर्हेतौ । उपस्थितत्वाद्भासत इत्यर्थः ।**

न च क्षणस्थायिनो वर्णाः पूर्वं पूर्वोच्चारितवर्णं विध्वंसनात् यतः समुदायोऽसम्भवि अतः उच्चारणकर्मत्वं निराधारस्य न स्यात् । एतेनात्रयत्नापेक्षत्वं कर्मत्वम् । यतश्च —उच्चारितानां वर्णानां संस्कारवशात् समुदायस्य लाभेऽपि तस्य शक्तिशून्यत्वात् । प्रत्येकस्य वर्णस्य अर्थवत्वं कोषे प्रसिद्धया अतएवं "सनकादि सिद्धानुद्धर्तु कामः शिवः ढ़क्वां ननाद" अर्थे सत्येवोद्धारकर्मता । प्रत्येकबणस्य उच्चारणकर्मतायाः समुदायेऽऽरोप्य वर्णगतायाः शक्तेः समुदाये गृहीत्वा शक्यसम्बन्धरूपलक्षणयाः जबगऽदशमित्यत्र कर्म स्यादितिचेन्न—अज्ञातायाः इति—अज्ञातायाः=अप्रसिद्धायाः वृत्तेः = शक्तेः न क्वाप्युपयोगः । जवगडेति अस्य शक्तिर प्रसिद्धा । तस्य न कश्चन वाच्यः न च सम्बन्धः न च लक्षणासंभवा । प्रतिवर्णस्य समुदायस्यवा शक्तिज्ञानं विनाऽपि उच्चारण कर्मतायाः बोध दर्शनात् शब्दस्य प्रातिपदिकार्थत्वमनिवार्यम् ।

यदि अज्ञातायाः वृत्तेरुपयोगस्यात्तर्हि यत्र भाषा शब्दाः अनुकरणी कृताः सन्ति । यत्र भाषाशब्दानामनुकरणे साधुत्वंस्यात् गावमिति—परनयें = नैयायिकमते भाषाशब्देषु शक्तिर्नास्ति अतः शक्तयभावेन तदधीना लक्षणाऽपि "यो हि मन्यते अपशब्द पदार्थकः शब्दोऽपशब्द इति तस्य अपशब्द इत्येव स्यात्" एतेन अनुकरणस्य साधुत्वं स्पष्टमेव । अनुकरणन्तु शब्दस्य भवति ( नत्वर्थस्य ) गो शब्दस्य उच्चारण कर्मत्वंन्तु शब्दोऽपि शब्दार्थः इति मत्वा शब्दरुपार्थेनार्थवत्वमादाय प्रातिपदिकत्वेन कर्मत्वम् ।

मतौ छः सूक्तसाम्नोः इति सूत्रे योऽसौ आम्नायेऽस्य वामशब्दः पठ्यते । तत्र छप्रकृतेरस्य वामीयम् पदार्थः । शब्दस्य प्रातिपादिकार्थत्वाच्छः सिद्धिः । मूले अवभासते इति पाठे अर्थे अवभासते विशेषणतया विषयो भवतीत्यर्थः ।

इत्यभिप्रेत्य =पूर्वोक्तविचारमनुसन्धाय षट्प्रकार: धा षोढ़ा पूवोक्त: पंच-प्रकारसहित शब्द: षोढा नामार्थ: । क्वचित्=अनुकरणस्थले, अनुकार्या ऽनुकरणयो: भेद विवक्षास्थले । अनुकरणं द्विविधम्—ध्वनेर्वणस्य च । पटत्करोति ध्वनेरनुकरणम् भुव: इत्यत्र वर्णस्य भू इतिवर्णानुकरणम् । यदा भेदविवक्षा तदा शब्दोऽपि प्रतिपदिकार्थ: तदाह—

शब्दोऽपि यदि भेदेन विवक्षास्थात्तदा तथा ।
नोचेच्छ्रोत्रादिभि: सिद्धोऽप्यसावर्थो व भासते ॥

चेत्=यदि भेदेन विवक्षा न स्यात् तदा श्रोतादिभि:—श्रवणेन्द्रिज्ञान विषय: सन् उद्वुद्धसंस्कारादिभि: सिद्ध:=ज्ञात:, उपस्थितो वा असौ=शब्दो, अर्थ= शक्यार्थ व=इव भासते=प्रतीयते । शब्दजन्य ज्ञान विषयो भवति । व शब्दस्य इवार्थत्वे प्रमाणं तु "शास्त्रवं व पपुयश: इतिवचनम् । अत्र शब्दो इवार्थक: ।

अथवा—व शब्दो सादृश्यार्थक, सन् अर्थवद्भाषत इत्यर्थ: । भासन क्रियाया: तुल्यत्वात् 'तेनतुल्यं क्रिपाचेद्वति: । भेद पक्षे यथा: तदनुकरणात् भाषमानोऽर्थ: अनुकार्यरूप इव शब्द बोधे भाषते । एवमभेद पक्षेअपि अनुकरण शब्द: अनुकार्यादभिन्न: सन् भासते । परन्तु अनुकार्यस्य स्वत: उपस्थितिं विना भाष मानता सन्देहास्पदा । अत आह श्रौत्रादिभिरिति—अनुकार्य: श्रवणेन्त्रियप्रत्यक्ष द्वारा उपतिष्ठते । अनुकार्यगता या वृत्ति: तदुत्पन्नसंस्कारद्वारापि अर्थतुल्यम-भिज्ञायते । न च श्रीत्रादिभिरनुकार्यस्य उपस्थिति: सत्यपि तदुच्चारणपदाऽभावेन कथं बोध: तन्न पदोपस्थितमेव शाब्द बोधे भाषत इति, नायं नियम: असार्व-त्रिकत्वात् । अर्थवद्भाषते इति कथनेनापि उपस्थितं पदं कारणं नेति ।

जब गडढ़ समुदाय म कमन्व असम्भव हैं यह नहीं कह सकते । वर्णो क क्षणस्थायी होने पर भी समुदाय में कर्मत्व का आरोप होगा वर्णो का अर्थ , प्रसिद्ध है, अत: लक्षणा भी हो सकती है, शब्द शक्ति का ज्ञान भी लक्षणा से ही होगी षोढ़ा नामार्थ कैसे ? समाधान जब तक शब्द की शक्ति का ज्ञान नहीं होगा शक्य सम्बन्ध रूप लक्षणा भी न होगी, अज्ञाताया:········ अज्ञात शक्ति का शाब्द बोध में कोई उपयोग नहीं । प्रत्येक वर्ण मे शक्ति ज्ञान के बिना भी शाब्द बोध देखा जाता है इसलिए शब्द को प्राति पदिकार्थ मानना आवश्यक है । गावमुच्चारय इस वाक्य में गाव अर शब्द है भाषा शब्द के अनुकरण में साधुता की सिद्धि होती है इससे अनुकरण में साधुत्व स्पष्ट होता है । गाव इस भाषा शब्द में शक्ति के अभाव से नैयायिकादिकों के मत में लक्षणा असम्भव होगी, इसी अभिप्राय से शब्द के सहित षोढ़ा प्रातिपदिकार्थ कथी मत में है । इसी अभिप्राय से हरिकारिका की अभिव्यक्ति भी हुई है जैसे शब्दोऽपि इत········ यदि अनुकार्य और अनुकरण में भेद की विवक्षा हो तो शब्द भी प्रातिपदिकार्थ है, यदि अभेद की विवक्षा हो तो श्रोतादिभि:=श्रवणेन्द्रिय आदि के शक्तिज्ञानाधीन उपस्थिति से अर्थो व=वाच्य अर्थकी तरह शब्द भी शाब्द बोध विषय होते हैं ।

**अयं भावः—अनुकार्यानुकरणयोर्भेदेऽनुकार्यस्य पदानुपस्थितत्वात्तत्सिद्धये शक्तिरुपेया। शब्दार्थयोरभेदे प्रत्यक्षे विषयस्य हेतुत्वात्स्वप्रत्यक्षरूपां पदजन्योपस्थितिमादाय शाब्दबोधविषयतोपपत्तिरिति।**

❀

ननु अनुकार्यरुपस्य पदस्यानुपस्थितत्वात् तद्गता शक्तिरपि अनुपस्थिता स्यात् पदनिष्ठ शक्तेरनुपस्थितत्वात् तस्य शाब्दं भानं न स्यात्। अत आह 'अयंभाव' इति—

अनुकार्यानुक्रणयोर्भेद विवक्षायां अनुकार्यस्यपदस्य अविद्यमानत्वात् शाब्दबोध भावानुपपत्या अनुकरणमात्रस्योपस्थितिसत्वात्। अनुकार्यस्योपस्थितिसिद्धये पदजन्य शक्ति रुपस्थितये, अनुकार्यगताशक्तिनुकरणे उपेया=प्राप्तव्याः स्वीकार्यं शक्तिशून्यस्य स्मरणं। बोधः सम्भवत्येव नेति। पदे विद्यमानायाः शक्तेः शाब्दबोध विषयत्वात्।

केवलं अभेद पक्षेऽपि अनुकार्यगताशक्तिरनुकरणे कल्पनीयाः नहि भेदपक्ष, एवं शक्तेरावश्यकत्वम् अत आह अभेदइति अभेद विवक्षायां प्रत्यक्षे=इन्द्रिय जन्यं ज्ञानं प्रत्यक्षमतः श्रवणिन्दय जन्य प्रत्यक्षात्मज्ञाने विषयस्य=प्रसंङ्गेऽनुकरणात्मकस्य शब्दस्य शब्दरूप विनयस्य हेतुत्वात्=कारणत्वात्। प्र यक्ष बोधे विषयज्ञानं कारणमित्यर्थः स विषयः अनुकरणरूपः शब्द एव स अनुकार्यरूपैव न भिन्नः। अतः स्वप्रत्यक्षरूपा—अनुकार्या नुकरणयोरभेदे सति अनुकरणमाध्यमेन अनुकरण जन्यां अनुकार्यस्य शब्दरूपप्रत्यक्षात्सिकां पद जन्योपस्थितिमादाय= विषय द्वारा पदप्रत्यक्षस्यपदजन्यत्वं बोध्यम् एवं विधामुपस्थितिमादाय शब्द शाब्दबोधविषयः तथा उपतिष्ठते। यथा कदलीमानय इत्यादौ कदलीपदस्य पदजन्योपस्थितिरूपां बोध सामग्रीमादाय प्रतीतिः दुर्निवारा एवं शाब्दबोधे विषयतया शब्दौपस्थितिरपि न केनाऽपि वारयितुं शक्यते। अतएव स्वंरूपं सूत्रें भाष्यें नैतद्वक्तव्यम् किंकारणम्। शब्दपूर्वको हि अर्थ सम्प्रत्ययः। अतश्च शब्दपूर्वको योऽपि ह्यसौ नाम्नाऽऽह्यूते ( किन्तु तात्पर्य ) यदाअनेन नोपलब्धं तदा

अनुकार्य और अनुकरण के भेद पक्ष में अनुकार्य की पद रूप से उपस्थिति न होने के कारण उसके लिए शक्ति स्वीकार करना चाहिए। अभेद पक्ष में प्रत्यक्ष ज्ञान ( शब्द से उपस्थित विषय का ज्ञान ) कारण होता है। अन्तरङ्ग पद के श्रावण प्रत्यक्ष ज्ञान का विषय अनुकरणात्मक शब्द है जो अनुकार्य से अभिन्न है स्वप्रत्यक्ष रूपान्= अनुकार्य का प्रत्यक्ष रूप अनुकरणात्मक शब्दशक्ति की पद जन्य उपस्थिति को लेकर शाब्द बोध विषयता सम्पन्न होती है क्योंकि शब्द ज्ञान पूर्वक अर्थ का बोध होता है विष्णुमुच्चार्य अस्मेर्ङ्क आदि में शब्द का ही प्राधान्य है।

वाक्य में

यद्यप्यतिप्रसङ्गवारणाय वृत्तिजन्यपदोपस्थितिरेव हेतुस्तथाऽप्यत्राऽऽश्रयतया वृत्तिमत्वस्य सत्वान्नानुपपत्ति। निरूपकताश्रयतान्यतरसम्बन्धेन वृत्तिमत एव शाब्दबोधविषयत्वं कल्प्यत इत्यनवद्यम्। सम्बन्धस्योभयनिरूप्यत्वात्पदादर्थस्येव तद्‌बोधकत्वेन स्वस्यापि ज्ञानसम्भावनाच्चेति।

कर्ता का आश्रय जो कर्म

❀

पृच्छति किं भवानाह इति शब्दपूर्वकश्च अर्थस्य सम्प्रत्ययः (ज्ञानम्)। अत्र शास्त्रे शब्दस्य (कार्य) सम्भवात् अर्थः निवर्तते। 'शब्दपूर्वको हि' इत्यादिना शब्द सत्वे पदार्थोपस्थितिः शब्दाभावे पदार्थोपस्थित्यभाव इत्यन्वयव्यतिरेकौ निर्णीय "शब्दपूर्वक" इति अनेन शब्दे विशेषणत्वं प्रदर्शितम्। तेन अर्थे कार्यस्यासम्भवे सत्यर्थो विशेषणम् शब्दे। उक्त भाष्यस्यायमाशयो यत् शब्दस्य तदर्थस्य च शब्दोच्चारण पूर्वकं ज्ञानम्। अतः वाक्यपदीये शब्दःकरणमथस्य सहितेनोपजन्यते इत्युक्तम्। यत्र तु लोके सञ्जीवनीभानय इत्यादौ शब्दस्य आनयनाऽसम्भवः तत्र अर्थस्य प्राधान्यं तस्यैवानयनसम्भवात् तत्र अर्थांशे शब्दः विशेषणम्। यत्र तु "सरस्वतीमुच्चारय" 'अग्नेढक्' इत्यादौ अर्थस्योच्चारणम् दहनार्थात् ढक् प्रत्ययो न भवितुमर्हति। तत्र शब्दस्य प्राधान्यं शब्दांऽशेऽर्थस्य विशेषणता ज्ञेया। अतएव श्रीमान् भर्तृहरिः=विषयत्वामनादृत्य शब्दैः नार्थः प्रकाश्यते" अर्थात् शब्दो बोधस्य विषयः सन् अर्थं विद्योतते।

ननु शाब्द बोधे पदजन्योपस्थितिः कारणमिति स्वीकारे "एक सम्बन्धिज्ञानमपरसम्बन्धनंस्मारयति" इति प्रवचनेन भारतं पञ्चशीली इत्यस्य भारतकर्तृक

यदि पद जन्य ज्ञान को कारण मानेंगे तो कुलपतिरस्ति इत्यादि स्थल में कुलपति शब्द का आश्रय सभवाय सम्बन्ध से शब्द गुणक आकाश भी है, पद जन्य उपस्थिति होने से उसको भी शब्द बोध विषयता बनने लगेगी। इस शंका पर बोले अति प्रसंङ्ग वारणाय इति.........शाब्द बोध में वृत्ति ज्ञान जन्य उपस्थिति कारण होती है सभी शब्दों मे निजोवृत्ति होती है जैसे नेता पद में नेतृत्व विशिष्ट में शक्ति हैं। जिस पद का जो विषय है उसकी उपस्थिति उसके बोध में पद में रहने वाली वृत्ति (शक्ति लक्षणा व्यञ्जना) उससे उद्‌बुद्ध संस्कार वही पद की निजो शक्ति है। इससे आकाश की बोध विषय सम्बन्ध के शब्द और अर्थ दोनों से निरूप्य होने के कारण जैसे पद से वृत्तिमान अर्थ का बोध होता हैं वैसे ही स्वस्य=शब्द का भी संबंध बोध सम्भव है, जैसे वत्तो दूसरी वस्तु को भी प्रकाशित करती है स्वैव, अपने को भी ऐसे ही शब्द को भी समझिये।

पञ्चशीलपालकत्वस्यास्तित्वमर्थ आवश्यकः अथवा "घटोऽस्ति" घटकर्तृकास्तित्वानुकूलव्यापार इत्यर्थो। आवश्यकः किन्तु एक सम्बन्धिज्ञानं—भारतशब्दः घटशब्दो वा समवाय सम्बन्धेन शब्दगुणके आकाशेऽपि सत्वात् शब्दसम्बन्धिनः आकाशस्याऽपि पदजन्याया उपस्थितेः सत्वात् तस्य शाब्दबोधविषयत्वं दुर्वारं स्यात्। तथा च आकाशः पञ्चशीली आकाशोऽस्ति। इत्यर्थोऽपि अतिप्रसंग विषयो मा भवत्विति आह—यद्यपीति—अतिप्रसंगः आकाशादीनामुपाधितया प्रसंगमनिक्रान्त इत्यर्थः तन्निरसनाय=वृत्तिज्ञान पुरःसरं

पदजन्यत्वसधनायाह—वृत्तिजन्येति—पदे विद्यमाना या वृत्तिः (शक्तिः) सा शब्दश्रवणसमकाल मुद्बुद्धसंस्कार पुरःसरं पदस्य प्रसक्तिः (उपस्थितिः) विषयतया शाब्दबोधंप्रतिकारणम्। पदं स्वस्भादुत्पन्नं स्ववृत्तिविशिष्टज्ञानं स्वाश्रयत्व (स्वं+वृत्तिः तदाश्रआधारभूतः यःशब्दः) सम्बन्धेन स्वनिरूपकत्व (स्वंवृत्तिः तन्निरूपकः=परिचायक दर्शको वाऽर्थः) तत्सम्बन्धेन अनयोरन्यतरेण वा कारणत्वस्वीकोर सति आकाशस्य घटशब्दजन्य स्मरण सत्वेऽपि घटत्वावच्छिन्नत्वं घट एव नत्वाकाशे। तस्मात् शक्तिमज्ञानपुरःसरं पदज्ञानं बोधे कारणम्। यथा पाञ्चालपदं श्रृणु इत्यादौ वृत्तिज्ञानपूर्वक (पाञ्चालत्वावच्छिन्न) पाञ्चालपदोपस्थितेः कारणतया दर्शनात्। पदं (शब्दः) शाब्दबोध विषयत्तया सिद्धम्। अन्यथा (वृत्या पदोपस्थित्यभावे) अनुकरणस्य शब्दजन्य ज्ञानविषयत्वं नस्यात्। शब्दार्थयोस्तादाम्येन ज्ञानस्यार्थविषयकत्वेऽपि शब्दविषयकत्वस्य सुनिश्चतत्वात्। तथापि=पदे वृत्यनुकूलोदुबुद्ध संस्कारेऽपि आश्रयतया=वृत्तेराश्रयः शब्दः तेन सम्बन्धेन शब्दः वृत्तिमान् भवति वृत्तिमत्त्वस्य=शक्तिसम्पन्नस्य शब्दद्रप सत्वात्=अस्तित्वात् नानुपपत्तिः=नकश्चन दोषः। शाब्दे न हानिः। न च शक्तेराश्रयतासम्बन्धेन वृत्तिमत्वस्य शब्दस्य शाब्दं भानमस्तुनाम। किन्तु शक्तेः निरूपकः=परिचायकोऽर्थः। परिचायकतासम्बन्धेन वृत्तिमतोऽर्थस्य शाब्दं भानभनुपपन्नं स्यात् तदाह निरूपकतेति अत्र वृत्तिमान् द्विविधः शब्दः अर्थश्च। द्वौ शाब्दबोध विषयौ। निरूपकता (शक्तेः परिचायकता) सम्बन्धेन। अर्थस्य वृत्तिमत्वम् आश्रयता (शक्तेवाश्रयता) सम्बन्धेन शब्दस्य वृत्तिमत्वम्। अर्थवत्सूत्रे तु परिचायकतासम्बन्धेन वृत्तिमतएवार्थस्य ग्रहणात् अभेपदक्षेऽनुकरणस्य प्रातिपदिक संज्ञान नभवति। न च विभक्तिर्भवति शब्दबोध विषयत्वं=वृत्तिमत्वं शब्दजन्य ज्ञानविषयत्वं कल्पेत=शब्दार्थोभयनिष्ट वृत्तिमत्व कल्पनया गोख सत्वेऽपि प्रामाणिकं गौरवं न दोषावहम्" अनुभवानुरोधात्। तत्कल्प्यत इत्यथ अनवद्यम्=निर्बाधम्, अभेदपक्षे परिचायकतया वृत्तिभत्वाऽभावात् न प्रातिपदिकत्वम् न पदत्वम्। किन्तु साधुत्वं शिष्टानुरोधात्। शिष्टप्रयुक्तत्वात् साधुत्वमित्यर्थः।

**उक्तं च वाक्यपदीये—**

**ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।**
**तथैव सर्वशब्दानामेते पृथगवस्थिते ॥**
**विषयत्वमनादृत्य शब्दैर्नार्थः प्रकाश्यते ।**

**इति चेति ॥ २ ॥ (२६)**

ननु निरूपकताऽऽश्रयतान्यतरसम्बन्धेन वृत्तिसहितस्य शब्दस्य शाब्दबोध विषयत्वमस्तुनाम किन्तु स्व ( शब्दः ) प्रतियोगिकत्वविशिष्टत्वं सम्बन्धाश्रयत्वञ्च एकस्मिन्षदे न तिष्ठतः एवं शब्द प्रतियोगित्वविशिष्टस्य शक्तिरूपसम्बन्धस्य अनुयोगिन्यर्थे सत्वेन प्रतियोगिनः शब्दस्य ज्ञानं न स्यात् किन्तु अनुयोगिनोऽर्थस्यैव भानम् । अतआह उभयनिरूप्यत्वादिति सम्बध्नाति शब्दार्थौ संयोजयतीति सन्बन्धः द्विष्टोधर्मः शब्दार्थोभयनिष्ठत्वात् शब्दप्रतियोगिकः सम्बन्धः अर्थप्रतियोगिकश्च सम्बन्धः सिद्धः सः प्रतियोगितया शब्देतिष्ठति अनुयीगितया चार्थे ।

पदार्थस्येव—यथा पदोचारणात् अर्थः बुध्यते एवं वृत्या शब्दः सम्बन्धवान् भवत्येव तद्बोधकत्वेन प्रत्यक्षात्मकः शाब्द बोधजनकत्वेन शब्दः वृत्तिमतोऽर्थस्यवोधकः एवं स्वस्यापि=शब्दस्यापि शक्तिरूपसम्बन्धवत्वेन बोध विषयत्वम् ।

एवं स्वप्रतियौगित्वं आश्रयता च बोधकता बोध्यता च एकस्मिन्नपि सम्भवात् तादृश सम्बन्धाश्रयता एकस्मिन्नप्यभ्युपगमात् शाब्दे शब्दभार्मे सयुक्तिकमेव नत्वयुक्तिकम् । स्वस्मिन्नपि स्वप्रतियोगि कत्वविशिष्टसम्बन्धस्य अस्तित्वं साधयितुं तेजसः दृष्टान्तेन समर्थिकां हरिसम्मतिमाह उक्तञ्च-वाक्चयदीये ग्राह्यत्वमिति—यथा तेजसः = ज्योतिष्मतः द्वेशक्ती बोद्धयत्व बोधकत्व ग्राह्यत्वरूपा ग्राहकत्वरूपाच एवं शब्देऽपि ग्राह्यत्वम् ( बोध्यत्वम् ) ग्राहकत्त्वम् ( बोधकत्वं ) तिष्ठतः । तयोः समकालमेवेति नैयत्यं नास्ति । कदाचित् ग्राहकत्वं कदाचित् ग्राह्यत्व यथा लोके

जो शब्द बोधक है वह बोध्य कैसे ? इस शङ्का की निवृत्ति के लिए स्वमे स्व सत्ता का प्रकाशन करते हैं । प्रमाण में हरिकारिका ग्राह्यत्वम्..........जैसे तेजस रूप दीपक में ग्राह्यत्व और ग्राहकत्व दोनों शक्तियाँ है, जैसे सूर्य संसार को दिखाते हैं, और देखे भो जाते हैं अर्थात् प्रकाश्य भी हैं प्रकाशक भी हैं, वैसे ही वृत्ति मान शब्द स्वयं बोध्य है अर्थ का बोधक भी सभी शब्दों में दोनों शक्तियाँ पृथक-पृथक स्थिति हैं यदृच्छां शब्द केवल बोध्य होते हैं, जैसे दीपक विषय वस्तु के सन्निधान से दोनों शक्तियाँ देखी जाती है ऐसे ही शब्द में भी अर्थ के सन्निधान में दोनों शक्तियाँ देखी गई हैं, जब तक शब्द स्वयं बोध का विषय नहीं बनेगा तब तक अर्थ का प्रकाश भी नहीं कर सकता ।

अभेद पक्ष

प्रसङ्गादनुकार्यानुकरणयोरभेदपक्षे साधकमाह—

अत एव गवित्याह भू सत्तायामितीदृशम् ।
न प्रातिपदिकं नापि पदं साधु तु तत्स्मृतम् ॥३॥ (२७)

❀

आलोक ( टार्च ) गतप्रकाशे वस्तुसंयोगेसति शक्तिद्वयंदृश्यते । विषयस्य बोधकत्वं स्वस्य च बोध्यत्वम् विषयसन्निधानाऽभावेतु कैवलं ग्राह्यत्वमेव । एवं सर्वशब्दानाम् अर्थसन्निधाने बोधकत्वम् बोध्यत्वञ्च अर्थसम्पर्काऽभावे तु केवलं बोध्यत्वमेव । विषयत्वं=शब्दस्य शब्दबोध विषयतांम् अनादृत्य=तिस्कारं कृत्वा शब्दैः= उच्चार्यमाणैः शब्दैः अर्थः=अभीप्सितोऽर्थः नप्रकाश्यते= बोधविषयतां नापद्यते । शब्दः स्वविषयता मभिव्यज्य अर्थं बोधयति । अत्र शब्दजन्योऽर्थो व्याप्यः स्वोपस्थितिः व्यापिका । एवं नान्तारीकतया शब्दस्य शब्द विषयता । चाक्षुष प्रत्यक्षज्ञानं प्रति आलोकस्य संयोगः कारणम् यदि आलोक संयोगस्य कारणत्वं न स्यात् तर्हि चाक्षुष संयोगस्य अन्धकारेऽपि सत्वात् वस्तु प्रत्यक्षता सम्भवात् । अतः ( आलोक संयोग एव चाक्षुषत्वावच्छिन्नेसति कारणम् यथा विद्युत् गुलिका ( वल्ब ) शब्दः निर्झरण्यादिकं प्रकाशयन् स्वात्मानमपि नान्तरीयकतया बोधयति । एवं शब्दः स्वशक्त्याऽर्थं प्रकाशयन् स्वात्मानमपि प्रत्यक्षीकरोति । यथा गुलिका पुस्तकाद्यभावेऽन्यप्रकाश्याऽभावे च केवलमात्मानमेव ज्ञापयति । स्वविषयकमेव ज्ञानं कारयति एवं यत्र अर्थबोधे प्रयोजनं नास्ति शब्दमात्र बोधे तात्पर्यमस्ति । तत्र स शब्दः स्वशक्त्या स्वविषकमेव ज्ञानं कारयति ।

—अनुकार्यानुकरणयोः भेदपक्षे तु—तयोः परस्परमध्यासात् शास्त्रेतरस्मि न्व्यवहारकाले शब्दार्थयोः समानाकारवृत्ती संजायमानायाम् शब्दोऽर्थाकारः, अर्थः शब्दाकारः परस्परमात्मसमर्पणात् । शब्दविषयकः शाब्दबोधः संसिद्धः । अनुकार्यानुकरणयोरभेद पक्षे प्रमाण रूपेण आह अत एवेति—गवित्याह, "भू" सत्तायाम् इत्यादौ गो इत्यत्र पदत्वस्य "भू" इत्यत्र प्रातिपदिकसंज्ञायाः तत्फलस्य च अदर्शनात् । कल्प्यते यत् अनुकरणशब्दाः अनुकार्या दभिन्नाः । अत्र अनुकार्यानुकरणयोरभेदात् निश्चितार्थस्याभावात् वृत्तिमत्वरूपमर्थवत्वं विना प्रातिपदिकसंज्ञा विधायकं शास्त्र न प्रवर्तते तस्या फलं पदत्वमपि न । ततः परि-निष्ठितरूपं साधुत्वं नात्र यतोहि वृत्तिः अर्थस्य निरूपिका ( परिचायिकेत्यर्थः ) तेन सम्बन्धेन अर्थवत्सूत्रे वृत्तिमतोऽर्थस्यैव ग्रहणम् । नतु वृत्तिमतश्शब्दस्य । वृत्ते-राश्रयश्शब्दः, तेन सम्बन्धेन ( आश्रयतासम्बन्धेन ) पदात् प्रादुर्भूतोपस्थिति विषयस्य शक्तिमतश्शब्दस्य शाब्दबोध विषयत्वेऽपि शब्दविषयक बोध जनकत्वन्तत्र

क संज्ञा नहीं हुई और सुँ इत्यादि प्रत्ययों की उत्पत्ति नहीं हुआ।





"गवित्ययमाह" "भू सत्तायाम्" इत्येवमादयो यतोऽनुकरण-शब्दा अनुकार्यान्न भिद्यन्तेऽतस्तेषामर्थवत्त्वाद्यभावात् "अर्थवदधातुः" इत्याद्य-प्रवृत्तौ न पदत्वं न वा प्रातिपदिकत्वम्, अथ च साधुत्वमित्युपपद्यते। अन्यथा "प्रत्ययः" "परश्च" "अपदं न प्रयुञ्जीत" इति निषेधादिलङ्घनादसाधुतापत्तिरित्यर्थः ॥३॥ (२७)

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे नामार्थनिर्णयः समाप्तः ॥

❀

नत्वर्थबोधजनकत्वम्। आवश्यकन्तु वृत्त्याऽर्थ विषयकबोधजनकत्वम् अतो न प्रातिपदिकत्वम्। अथवा अनुकरण सदृशोऽनुकार्यः इति सादृश्यमूलिकाऽभेदविवक्षा। तेन अनुकरणेनानुकार्यं बोधः। अयं निष्कर्षः—यत् भेद पक्षे वृत्तिमतोऽर्थस्य सत्वात् प्रातिपदिकत्वम् तेन पदत्वम् अभेदपक्षे वृत्तिमत्वरूपार्थवत्वाभावात् प्रदत्वाभावः। ननु पदत्वाभावात् परिनिष्ठितत्वाभावेन कथं साधुत्वमिति।

अथ साधुत्वमिति यद्यपि 'भू" इत्यादौ शास्त्र बोधितत्वं साधुत्वं नास्ति तथापि शिष्टप्रयुक्तत्वं साधुत्वन्त्वस्त्येव। एतत्प्रमाणं ॠलृक् सूत्रे भाष्ये प्राप्यते। अन्यथा प्रातिपदिकाद्यभावे न केवला प्रकृतिः प्रयोक्तव्या नापि केवलप्रत्ययः" इति निषेध विषयतायाः सम्भवेन विभक्ति रहितानां भू सत्तायां, भज् सेवायामित्यादीनामसाधुत्वं स्यात्। तथा च पश्येति सूत्रे भाष्ये। प्रत्यय विधौ पंचमी निर्देशात्। तस्मादित्युत्तरस्येति परिभाषया परत्वास्य लाभात् प्रत्ययः पर एव, प्रत्ययपरैव प्रकृतिः। इति नियमार्थत्वं भाष्यकृता स्वीकृतम्। अपदं = अपरिनिष्ठितं न

प्रसङ्ग के अनुकूल अनुकार्य अनुकरण का अभेदपक्ष की साधुता युक्ति प्रस्तुत करते हैं अतएव=·······चूंकि गवित्ययमाह भू सत्तायाम् इत्यादि अनुकरण शब्द अनुकार्य से भिन्न नहीं हैं। किन्तु अभेद विवक्षा पक्ष में सादृश्याख्य सम्बन्ध होता है। अतः अभेद होने से उनमें अर्थवत्व अनिर्णीत रहता है। शब्द (अनुकरण) पद जन्य ज्ञान न होने से अभेद पक्ष में वृत्या अर्थ विषयक बोध का जनक नहीं है इसलिए प्रातिपदिक संज्ञा होती है न पदत्व होता है, तथापि वे साधु माने जाते हैं, शिष्टों से प्रयुक्त शब्द भी साधु है, अन्यथा=भेद पक्ष स्वीकार करने पर भाष्यकार ने कहा-कहा "अपदन्न प्रयुञ्जीत" जो पद न हो उसका प्रयोग नहीं होना चाहिए, 'गवित्ययमाह' भू सत्तायां, में सुबन्त तिङन्त के अभाव में भी परिनिष्ठित माने जाने से निषेध का विषय नहीं बन सकते इसलिए परिनिष्ठित शब्दों का साधुत्व सिद्ध होता है। वह चाहे व्याकरण गम्य हो या शिष्ट प्रयुक्त जाति विशेष हो।

प्रयुञ्जीत इत्यादि प्रमाणेनासाधुत्वं स्यात्। परन्तु पूर्वोक्तानां निषेधादीनाभुपयोगस्तु यत्र प्रत्यय प्रकृतिभावस्तदर्थं बोधः। तत्र परिनिष्ठितत्वं = अप्रवृत्तनित्य विध्युद्देश्यतानाक्रान्तत्वं सम्भवति यत्र ( अभेद पक्षे ) तु प्रकृति प्रत्यय भावस्य संगतिरेव नास्ति तत्र प्रकृतित्वाभावात् निषेध विषयतैव नास्ति कुतोऽसाधुत्वं विभक्तिरंहित्यादिविचार तेन अभेदपक्षे निषेधस्य प्रसङ्ग एव नास्ति। साधुत्वन्तु = अपरिनिष्ठितत्वमेव। तत्तु 'भू'' भज गवित्यादावपि वर्तते। नित्य विधयस्तत्र न प्रवर्तन्ते। तेषामुद्देश्यताऽपि न आकम्यते। तेन परिनिष्ठित लक्षणं संघटत एव। शिष्ट प्रयुक्तत्वं साधुत्वन्त्वस्त्येव।

साधुध्वंन्तु जातिविशेषः। स व्याकरणबोध्यः शब्दानुशानगम्यः। अथवा शिष्टप्रयोगादभिव्यञ्जितः। अत एवाऽनुकरणाः विभक्तिसहिताः विभक्तिरहिताश्च क्वचित् दृश्यनो। अत्र जातिव्यक्तिवत् शिष्टप्रयोगानुसारिणाविभौ। अनुकरण विषये भेदाभेद पक्षौ। अतएव क्वचिद विमक्तिविशिष्टाः भुवो वुग्लुङ्लिटो रिति सूत्रे भुव इति निर्देशः। अभेद पक्षे च बिक्तिरहिताऽपि भूसत्तायामिति निर्देशेनोभयविधानुकरणानि जायन्ते। इति नामार्थः

# अथ समास शक्ति निर्णयः

प्रकरणावतरणम्—सामान्यार्थज्ञान पूर्वक विशेषार्थ ज्ञानं भवतीति नियमः। पूर्वप्रकरणे एकपदप्रयोज्यप्रयोजकप्रातिपदिकार्थ विषयकस्वार्थ, द्रव्य, लिङ्ग, संख्या कारकाणां व्यासार्थानां सम्यक् प्रतिपादनं जातम्। इदानीं विशेषार्थीभूतस्य पदप्रयोजक समासार्थस्यैकार्थीभावस्य व्यपेक्षावादस्य वा सामर्थ्यस्य निरूपणं क्रियते। प्रकरणस्य प्रकरणान्तरसम्बन्धाऽवसरसङ्गतिः प्राप्ता। समास रूप विशेष नामार्थ प्रसङ्गे कः समासशब्दार्थः, कश्च तस्य विशेषार्थ इति जिज्ञासायां समसनम्=अनेक पदार्थानां मिलित्वा एकार्थी भवनं पदानां परस्पर सम्बद्धार्थी भवनं समासः। अथवा समम्=पदार्थयोः पदार्थानाम्वा एकं, समानं, सङ्गतं, संसृष्टं, सम्पृक्तं भूत्वा आसनम्=उपस्थितिः, पाणिनि संकेत सम्बन्धेन सभास पदवत्वं समास उच्यते। एकार्थीभूय समुपस्थितिः तस्य विशेषार्थः। एषोऽर्थः प्रथमं पृथक्-पृथक् भूत्वा लौकिकविग्रहवाक्ये ( वृत्यर्थावबोधकंवाक्यं विग्रह इति ग्राहके ) उपलभ्यते। पश्चात् यस्य पदस्य येन पदेन सह सन्निहितत्वं योग्यता च तेन सह तस्य सम्बन्धः संप्रज्युयते, ततो विशिष्टार्थी भूय एकार्थी भावो भवति। अत एव 'समस्यते' इत्यस्य सामर्थ्यविषयतामापद्यते इत्यर्थः। भाष्ये उक्तमपि वर्तते यत् सम्बद्धार्थः समर्थः संगतार्थः समर्थः, संसृष्टार्थं समर्थ इति यथा गुडेन मिश्रा ( सम्बद्धा ) धाना गुडधाना=गुड़ेन स्वादुकृतं धान्यं, घृतेन संगत-

मेकीभूतं तैलं घृततैलम्। घृतमिश्रिततैलमिति समासार्थः। संसृष्टस्समाजः मिलित्वा एकीभूय समं=सहैव अजन्ति=गच्छन्ति यस्मिन् समूहे सः। इत्यादि प्रमाणैः विवरणैश्च अनेक शक्तिशालिपदानामेकशक्तिशालिपद भवनं समास निरूपित विशेषप्रातिपदिकार्थः।

अस्य समासरूपविशेषनामार्थस्य प्रामाणिकता कृत्तद्धितसमासाश्चेति सूत्रेण भवति। समासस्य प्रातिपदिकसंज्ञाविधानात् समासोऽपि नामार्थ इति सिद्धयति। अयमेव विशेषनामार्थ इति यद्यपि कृतद्धित सूत्रे उच्चारित समासेन प्रथमोच्चारित कृत्तद्धि तयोर्निर्दिष्ट नामार्थत्व निरूपणं प्रथमावश्यकं तथापि धात्वर्थ प्रकरणे तिङ्कृतद्धितप्रत्ययार्थानां सम्यग्विवेचनं संजातम्। तस्मै प्राति पदिकाय हितस्तद्धितः। सोऽपि नामार्थ मूलक एव।

समासविशेषप्रातिपदिकार्थस्य निरूपणं प्रासङ्गिकमस्ति। वैयाकरण मते समासे विशिष्टाशक्तिरस्ति। तेन ग्रन्थकर्त्रा समासगतविशिष्ट.ाक्ति सिद्धान्तस्य निर्णय आरभ्यते 'अथ समास शक्ति निर्णय इति।

अथ शब्द आरम्भवाची अनन्तर समास शब्देषु एकमेव शक्ति स्वरूप मारभ्यते इत्यर्थः।

समासान् विभजत इति समासार्थान्निर्णेतुं समासस्य विभागः क्रियते। यद्यपि सामान्यार्थज्ञान पूर्वकं विशेषार्थ ज्ञानं भवतीति नियमेन प्रथमं समासार्थनिरूपण

सामान्य नामार्थ का निरूपण हुआ। सामान्य ज्ञान पूर्वक ही विशेषार्थ ज्ञान का नियम है। अतः समास रूप विशेष नामार्थ का निरूपण अवसर संगत है। अतः समासार्थ विशेष नामार्थ का निरूपण करते हैं.। अनेक पदों का मिलकर एक पद होना, समसनं=पदार्थों का परस्पर सम्वद्धार्थ होना। अथवा समं=समान संगतं एकार्थक पद होना ही समास है। यह अथ प्रथम पृथक मृथक् लौकिक विग्रह वृत्ति के अर्थ का वोध कराने वाले वाक्य में उपलब्ध होता है। पश्चात् जो जिसके सान्निहित अथवा योग्य है, वह उससे सम्बन्ध जोड़ता है। विशिष्ट होकर एकार्थी भाव हो जाता है इसलिए समस्यतें का सामर्थ्य विषयो भवति यह व्युत्पत्ति भी है,। यथा गुडधाना, गुड से सम्वद्ध धान, धृतेन संगतं भोज्यं' इत्यादि में एकार्थी भाव सुस्पष्ट है, वैया करण मत में समास में विशिष्ट शक्ति माना गया है, ग्रन्थकार समास विशिष्ट शक्ति से सम्वद्ध सिद्धान्त का निर्णय प्रारम्भ करते हैं। "अथइति"

समासार्थ निर्णय के लिए समास का विभाजन करते हैं। यद्यपि सामान्य ज्ञान पूर्वक बिशेष ज्ञान के नियम से प्रथम समासार्थ निरूपण ही आवश्यक था! तथापि सामान्य समास के स्पष्ट होने से समास विशेष के संशयात्मक होने से ग्रन्थ कार ने प्रथम भेद का निरूपण किया समासान विभ जते इति,

**समासान्विभजते—**

**सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा ।।**
**सुबन्तेनेति च विज्ञेयः समासः षड्विधो बुधैः ।।१।।**

**सुपां सुपा पदद्वयमपि सुबन्तम् । राजपुरुष इत्यादिः । सुपां तिङा पूर्वपदं सुबन्तमुत्तरपदं तिङन्तम् । पर्यभूषत्, अनुव्यचलत् ।**

मावश्यकमासीत् । तथापि सामान्य समासस्य सुस्पष्टतया समास विशेषस्य संशयात्मकतां दृष्ट्वा मूल कारेण प्रथमंसमास भेद निरूपणं क्रियते ।

समासान् विभजत इति—अत्र विपूर्वक भज धातुः । स्वसमभिव्याहृत पदार्थतावच्छेदकमिथा विरूद्धयावद्धर्मप्रकारकबोधानुकूलव्यापारोऽर्थः । स्व =विपूर्वकभज धातुः । तस्य समभिव्याहृतमव्यवहितं पदं समासानिति-केचित् षष्ठीतत्पुरूषोऽव्ययीभावद्वन्द्वेति पदार्थतावच्छेदको धर्मः ( सर्वं पदार्थे विद्यमानो धर्मः ) परस्परविरूद्धोधर्मः द्वन्द्वत्वं तत्पुरूषत्वादि स धर्मो विशेषणं यस्मिन् तदव्ययीभावावि ज्ञानं तदनुकूलो व्यापारः तत्पुरूषादिसमासरूपः । अस्यैव समामस्य विभाजन प्रसंगे ग्रन्थ कारेण कारिका प्रोच्यते ।

सुपां सुपेति—

समासस्य षण्णिर्दुष्टाः भेदाः । सुषां सुपा, =सुपांनाम्ना, सुपां धातुना, तिङ्ा तिङ्ा" तिङा सुपा, सुबन्तं सुबन्तेन सह पदद्वयस्य समासः सम्बोधितो भवति । यथा रामदूतः राजपुरूषेत्यादौ पद द्वयं सुबन्तमस्ति । राम स्वामिको दूत इति समासाऽर्थः, सुबन्तं तिङन्तेन सह समस्यते । यथा पर्यभूषत्, अनुव्य चलत्, इत्यादौ अनु इति सुबन्तमन्यं तिङ्न्तं तेन सह गतिमता उदात्तवता च समस्यते परस्पर सम्बद्धर्थो भवति ।

सुपां सुपा-इति समास के निदुष्ट भेद ६ हैं । सुपां सुपा, सुपा+तिङ ।, सुपा धातुना तिङ का तिङ से तिङ का सुवन्त से होता हैं । सुवन्त का सुवन्त के साथ पदद्वय का समास वोधित होता है । रामदूतः, राजपुरुष, इत्यादि में राम और दूत दोनो पद सुवन्त हैं, राम सम्वन्धी दूत यह समासार्थ हुआ । (२) पूर्वपद सुवन्त का उत्तरपद तिंङन्त के साथ समास, जैसे पर्यभूषथत्, अनुव्यचलत् परि सुवन्त का अभूषयत्ङन्त के साथ ससास होने पर 'समासस्य' सूत्र से अन्तोदात्त होता है,, देवो देवान् यज्ञेन पर्यभूषयत् ( आपने यज्ञ से देवताओं को विभूषित किया ।

इसी प्रकार विका अचलत से और अनुका व्यचलत् के साथ समास होने पर दोनो से समास का विधान गतिमान और उदान्तवान् तिङ के साथ गतिसंज्ञा होने से समस्यते । परस्पर में सम्बन्द्धार्थक होते हैं, उदान्तवता का 'उदाहरण परियन्ति' 'निपातैर्यदि' इस सूत्र से 'तिङ अतिङ सूत्र से आद्युदात्तहोने पर समास हुआ । परि और अनु का अचलत् तिङन्त के साथ सह सुपा सूत्र में सहपद के योग विभाग से समास होता है ।

"गतिमतोदात्तवता तिङाऽपि समासः" इति वार्तिकात्समासः। प्रकृति - धातु
सुपां नाम्ना कुम्भकार इत्यादिः। "उपपदमतिङ्" इति समासः।
स च "गतिकारकोपपदानां कृद्भिः समासवचनं प्राक्सुबुत्पत्तेः" इति
परिभाषया भवति सुबुत्पत्तेः प्राक्। अत्रोत्तरपदे सुबुत्पत्तेः प्रागित्य-
थात्। अन्यथा चर्मक्रीतीत्यादौ नलोपानापत्तेः। उत्तरपद में सुबुत्पत्ति से पहले।

❀

३—सुपां नाम्ना पूर्वं पदस्य सुबन्तस्येत्तरपदेनप्रातिपदि केन सह समस्यते= दुग्धेन सह जलमिव सङ्गतार्थो भवति। यथा कुम्भकारः। अत्रपूर्वं पदं सुबन्त-मुत्तर पदं प्राति पदिक मात्रम् कुम्भं करोतोति विग्रहे कर्मण्यण् इति कर्मण्युपपदे कर्त्तरि अणि। अतः कुम्भकर्मक उत्पत्यनुकूला या क्रिया तज्जन्यं यत्फलं कुम्भ ङस् इत्युपपदस्य कार इति प्रातिपदिकेन सह सुवुत्पत्तितः पूर्वमुपपदमतिङिति समासः। उपपदमतिङन्तेन प्रातिपदिकेन सहसमस्यते। अर्थात् तिङन्त तदादि भिन्नं तिङन्ततदादिसदृशं प्रातिपदिकं कृदन्तं ग्राह्यम्। तिङन्त तदादिः धातु प्रकृतिके प्रत्यान्तं प्राप्यते। तद् भिन्नं कृदन्तं कार इति। तत्तु तिङन्त तदादि सदृशमच्यस्ति। अत्र सादृश्यं धातु प्रकृतिकतिङभिन्न प्रत्ययान्त तदादित्वेन गृह्यते। तेन समासस्तु गति कारकोपदानां कृद्भिः सह समास वचनं प्राक् सुबुत्पत्तेर्भवति। केवलमुत्तर पदएव सुबभावो ग्राह्यः। सुबुत्पत्तेः पूर्वसमासस्य प्रामाणिकता क्रीतात् करण पूर्वादित्यनेनसिद्धा भवति। यदि कारकाणां सुबुत्पत्तेः पश्चात् ( सुबन्तेन सह ) समासः स्यात्तर्हि अश्वक्रीती इति न सिद्धेत्। यतः अश्वेन क्रीतेत्ति दशायां क्रीत इति प्रातिपदिकस्य स्त्रीत्व विवक्षायां टापे प्राप्नोति सुविभक्तिरपि प्राप्नोति। अस्यां परिथिस्तौ स्वार्थे परिपूर्णं पदमर्थान्तर-माकाङ्क्ष्यत इति नियमेन स्वार्थं, द्रव्य, लिङ, संख्याकारकाणां क्रमिकोत्पत्ति। ततो लिंग बोधक टाप् प्रत्ययः अन्तरङ्गत्वात् प्रथमं प्राप्नोति। ततोऽदन्तत्वा-भावान्नङीप्। यतः करण पूर्वकादन्त क्रीत शब्दात् स्त्रीत्व द्योत्येङीबिति तदर्थः। इति ङीप् न प्राप्नोति। अतः सूत्रं व्यर्थीभूय ज्ञापयति ( नियमयति ) यत् कार-काणां कृद्भिः सह समास वचनं सुबुत्पत्तेः प्राग्भवति। तेन क्रीत शब्दस्यादन्तत्वं सुरक्षितं भवति। सूत्रस्य विधायकता वैधानिकी प्रवृत्तिश्च फलवती ज्ञायते।

'सुपां नाम्ना', पूर्व पद सुवन्त के साथ उत्तर पद प्रातिपदिक का समस्यत=संग तार्थक ( दूध के साथ जल की तरह ) हो जाता है, जैसे कुम्भंकरोति इस विग्रह में अणादि कार्य कुम्भ कर्मक उत्पत्ति के अनुकूल क्रिया गत फलग्रणार्थक 'कुम्भ ङस' इस उपपदका कार्य इस प्रतिपदिक के साथ उपपदमतिङ से समास हुआ। इस प्रकार कारकों का कृदन्त के साथ समास वचन भी सिद्ध होता।

समास कर लेंगे।





सुपां धातुना। उत्तरपदं धातुमात्रं यः सुप्तिङन्तम्। कटप्रूः, आयतस्तूः। "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च" इति वार्तिकात्। तिङां तिङा। पिबतखादता, पचतभृज्जतेत्यादि। आख्यातमाख्यातेन क्रियासातत्वे" इति मयूरव्यसकाद्यन्तर्गण सूत्रात्। तिङां सुबन्तेन, पूर्वपदं तिङन्तमुत्तरं सुबन्तम्। जहिस्तम्ब "जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति" इति मयूरव्यसकाद्यन्तर्गणसूत्रात्। अयं षड्विधोऽपि समासः "सह सुपा" इत्यत्र य गविभागेन भाष्ये व्युत्पादितः स्पष्टः शब्दकौस्तुभादौ ॥१॥ (२८)

❀

ग्रन्थ कर्तुराशयस्तु उत्तरपद एव सुबभावो बोध्यः। अन्यथा=पूर्वपदे सुबभाव स्वीकारे चर्मक्रीती इत्यत्र न लोपोन स्यात् पूर्वस्मिन् पदत्वाभावात् पदान्तस्य नलोपविधानात्। एतेन परिभाषा घटकैक नियमः उत्तार पदाभिप्रायकः पूर्व पदार्थक इति सिद्धम्।—

सुपां धातुना = पूर्वपदं सुबन्तमुत्तरपदेन धातुना सह समस्यते यथा— प्रवते (ग्रथते) इति कटप्रूः (कटप्रवग कर्ता) अत्र उत्तारपदं धातुमात्रम्। आयतम् (विस्तीर्णं) स्तौति इति आयतस्तूः (विस्तृत स्तुतिकर्त्ता) अत्राप्युत्तरपदं धातुमात्रम्।

तिङां तिङा यथा "खादत, मोदत" इति व्यवहारो यस्यांक्रियायां सा "खादतमोदता पचत भृज्जत" इति व्यपदेशो यस्या क्रियायां सा पचत भृज्जता क्रिया सातत्ये सति आख्यातमाख्यातेन सह समस्यते।

तिङा सुबन्तेनेनि सह समासः पूर्वं पद तिङन्तमुत्तारपदं सुबन्तमावश्यकं, यथा स्तम्बं स्तम्बं जहि इति जहि स्तम्बः वीप्सितस्तम्बकर्मक त्रोटनाश्रयस्त्वम्। जोडं २ जहि इति जहि जोडः वोप्सित जोड कर्मक त्रोटनाश्रयस्त्वम्। अत्र पूर्वपदं सुबन्तमुत्तारपदं तिङन्तं वर्तते जहि कर्मणा बहुलमाभीक्षण्ये कर्त्तारञ्चाभिदधाति। इति समासः मयूरव्यंस्काद्यन्तं गण सूत्रेण समस्यते।

पूर्वपद सुबन्त हो उत्तर पद धातु के साथ समास होता है। किन्तु तिङन्त नहीं होना चाहिए, जैसे कटप्रूः (चटाई। को बुननेवाला) यहाँ पूर्व पद सुवन्त है उत्तर पद धातु मात्र से समास हुआ। आयतस्तू (लम्बी स्तुति करने वाला) यहाँ आयतपद का स्तु धातु मात्र के साथ समास हुआ। तिङ का तिङ के साथ समास, जैसे खादत मोदता (खाओ खुश रहो) यह व्यवहार निरन्तर जिस क्रिया में हो उसे खादत, मोदता कहते हैं। पचत् भृजता पकाओ भूंजों यहां क्रिया का क्रिया के साथ नैरन्तर्य रहने पर समास हुआ।

प्राचीन परम्पराओं की व्याप्ति - अतिव्याप्ति



स्वयं भाष्यादिसिद्धं तद्भेदं व्युत्पाद्य प्राचीनवैयाकरणोक्त-विभागस्याव्याप्त्यतिव्याप्त्यादिभिस्तल्लक्षणस्य प्रायिकत्वं च दर्शयति—

**समासस्तु चतुर्धेति प्रायोवादस्तथा परः ॥**
**योऽस्य पूर्वपदार्थादिप्राधान्यविषयः स च ॥२॥ (२९)**
**भौतपूर्व्यात्सोऽपि रेखागवयादिवदास्थितः ॥**

**चतुर्धा, अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहिभेदात् । अयं प्रायोवादः । भूतपूर्वः, दृन्भूः, काराभूः, आयतस्तूः, वागर्थाविव इत्याद्यसंग्रहात्**

❀

अयं षडविधोऽपीति—

एते षट् समास भेदाः । सहसुपा सूत्रस्य योगविभागप्रसङ्गे निर्दिष्टाः । व्युत्पत्तिपुरः सरं प्रातिपादिताश्च । तत्र सहग्रहणस्य प्रयोजनमिदं यत् सह भूतानामेव समाससंज्ञा यथा स्यात् । एकैकस्य समास संज्ञा या भूत इदमेव सह ग्रहणस्य फलम् । भेदास्तु शब्दकौस्तुभादौ साधु दृष्टव्याः ॥२८॥

स्वयं भाष्यादिसिद्धाः महाभाष्यादि ग्रन्थेषु स्वतः = षट्प्रकारक समास भेदान्निरूप्यव्युत्पत्तिपुरः सरं प्रतिपाद्य प्राचीनैः = भट्टोजी दीक्षितादिभिः वैयाकरणैः उक्ताः = विभागाः । अव्याप्ति ( लक्ष्ये लक्षणागमनम् ) अतिव्याप्तिः ( अलक्ष्येऽपि लक्षणगमनम् ) दोष ग्रस्तं वर्तते । अतस्तल्लक्षणस्य = पूर्व पदार्थ प्रधानस्य उत्तर पदार्थोभयदार्थान्यपदार्थ प्रधानस्य प्रायिकत्वं = क्वाचित्कत्वम् असैद्धान्तिकत्वं सिद्धयति । यतोहिलक्षणं तदेव भवतियोऽव्याप्त्यतिव्याप्ति दोष मुक्तः स्यात् । व्यावृत्ति र्व्यवहारो वा लक्षणस्य प्रयोजनम् । लक्ष्यतावच्छेदकं समनियतत्वं लक्ष .त्वं व्यापकव्याप्यभावोभयसम्बन्धेन पदानां परस्पर सम्पृक्तिः—भवनम् समनियतत्वम् । तथा सास्नादिमत्वं गोत्वम् सास्नादिमत्वं गोत्वञ्च परस्पर विशिष्टार्थौ स्तः । अथवा असाधारण धर्मवत्वं लक्षणत्वम् = लक्ष्येतरा वृत्तित्वे सति सकललक्ष्ये वृत्तित्वम् ।

समासश्चतुर्धा इति—प्राचीन वैयाकरणानाम्मते समास (चतुष्प्रकारः) चतुर्धा भवन्ति । अव्ययीभावः, तत्पुरुषः बहुव्रीहिः द्वन्द्वश्च । प्रायोवादः = अधिकांशेन, बहुधा, बाहुल्येन, प्रायेण वा एवमेव ( वदनं ) वादः प्रसिद्धि रुपलभ्यते । परन्तु एषु चतुर्षु समास भेदेषु भूतपूर्वः, दृन्भूः कराभूः, आयतस्तूः, वागर्था विव

तिङन्त का सुबन्त के साथ समास जैसे 'जहि स्तम्बः' यहां पूर्वपद तिङन्त है उत्तर पर सुबन्त के साथ 'जहिकर्मणा' इस अन्तर्गण वार्तिक से समास हुआ । क्रिया का सातत्य रहने पर समुदाय से स्वार्थ हुए । उक्त ६ प्रकार के समास सह सुपा सूत्र के योग विभाग से व्युत्पत्ति पुरस्सर प्रतिपादित है । वहां सह ग्रहण का प्रयोजन, सह भूत समास संज्ञा का विधान है । एक एक का समास संज्ञा नहीं, यह फल हुआ । यह भेद शब्द कौस्तभ में वर्णित है ।

इत्यादिसमर्थसामासशब्दानां संग्रहेण जायते। लक्षणानि न घटन्ते अतआह योऽयं पूर्वपदार्थप्रधानविषय इति = स रेखा गवय इति चित्रलिखितगौरिव काल्पनिकश्च न तु वास्तविकः। तदित्थं—पूर्वपदार्थो विशेष्यः, उत्तरपदार्थो विशेषणं तथा सौऽव्ययीभावः यथा—कृष्णस्य समीपमुपकृष्णम्। कृष्णसामीप्यार्थकम् 'उप'' इत्यव्ययं प्रधानम् (वशेषगम्) कृष्णनिरूपितं सामीप्यमिति समासार्थः।

अव्ययीभावेति केवलं संज्ञैव नास्ति किन्तु सार्थकशीर्षकोऽप्यस्ति। न अव्ययमनव्ययम् अनव्ययं व्ययं सम्पद्यत इति अव्ययीभावः। कृष्ण इति पदमव्ययं नास्ति। अपितु ''उपं'' इति अव्ययेन सह समस्तः सन् अव्ययीभावः संजातः।

एव मुत्तरपदार्थप्रधानं यत्र अर्थात् उत्तर पदार्थो विशेष्यः पूर्वं पदार्थो विशेषणं यस्मिन् ( समासे ) स तत्पुरूषः। तस्य = उत्तर पदार्थस्य पुरूषस्य = प्राधान्यं यथा कुलपतिकुलम्। अत्रः कु पतिरप्रधानं ( विशेषणम् ) कु मिति प्रधानं ( वशेष्यः ) इति। कुलपति सम्बन्धी कुलमिति = समासार्थः। अन्य पदार्थः प्रधानं यत्र अर्थात् पूर्वोत्तरोभयपदार्थ = उपसर्जनं ( विशेषणम् ) स्यात् अन्यः कश्चन पदार्थः प्रधान स्यात् एतादृशस्य ज्ञानस्य जनके बहु व्रीहि समास उच्यते। यथा-पीत दुग्धयानय पीतं दुग्धं येन। पीतदुग्धयोर्भिन्नं तयोः सम्बन्धीति अन्यस्यप्राधान्यात् बहु व्रीहि सम सोजातः। पीतः ( गलविलाधः कृतः ) दुग्धादभिन्नः पुरूषः अथवा पान क्रियायाऽभिन्नो दुग्धः तद्वतः पुरूषस्य प्राधान्येनोपस्थितिः समासार्थ।

द्वन्द्व—एकस्यां क्रियायामेकस्मिन् समुदायेवा पूर्वोत्तरे उभय पदे बोधविषयीभूय समानेनान्वितौ भवतः, स द्वन्द्व इत्युच्यते। यथा = संजय राजीवौ स्वधर्मं पालयतः। अत्र एकस्यां धर्मपालनक्रियायां संजयराजीवौ बोध विषयतया अन्वितौ। सम्बद्धौचभवतः।

एतानि समास लक्षणानि अधोलिखितोदाहरणेषु न दृश्यन्ते। पूर्वं भूतः भूतपूर्वः (भूत कालिक सत्ताश्रयइतिसमासार्थः। दृन्भूः, दृढं = नृपं, चक्रं, बज्रं वा भवति। अत्र औणादिक सूत्रेण दृढ़ शब्दस्य दृन्नादेशः। नृप भवनाश्रयः, बज्र भवनाश्रयो वा समासार्थः। काराभूः = कारा = कारागारम्, बन्धनागारं तत्र भवतीति। बन्दी कृतः काराभूः। अथवा कारायां भवतीति काराभूः। बन्धनाश्रय कश्चित्।

इस प्रकार भाष्यादि ग्रन्थों में स्वतः सिद्ध ६ प्रकार समास भेदों को उनकी व्युत्पत्तियों के साथ व्यक्त कर प्राचीन वैयाकरणों से उच्चरित समास विभाग अव्याप्ति ( लक्ष्यमे न जाना ) ( अति व्याप्ति अलक्ष्य में गमन ) दोषों से ग्रस्त होने के कारण प्रायिकत्व असैद्धान्तिकत्व क्वाचित्कत्व सिद्ध करते हैं। क्योंकि लक्षण उसे कहते हैं। जो अव्याप्ति अतिव्याप्ति असंभव दोष से मुक्त हो,।

तथा पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः उभयपदार्थप्रधानो द्वन्द्वः, अन्यपदार्थप्रधानो बहुव्रीहिः, इत्यादिलक्षणमपि प्रायिकम्। उन्मत्तगङ्गम्, सूपप्रति, अर्धपिप्पली, द्वित्राः, शशकुशपलाशमित्यादौ परस्परव्यभिचारात्। तथा हि—उन्मत्तगङ्गमित्यव्ययीभावे पूर्वपदार्थप्राधान्याभावादव्याप्तिः, अन्यपदार्थप्राधान्याद् बहुव्रीहिलक्षणातिव्याप्तिश्च "अन्यपदार्थे च संज्ञायाम्" इति समासात्।

❀

आयतं = दीर्घं स्तौतीति आयतस्तूः विस्तृत स्तुतिकरणाश्रय इति समासार्थः। वागर्थाविवसंवृक्तौ जगतः पितरौ पार्वतीपरमेश्वरौ वन्दे। वाक् च अर्थश्च वागर्थौ तौ इव अभिन्नौ पार्वती परमेश्वरौ। अत्र इवार्थस्य स्वसादृश्येऽन्वयः समासार्थस्तु = वागर्थसदृश इत्यर्थः।

एतेषामुदाहरणानामसंग्रहापत्तेः। तेषां सङ्ग्रहार्थम्—लघुकौमुदीकार इव अव्ययीभावादि संज्ञाविनिर्मुक्तः केवलसमासः प्रथम इति, मन्तव्यं भविष्यति। इयं केवल संज्ञा "सह सुपा" सूत्रस्य सहेत्यंशस्य योग विभागे नाभिव्यज्यते।

पूर्वपदार्थप्राधान्यादि लक्षणानि प्रायेण तथैव भवन्ति। किन्त्वव्याप्त्यति व्याप्तिदोषविमुक्ताः न भवन्ति। यतो हि लक्षणस्य लक्ष्यतावच्छेदकाः, विशेषणी भूतधर्माः पूर्वपदार्थ प्रधानत्वोत्तर पदार्थप्रधानत्वादिः, सर्वत्र समासे न मिलन्ति। यथा—उन्मत्ता = अत्युपप्लुता गंगा यस्मिन् देशे स उन्मत्तगङ्गनाम देशः, अत्राव्ययीभावः। किन्तु पूर्वपदार्थस्यप्राधान्यं नास्ति। अव्ययीभावलक्षणं पूर्वपदार्थ प्राधान्यं न व्याप्नोति। अपितु अन्य पदार्थस्य प्रधानकं बहुव्रीहि लक्षणमाक्रमते। अन्य पदार्थे च संज्ञायामिति समासः समासार्थास्तु—

सूपप्रति = सूपस्य = द्विदलस्य लेश = सम्बन्धः किञ्चिन्मात्रा। अत्र "मात्रा" अर्थप्रतिपादकं "प्रति" इत्यव्ययं शब्दस्य सूपशब्देन सह समस्यते = सम्बद्धार्थको भवति। सूप सम्बन्धी किञ्चिन्मात्रेति समासार्थः। अत्रोत्तरपदार्थप्राधान्यकं तत्पुरुषलक्षणमाक्रम्यते। अव्ययीभावलक्षणस्यालक्ष्यो भवति। पूर्व पदार्थ प्राधान्याभावात्।

तत्पुरुष, बहुव्रीहि, द्वन्द, प्रायो वादः—अधिकांश बहुधा प्रायः ये पर्याय हैं। ऐसी ही प्राचीनों की उपलब्धि है। परन्तु समास के चारों भेदों में भूतपूर्वः, करांभू, वागर्थाविव इत्यादि प्रयोगों का संग्रह नहीं हो पायेगा। क्योंकि पूर्वपद का अर्थ प्रधान हो जिसमें, और उत्तर पदार्थ विशेषण उसे अव्ययी भाव कहते हैं। जैसे कृष्णस्य समीपम् उपकृष्णम् यहां समीप अर्थवाला उप का समीप अर्थ प्रधान है। कृष्ण अर्थ विशेषण है। कृष्ण निरूपित सामीप्य यह समासार्थ हुआ। अव्ययी भावादि संज्ञा ही नहीं किन्तु सार्थक शीर्षक भी हैं, । कृष्ण पद अव्यय नहीं है किन्तु उप इस अव्यय के साथ समास होने से अव्ययी भाव हो गया। ऐसे ही

**सूपप्रतीत्यव्ययीभावे उत्तरपदार्थप्राधान्यात्ततत्पुरुषणातिव्याप्तिरव्ययीभावाव्याप्तिश्च । "सुप्प्रतिना मात्रार्थे" इति समासात् । अर्धपिप्पली इतितत्पुरुषे पूर्वपदार्थप्राधान्यसत्त्वादव्ययीभावातिव्याप्तिस्तत्पुरुषाव्याप्तिश्च "अर्धं नपुंसकम्" इति समासात् ।**

❀

अर्धं पिप्पलीति तत्पुरुषे पिपल्याः अर्धम्, अर्धावयवार्थे "अर्धं नपुंसकमिति" नपुंसके वर्तमानोऽर्ध शब्दः, अव्ययी भावः सन् षष्ठ्यन्तेन सह समस्यते । अर्धं अर्धभिन्नपिप्पल्यवयव इति समासार्थे समासः । अत्र पूर्वपदार्थस्य (अर्धदेहावयवस्य) प्राधान्यादव्ययीभाव लक्षणं चकास्ते । "समुदाये दृष्टाश्शब्दा अवयवेऽपि दृश्यन्ते" । अत्र पिप्पली शब्दोऽवयव परः । तत्पुरुष लक्षणमनाक्राम्यति ।

एवं कायस्यपूर्वमिति लौकिक विग्रहेऽपिकाय शब्दोऽवयवी परः । पूर्व शब्दो देहावयवपरः समासे सति पूर्वकाय इति । पूर्व भागेनाभिन्नश्शरीरावयव इति समासार्थः । अत्रापि पूर्ववददोषो ज्ञेयः ।

द्वित्रा इति बहुव्रीहिसमासेऽपि द्वयोर्वा त्रयोर्वेति विग्रहे "संख्याऽव्ययासन्नादूराधिकसंख्या संख्येये" "संख्या, अव्यय, आसन्न, दूर, अधिक" अर्थे शब्दाः संख्येयेन सुबन्तेन सह समस्यन्ते । ते च बहुव्रीहि संज्ञका उभयपदार्थप्राधान्यक द्वन्द्व लक्षणमतिव्याप्तं भवति । अन्य पदार्थप्राधान्यकं बहुव्रीहि लक्षणं न संघटते ।

शशकुश,पलाशमिति । द्वन्द्वे तेषां समाहार रूप समासार्थेऽन्य पदार्थप्राधान्यकं वहुव्रीहि लक्षणं प्रकाश्यते । उभय पदार्थ प्राधान्यक द्वन्द्व लक्षणं स्पृशत्यपि न ।

नव्यमते त्वितरेतरयोग द्वन्द्वे समाहार द्वन्द्वे च समुदायस्यैवप्राधान्यम् अन्तरस्तु, इयानेव यदितरेतर योगेऽवयवा उद्भूता भवन्ति । समाहारेऽनुद्भूता इति । उभयत्रान्यपदार्थ प्राधान्यं बाध्यम् ।

तत्पुरुष पूर्व पदार्थ विशेषण हो उत्तर पदार्थ विशेष्य हो । बहुव्रीहि पूर्व पदार्थ और उत्तर पदार्थ से भिन्न पदार्थ में विशेष्यता हो । ऐसे अर्थ के बोध का जनक बहुव्रीहि समास होता है जैसे पिताम्बर, शब्द में पीत और अम्बर पद से सम्बन्धित अन्य व्यक्ति का प्रधान रूप से बोध होता है । पीत गुण से अभिन्न वस्त्र वाले हरि की प्रधान रूप से उपस्थिति समासार्थ हुआ (द्वन्द्व) एक क्रिया वाले समुदाय मे पूर्व पद उत्तर पद विषय बनकर साथ में अन्वित हों उसे द्वन्द्व कहते हैं, धवखदिरौछिन्धि में धव और खदिर शब्द एक छिन्धि क्रिया में दोनो की विषयता साथ में सम्बद्ध होने से समास हुआ । परन्तु ये लक्षण भूत पूर्वः आदि मे नही घटते

बहुव्रीह्याप्तिश्च शशकुशपलाशम्' इत्यादिद्वन्द्वे समाहारान्यपदार्थप्राधान्यात्





एवं पूर्वकाय इत्यादौ द्रष्टव्यम् । द्वित्रा इति बहुव्रीहावुभयपदार्थ-प्राधान्याद् द्वन्द्वातिव्याप्तिर्बहुव्रीह्यतिव्याप्तिर्द्वन्द्वाव्याप्तिश्च स्यादिति भावः । सिद्धान्ते तु अव्ययीभावाधिकारपठितत्वमव्ययीभावत्वमित्यादि द्रष्टव्यम् । असम्भवश्चैषामित्याह—भौतपूर्व्यादित्यादि । रेखागवयादि-निष्ठलाङ्गूलादेर्वास्तवपशुत्वलक्षणत्ववदेतेषामपि न समासलक्षणत्वम् । बोधकता तु तद्वदेव स्यादिति भावः ॥ २½ ( २९½ )

❀

वास्तविकं लक्षणं किम् भवितव्यमितिजिज्ञासायामाह—सिद्धान्ते त्विति अव्ययी भावाधिकारे पठितैस्समासविधायकैश्शास्त्रैर्विहितस्समासोऽव्ययी भावः । एवं तत्पुरुषाऽधिकारे पठितैस्समासविधायकशास्त्रैः कृतस्समासस्तत्पुरुषः, एव-मेवान्यत्रापि बोध्यम् । अव्याप्त्यतिव्याप्तिदोषैर्मोक्षो मिलिष्यति ।

असम्भवश्चैषामिति—वैयाकरणानांमेकार्थी भावः । जहत्स्वार्थावृत्ति पक्ष एव मूल सिद्धान्तः । तत्र विशिष्टे शक्तिरङ्गी क्रियते । एषाम्—पूर्वोक्त लक्षणेषु न केवल-मव्याप्त्यतिव्याप्तिरिति, किन्तु असम्भव दोषोऽपि लक्ष्यते । लक्ष्य मात्रे लक्षणागम-नमसम्भव एषामसम्भव दोषोऽपि जहत्स्वार्थावृत्ति पक्षे बोध्यः । तन्निराकर्तुमाह भौत पूर्व्यादिरिति—

भूतपूर्व एव भौत पूर्व्यम्, स्वार्थेष्यञ् पूर्व कालिक भवनाश्रय इति समासार्थः । यद्यप्यत्र पूर्व पदार्थ प्राधान्यादि लक्षणं न संघटते तथापि = अवस्थितः = अव्ययी भावास्याभावेऽपि रेखागवयवादिवदास्थितः = चतुर्षु समासलक्षणेषु पूर्वपदार्थ प्राधान्यादिः, रेखागवय इव परिचायक मात्रं न तु लक्षणमिति । यथा—रेखा = चिन्हेनाङ्कितायामाकृतौ ( चित्रे ) वास्तविक पाणिपादाद्यभावेऽपि, अयं पाणिरिदं मुखमियं नासिकेत्यादौ अवास्तविकेऽपि वास्तविकं व्यवहारवत् भूतपूर्व इत्यादौ पूर्वपदार्थप्राधान्यादि वास्तविकलक्षणमसदपि वास्तविकवृत्त्यभावेऽपि रेखा गवय इव परिचायक मात्रं न तु वास्तविकम् ।

इन उदाहरणो का अमग्रह क ह्रान से पूर्वोक्त लक्षण प्रायिक हैं । क्य कि लक्षा-तावच्छेदक ( विशेषणभूत धर्म ) सर्वत्र नहो मिलते । जैसे उन्मत्त = बाढ़ की प्रवलधारा वाली गंगा जिस देश में हो उसे उन्मत्त गङ्ग कहते हैं । यहाँ पूर्व पदार्थ के प्राधान्य का अभाव अव्ययीभाव लक्षण नहीं घटता, किन्तु अन्य पदार्थ क प्रधान होने से वहुव्री ह लक्षण घट रहा है । तथा 'सूप प्रति' में ( द्विद ग का लेग सम्बन्ध कुछ अंश मात्र । यहाँ मात्र अर्थ को बोधित करने के लिए प्रति' यह अव्यय है । परन्तु उत्तर पदाथ के प्रधान होने से तत्पुरुष लक्षण व्याप्त हो रहा है, अव्ययी भाव लक्षण अव्याप्त है, ऐसे ही अर्ध पिप्पलो इस तत्पुरुष में पिप्पली के अधा अवयव अर्थ कहने वाला अर्धशब्द अर्ध नपुंसकम् से समास होने पर पूर्व पदार्थ प्रधान होने से तत्पुरुष का लक्षण नहीं घटता किन्तु अव्ययी भाव लक्षण घट रहा है, ये हा दोष हैं ।

ननु पूर्वपदार्थप्राधान्यादि समासे सुवचम्। तथा हि—"समर्थः पदविधिः" इति सूत्रे भाष्यकारैरनेकधोक्तेष्वपि पक्षेषु जहत्स्वार्था-जहत्स्वार्थपक्षयोरेवैकार्थीभावव्यपेक्षारूपयोः पर्यवसानं लभ्यते। तत्रा-जहत्स्वार्थपक्ष उक्तव्यवस्था नासम्भविनीत्याशङ्कां मनसिकृत्याऽऽह—

जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा ॥ ३ ॥ (३०)
भेदः संसर्ग उभयं वेति वाच्यव्यवस्थितेः।

जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था। पदे वर्णवद् वृत्तौ पदानामानर्थक्यमित्यर्थः।

न समासलक्षणत्वम्—वास्तविकं समासलक्षणं नास्तीति भावः। यतो हि समासे समुदाये शक्तिर्न त्ववयवे। विशिष्टेशक्ति कल्पनया अवयवानामानर्थक्येन-पूर्वोकमादिपदार्थप्राधान्यं प्रतीति नं सम्भवतिं। यतो न सम्भवति, अतो न वास्तविकं लक्षणम्। बोधस्तु रेखा गवय इव जायतां नाम ॥ २९ ॥

अस्यां स्थितौ प्राचीनैःप्रतिपादितानां प्रधानाप्रधानादिलक्षणानां का गति-र्भविष्यति। तेषां समर्थनेऽब्रवीत्। नन्विति—पूर्वपदार्थप्राधान्यादिलक्षणमपि सुवचम् = सुखेन समर्थयितुं योग्यम्। तेषां समर्थने प्रवलप्रमाणं प्रस्तौति ग्रन्थ-कारस्तथाहीति समासशक्त्योपस्थितार्थस्य व्यवस्थितेः = व्यवस्थादर्शनात् पुनस्त्रिधा भेदो = वाच्य, संसर्ग = सम्बन्धोवाच्यः उभयमपिवाच्यम्।

कायम्ग पूर्वं पूर्वं कायः में भी कायशब्द अव्ययी भाव लक्षणक हो रहा है। उत्तर पदार्थ प्रधान नहीं। पूर्व भाग से अभिन्न शरीरावयव' यह समासार्थ हुआ। द्वित्राः इस बहुव्रीहि में भी सुवन्त के साथ समस्त होने पर बहुव्रीहि माना जाता है। किन्तु दोनों अर्थ के प्रधान होने से द्वन्द्व लक्षण घट रहा है। बहुव्रीहि का लक्षण नहीं। ऐसे ही शशकुश पलाशं में द्वन्द्व का लक्षण नहीं घटता, किन्तु अन्य पदार्थ समाहार का प्राधान्य हाने से बहुव्रीहि लक्षण व्याप्त हो रहा हैं। उभय पदार्थ प्रधान का स्पर्श भी नहीं है। अतआह सिद्धान्तेषु—कि अव्ययी भाव के अधिकार में पठित समास विधायक शास्त्र से विधान किया गया समास अव्ययी भाव कहा जाता है। इसी प्रकार तत्पुरुषा-धिकार में पठित समास विधायक शास्त्र से विधान किया गया समास तत्पुरुष है। इस तरह अव्याप्ति अतिव्याप्ति दोष से मुक्ति मिलेगी। इन लक्षणों का केवल अव्याप्ति अति व्याप्ति के साथ असम्भव दोष भी हैं। जो लक्षण मात्र में नहीं जाता, जैसे भीतपूर्व-कादिः, भूतपूर्व ही भीतपूर्व हैं। पूर्वकाल में भवन (सत्ता) का आश्रय यह वृत्ति का अर्थ है। अव्ययीभाव के अभाव में रेखा गवय की भाँति समझे। जैसे रेखा की खिंची आकृत (चित्र) में वास्तविक हाथ पांव के अभाव में भी हस्तपाद मुख आदि का व्यवहार होता है, ऐसे ही पूर्व पदार्थ प्राधान्य आदि में वास्तविक वृत्ति न होने पर वृत्ति का व्यवहार मानना चाहिए। न समास लक्षणत्वम्—समुदाय में शक्ति कल्पना से अवयव के अनर्थक होने पर भी वास्तविक लक्षण नहीं हो सकता, बोध तो उसी प्रकार होगा।

**अयं भावः—समासशक्त्यैव राजविशिष्टपूरुषभानसम्भवे न राजपुरुषपदयोरपि पुनस्तद्बोधकत्वं कल्प्यम्, वृषभयावकादिपदेषु वृषादिपदानामिव । अन्यथा राजपदेन विग्रहवाक्ये इव राज्ञः स्वातन्त्र्येणोपस्थितिसत्वाद् ऋद्धस्य राज्ञः पुरुष इत्यत्रेव ऋद्धस्य राजपुरुष इत्यस्याप्यापत्तेरिति ।**

꙳

ऐसी स्थिति में पूर्व पदार्थ प्रधान इत्यादि लक्षण जो प्राचीनों से प्रतिपादित हैं उनकी क्या गति होगी। उनके समर्थन में बोले न ननु इति·········पूर्व पदार्थ प्रधानं इत्यादि लक्षण में सुवच=अच्छी तरह समर्थन का विषय हैं। समर्थन में प्रबल प्रमाण प्रस्तुत करते हैं तथाहि·······समर्थः पदविधि सूत्र के भाष्य में भाष्यकार ने अनेक प्रकार के पक्षों का विरूपण किया है। उन पक्षों का जहत्स्वार्था अजहत्स्वार्था वृत्ति में पर्यवसान् किया है। जहत्स्वार्था का एकार्थी भाव रूप में अजहत्स्वार्था का व्यपेक्षावाद के रूप में सिद्धान्ततः समास किया है जहत·· ·····पदत्याग दिये हैं अपना अर्थ जिस वृत्ति में उसे जहत्स्वार्था कहते हैं। पदों के पृथक-पृथक अर्थों का एक अर्थ में उपस्थिति हो जिस वृत्ति मे उसे एकार्थी भाव कहते हैं। नहीं त्यागते हैं पद अपने अर्थ को जिस वृत्ति में उसे अजहत् स्वार्थं कहते हैं। यही विविध अपेक्षा वाली व्यपेक्षा वृत्ति है। इस पक्ष में अवयव स्वार्थ के उपस्थापक होते हैं। स्वार्थ में परिपूर्ण पद परस्पर की आकांक्षा के कारण अन्वित हो यही व्यपेक्षा है। इस पक्ष में वाक्य रह जायेगा क्यों कि लौकिक विग्रह वाक्य ही व्यपेक्षा है। अजहत् स्वार्थ पक्ष में पूर्वोक्त पूर्व पदार्थ प्रधान इत्यादि प्राचीनों के लक्षण असम्भव नहीं हैं। इस आशंका को ध्यान में रखकर खण्डन की दृष्टिकोण से कारिका बोले जहत् इति। शास्त्र में जहत्स्वार्था अजहत्स्वार्था दो वृत्तियाँ ( शक्तियाँ ) वाच्य होती हैं। वे दोनों वृत्तियाँ विविध व्यवस्था के अनुसार तीन प्रकार की हो जाती हैं। भेद संसर्ग और उभय। कोई समास भेद वृत्ति वाचिका होती है, कोई वृत्ति संसर्ग वाचिका, कोई भेद संसर्ग उभय वाचिका होती हैं। उक्त कारिका की व्याख्या भूषणकार इस प्रकार करते हैं। पद समास में अपने अर्थ को त्याग दे, और अन्यार्थ का प्रतिपादन करें, उसे जहत्स्वार्था कहते हैं। समास में पद अपने अर्थ की पृथक सत्ता बनाए रखें उसे अजत्स्वार्थावृत्ति कहते हैं। जैसे पद में वर्ण अनर्थक हैं, वृत्ति में पद भी अनर्थक है, तात्पर्य यह है कि राजपुरुषः इस समास में समास शक्ति से भी राजविशिष्ट पुरुष का बोध सम्भव है, तो राजपुरुष पद में पुनः स्वार्थ बोधकता की कल्पना अनावश्यक है। जैसे वृषभ यावक आदि पदों में वृष और याव अनर्थक है ऐसे ही राज पुरुष में राजपद भी अनर्थक है।

भूषणकारानुसारिणीव्याख्यात्विथम्—जहति = स्वानि = आत्मीयानि पदानि यमर्थं स जहत्स्वोऽर्थः। सोऽस्ति यस्यां वृत्तौ सा जहत्स्वार्था। यथा पदेषु वर्णा अनर्थकाः भवन्ति। अत एव धनम् वनमित्यादौ प्रतिवर्णं नं प्रातिपदिक संज्ञा अर्थवत्वाभावात्। एवं वृतौ-संसृष्टार्थत्वोपस्थापकेसमासे पदान्यनर्थकानि भवन्ति। यद्येव न स्यातर्हि पदानामर्थवत्वमिव वर्णाः अप्यर्थवन्तः स्युः। प्रातिपदिकसंज्ञामूलकानि कार्याणिच स्युः। यद्यपि अस्मिन्नेकार्थीभावपक्षे महाबाहु, सुपन्थाः इत्यादौ पदानामर्थशून्यत्वात् 'आत्वं न लोपश्च' न स्यात्। तथापि समासात् प्राग्भाविनमर्थमादाय तत्कार्यंकर्तव्यमिति प्रत्ययोत्तरपदयोश्चेश्चति भाष्ये उक्तम्।

ननु लौकिक विग्रह वाक्ये दृष्टानामर्थी सहितानामर्थबोधजकानां राजादिपदानां समासेऽपि आक्षिप्य अर्थवत्ताक्वतुंशक्यते। एवं च अवयवनामानर्थक्य कथनम ंग तमत आह आयं भाव इनि 'राजपुरुष' इति समासे समास शक्त्यैव = जहत्स्वार्थया वृत्यैव (अत्र एवकारो व्यपेक्षावादस्य व्यावर्तक) राजसम्बन्ध विशिष्टैकार्थीभावस्य भान (बोध) सम्भवे पुनः राजपुरुषपदेसमासे लौकिक विग्रहवाक्यार्थमारोपयितुं न शक्यते तत्र स्वार्थबोधजनकत्वस्य कल्पनायाः आवश्यकतैव नास्ति। अत्र दृष्टान्तः यथा वृषभ पदे बृषशब्दो यावक पदे याव शब्दोऽनर्थकः एवमेव समासे राजपदमनर्थक बोध्यम् आरोपस्य प्रयोजनं नास्ति प्रयोजमनुदिश्य मन्दो ऽपि न प्रवर्तते एतेन सिद्धो जहत्स्वार्था पक्षः परन्तु पूर्वपदस्यैव स्वार्थत्यागो बोध्यः। यतो हि एवं हि दृश्यते लोके परकर्मणि प्रवर्तमान समर्थः पद्वविधिरिति सूत्रे भाष्ये बहुविधा पक्षा उक्तास्तेषु जहास्वार्थीऽजहत्स्वार्थे द्वे वृत्ती उक्ते तयोर्मध्ये सर्वेपक्षाः पर्यवसन्नाः। प्रच्छन्नाः इत्यर्थः। जहात्स्वाऽर्थेः जहित पदानि स्वार्थं यस्यां वृत्तौ सा जहत्स्वार्थावृत्तिः पदानां पदार्थोर्वा सम्बद्धार्थस्य उपस्थापिका शक्ति बृत्तिः। अस्यां पदानि स्वार्थं परीत्यज्य एकार्थीभावरूपमतिरिक्तमर्थमभिदधति। इदमेव पृथगर्थकानां पदानां मिलित्वैकार्थोपस्थापकत्वमेकार्थीभावत्वमुच्यते। किं पुनःसमर्थोनाम। पृथगर्थकानां पदानामेकार्थी भावः।

पृथगर्थकानि पदानि 'राज्ञः पुरुषः' इत्यादौ वाक्यें सन्ति लौलिक विग्रह एव समासे पुनरेकार्थ कानि इति समर्थसूत्र भाष्यम्। एवं पृथगवस्थितानां पदार्थाना मेकोपस्थितिनियामिका शक्तिः जहत्स्वार्था। अजहत्स्वार्था तु न जहति पदानि स्वार्थयस्यांबृत्तौ सा बोध्याप रार्थाभिधानं कुर्वन्तोऽपि पदार्थाः आत्मीयान् अर्थान् आत्मनि तिष्ठन्ति परस्परमन्वयमपेक्ष्यन्तोऽवयवाः स्वार्थस्योपस्थापकाः भवन्ति। अतः स्वार्थपर्यवसायिनापदानामाकाङ्क्षावशात अन्योन्यस्य सम्बन्धो व्यपेक्षेत्यु-

च्चते। अस्मिन पक्षे लौकिकविग्रहवाक्यमेव तिष्ठति। तत्र भाष्येऽजहत्स्वार्था बृत्तिरिति पक्षे उक्ता पूर्वं पदार्थोत्तरपदार्थप्रधानादिः समासलक्षणव्यवस्था न सम्भवतीति वक्तुं न शक्यते।

समासेऽर्थानां पृथगुपस्थिति सत्वात्। पदार्थानां प्रधानाप्रधानत्व सम्भवात्।

इत्याशंकां—प्राचीनोक्त लक्षण समार्थिकां युक्तिं अजहत्स्वार्थारूपं ) त्त्रित्ते संस्थाप्य व्यपेक्षावादस्यखण्डन दृष्ट्या कारिकाभवतारयति ग्रन्थकारः जहत्स्वार्थेति ससासे द्वे वृत्ती अर्थोपस्थापिका शक्तीस्तः ते=जहत्स्वार्थाऽजहत्स्वार्थे त्रिधा=त्रि प्रकारके आस्ताम् अर्थात् द्वे वृत्ती त्रिधे भवतः। भेद संसर्गः उभयञ्च काचिद् भेद वाचिका काचित् संसर्ग वाचिका काचिद भेदसंसर्गोभयवाचिका। बाच्यस्य= पुरुषः स्वयं=स्वकीयं ( स्वार्थ ) कर्म-कार्यं त्यजति यथा तक्षा ( बढ़ई) राज-कार्ये प्रवर्तमान आत्मीयं कार्यम् अर्थ जहाति न तु, परस्य एवं राजशब्दोऽपि पुरुषस्यार्थे सम्बन्धे तथा प्रवर्तमान स्वकीयमर्थ परित्यजति। एवंमुपगुशब्दोऽ-पत्येऽर्थे प्रवृत्त सन् आत्मानमर्थ सम्बन्धकत्वं जहाति। राजशब्दस्यानर्थ क्येऽपि विशेषणत्वव्यवहारस्तु, चम्पकपुष्पवासित तिलतैलबद्वोध्यः।

अन्यथेति पूवपदस्य आनर्थक्यमस्वीकारेऽर्थोपस्थापकत्वे च यथा लौकिक विग्रहवाक्ये राज्ञः पुरुश्र इत्यादौ राजपदार्थस्य स्वतन्त्ररूपेणोपस्थिति सत्वात ऋद्धस्येति विशेषणं दीयते। ऋद्धस्यराज्ञः पुरुष इति भवति। एवं राजपुरुषः इति समासेऽपि ऋद्धस्येति विशेषणंस्यात्' यन्नरोचते कस्मै। इयमव्याप्ति वारणाय पूर्वं पदमनर्थकं मन्तव्यं विशिष्टवादि-मतेतु राजपदार्थस्यपृथगुपस्थितिरेव न। तत्र विशेषणं दीयते चेत्। पदार्थः पदार्थेनान्वेति नतु पदार्थेकदेशे इति न्यायः प्रकल्पते राजपदस्य पदार्थैकदेशत्वात् तत्र किञ्चिद विशेषणं वक्तुं न शक्यते। इति जहत्स्वार्था वृत्तिः।

अन्यथा = यदि राजपद से लौकिक विग्रह वाक्य 'राज्ञः पुरुषः' में ऋद्ध पदार्थ का अन्वय करने से ऋद्धस्यराज्ञः पुरुषः होता है वैसे ही समास में भी ऋद्धस्यराज पुरुषः ऐसा प्रयोग होने लगेगा। क्योंकि लौकिक विग्रह वाक्य में जैसें राजपद स्वतन्त्र रूप से अर्थ को उपस्थिति करेगा। विशेषण लगने की आपत्ति आयेगी, यदि विशिष्ट शक्ति से उपलब्ध राज सम्बन्धी पुरुष इस अर्थ के एक देशभूत राज पदार्थ में अन्वय की विवक्षा करेगे तो पदार्थ का पदार्थ के साथ सम्बन्ध होता है, पदार्थ के एक देश में नहीं। इस व्युत्पत्ति का विरोध होने लगेगा। जहत्स्वार्था वृत्ति ही विशिष्ट शक्ति वाद है।

**अजहदिति । न जहति पदानि स्वार्थं यस्यां साऽजहत्स्वार्था । अयमभिप्रायः—राजपुरुषादिसमासादौ नातिरिक्ता शक्तिः, कल्पकाभावात्, क्लृप्तराजादिपदादेवार्थोपस्थितिसम्भवे तत्कल्पनस्य गौरवपराहतत्वाच्च । क्लृप्तशक्तित्यागोऽप्यप्रामाणिकः कल्प्यते । तथा चाऽऽकाङ्क्षादिवशात्क्लृप्तशक्त्यैव विशिष्टार्थबोधः । अयमेव व्यपेक्षापक्षो मतान्तरत्वेन भाष्यकारैरुक्तः ।**

❀

अथाजहत्स्वार्थावृत्तिरिति पक्षः समर्थ्यते। पदानि आत्मीयमर्थं न जहति यस्यां सा सत्यपि समासेऽर्थ बोधजनकता तयोः तेषु वा तिष्ठत्येव, लौकिक विग्रह वाक्य इव। स्वार्थं धारयन्तः शब्दाः आकाङ्क्षा योग्यता सन्निधि, तात्पर्यवशात् परस्परमन्वियन्ति स्वस्वामिभावादि सम्बन्धमाविर्भावयन्ति च अत एवं इयं विविधार्थापेक्षया व्यापेक्षेत्युच्यते अवयवशक्तिवाचिका इति। भोः व्यपेक्षावदिन्। ( राजपुरुषः ) इत्यत्र समुदाय शक्त्यैव राजविशिष्टपुरुष इत्यर्थं बोधः सम्भवे किमर्थमवयशक्तिःकल्प्यते। अतिरिक्ता शक्तिः कल्प्यतम्। अत आह अयमभिप्राय इति।

भो विशिष्ट शक्तिवादिन् राजपुरुष इत्यादि समासादावतिरिक्ता शक्ति। एकार्थोपस्थिपिका शक्ति नास्तीति वक्तु शक्यते। एकार्थीभाव कल्पनायाम् किमपि प्रमाणं कल्पकं = ज्ञापकम्बा नास्ति। एकार्थी भावस्य अभावेऽपि न कश्च न दोषः न च विशिष्टार्थशत्त्यभाव एव ज्ञपिका प्रमाणं वा भाविष्यतीति वक्तुं न शक्यते। लौकिक वाक्ये कल्पित राजादिपदशक्तिः, सा समासे न हीयते। यत् क्लृप्ता, शक्तिर्यस्य राजादि पदस्य ततक्लृप्तशक्तिकम्। तच्च = राजादिपदं तस्मादिति

अब अजहत्स्वार्था वृत्ति की व्याख्या करते हैं जिसे व्यपेक्षावाद कहते हैं नहीं त्यागें पद अपने अर्थ को जिस वृत्ति में उसे अजहत्स्वार्था वृत्ति कहते हैं, भाव यह है कि राज पुरुष आदि समास में अतिरिक्त शक्ति नहीं माननी चाहिए, क्योंकि समास में विशिष्ट शक्ति या एकार्थी भाव की कल्पना में कोई प्रमाण नहीं है, जो अर्थ राज आदि पदों में कल्पित है वह उसी से उपस्थिति सम्भव हो रही है तो तत्कल्पनस्य = विशिष्ट में शक्ति की कल्पना करना गौरव दोष से ग्रस्त भी है। तथा विशिष्ट शक्ति की कल्पना करने पर पूर्व पद तथा उत्तर पदों में कल्पित शक्ति का परित्याग भी अप्रमाणिक है। कल्पना मात्र प्रतीत है। तथा च आकांक्षा, योग्यता, आशक्ति तात्पर्य का अवयव शक्ति में कल्पित शक्ति से ही विशिष्ट अर्थ का बोध हो जायेगा। अर्थात् राज पद से राज पदार्थ की और पुरुष पद से पुरुष पदार्थ की उपस्थिति के साथ प्रतीयमान स्वस्वामिभाव सम्बन्ध शाब्द बोध भी संसर्ग मर्यादा से भासित हो जायेगा व्यपेक्षा वाद को भाष्यकार ने मतान्तर के रूप में कहा।

न चात्र मते समासे ऋद्धस्येतिविशेषणान्वयापत्तिः। "सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणयोगो न" इति वार्तिकात्। तथा चैतन्मतवादिनां पूर्वोत्तरपदार्थसत्त्वात्पूर्वपदार्थप्रधान इत्यादि-व्यवस्था सूपपादेति भावः।

❀

व्युत्पत्तिः। समासात् प्राक्काले कल्पिता प्रत्येकपद शक्तिः, तस्याः उपस्थिति सम्भवे तत्कल्पनस्य = समुदायशक्तिकल्पनस्य गौरवदोषग्रस्त्वात्। क्लृप्तपरित्यागः = विशिष्टे शक्ति कल्पना चेत् पूर्वोत्तरपदयोः कल्पितशक्तित्यागोऽपि अप्रामाणिकः स्यात्। लघवात् अवयवशक्तिः स्वोकार्यैव। विशिष्टशक्त्यभावे शाब्दबोध विषयतातु आकांक्षा योग्यता-सान्निधितात्पर्यधशाद्भविष्यति। अवयवे कल्पित शक्त्यैव विशिष्टार्थबोधो भविष्यति। राजपदेन राजपदार्थस्य पुरुषपदेन पुरुष पदार्थस्य उपस्थितिः ( ज्ञानं ) भविष्यति। तथा पदयोः परस्पर प्रतीयमानः स्वस्वामिभावादि सम्बन्धः ( शाब्दबोधे चैकपदर्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भासते )। इति नैयायिकरीत्या विशिष्टा (सम्बद्धार्थ) बोधोऽपि भविष्यति। अथमेव व्यपेक्षापक्षः।

नच व्यपेक्षापक्षसाधिका युक्तिर्नास्तीत्यत आह—अयमेवेति व्यपेक्षा ( अवयवशक्तिबोधिका ) भाष्ये "व्यपेक्षायां सामर्थ्यमित्येके" इति वचनेन समर्थिता। न्यायमतेन स्वीकृताच। अस्याः फलन्तु प्राचीनोक्तसमासलक्षणसंगतिः। समुदायेशक्ति, अन्यपदार्थें शक्तिरित्यादि एव पक्षः 'अनेकमन्यपदार्थें, चार्थे द्वन्द्व इत्यादि बलाल्लभ्यते।

इदानिं भूषणकारः व्यपेक्षावादे आपतितान् दोषान् उद्भावयति न चेति अत्र = अस्मिन्नवयवशक्ति कल्पनापक्षे कृतसमासे राजपुरुष इत्यादौ राज इत्यंशस्य स्वतन्त्ररुपेणोपास्थापानार्थकसूत्रसत्वात्। तत्र ऋद्धस्येति विशेषणंस्यान्वयो भवितुमर्हति, यन्नरोचते कस्मै। इत्याशंङ्का कथं परिहरणीया। अतः आपतितामापत्तिं बारणायाह ग्रन्थकारः सविशेषणानामित्याह विशेषणसहितानां वृत्तिः = समासे न भवति वृत्तस्य = संजातसमासस्य विशेषणेन योगः = सम्बन्धो न जायते। अस्य न्यायस्यबलमादाय ऋद्धस्य राज्ञः पुरुष इत्यादौ समासो न

भूषणकार इस व्यपेक्षा पक्ष में समास होने पर ऋद्धस्प इस विशेषण के अन्वय की आपत्ति आशंकित करते हैं, जिसके वारण के लिए नैयायिक लोग कहते हैं। कि जो विशेषण सहित हैं उनकी वृत्ति ( समास ) नहीं होती है, और वृत्तस्प = जहाँ समास हो गया है वहाँ विशेषण से सम्बन्ध नहीं होता। व्यपेक्षा वादी के मत में पूर्व पदार्थ तथा उत्तर पदार्थ के पदार्थ की स्थिति में पूर्व पदार्थ की व्यवस्था ठीक बन सकती है। अब प्रसङ्ग बस समास वृत्ति के भेदों का सामान्य निरूपण करने के बाद विशेष का स्मरण पूर्वोक्त कारिका के उत्तरार्थ का विवरण ग्रन्थकार

**प्रसङ्गाद् वृत्तिभेदमपि निरूपयति—ते पुनरिति । द्वे अपि वृत्ती त्रिविधे वाच्यत्रैविध्यात् । वाच्यमेवाऽऽह—भेद इत्यादि भेदोऽन्योऽन्याभावः । तथा च राजपुरुष इत्यादाव राजकीयभिन्न इति बोधः । अस्यावाच्यत्वे च राजपुरुषः सुन्दर इतिवद्राजपुरुषो देवदत्तस्य चेत्यपि स्यात् । वाच्यत्वे तद्विरोधान्नैवं प्रयोग इति भावः ।**

❀

भविष्यति । सविशेषणस्य सत्वात् । एतेन विशेषणसहितस्य समासानर्हत्वं साधितया एवं पूर्वं समासं कृत्वा राजपुरुष इति दशायां ऋद्धस्येति विशेषणं दीयते तदा "वृत्तस्य विशेषणयोगो न" इति निषेधबलात् ऋद्धस्य राजपुरुष इति प्रयोगोऽपि न भविष्यति । अस्मिन् पक्षे समासे पूर्वोत्तर पदयोः स्वार्थस्य विद्यमानत्वात् पूर्वपदार्थ उत्तर पदार्थः, अन्यपदार्थः, उभयपदार्थप्रधानादिव्यवस्था = ( लक्षणानि ) सूपपादाः = अव्याप्त्यतिव्याप्तदोष, परिहारेण लक्षणानां यथोचितः समन्वयोबोध्यः ।

प्रसंगादिति—प्रकरणे सामान्यसमासस्य परिचयः प्रस्तुतः । इदानीं वृत्ति विशेष परिचयस्य स्मरणात् स्मृतस्योपेक्षाया अयोग्यत्वात् प्रसंग संगतिः करणीयेव ( अतः पूर्वोक्तकारिकायामुत्तरार्धभागस्य व्याख्यानं क्रियते । तेनामिप्रायेण आह कौण्डभट्टः, भेद संसर्ग इति–ग्रन्थस्य हृदयस्वित्थम् । जहत्स्वार्थाऽजहत्स्वार्थे, इति द्वेप्रकारिके वृत्ती स्तः । तस्याः वाच्यस्तु व्यवस्थाभेदेन त्रिविधः । यथा १–भेदः, संसर्गः, उभयञ्च । एतेषां समासस्य वाच्यार्थत्वे तु समर्थसूत्रं भाष्यं प्रमाणंम् 'सामर्थ्यन्नाम भेदः संसर्गो वा भेद संसगौ वा सामर्थ्यमिति । व्यापेक्षा समासस्य भेदपक्षस्वीकारेणोच्यते यत् भेदः = अन्योन्याभावः । अस्य स्वरूपं व्यक्तिद्वयसापेक्ष्यमस्ति । अतो राज सम्बन्धी पुरुष इत्यादौ 'अराजकीय पुरुषाद्भिन्न इत्यर्थोऽवश्यं वाच्यः । तेन राजपुरुषमानय इत्यत्र राजभिन्नेभ्यः स्वामिभ्यः

प्रस्तुत करते हैं कि वाच्य व्यवस्था के अनुकुल दोनों वृत्तियाँ तीन २ भेद वाली होती हैं जो वाच्य के रूप में स्मृत हैं । व्यपेक्षा वृत्ति के भेद पक्ष में भेद का अन्योन्या भाव अर्थ है जो व्यक्तिद्वय सापेक्ष है । अतः राजपुरुष समास में अराजकीय भिन्न पुरुष का ज्ञान अनिवार्य है, यही व्यवस्था हुई, अस्यावाच्यत्वे=यदि भेद वृत्ति को वाच्यार्थ न माने तो 'राज्ञः तुरुषः सुन्दरः की तरह राज्ञः पुरुषोदेव दत्तस्य' यह भी प्रयोग होने लगेगा । जब भेद वृत्ति को वाच्यार्थ मानते हैं तो अराजकीय भिन्न यह अर्थ प्रतीत होने पर राजकीय पुरुष में अराजकीय पुरुष का विरोध होने से वैसा प्रयोग नहीं होता ।

**राजसम्बन्धवानित्येव शाब्दभानं, भेदस्तूत्तरकालमुपतिष्ठत इत्याशयेनाऽऽह—संसर्ग इति।**

**विनिगमनाविरहमस्वामिकेऽपि राजपुरुष इत्यादिप्रयोगापत्तिं च मनसि कृत्वोभयं वाच्यमित्याह—उभयं वेति। तथा चाराजकीयभिन्नराजसम्बन्धवांश्चायमिति बोधः ॥३०॥**

❀

पुरुषं निबर्तयति। पुरुषोऽन्येभ्य सेबकेभ्यः राजानं निवर्तयनि। एतदर्थमराजकीय भिन्नः पुरुष इति बोधो व्यवस्थितः। यदि भेदो वृत्तिवाच्यं न स्यात्तर्हि राजपुरुष इत्यत्र यथा 'सुन्दरः' इति विशेषणं दीयते। एवं देवदत्तस्य राजपुरुषः इत्यपिस्यात्। तत्र राजौकीय पुरुष इति बोधेन अन्यः कश्चन् स्वामी (देवदत्त) इति निवर्तते भेदार्थ स्वीकारे राजकीय पुरुषेऽ राजकीय पुरुषस्य बिरोधात् नोक्तं वाक्यं सम्भवति। देवदत्तो न सम्बद्धयते।

न च सम्बन्धज्ञानं विना भेदज्ञानं न सम्भवति। अत आह राजसम्बन्धवानिति प्रथमं शाब्दीयं ज्ञानं राजपुरुष शब्देन राजसम्बन्धवात् पुरुषः इत्येव शाब्दबोधो जायते। तदनन्तरं भेद उपस्थितो भवति। यतः भेदो द्विष्ठोधर्मः। सः संसर्गं = (सम्बन्धं) बिना न सम्भवति। संसर्गमूलको भेद इत्यर्थः। तथा राजपुरुषोऽन्यपुरुषभिन्नः, राज्ञा सह सम्बन्ध सत्वात्। एतेन भेदस्य प्रतीतिरनुमानाद्भवतीति सिद्धम्। भेदोऽनुमानगम्यो न शब्द जन्यविषयः। भाष्येऽपि यदि भेदसंसर्गौ न स्याताम्। तदा सामर्थ्यमेव न स्यात्। भेदसंसर्गौं सामर्थ्यस्यात्मानौ स्तः।

संसर्ग वाद में राज सम्बन्धवान पुरुष यह शाब्दबोधीय ज्ञान शब्द से ही होता है। भेद वृत्ति तो बाद में उपस्थित होती है क्योंकि संसर्ग (सम्बन्ध) भेद द्विष्ठ होता ही है। राज पुरुष अन्य पुरुष से भिन्न सिद्ध है। इसका ज्ञान राज पद के सम्बन्ध से होता है। इस प्रकार भेद की प्रतीति अनुमान से हुई, भेद अनुमान जन्य है, न कि शब्द जन्य ज्ञान का विषय। यदि भेद वृत्ति अनुमेय है और संसर्ग वाच्य है तो संसर्गानुमेय हो, भेद वाच्य हो ऐसा क्यों नहीं। अन्तर में प्रमाण क्या है। अतः कहा उभयं = भेद संसर्ग ये दोनो वृत्ति के वाच्य हैं, क्योंकि संसर्ग के अवाच्य होने पर अस्वामिक पुरुष में भी राजभिन्न सम्बन्ध न होने के कारण राजभिन्न पुरुष का भी बोध होने लगेगा। इस बात को ध्यान में रखकर कहा की उभयं, भेद और संसर्ग दोनो वृत्ति के वाच्य हैं अराजकीय भिन्न और सम्बन्धवान् ये दोनो वाच्य सिद्ध हुए।

**व्यपेक्षावादस्यैव युक्तिभाष्यविरुद्धत्वात्तन्मूलकः पूर्वपदार्थप्रधान इत्याद्युत्सर्गोऽप्ययुक्तः। किं तु रेखागवयेनोत्सर्गोऽपि परम्परयैव बोधक इत्यनेन समाधत्ते—**

❀

शंका—संसर्गः (सम्बन्ध) एव वाच्यः। भेदस्तु अनुमानाल्लभ्यते इति विपरीतं (संसगस्य अभेदत्वं भेदस्य वाच्यत्वं) कथन्न जायते। एकतरपक्षपातिनी युक्तिर्नास्ति। एवञ्च समासे सम्बन्धोऽवाच्यश्चेत्। यस्य स्वामी नास्ति ईदृशोऽअस्वामिकपुरुषोऽपि अराजकीयभिन्नार्थस्तिष्ठति। सः राजभिन्नस्य असम्बन्धी अस्त्येव तथापि राजपुरुष इति प्रयोगः सम्भवति। अत आह उभयमिति भेदसंसर्गौ समासवृत्ति वाच्यौ स्तः। अराजकीय भिन्नो यो पुरुषः सः राजसम्बन्ध वानिति शाब्दबोधः। तदुक्तं भाष्ये कःपुनर्भेदः, संसर्गो वा इह 'राज्ञः' इत्युक्ते सर्वं स्वं (आत्मीयं) प्रसक्तम् = बोधविषयतामापन्नम्। पुरुष इत्युक्ते सर्वस्वामी प्रसक्तः। इह इदानी राजपुरुषमानय इत्युक्ते राजापुरुषं निवर्तयति। अन्येभ्यः स्वामिभ्यः पुरुषो राजानं निवेर्तयति। उभयोर्भेद संसर्गयो र्वाच्यत्वे अराजकीय पुरुषभिन्नः राजसम्बन्धी पुरुष आनीयते ॥३०॥

नैयायिकमते राजपुरुष इति समासस्थले राजपदेन राजत्वावच्छिन्नस्य पुरुषपदेन पुरुषत्वावच्छिन्नस्योपस्थितिर्भवति। पश्चात् परस्परस्मिन्नकांक्षा, योग्यता, तात्पर्यवशात् राजविशेषणकः पुरुषविशेष्यकसम्बन्धाव गाहिज्ञानं भविष्यति। ततो विशिष्टे शक्तिर्नमन्तब्येति निष्कर्षः अस्य व्यपेक्षावादस्य खण्डनदृष्टया मूले युक्तिभाष्यविरुद्धत्वात्—अयं व्यपेक्षापक्षो मतान्तरेण स्वीकृतो नतुसिद्धान्तरूपेण। सिद्धान्ते तु एकार्थीभावः सामर्थ्यम् परिभाषाच, इत्येवं सूत्रमभिन्नतरकं भवतीति भाष्ये एष पक्षः समीचीनमिति बोधितंतरब्निर्देशः कृत इति विरोधः। तथा च सविशेषणा नां वृत्तिर्नेत्यादि वचनकल्पनं कृतसमासे

नैयायिक मत में समास में व्यपेक्षावादपक्ष की युक्ति भाष्य के विरुद्धत्व से व्यपेक्षा वाद मूलक पूर्व पदार्थ प्रधान इत्यादि लक्षण जो स्वाभाविक मानकर कहे गये हैं। वे युक्ति युक्त नहीं हैं। क्योंकि व्यपेक्षा वाद ही स्थिर नहीं तो उक्त लक्षण कैसे घट सकते हैं। विशिष्ट में शक्ति मानने पर अवयव अनर्थक हैं, प्रातिपदिक, संज्ञा भी नहीं होगी, इस भाष्य विरोध से ग्रन्थकार ने प्राचोनो के लक्षण का महत्व रेखा गवय न्याय से देते हैं। जैसे चित्रस्थ गौके वास्तविकन होने पर भी वह चित्र गो का स्मारक है ऐसे ही पूर्व पदार्थ प्रधान इत्यादि उत्सर्ग होने पर भी वास्तविक के स्मारक हैं, इन युक्तियों से व्यपेक्षा वादी नैयायिक की शंका के उत्तर में ग्रन्थकार कहते हैं।

**समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ॥४॥ (३१)**
**बहूनां वृत्तिधर्माणां वचनैरेव साधने ॥**
**स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ॥५॥ (३२)**

❀

राजपुरुष इत्यादौ ऋद्धस्येति सम्भाव्यमानं विशेषणव्यावृत्तये कृतम्। यतो गौरवम्, अतो विरोधः। अनया युक्त्या तथा च भाष्ये कृत्तद्धित सूत्रघटक समासग्रहणस्य नियमार्थत्वमुक्तम्। तस्य नियमार्थता विशिष्टे शक्तिस्वीकारे एवसम्भवति। अत एव कृते समासे समासपदेऽर्थवत्ता सिद्धयति। तन्मूलिका- प्रातिपदिक संज्ञा च सम्पद्यते। ततः समासग्रहणं व्यर्थीभूय ज्ञापयति यत् अर्थवत्समुदायरूप प्रतिपदिक संज्ञा चेत्समासे सत्येव। अतएव वाक्यस्य न प्रतिपादिक संज्ञा। न विभक्ति लोपापत्तिरिति। उपर्युक्तभाष्यप्रमाणेन व्यपेक्षावादोध्वस्तोऽ- युक्तश्च। तन्मूलकः = व्यपेक्षावादो मूलं (आश्रयः) यस्यासौ पूर्वपदार्थप्रधानः, उत्तरपदार्थप्रधान इत्यादि, उत्सर्गः=व्यवस्था प्राचीनोक्तं लक्षणं नियमो वा अयुक्तः = युक्तिविरुद्धः। प्रमाणशून्यश्च। तथापि रेखागवयन्यायेन = यथाचित्र- स्थेगविसास्ना (गलकम्बलः) लाङ्गूल (पुच्छः) शृङ्ग इत्यादि बस्तविक- रूपेण असन्तोऽपि गोः स्मारकं (परिचायकमात्रं) बोध्यम् न तु लक्षणमिति। एवमेव पूर्वपदार्थ प्रधानमित्यादिसमासलक्षणान्यपि। उत्सर्ग=प्रासङ्गिकम्। व्यवस्थापि परम्परया = लौकिक विग्रहे योऽर्थः तस्य स्मारको बोधकइत्यर्थः। न तु समास लक्षणम्। पूर्वोक्त रीत्या नैयायिक सम्मतस्य व्यपेक्षावादस्य खाण्डनं कर्तुमाह ग्रन्थकारः पङ्कज इति—

कारिकांशस्येदं तात्पर्यं यत् राजपुरुष इत्यादौ राजविशिष्टपुरुष इत्यादौ समुदायार्थशक्तिः, अवयवार्थ शक्तितोभिन्ना। यथा पंकजपदे अवयवशक्तिः पंके जायते कर्तरिडः, कर्दमावधिक स्वरूपधारणाश्रयरूपा इति यौगिकार्थस्तु

समास में अतिरिक्त शक्ति होती है जैसे पंकज शब्द में पंक में पैदा होने वाली सभी वस्तु का ज्ञान रोकने के लिए और पद्मत्व रूप से कमल मात्र अर्थ बोध के लिए विशिष्ट में शक्ति मानना अनिवार्य है। स्थल पद्म का बोध रोकने के लिए पंक जनिकर्तृत्व विशिष्ट कमल ही पंकज शब्द से लिया जाता है वह अतिरिक्त शक्ति क्यों मानें इसलिए की बहुत से वृत्ति के धर्मों की रक्षा वचनों से करनी पड़ती है जैसे सविशेषणानां वृत्तिर्न इत्यादि बचनों की कल्पना करने में महान् गौरव होगा जिससे मुक्त होने के लिए एकार्थी भावरूप विशिष्ट शक्ति का सम्मान किया गया।

**समास इति वृत्तिमात्रोपलक्षणम् । "समर्थः पदविधिः" इत्यत्र पदमुद्दिश्य यो विधीयते समासादिः स समर्थः, विग्रहवाक्याभिधाने शक्तः सन् साधुरिति सूत्रार्थस्य भाष्याल्लाभात् । पदोद्देश्यकविधित्वं च कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपासु पञ्चस्वपि वृत्तिष्वस्त्येव । शक्त्यस्वीकर्तृणां व्यपेक्षावादिनां मते दूषणं शक्तिसाधकमेवेत्याशयेनाऽऽह—पङ्क-जशब्दवदिति । पङ्कजनिकर्तुरपि योगादेवोपस्थितौ तत्रापि समुदायशक्तिर्न सिध्येत् ।**

❀

भिन्नः । कर्दमे उत्पन्नानां कुमुदशुक्ति शैवालादीनां सर्वेषांग्रहणसम्भवात् । आवश्यकन्तु पद्मत्वावच्छिन्नार्थबोधिका समुदायशक्तिरेव । अतः समासे = समास विधायक शास्त्राक्रान्ते खलु = निश्चयेन भिन्ना समुदायरूपा शक्तिरस्ति तथा च पंकजनि कर्तृत्वेन रूपेण सर्वसाधारणानां बोधोस्ति किन्तु कमलत्वेन रूपेणेव बोधोऽस्तु एतदर्थं विशिष्टे शक्तिः स्वीकर्तव्यैव अत्र पंकजपदं पङ्कजनि कर्तृत्वे सत्यपि कमलत्वमात्रबोधकम् । अतएव स्थलपद्मे नातिप्याप्तिः । अतः पङ्कजनिकर्तृत्ववशिष्टपद्मत्वेन रूपेण उपस्थिति सत्वे पंकज शब्दात कमलमात्रस्यै बोधो जायते तेन जलकमलमेव गृह्यते न तु स्थल कमलम् ।

नैयायिकमते अवऽयव शक्तेरुपस्थितौ वहवोवृत्तिधर्माः सुक्तित्व कमलत्व शैवालत्व दयः नाना धर्मा पंकज पदे उपस्थिताः विशेषणलिङ्ग संख्यादीना मैवोपगोऽपि जायते समासे एतेषांधर्माणां बोध व्यावृत्तये सविशेषणानां वृत्तिर्नेवेत्यादि वचनकल्पना करणीयैवेति महत् गौरवं ।

तस्मात व्यापेक्षायां गौरवसम्भवात्, एकार्थी भावरूपा विशिष्ट शक्ति राश्रीयते समासशक्तिर्द्विधा समासेऽवयवस्य पृथगर्थबोध प्रकाशिका व्यपेक्षावृत्तिः सालौकिक विग्रहेऽपि तिष्ठति एकार्थी भावस्तु पृथगर्थानि पदानि संश्लृष्टार्थानिकृत्वा, अतएव कृष्णः सप इत्यत्र कृष्णरूपविशिष्ट सपः प्रतीयते ।

योगाद्रूढ़ि वंलीयसीति सिद्धान्तादपि समुदायशक्ते वंलवत्वं बोध्यम् । कारिकायां समासपदस्योल्लेखः कृतोऽस्ति । तत्र इयमाशंका जायते यत् केवलं समास एवं विशिष्ट शक्तिरस्ति अहोस्विदन्यत्रापि, तदाह बृत्तिमात्रोलक्षणमिति = बृत्तिः समासः । मात्रपदं साकल्य बोधकम् । परार्थाभिधानं बृत्तिः सा कृत्तद्धित समासैकशेष सनाद्यना-धातुरूपपञ्चस्वपि एकार्थीभावरूपाबृत्तिंरस्तिः । एषु बृत्तीनां बोधकतात्वेन रूपेण स्थितिः । विशिष्टरूप एकार्थीभाव आश्रितो वतते । समासे विशेषणादीनि वर्जितानि भवन्ति ।

समास पदस्य बृत्तिमात्रस्योपलक्षण स्वीकारे प्रमाणं समर्थः पदविधिरिति सूत्रस्यार्थ प्रतिपादकं भाष्यम्। पदमुद्दिश्य यो विधोयते समासादि स समर्थः। विग्रह वाक्यस्यार्थ प्रतिपादने समर्थो य शक्त्याश्रयः स साधुः। संज्ञासु संज्ञयोर्वाऽन्यतर निष्ठविधेयता निरुपितोद्देश्यता कृदन्ततद्धितान्त समाससनाद्यन्तेषु अन्यतरस्मिन् तिष्ठति। तेषामवच्छेदकी भूतो धर्मः, कृत्-प्रातिपदिक-समास सनाद्यन्ताः। एतेषां विधायकं शास्त्रं णुलतृचौ, तस्यापत्य,-सुपो,-धातो कर्मणः इत्यादिः। एषां विधेयत्वकृत्तद्धितादौ। यत्र एते प्रत्यया पदोछेश्यकविधेयभूताः तत्रैव समर्थः, सम्बद्धाथ उपतिष्ठते।

कृदुदाहरणम्—पाचकः = पच धातोः विक्लित्यनुकलव्यापारोऽर्थः कर्तरिण्वुल-प्रत्ययस्य आश्रयोऽर्थः। विशिष्टशक्तिः फलानुकूलव्यापाराश्रये उपतिष्ठते। अस्य-फलम्-काष्ठैः पचति ( काष्ठकरणक पाकानुकूलाक्रिया ) इव काष्ठैः पाचक इति प्रयोगो न भवति। संसृष्टार्थं स्वीकारे काष्ठान्वयीभूतः पाकानुकूलव्यापारः पाचक-पदस्य पदार्थैकदेशस्तेनन्यायो व्याकुप्येत। यदि विशिष्टार्थो न चेत् काष्ठैः पाचकः इत्यादि साधुः स्यात्। तद्धितोदाहरणम्-औपगव इति। अत्र उपगोर्गोत्रापत्य-

कारिका में समास पद वृत्ति (कृतद्धित समास सनाद्यन्त एक शेष धातुरूप) मात्र का उपलक्षण है उक्त पाँचो वृत्तियों का वोधक होने के कारण उनमें विशिष्ट शक्ति रूप एकार्थी भाव स्थिर है, अतः समास होने पर विशेषण वर्जित हो जाता है समास पद के वृत्तिमात्र का उपलक्षण होने में प्रमाण 'समर्थः पद विधिः' यह सूत्र है। जो पद को उद्देश्य करके जो विधान किया जाय जैसे समास आदि का विधान वही समर्थ कहता है। विग्रह वाक्य के अर्थ को अभिव्यक्ति में शक्ति के विधि का आश्रयभूत शक्त (शब्द) साधु कहाता है, यह सूत्रार्थ उसी भाष्य से पदोदेश्यक लक्षण वोलते हैं पद संज्ञा और प्रत्यय उत्पत्ति का प्रयोजक विधेय कृतद्धित समास एक शेष सनाद्यन्त धातुरूप पाँचो वृत्तियों में पददोद्देश्यक विधित्व है, वहीं समर्थ की उपस्थिति भी होती है।

पकज के दृष्टान्त से विशिष्ट-शक्ति को न स्वीकार करने वाले व्यपेक्षा वादियों के मत में जो दूषण है वही शक्ति का साधक भी है इसी आशय से कहा—पंकज शब्द वत्······अर्थात् पंकज शब्द में व्यपेक्षा वादी समास होने पर विशिष्ट शक्ति मानता है क्योंकि उनके मत में पंकज पद जो रूढ़ि शब्द है योग शक्ति से पंकजनिकर्तृत्व रूप की उपस्थिति होकर रूढ़ि शक्ति में पद्मत्वेन रूपेण योगार्थ निरपेक्ष कमलमात्र का बोध होता है, इस दृष्टान्त को लेकर वैयाकरण नैयायिक से कहता है कि वृत्ति में तुम्हारे यहाँ दोष है वही हमारे यहाँ शक्ति का साधक है तुम्हारे मत में पंकज शब्द के समुदाय में शक्ति नहीं बनेगी।

रुपार्थं निरुपिता सम्पृक्ता शक्तिः। तत्र विदुषः उपगोरपत्यमिव विदुषः औपगव इति न भवितुमर्हति। यतोहि सम्पृक्तार्थे शक्तिरिति सिद्धान्तः पदार्थैकदेशे उपगु-शब्दे विशेषणा न्वयो व्यवस्थाप्यते।

एवं एकशेषे रामानित्यादौ मिलित्वा एकक्रियान्वये संसृष्टा शक्तिः। तत्र जामदग्न्यः रामश्च-रामश्च इव 'जामदग्न्यः रामौ' इति न भवति पदार्थैकदेशत्वात् सनाद्यन्ताः धातवः सनादिकारणीभूता धातु संज्ञाबृत्तिरूपैव। सा धात्वर्थं सनर्थविशिष्टशक्ति नियामिका बृत्तिरस्ति सम्बद्धार्थस्वीकारे 'कुम्भकारो घटं करोति' इत्यत्र कुम्भकाराभिन्नैककर्तृका घटविषयिणी उत्पत्यनुकूलव्यापार-विषयिका वर्तमान कालिकी इच्छा। इति संसृष्टार्थो भवति। अत्र ईदृक्शाब्द-बोधे सति बृत्ति विग्रहयोः समानार्थत्वं भज्यते। यद्यपि कृद्धात्वर्थव्यापरस्य पदार्थैक देशत्वात् तत्र कर्मत्वस्यान्वयो न भवितुमर्हति विशिष्टवादे एषा आपत्ति जन्यते तथापि साकाङ्क्ष्यपदस्यान्वयो भवत्येव। यथा देवदत्तो गुरुकुलमित्यत्र कस्य कुलमित्याकांक्षा जायते। चैत्रस्य नप्ता ( कस्य न प्तेति जिज्ञासा ) इत्यादिस्थल-इव निरूपकांशे नित्यसाकांक्ष्यपदस्य पदार्थैकदेशेऽप्यन्वयोजायते। तस्मात् विशिष्टशक्तिवादो निर्विवादः, वैयाकरण नाम्। एवं कृदादिषु बृतित्वं सिद्धम्।

समासे विशिष्ट शक्तिमस्वीकर्तृणां पृथक्शक्ति वादिनां नैयायिकादीनां मते ( सिद्धान्ते ) यद्दूषणं = तदेव समासेऽतिरिक्त शक्ति साधकम। अत्र दृष्टान्तः = पङ्कजशब्दवदिति। पंकज पदे अतिरिक्तायां शक्तौ प्रमाणपेक्षितम् तथापि व्यपेक्षावदिनः कस्मिन्नपि समासे शक्तिं नेच्छान्ति। तेऽपि योगरूढ़िं ( संसृष्टशक्ति ) स्वीकुर्वन्ति। तन्मते अनुकूलोऽयं दृष्टान्तः।

पङ्कजशब्देन तुल्यं पङ्कजशब्दवत् समासः। यथा पङ्कज शब्दे विशिष्टशक्तिः सर्वैङ्गीक्रियते विपक्षैरपि। भो नैयायिक यदि अवयवशक्त्या पदार्थानामुपस्थिति, मन्यते पदार्थानां परस्परंभाकाङ्क्षा भाष्यलब्ध सम्बन्धस्य वाक्यार्थे उपपत्ति-मनुमोद्यते। एवं पङ्कजपदेऽपि विशिष्टशक्तिः नानुमोद्यताम्। यतो भवतां मते संसृष्टार्था शक्तिनास्ति। तब सिद्धांतेऽपि यदि योगरूढ़िरूच्यते चेत् तदपि न, समासे प्रत्येक पदे बृत्तिः सती पदार्थानामुपस्थितौ यथा आकांक्षादिवशात् विशिष्टार्थ-स्योपस्थितिर्भवति, एवं पङ्कजपदादपि सम्बद्धार्थो पस्थितिर्भविष्यति। ततो रूढ़िरूच्छिद्यते। यदायोगरूढ़िरूच्छिद्यते नेष्टः सम्भाव्यते। अतआह पङ्कजनिक-र्तुरिति पङ्कजनि कर्तृत्वरूपोऽर्थः योगात् = योगोऽवयवशक्तिः तस्या एवोपस्थितौ व्यपेक्षावादि मतसिद्ध समुदाय शक्तिर्न स्यात्। एवं पङ्के जातः सप्तम्यांजनेर्डः इति व्युत्पत्तौ वैचित्र्य मिदं यत्, नामार्थस्य पङ्कशब्दस्य अधिकरणत्व सम्बन्धेन जनधात्वर्थोत्पत्तावन्वयः। पङ्केजात इति सप्तमीस्मरणेनाधिकरण द्वारा उत्पत्ता-

मीमांसा में रथकार ... का ... करे।



**न च पद्मत्वरूपेणोपस्थितये तत्कल्प्यत इति वाच्यम्। चित्रग्वादिपदेऽपि स्वामित्वेनोपस्थितये तत्कल्पनावश्यकत्वात्। लक्षणयैव तथोपस्थितिरिति चेत्पङ्कजपदेपि सा सुवचा। एवं रथकारपदेऽपि। तथा च "वर्षासु रथकारोऽग्निमादधीत" इत्यत्रापि विना लक्षणां क्लृप्तयोगेन ब्राह्मणादिविषयतयैवोपपत्तौ तत्कल्पनां कृत्वा जातिविशेषस्याधिकारित्वं प्रकल्प्या पूर्वविद्याकल्पनमप्ययुक्तं स्यादिति भावः**

यौगिकार्थ नहीं रूढार्थ लिया जायेगा। — उत्तरपक्ष में रथकार का ...

वन्वयः। उत्पत्तिरूपफलस्य जनकतया जनधात्वर्थव्यापारेऽन्वयः व्यापारस्य आश्रयतयाक्तप्रत्ययार्थं कर्तरि अन्वयः। पङ्काधिकरणक उत्पत्यनुकूलक्रियाश्रयः पङ्कजः, इति शाब्दबोधे परमते समुदाय शक्तिव्यर्थैव। तत्र समुदायशक्ति मंन्यते चेत्तर्हि कोऽपराधः समस्तानां तत्र विशिष्ट शक्तिर्नस्यादिति।

न च तद्धधर्मविशिष्टशाब्दबोधं प्रति तद्धर्म विशिष्ट विषयक शक्ति ज्ञानकारणं एवं विशिष्टबुद्धौ विशेषणज्ञानं कारणम्। पद्मत्वसम्बद्धपङ्कजबोधेपद्मत्वज्ञानंकारणं, तस्मात् पद्मत्वेन रूपेण उपस्थितये = बोधाय सा = समुदाय शक्तः, एकार्थीभावरूपं स मर्थ्यम् गृह्यते = मन्यत इति। इत्थं नैयायिकल्पनमाचष्टे वैयाकरणः। चित्रादि पदेषु चित्रागावो यस्येति समासेकृते चित्रगो स्वामी, इत्येवार्थं उपतिष्ठते। सोऽर्थः समुदायशक्तिं बिना न सम्भवति। तस्यीपपत्तये तत्कल्पनस्य = समुदाय (रूढ़ि) शक्ति कल्पनस्यावश्यकत्वात्। यदि लक्षणया विशिष्टशक्त्योपस्थितज्ञानात्स्वरूपमर्थमुच्यते चेत्, यतोहि सम्बन्धः शक्य सम्बन्धे बा लक्षणा, एवं पङ्कजपदेऽपि पद्मत्वेन रूपेणोपस्थितये लक्षणा कार्या। किमर्थ तत्र समुदायशक्तिरत्र नैति? समुदायशक्त्यवयवशक्त्योः कस्य प्रावल्यमिति? यौगिकार्थीऽवयवशक्त्या) शाब्दबोधंप्रति संसृष्टाशक्तिः प्रतिबन्धिका। अत्र प्रमाणं रूढिर्योगापहारिणीति यथा मण्डपप्रवीणादिषु। मण्डं पिबतीति मण्डपः, प्रकर्ष वीणयतीति। तेन = पङ्कजपदेन कुमुदादेर्वोधो न जायते संपृक्तशक्तेः प्रतिवन्धकत्वात्।

नैयायिक जी कहते हैं मेरे मत में पद्मत्व रूप से उपस्थिति के लिये पद्म शब्द विशिष्ट शक्ति की कल्पना की जाती है यदि ऐसी बात है तो चित्रगु इत्यादि पदों में भी स्वामित्वेन रूपेण उपस्थिति के लिए विशिष्ट शक्ति की कल्पना आवश्यक होगी। यदि कहिए कि स्वामी रूप से उपस्थिति (ज्ञान) लक्षणा से होगी तो पङ्कज पद में भी लक्षणा हो जायगी विशेष शक्ति क्यों? इसी प्रकार रथकार पद में भी लक्षणा हो सकती है अपूर्व विद्या की शक्ति कल्पना क्यों? जैसे वर्षा ऋतु में रथकार (बढ़ई) अग्नि का आधान करे यहाँ रथकार पद में लक्षणा के विना कल्पित सम्बन्ध से ब्राह्मण आदि विषय रूप से ज्ञान उपपन्न है। परन्तु लक्षणा से ही किसी जाति विशेष का अधिकार प्राप्त हो सकता है तो रथकार मे ब्राह्मण जन्य अपूर्व विद्या की कल्पना उचित नहीं होगा। अतः लक्षणा असङ्गत है।

**साधकान्तरमाह—बहूनामिति । वृत्तेर्धर्मा विशेषणलिङ्गसंख्या-द्ययोगादयस्तेषां वचनैः साधने गौरवमित्यर्थः । अयं भावः—विशिष्टशक्त्यस्वीकारे 'राज्ञः पुरुषः' इत्यत्रेव 'राजपुरुष' इत्यत्रापि स्याद्विशेषणाद्यन्वयः राजपदेन स्वतन्त्रोपस्थितिसत्त्वात् । विभाषावचनं च समासनियमवारणाय कार्यम् ।**

❀

एवं = पङ्कजपदवत् रथकारपदेऽपि सा = लक्षणा नतुशक्तिः सुवचा = सुखेन वक्तुंशक्या । रथंकरोतीति रथकारः इति योगार्थंपरित्यज्य बढ़ईजाति विशेषार्थप्रकाशिका समुदाय शक्तिरस्ति । सा न सिद्धयेत् । आवश्यकंतु रूढ़िशक्त्या शूद्रजातिविशेषबोध इति । सा लक्षणयैव सुवचा भविष्यति । योगार्थमात्रेण रथकारपदात् ब्राह्मणादीनामुपस्थितिसम्भवात् शूद्रजातीयस्य बोधो न स्यात् । तत्र (बढ़ई) जातिविशेषेऽपूर्वं विद्याकल्पनं न स्यात् । तदर्थं विशिष्टशक्तिरूपेण योगात् रूढ़िर्बलीयसीति न्यायानुरोधात् रथकारपदेन शूद्रजतिबोधेजातेसति उक्तमन्त्राणामपूर्वविद्याकल्पनं ( शूद्रेब्राह्मणत्वारोपेण मन्त्रयागाधिकारित्वं सार्थकम् । इत्यभिप्रायेण ग्रन्थकारो 'वर्षासु रथकारोऽग्निमादधीत' इत्युक्तवान् । अत्रापि लक्षणां निरुढ़ा लक्षणांविना ( अवयवशक्त्या ) क्लृ कल्पित योगेन = योगार्थेन रथकर्तृत्वेन श्रुतिः ब्राह्मणादि विषयिणी सती तया = कल्पनया उपपत्तौ = अनुष्ठान निर्वाहसिद्धौ शास्त्रे तत्कल्पनां कृत्वा जतिविशेषस्याधिकारित्वाद्यपूर्वं विद्याकल्पना ( रूढ़िकल्पना ) अयुक्तां अयोग्यं स्यात् माहिष्येण करिण्यांतु रथकारः प्रजायते । क्षत्रियेण वैश्यायामुत्पादितो महिष्यः । वैश्यायामुत्पादिता कन्या करिणीति । ताभ्यां जातो रथकारः, तदर्थमतिरिक्ता शक्तिरस्त्येवेति—

न च अपूर्वं विद्याकल्पने गौरवम् फलमुखगौरवं न दोषावहम् । तथा च समुदाये शक्ति ग्राहकं न कोषादिः प्रमाणम् येन तद्बलात् अवयवार्थ परित्यजेत् । अतः आह साधकान्तरमिति—सम्पृक्तार्थं शक्तिबोधे अन्याऽपि सधिकायुक्तिः दीयते बहूनांवृत्ति धर्माणां वचनैरेव साधने इति बहूनां = बहुप्रकरकाणांवृत्तेर्धर्मा = एकार्थीभाववृत्तेः फलानि । विशेषणधर्म ( लिङ्गधर्म ) संख्यादि धर्माणा मयोगोऽसम्बन्धः । एतेषामशाब्दबोध विषयतायां सविशेषणांनां वृत्तिर्नें यदि वचनं स्वीकार्यं स्यादिति महदगौरवम् तस्मात् संसृष्टार्था शक्तिर्मन्तव्या न च समास घटकावयवार्थं स्वीकारे कथं बिशेषण लिङ्ग संख्याद्ययोगः किं तेषामुदाहरणम् । अत आह राजपुरुष इत्यत्र वृत्तौ ( समासे ) ऋद्धस्यति विशेषणस्यान्वयः सम्भाव्यते तन्निवृत्यर्थं वचनं कर्तव्यं स्यात् । सविशेषणानाऽमित्यादि कुक्कुटाण्डमित्यत्र कुक्कुट पदार्थे स्त्रीत्वं न प्रतीयते, तदर्थं वचनं कर्तव्यम् । संख्या—राज्ञो राज्ञां

त्वा पुरुष इतिवत् राजपुरुष इत्यत्र संख्या शाब्दबोधविषयो न भवति, एतेषां परिहाराय सविशेषणां वृत्तिर्नेत्यादिवचनकर्तव्ये महद्गौरवम् ।

अयं भाव इति । सम्पृक्तार्थस्यास्वीकारे राज्ञः पुरुष इव राजपुरुष इत्यत्रापि विशेषणमन्वितं भवति । ऋद्धस्य राज्ञः इत्यत्र यथा राजपदं स्वर्थबोधने स्वतन्त्रतया उपस्थितं, ततो विशेष्यते एवं राजपुरुष इत्यत्रापि राजपदं स्वतन्त्रतया उपस्थितं ततो विशिष्टं स्यात् । तस्मान् विशिष्टशक्तिः समासवाच्या । भो व्यपेक्षावदिन् अतिरिक्तशक्तिरस्वीकारे समासनियमवारणायविभाषावचनं कर्तव्यमेव । कृतेऽकृते वा समासे समानशक्ति सत्वात् व्यपेक्षा यामेव समासविधानात् यथा वृद्धि संज्ञा नित्या एवं समास संज्ञाऽपि नित्या स्यात् । तस्मात् विकल्प विधानाय महविभाषा वचनं कर्तव्यमेवस्यात् । मम सम्बद्धार्थशक्तिवादमतेतु सामर्थ्यं द्विविधम् । एकमेकार्थीभावः । यः समासे सन्तिष्ठते । अपरं व्यपेक्षा या वाक्ये उपतिष्ठते । एतौ द्वौ विकल्पौ स्वभावसिद्धौ भवतः । अस्यैवानुवादकं विभाषा वचनं नत्वपूर्वमिति ।

नात्रकान्तरम्.......... विशिष्ट शक्ति के समर्थन पक्ष में अन्य भी साधक प्रमाण देते हैं, वहूनामिति....... ....बहुत से समास वृत्ति धर्मों का (विशेषण लिङ्ग सख्यादि के असम्बन्ध की स्थिति में शाब्द बोध का विषय बनाने के लिए अनेक वचनों की कल्पना स्वीकार करनी पड़ेगी। जैसे सविशेषण में समास नहीं, और समास में विशेषण का सम्बन्ध नहीं, आदि इस लिए विशिष्ट मे शक्ति मन्तव्य है। भाव यह है कि विशिष्ट शक्ति के अस्वीकार करने पर विशेषण (लिङ्ग सख्यादिक का सम्बन्ध न होने से उदाहरण नहीं बनेगा इस शका पर राजपुरुष इस वृत्ति में ऋद्धस्य विशेषण का अन्वय होता है वैसे ही राजपुरुष यहा पर भी विशेषणादि का अन्वय होने लगेगा इन सब दोषो के परिहार के लिए 'सविशेषणांवृत्तिर्न' इत्यादि वचनों का कल्पना से गौरव स्वाभाविक हैं राजपदार्थ की स्वतन्त्र उपस्थिति है ही। और विभाषा वचन भी एक पक्ष मे समास का अभाव होने के लिए समास नियम को वारण करने के लिये मानना आवश्यक होगा। व्यपेक्षा बाद में विभाषासूत्र करना ही पड़ेगा एकार्थीभाव पक्ष में समास और व्यपेक्षा पक्ष में वाक्य बना रहता यह दो पक्ष हमारे मत में स्वभावतः सिद्ध हैं।

व्यपेक्षा वादी कहता है कि सविशेषणो में वृत्ति (समास) नहीं और समस्त पद में विशेषण का सम्बन्ध नहीं इस वचन से ही समास में विशेषणो का सम्बन्ध नहीं होगा। और विभाषा वचन सूत्र यदि अपूर्व मान भी लिया जाय तो कोई आपत्ति सम्भव नहीं। ऐसे व्यपेक्षा बादियों की शङ्का को दृष्टि में रखकर भूषण का लिखत है 'वहूनामिति' बहुत से वृत्ति के धर्मों का वचनों से सिद्ध करने में गौरव होगा

ननु "सविशेषणानाम्" इति वचनान्न विशेषणाद्यन्वयः। विभाषावचनं च कृतमेवेत्याशङ्कां समाधत्ते—वचनैरेवेति। न्यायसिद्धमेव सूत्रम्। व्यपेक्षाविवक्षायां वाक्यस्यैकार्थीभावे समासस्येति स्वभावत एव प्रयोग नियमसंभवात्। सविशेषणेत्यपि विशिष्टशक्तौ राज्ञः पदार्थैकदेशतयाऽन्वयासंभवान्न्यायसिद्धमिति भावः। अत एव व्यपेक्षापक्षमुद्भाव्य "अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः" इति भाष्यकारेण दूषणमप्युक्तम् ॥५॥ (३२)

❀

इदानी व्यपेक्षावादिदुराग्रहः समुपस्थाप्यते नन्विति सविशेषणानां वृत्तिः (समसो) न, वृत्तस्य (समस्तस्य) विशेषणयोगो नेति साधकवचनात् विशेषणादीनामन्वयो न भविष्यति। महाविभाषा सूत्ररूपं वचनं यदि मन्तव्यं स्यात्तर्हि कृतमेव = उपकृतमेवेत्यर्थः। इत्थं व्यपेक्षावादि शंसयं संहर्तु समाधत्ते भूषणकारो, बहूनां वृत्तिधर्माणां वचनैरेव साधने महद्गौरवम् समासः सिद्धः। व्यपेक्षापक्षे समासाभावात् वाक्यं सिद्धं, विभाषा सूत्रं न कार्यमितिभावः न्यायसिद्धः—तस्मात् विशिष्ट शत्त्यङ्गीकारे शुद्धम्। महाविभाषा न्यायसिद्धा व्यासे समासे च प्रयोगनियोगो नैसगिकः। सविशेषणानामितिवचनं न कार्य सम्पृक्तशक्तिवादे राजपुरुष इति वृत्तौ राजपदार्थस्य पदार्थैकदेशत्वात् पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेश अनेन न्यायविरोधात् विशेषणस्यान्वयासम्भवात् न्यायसिद्धता सुलभा – एवं समासे उपसर्जन (विशेषण) पदार्थे संख्या न प्रतीयते। इयमेव वृत्तौ 'अभेदैकत्व संख्या प्रतीयत' इत्युक्तं भाष्ये। अतएव = व्यपेक्षापक्षे गौरवादेव, आपातरमणीयत्वाद्वा। तत्पक्षस्य उद्भावनं कृत्वा आह अथैतस्मिन्निति एकार्थीभावकृतो विशेषः स वक्तव्यः ॥ ३२ ॥

लाधव के अनुरोध से विशिष्ट में शक्ति मानो। हमारे नत में महा चिभाषा वचन न्याय से सिद्ध हैं क्योंकि व्यपेक्षा की विपक्षा में वाक्य ही रहता है और एकार्थी भावकी विवक्षा मे समास होता है इसलिये स्वभावतः दोनों पक्ष का प्रयोग नियम संभव है। सविशेषणानां वृतिर्न, यह वचन भी विशिष्ट शक्ति के स्वीकार करने पर अनावश्यक हो जाता है क्योंकि राज पदार्थ समास में पदार्थ का एक.देश है, और पदार्थ का पदार्थ मे अन्वय होता है पदार्थ के एक देश में नहीं। इम न्याय से ऋद्धस्य का समस्त यज पदार्थ में अन्वय असंभव होने से न्याय की भी सिद्धि होती है। इसी लिये व्यपेक्षा पक्ष में गौरव को उपस्थित करके भाष्य कार ने कहा, कि इस व्यपेक्षा पक्ष में जो एकार्थी भाव रूप विशेष अर्थ किया गया है उसे कहना चाहिये इस प्रकार भाष्यक र ने व्यपेक्षा वाद पक्ष में दोष कहा है!

तथा धवखदिरौ, निष्कौशाम्बिः, गोरथो, घृतघटो, गुडधानाः, केशचूडः, सुवर्णालङ्कारो, द्विदेशः, सप्तपर्ण, इत्यादावितरेतरयोग–अतिक्रान्त–युक्त–पूर्ण–मिश्र–संघात–विकार–सुचप्रत्ययलोपो वीप्सा-द्यर्थो वाचनिको वाच्य इत्यतिगौरवं स्यादिति दूषणान्तरमाह—

चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।
कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः ॥६॥ (३३)

आदिना घनश्यामः, हंसगमनः, इत्यादाविवादीनां च संग्रहः । दूषणान्तरमाह—बहुव्युत्पत्तिभञ्जनमिति । अयमाशयः चित्रगुरित्यत्र स्वाम्यादिप्रतीतिरनुभवसिद्धा ।



इत्थं व्यपेव्यक्षा पक्षे भाष्यकारेण दोष उक्तः । तत्र कैयटेनापि उक्ताः दोषाः तदाह तथेति—सम्पृक्तार्थशत्त्यस्वौकारेऽतिगौरवं दर्शयति । धवश्च खदिरश्चेति धवखदिरावित्यत्र इतरेतरयोगद्वन्द्वबोधकश्चकारः । तस्य लोपवचनकल्पना इति सम्बद्धार्थे इतरेतरयोगरुपश्चार्थे । वृत्तिभाष्यः समासशक्तिर्बोध्य इत्यर्थः । एवं कौशाम्ब्याः निष्क्रान्तो निष्कौशम्विरित्यत्र विपक्षिदले क्रान्तपदलोपाय वचने गौरवम् । ममभते कौशम्ब्यवधिक निष्क्रमणकर्तेति विशिष्टार्थः । तत्र क्रान्तरुपोऽर्थो वृत्तिभाष्यः । उक्तार्थानामप्रयोग इति न्यायात्, क्रान्तपदं न प्रयुज्यतेसोऽर्थः समासादुक्तः । लोपस्य प्रसङ्ग, एब नास्ति । एवं गोभिर्युक्तोरथः, अत्र युक्तार्थः प्रतीयते । तल्लोपार्थवचनं कर्तव्यं स्यात् । मम मते सोऽर्थो बृत्ति भाष्यइति । एवं घृतपूर्णो घटो घृतघट इति पूर्णर्थिस्य लोप वचनं कर्तव्यं स्यात् । अन्यत्र सोऽर्थो बृत्ति भाष्यः । एवं गुडिमश्रा धाना गुड़धाना, इत्यर्थे मिश्रपदलोपार्थं वचनं कार्यं मममते सोऽर्थः समासशक्या बुद्ध । न तदर्थं यत्नः कर्तव्य उक्तार्थानामप्रयोगात् । एवं केशसंघातः चूड़ाशिखा यस्यासौ केसचूड़ः विग्रहे बहुव्रीहिसमासे सति संघात-

विशिष्ट शक्ति के अभाव में धवखदिरो यहाँ पर इतरेतर योगद्वन्द्व का बोधक च पद के लोप के लिये वचन की कल्पना करनी पड़ेगी । मेरे मत में धव प्रतियोगिक समुच्चयवानखदिर एसा समासार्थ समुच्चय वृत्ति भाष्य हो जाता है । निष्कोशांम्बिः में क्रान्त अर्थ के लोप के लिये वचन मानने में गौरव होगा । यदि कौशाम्बी से निष्क्रमण करने वाला इस विशिष्ट अर्थ में शक्ति से क्रान्त रूप अर्थ वृत्ति भाष्यहो जाता है उक्तार्थ का अप्रयोग भी प्रसिद्ध है लोप वचन नहीं करना पड़ता । ऐसे ही बैल से युक्त रथ गोरथ के अर्थ की प्रतीति में आप के मत में युक्त शब्द का लोप वचन मानना होगा ऐसे ही घृतपूर्णघटः इस अर्थ की प्रतीति में पूर्ण पद के लोप का वचन करना पड़ेगा, गुड़ से मिश्रित धान्य इस अर्थ में मिश्र पद के लोप का वचन

पदलोपार्थी यत्नं कर्तव्यं स्यात् । अन्यत्र समासार्थे गतार्थः संघातार्थः । एवं सुवर्ण-विकारोऽलङ्कार इत्यर्थे विकारपदलोपार्थी वचनं अन्यत्रबृत्तिभाष्यं इति । एवं 'द्विरावृता दश' अर्थानुरोधेन 'क्रियाम्यावृत्ति गणने कृत्वसुच्' क्रियायाः पुनः २ प्रबृत्तिरभ्याबृत्तिरित्यर्थकस्य सुच्प्रत्ययस्य लोपबचनं कर्तव्यम् । मम मते सुजर्थस्य क्रियाभ्यावृत्तेः बहुव्रीहिणैव वोधात् । लोपवचनं न कर्तव्यं भवति । एवं प्रतिपर्व ( गाँठ ) सप्त २ पर्णानि यस्यासौ सप्तपर्णः इत्थं प्रतीयमानेऽर्थे वीप्सार्थबोधकपदस्य लोपार्थ वचनंक० । मम मते वीप्सार्थः शक्तिभाष्यतो लभ्यते वचनं न कर्तव्यं भवति । पूर्वोक्तार्थेषु लोपवचनंकर्तव्यायां महद्गौरवं समालोच्य विशिष्ट शक्ति वादः सिद्धान्तितः ।

अवयवशक्तिवादे दूषणान्तराणि दीयन्ते चकारदीति—अथ = इत्यनन्तरम् ते = तत्र (व्यपेक्षापक्षे) धवखदिरावित्यादि पूर्वोक्त प्रयोग स्थले चकारादीनां च-क्रान्त-युक्त-पूर्व इत्यादिनां निषेधः = लोपवचनं कर्तव्यम् । तथा च तवमते वहुव्युत्पत्तिः (नयमः) तस्याः भञ्जनं कर्तव्यं भवति । अस्माकं संसृष्टार्थशक्ति वादिनां मतेतु पूर्वोक्तदूषणंन्यायंसिद्धं ( समास विधान लभ्यमिति स्थिति = व्यवस्था ) बोध्या ।

चकारादीत्यत्र आदिपदेन घन इव श्यामो घनश्याम इति, उपमानानि घनः इति सामान्य वचनैः = साधारणधर्म सादृश्यादि वाचक इवादि शब्दैः सह उपमेयः समस्यते । इति सूत्रेण समासे सति इव पद लोपार्थं वचनं कर्तव्यं भवति । मम मते तुधर्मप्रतियोगिक सादृश्यवच्छ्यामः उपमानभूतधन सदृशः उपमेयः श्रीकृष्ण इत्यर्थे समासशक्तिभाष्यतः सादृश्यरूपार्थो बुद्धयते । तद्बोधक इव-सादृश्यादि पदानां लोपवचनं न कर्तव्यम् भवति । एवं हंसस्य गमनभिव गमनं यस्य स हंसगमन इत्यत्र गमनं तथा इवार्थसादृश्य लोपनचनं कर्तव्यं भवति । मम मते तु हंसकर्तृक गमन सदृशगमनवान् इत्यर्थे एकार्थीभावबृत्तिः । संश्लिष्टशक्तिसत्वे उक्तार्थनाम प्रयोगात् अतिरिक्त वचनं कर्तव्यं न भवति पूर्वोक्तानां निष्कौशाम्ब्यादीनां ग्रहणम् । तव मते तु सर्वाणि वचनानि कर्तव्यानि भवन्तीति महद्गौरवम् । दूषणान्तरं = बहुव्युत्पस्तिभञ्जनमिति—अस्य तात्पर्यमिदं यत् चित्रागावो यस्येति अन्य पदार्थे जहत्स्वर्थाबृत्तिः । तेन स्वाम्याद्यर्थप्रतितिरनुभवसिद्धा सा संश्लिष्टार्थशक्तिमन्तरा सम्भवत्येव न ।

मानना होगा केशचूड़ा में केशो के सङ्घात भूत शिखा अर्थ में सङ्घात का लोप वचन मानना होगा ऐसे ही सुवर्णालंकारः में विकार पद का लोप वचन मानना होगा द्विदशाः में दोवार आवृत्त क्रिया हुआ दस अर्थात् बीस इस अर्थ के अनुरोध सु. प्रत्यय का लोप वचन मानना होगा सप्तपर्णः में बीप्सा अर्थ की प्रतीति के लिए बीप्सा बोधक पद का लोप वचन मानने में अति गौरव होगा, हमारे मत में युक्तपूर्ण, मिश्र, संङ्घात, विकार, सुच प्रत्यय लोप बीप्सा, ये सभी वृत्ति भाष्य हैं, शक्ति के ही वाच्य हैं ।

व्यपेक्षावाद में दूषणान्तर प्रस्तुत करते हैं चकारादिति अथ-अनन्तरं इसके पश्चात् तुम्हारे ( व्यपेक्षावादी ) के मत मे धवखदिरौ इत्यादि प्रयोग स्थल में समुच्चय वोधक चकार का निषेध करना पड़ेगा, बहुत सी समास साधक व्युत्पत्तियो को तोड़ना पड़ेगा, नियम का भञ्जन करना पड़ेगा, पूर्वोक्त दोष हमारे विशिष्ट शक्ति वादी के मत में न्याय सिद्ध हैं यही स्थिति और व्यवस्था समझनी चाहिए ।

कारिका में आदिपद से धनइव श्यामः इस विग्रह जनक समास में इव पद के लोप का वचन करना पड़ेगा मेरे यहाँ धन का सादृश्य श्याम अर्थ में दृश्य रूप अर्थ वृत्ति भाष्य है । सादृश्य पद बोधक इव पद के लोप के लिए वचन नहीं करना पड़ता ऐसी ही हंस गमनः=हंस के गमन की तरह गमन है जिसका यहाँ भी इवार्थ सादृश्य के लोप के लिए वचन करना होगा मेरे मत में हन्स की चाल के सदृश गमन करने वाला इस विशिष्ट अर्थ में शक्ति होने मे प्रयोग सिद्ध है । अतिरिक्त वचन नहीं करना पड़ता ।

दूसरा दोष देते हैं व्यपेक्षा बाद में बहुत सीव्युत्पत्तियों को तोड़ना पड़ेगा जैसे चित्र यहाँ पर स्वामी अर्थ की प्रतीति अनुभव सिद्ध है उसके लिए विशिष्ट में शक्ति मान्य है । न कहिये चित्रगू पद का स्वामो अर्थ में लक्षणा हो जायेगी इस पर विशिष्ट वादी समाधान कि प्राप्तोदकः इत्यादि स्थल में वह लक्षण सम्भव नहीं है । क्योंकि विशिष्ट शक्ति न मानने पर प्राप्त पद का प्राप्ति कर्तृ रूप अर्थ है । व्यपेक्षा वादी बोला कि प्राप्तोदकः यहाँ पर कर्ता रूप अर्थ का बाधक क्तप्रत्यय का कर्म मे लक्षणा करे तो विशिष्ट शक्ति न मानने पर भी कर्म में लक्षणा होगी तो उदक कर्तृक प्राप्ति कर्म यह अर्थ बन जायेगा पुनः विशिष्ट में शक्ति क्यों ? समाधान समानाधिकरण ( समान विभक्तिक ) प्रातिपदिकार्थों का अभेद अन्वय होता है इस व्युत्पत्ति से उदक रूप नामार्थका प्राप्ति कर्म रूप नामार्थ के साथ अभेद सम्बन्ध होने पर उदक से अभिन्न प्राप्ति क्रिया का कर्म, ऐसा अनिष्ट अर्थ होगा । अन्यथा=यदि ऐसा अर्थ नहीं होगा तो समानाधिकरण प्रातिपदि कार्थ को व्युत्पत्ति भंग हो जायेगी और प्राप्ति धात्वर्थ है उसके कर्तृता सम्बन्ध से उदक का भेदान्वयपक्ष सम्भव है, क्योंकि नामार्थ का भेद सम्बन्ध से धात्वर्थ मे साक्षात् अन्वय अव्युत्पन्न है । यदि नामार्थ का धात्वर्थ में तो प्रकृत्यर्थ द्वारा भी अन्वय असंभव है अन्यथा देवदत्तः पच्यते यहाँ पर भी कर्तृत सम्बन्ध से देवदत्त के साथ अन्वय सम्भव होगा और अनन्वय की अनापत्ति होगी :

न च तत्र लक्षणा प्राप्तोदको ग्राम इत्यादौ तदसंभवात् । प्राप्ति॰कर्त्रभिन्नमुदकमित्यादिबोधोत्तरं तत्संबन्धिग्रामलक्षणायामप्युदककर्तृक॰प्राप्तिकर्म ग्राम इत्यर्थालाभात् । प्राप्तेतिक्तप्रत्ययस्यैव कर्त्रर्थकस्य कर्मणि लक्षणेति चेत् ! तर्हि समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरुदकाभिन्नप्राप्तिकर्मेति स्यात् । अन्यथा समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिभङ्गापत्तेः । प्राप्तेर्धात्वर्थतया कर्तृतासंबन्धेन भेदेनोक्तस्य तत्रा न्वयासंभवाच्च । अन्यथा 'देवदत्तः पच्यते' इत्यतः कर्तृतासम्बन्धेन देवदत्तस्यान्वयसंभवेनानन्वयानापत्तेः । प्राप्तोदक का अभेदान्वय होगा तो उदक कर्म हो जायेगा क्त में कर्म में लक्षणा कर ❀ देंगे ।

न च चित्रगुरित्यत्र स्वाम्यर्थ प्रतीतये स्वसम्बन्धिनि लक्षणास्यात् । अत्रकदाचिल्लक्षणया स्वाम्यर्थ बोधः सम्भवति । परन्तु प्राप्तोदको ग्रामः इत्यादौ लक्षणाऽसम्भवा । यतोहि प्रपूर्वक आप् धातोः कर्तरिक्तः । तस्य उदकेऽभेदान्वयः नामार्थयोरदेदान्वय मिद्धान्तात् । प्राप्ति कर्त्र्यभिन्नमुदकं मिति तदर्थः तद्बोधानन्तरम् । तत्सम्बन्धि = तादृशोदकसम्बन्धि लक्षणायामपि प्राप्तिकर्त्र्यभिन्नोदक सम्बन्धि ग्रामः इत्येव लक्षितार्थो भविष्यति अभीष्टार्थस्तु उदककर्तृक प्राप्ति कर्मको ग्राम इति तन्न स्यात्, जहत्स्वार्थ समासे तु अभीष्टार्थो लभ्यते । न व्यपेक्षावादे न च प्राप्तोदक इत्यत्र कर्तृरुपार्थ वाचकस्य क्तप्रत्ययस्य स्वबोध्यसम्बन्धिनि कर्मणि लक्षणा चेत् विशिष्ट शक्तिमनङ्गीकुर्वन्नपि उदककर्तृक प्राप्तिकर्म ग्राम इत्यभीप्सितार्थोऽऽगमिष्यति । कथमत्तिरिक्ताशा क्तिरिति वैया॰ समानाधिकरण इति समानाधिकरणयोः समान विभक्तिकयो प्रातिपदि कार्थयोरभेदान्वय व्युत्पत्तिरस्ति उदकरूपनामार्थस्य प्राप्तिकर्मरूपनामार्थेन सह अभेदान्वयेन उदकाभिन्न प्राप्तिकर्मेति अभीष्टार्थो जायते । अन्यथा = यद्येतादृशोऽर्थो नभवेत् तर्हि समानविभक्तिकयोः

व्यपेक्षा वादी बोला कि उदक पदार्थ का क्तप्रत्ययार्थ कर्ता के साथ अभेद सम्बन्ध होने से उदक से अभिन्न कर्ता रूप अर्थ होगा । प्रत्ययार्थ कर्ता का तत्सम्बन्धी ग्राम में लक्षणा होगी, तो विशिष्ट में शक्ति क्यों 'समाधान' प्राप्ति धात्वर्थ है प्रत्ययार्थ कर्ता के प्रति विशेष्य रूप से उसका अन्वय असम्भव है क्योंकि प्रकृति और प्रत्ययार्थ के योग में प्रत्ययार्थका प्राधान्य होता है इस व्युव्यत्ति से उक्त प्रत्ययार्थ जो आकृष्ट है वह आश्रय नहीं हो सकता और प्राप्त को यदि तुष्य दुर्जन्यायेकं विशेष्य मान लें तो वह नामार्थ हो सकता है । नामार्थ होते हुए नाम जन्य उपस्थित मुख्य विशेष्य अर्थ होने से उदक के साथ अभेद अन्वय की अपत्ति होगी क्योंकि नाम जन्य मुख्य विशेष्य भूत अर्थ के साथ अभेदान्वय होता है यह विशिष्ट शक्ति मानने पर ही सम्भव है ।

अथोदकाभिन्नकर्तृका प्राप्तिरिति, बोधोत्तरं तत्सम्बन्धिग्रामो लक्ष्यत इति चेन्न । प्राप्तेर्धात्वर्थतया क्तार्थकर्तरि विशेष्यताया असंभवात् । "प्रकृतिप्रत्यययोः प्रत्ययार्थप्राधान्यम्" इति व्युत्पत्तेः । प्राप्तपदे प्राप्तेर्विशेष्यत्वे तस्या एव नामार्थत्वेनोदकेन सममभेदान्वयापत्तेश्च । एवमूढरथः, उपहृतपशुः, उद्धृतौदना, बहुपाचिकेत्यादावपि द्रष्टव्यम् । अत्र हि रथकर्मकवहनकर्ता, पशुकर्मकोपहरणोद्देश्यः, ओदनकर्मकोद्धरणावधिः, बहुपाककर्त्रधिकरणम्, इति बोधाभ्युपगमात् अतिरिक्तवृत्तिपक्षे च घटत्वविशिष्टे घटपदस्येवोदककर्तृकप्राप्तिकर्मत्वविशिष्टे प्राप्तोदक इत्यादिसमुदायशक्त्यैव निर्वाह इति भावः ॥ ६ ॥ (३२)

❀

प्रातिप्रदिकार्थ योरभेदान्वय व्युत्पत्तिरुच्छिद्येत् । अन्यच्च प्राप्तिः= ( आप् ) धात्वर्थः तस्मिन् लक्षणया कर्तृतासम्बन्धेन भेदेन उदकस्यान्वयोऽसम्भवः । नामार्थस्य कर्तृत्वकर्मत्वादि भेद सम्बन्धेन घात्वर्थे साक्षादन्वयोऽव्युत्पन्नः यदि नामार्थस्य धात्वर्थेऽन्वयश्चेत्तर्हितत् प्रत्ययार्थ द्वारैवभवति । अन्यथा = नामार्थ धात्वर्थयोः साक्षाद्भेदान्वयोऽव्युत्पन्न इत्यस्वीकारे देवदत्तः पच्यतेऽवयवकर्तृत्व सम्बन्धेन देवदत्तस्यान्वयसम्भवेन् अनन्वयस्प अनापत्तिः स्यात् । अर्थात् अन्वयो भविष्यति ।

व्येपे० न च उदक पदार्थस्य क्तप्रत्ययार्थ कर्तरि अभेदेनान्वयं कृत्वा उदकाभिन्नकर्तृरूपोऽर्थो जातः । ततः क्तप्रत्ययार्थकर्तुरन्वयः प्राप्तिपदार्थे वृत्तित्वसम्बन्धेनान्वय उदकाभिन्नकर्तृबृत्तिप्राप्तिरित्यर्थो जातः। अस्यैवार्थस्य फलितार्थो ग्रन्थकारैरुच्यते अथोदकाभिन्नकर्तृकाप्रातिरिरिति ज्ञानानन्तरं तत् सम्बन्धिग्रामे लक्षणांकृत्वा विशिष्टशक्त्या शक्त्यार्थस्य लाभः कर्तुं शक्यते । पुनः विशिष्टाशक्तिः कथं किमर्थम् ? इति तन्न, समाधानं—प्राप्तिः=धात्वर्थव्यापारः तस्य क्तप्रत्ययार्थकर्तरि विशेष्यत्वेनान्बयोऽसम्भवः । यतः प्रकृतिप्रत्यययोः प्रत्ययार्थस्य प्राधान्यमितिसिद्धान्तः तेन क्तप्रत्ययार्थाऽऽश्रयस्य विशेष्यत्वं भविष्यति क्तप्रत्ययार्थं प्रति प्रकृत्यथं प्रा विशेष्यताऽसम्भवा । यदि प्राप्तपदे तुष्यद् दुर्जनन्यायेन प्राप्तिरूपो धात्वर्थव्यापारो विशेष्यत्वेनस्वीकृतः स्यात्तर्हि—तदा प्राप्तिः ( व्यापारः ) नामार्थ इति स्यात् । तथा च नामजन्यप्रतीति विषयस्य मुख्यतया उपस्थितत्वेन उदकेन सह अभेदान्वस्यापत्तिर्भविष्यति । यतः समानविभक्तिक नामपद जन्य प्रतीति मुख्य विशेष्यभूतयोरर्थयोः पदार्थयोः विशेष्ययीर भेदान्वय इति । अतो यावत्कालं विशिष्टशक्तिं न मन्यसे चेत्तावत् प्राप्तोदकोग्रामं इत्यत्र उदककर्तृकप्राप्तिकर्मको

ग्राम इत्यर्थो न भविष्यति । पूर्वोक्त व्युत्पत्ति भञ्जनभिया व्यपेक्षावादो नोपयुज्यते ।

यथाद्वितीयार्थवहुव्रीहौ व्यभिचारः एवं तृतीयार्थादि वहुव्रीहावपि तद्यथा— ऊढ़ ( वाहितः ) रथो येन कर्तरितृतीया अस्मिन् कर्त्र्यर्थंक बहुव्रीहौ अवयव शक्ति वादे समान विभक्तियोरभेदान्वयेन यत्कर्तृक वहनकर्माभिन्नो रथ इत्यर्थः स्यात् । उचितन्तु रथकर्मकवहनकर्ता य इति शाब्दबोधः । एतद् विशिष्ट शक्तिवादे सम्भवति । उपहृतः पशुः यस्मै उपहृतपशुः उद्देश्यत्वं चतुर्थ्यर्थः सः । व्यपेक्षावादेतु यदुद्देश्यक उपहार कर्मीभूतः पशुरित्यर्थः स्यात् । आवश्यकन्तु पशुकर्मकोद्धरणकर्माभिन्नौदन इत्यर्थः स्यात् न्यायतस्तु ओदन कर्मकोद्धरण.वधिरिति शाब्दबोध आवश्कः । एतत् सम्पृक्तार्थं शक्तिवादे संभवति एवं वहवः पात्रकाः यस्यां नगर्यां सा बहुपचिका अधिकरणे बहुव्रीहिः ।

विशिष्ट शक्ति में साधक प्रमाण व्यपेक्षावाद में दोष देते हैं, कि अषष्ठचर्थं ( द्वितीया तृतीया चतुर्थी पंचमी ) वहुव्रीहि समास में अन्य व्युत्पत्तियों की अनेक कल्पनाएँ करनी पड़ेगी, और कल्पित ( उपस्थित अर्थ का त्याग व्यपेक्षा पक्ष में करना पड़ेगा, इसलिए विशिष्ट में शक्ति की कल्पना क्यों नहीं करते । ग्रन्थकार बोले अयं भावः—चित्रगु इत्यादि पदों में विचित्र गायों के स्वामी आदि अर्थ की प्रतीति विशिष्ट शक्ति के बिना सम्भव नहीं होगा । यदि कहिये कि स्वामी अर्थ की प्रतीति लक्षणा के आधार पर हो जाये । परन्तु यह लक्षणा किस पद की होगी तो प्रथम उपस्थित होने से चित्र पद में लक्षणा होगी । परन्तु चित्र पद में लक्षणा करने से चित्र स्वामीगोः ऐसा अनर्थक अर्थ होने लगेगा । यदि गो पद की लक्षणा की जाय तो गोस्वामी चित्रः ऐसा अनन्वित अर्थ होगा जो अभिष्ट नहीं है और चित्र पद का लक्ष्य के एक देश होने से उसमें गो आदि पदों का अन्वय अयोग्यं होगा । न कहिये चित्र से अभिन्न जो गौ वहाँ शक्ति से उपस्थापित पदों के अन्वय बोध के अनन्तर तादृश गो स्वामी अर्थ होगा । न कहिए गो पद में साक्षात् सम्बन्ध ही लक्षणा में विनिगमक है । यदि गो पद में लक्षणा करते हैं तो स्वनिरूपित स्वामित्वरूप साक्षात् सम्बन्ध ही शक्य सम्बन्ध रूप लक्षणा मानी जाती है । और चित्र पद में लक्षणा करने पर चित्र पद गुणवाची है उसका स्वसमवाय सम्बन्ध से स्वामित्व रूप अर्थ में लक्षणा होगी । गो पद में लक्षणा करने पर स्वत्व निरूपित स्वामित्व रूप साक्षात् सम्बन्ध रूप लक्षणा करने में लाघव है । यही गो पद की लक्षणा में प्रमाण है ।

चित्रगुः के गो पद में लाघव रूप प्रमाण होने पर भी लक्षणा सिद्ध हो, तो भी प्राप्तोदकः कृत विश्वः, इत्यादि जो अषष्ठ्यर्थं वहु व्रीहि है, वहाँ लक्षणा में कोई विनिगमना अप्राप्त है । वहाँ लक्षणा न होगी । क्योंकि यौगिक शब्दो के कर्त्ता इत्यादि अर्थ होने से साक्षात् सम्बन्ध की कोई विशेषता नहीं होती है ।

अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना ।

क्लृप्तत्यागश्चास्ति तव तत्किं शक्तिं न कल्पयेः ७ (३४)

अयं भावः—चित्रगुरित्यादिषु चित्रगोस्वाम्यादिप्रतीतिर्न विना शक्तिमुपपद्यते । न च तत्र लक्षणा । सा हि न चित्रपदे । चित्रस्वामी गौरितिबोधापत्तेः । नापि गोपदे । गोः स्वामी चित्र इत्यन्वयबोधापत्तेः । चित्रादिमात्रस्य लक्ष्यैकदेशत्वेन तत्र गवादेरन्वयायोगात् । न च चित्राभिन्ना गौरिति शक्त्युपस्थाप्ययोरन्वयबोधोत्तरं तादृशगोस्वामी गोपदेन लक्ष्यत इति वाच्यम् । गोपदस्य चित्रपदस्य वा विनिगमनाविरहेण लक्षकत्वासंभवात् ।

चित्रा भिन्न गौ इसका स्वामी

कोई तर्क नहीं है।

❀

अस्माकमतिरिक्तशक्तिवादे तु, यथा देवत्व विशिष्ट देवपदे शक्त्या एकैव देवत्वविशिष्टदेवशाब्दोपस्थितिः नतु देवत्वस्य देवस्य वा पृथक् २ एवंमुक्तरूपेण प्राप्तिकर्मत्वविशिष्टार्थरूपेण एक शक्यैव विशिष्ट विषयक शाब्दबोधः ॥ ३३ ॥

समासे विशिष्टशक्तिसाधकं प्रमाणान्तरं प्रस्तूयते 'अषष्ठ्यर्थं' इति—यथा अषष्ठ्यर्थ बहुव्रीहौ द्वितीयादिः पञ्चम्यन्तबहुव्रीहि समासे उढ़रथः उपहृतपशुरित्यादौव्युत्पत्त्यन्तरकल्पना=अर्थबाधनाय अन्य वचनकल्पना अस्ति तव= व्यपेक्षा वादिनः मते=सिद्धान्ते क्लृप्तत्यागश्च=कल्पित नियमत्यागश्च कल्पित-शक्त्या निर्वाहेऽकल्पित (असैद्धन्तित) शक्तिकल्पनमन्याय्यम् । इति व्युत्पत्ति-त्यागश्च तवमतेऽस्ति । तस्मात् कारणात् तत्किं विशिष्टशक्तिं=एकार्थी-भावात्मिकां शक्तिं न कल्पयेः । अर्थात् व्युत्पत्त्यन्तरकल्पनां क्लृप्तशक्तित्यागादि दोष-परिहरार्थं संयुक्ता समुदायशक्तिरवश्यं कल्पयितव्या । एतदेव बोधयति ग्रन्थ-कारः अयंभाव इति—अषष्ठ्यर्थं बहुव्रीहौ व्युत्पत्यतर कल्पना प्रदर्शितं पूर्वं षष्ठ्यर्थ बहुव्रीहौ तु क्लृप्रत्यागोबोध्यः । यथा चित्रागावो यस्यचित्रगुः । षष्ठ्यर्थ बहुव्रीहि रित्यदिषु स्थलेषु स्वाम्यादि प्रतीतिरनुभवसिद्धा, सा समुदायशक्तिमन्तरा न सम्भूयते । अर्थात् चित्रगुपदेन चित्राणां गवां स्वामी इति बोधः तदर्थसमुदाये एकार्थी भावात्मकांशक्तिं स्वीकुर्यात् नचेत्=यदि स्वामिनः प्रतीतिः तादृश-सामुदायघटकपूर्वोत्तरपदयोः लक्षणामाधारीकृत्य करिष्यते चेत्तर्हि किं पूर्वपदे सा अहोस्विदुत्तरपदे इति जिज्ञासा समुदेति । नाद्यः अतआह साहि इति सा= लक्षणा चित्रपदे न कर्तुं शक्यते यतोहि प्रथमोपस्थितत्वात् चित्रपदस्य चित्रस्व-मिनि लक्षणायां वृत्तिपदजन्योपस्थिति विशेष्यः=

गो का साक्षात् सम्बन्ध स्वामी के साथ है - यही विनिगमन

न च गोपदे साक्षात्संबन्ध एव विनिगमक इति वाच्यम् । एवमपि प्राप्तोदकः, कृतविश्व इत्याद्यषष्ठ्यर्थबहुव्रीहौ विनिगमकाप्राप्तेः । यौगिकानां कर्त्रर्थकतया साक्षात्संबन्धाविशेषात् ।

चित्र - गौ दोनों में लक्षणा

न च पदद्वये लक्षणेति नैयायिकोक्तं युक्तम् । बोधावृत्तिप्रसङ्गात् । न च परस्परं तात्पर्यग्राहकत्वादेकस्यैवैकदा लक्षणा न द्वयोरिति न बोधावृत्तिरिति वाच्यम् । एवमपि विनिगमनाविरहतादवस्थ्येन लक्षणाया असंभवात् ।

❀

स्वमिनः नामार्थयारेभेदान्वय इति न्यायेन अभेद सम्बन्धेन गोपदार्थेऽन्वयेन चित्रस्वामीगौरित्यनिष्टबोधो भविष्यति । यदि गोपदस्य गोस्वमिनिलक्षणा करिष्यते चेतर्हि गोस्वामी गोपदार्थः तस्य चित्रपदेऽभेदान्वयः । ततो चित्रो गोस्वामी इत्यनिष्टार्थो भविष्यति । यदि चित्र पदस्य गोमति लक्षणा तदा गविचित्रस्य अभेदान्वयेबाधो नानुत्पन्नः । अथवा गोपदस्य चित्रवति लक्षणा तदा चित्राभिन्नगोस्वामी इति बोधो नानुत्पद्यतेऽत आह चित्रादिमात्रस्येति । चित्रपदस्य चित्रस्वामिनि गोपदस्य गोस्वमिनि वा लक्षणायां चित्रपदार्थ गोपदार्थयोर्वा पदार्थैकदेशत्वात् न्यायो विरुद्धयेत् तयोरन्वयोऽयुक्तः ।

विपक्षे—न च चित्राभिन्ना गौः इति शत्त्युपस्थाप्य =

अर्थानां सम्बन्धज्ञानानन्तरं 'चित्राभिन्नगोस्वामी' इत्यमीष्टार्थबोधो गोपदेन लक्षणया भविष्यति परन्तु विशिष्टशक्तिं स्पृशाम्यपि न । समाधानम् यदि गोपदे लक्षणा स्यात्तदा चित्रपदं तात्पर्यं ग्राहकं स्यात् । अर्थात् चित्र पदाव्यवहितोत्तरवर्तिगोपदं चित्राभिन्नगोस्वामिरुपार्थ बोधजनकं भवतु । तत्रैव चित्रपदं तात्पर्यग्राहक एवं चित्रपदे लक्षणा स्यात्तदा गोपदं तात्पर्यग्राहकम् अर्थात् गोपदाव्यवहितपूर्ववर्ति चित्रपदं चित्राभिन्न गोस्वामो रुपार्थ बोधजनकं भवतु गोपदं तात्पर्यं ग्राहकम् । परन्तु एकतर पक्षपातिनीं युक्तिम्बिना द्वयोः लक्षकत्वंमसंम्भवम् तस्मा-

यदि दोनों पदों में लक्षणा करने वाले नैयायिकों का वचन उचित है तो नहीं बोध ( ज्ञान ) की आवृत्ति का भी प्रसंग होने लगेगा । दोनों पक्षों में समान अर्थ होना ही बोधावृत्ति है । यदि परस्पर एक को तात्पर्य ग्राहक मानकर एक समय में एक ही पद की लक्षणा सम्भव है, दोनों पदों में एक साथ लक्षणा नहीं होगी । इस पर भी विनिगमना का फिर जैसे का तैसा ही स्थित हैं । लक्षणा असभम्व है विशिष्ट शक्ति कल्पना उचित है ।

आन्तिम
न च चरमपद एव सा, प्रत्ययार्थान्वयानुरोधात्, प्रत्ययानां संनिहितपदार्थबोधकत्वव्युत्पत्तेरिरिति वाच्यम्। एवं हि बहुव्रीह्यसंभवापत्तेः। "अनेकमन्यपदार्थे" इत्यनेनानेकसुबन्तानामन्यपदार्थप्रतिपादकत्वे तद्विधानात्।

किं चैवं सति घटादिपदेष्वपि चरमवर्ण एव वाचकताकल्पना स्यात्। पूर्वपूर्ववर्णानां द्योतक तात्पर्यग्राहकत्वेनोपयोगसंभवात्। एवं सति चरमवर्णमात्रश्रवणेऽर्थबोधापत्तिरिति चेदत्राप्युदकपदमात्रश्रवणादर्थप्रत्ययापत्तिस्तुल्येत्यन्यत्र विस्तरः।

❀

दिष्टबुद्ध्यर्थं संश्लिष्टशक्ति स्वीकरणीयम्। वृत्तेर्विशिष्टार्थकत्वं लोकव्यवहारगम्यम् उक्तञ्च समर्थं सूत्रेभाष्ये 'स्वभाव एव तेषां शब्दानामेष्वर्थेषु अभिविष्टानां निमित्तत्वेन अन्वाख्यानं क्रियते इति।

न च गोपदस्य साक्षात् स्वमिनि सम्बन्धोऽस्ति। तत्र गोपदेलक्षणाद्वारा साक्षात् सम्बन्धे सति एकतरपक्षपतिनी युक्तिः सिद्ध्यति। तेन विनिगमना वाच्या। अथवा गोपदे क्षणा क्रियते चेत् स्वत्वनिरूपित = स्वामित्वरूप साक्षात् सम्बन्ध एव शक्यसम्बान्धार्थिका जायते। अथ च चित्रपदे लक्षणा चेत् चित्रशब्दोगुणवाची तस्य स्वसमवायिनि (गवि) निष्ठस्वत्वनिरूपित सम्बन्धरूपालक्षणा जायते। तयोर्मध्ये गोपदे लक्षणा लघीयसी। इदमेव गोपदे लक्षणायां विनिगमकम् वै० समा० गोपदे साक्षात्सम्बान्धर्थिका लक्षणा तया विनिगमना स्वीक्रियते चेत् यत्र सक्षात् सम्बन्धो नास्ति तत्र लक्षणा न सम्भाव्यते यथा—प्राप्तमुदकं यं स प्राप्तोदकः कृतः विश्व येन सः कृतविश्व इत्यादौ अषष्ठ्यर्थ बहुव्रीहि समासे साक्षात् सम्बन्धाभावात् विनिगमनाऽभावस्तेन लक्षणा न सेत्स्यति। यतोहि—यौगिक शब्दानां साक्षात् कर्त्राद्यर्थक संजाते सति साक्षात् सम्बन्धस्य किमपि वैशिष्ट्यं न दृश्यते। न च नैयायिक सिद्धान्ते पदद्वये लक्षणेति वचनमपि नाभीष्टसाधकम्। बोधस्य = शब्दजन्यप्रतीतेरावृत्तिः = पुनः पुनः प्रवृत्ति सम्भवात् (द्वयोः पक्षयोः समानार्थप्रतीतिः बोधावृत्तिः।

न च परस्परमेकस्मिन् लक्षणा अपरस्य तात्पर्य ग्राहकत्वम्। तत एकस्मिन् काले एकस्य पदस्य लक्षणाक्रियते एवं न पदद्वये लक्षणा जायते। न च बोधावृत्तिः प्रसज्यते। तदपि न पूर्वोक्तस्य विनिगमनाविरहरूपदोषस्य तादवस्थ्यम् = यथोक्तप्रकारेण स्थितीदोष इत्यर्थः। एवं लक्षणा असम्भवा सम्पृक्तशक्तिकल्पना कर्तव्यैव।

न च प्रत्ययार्थानुरोधेन चरमपद एव लक्षणा जायताम्। यतोहिप्रत्ययानां सन्निहितपदार्थगत स्वार्थ बोधकत्वं व्युत्पत्तिरस्ति।

एकार्थीभावं परित्यज्यतामिति प्रश्ने समा०—यदि चरमपदे. लक्षणा अभविष्यत् तदा बहुव्रीहि विधानं अपरिसमाप्स्यत्। यतो बहुव्रीहविधायकमनेकमन्य पदार्थ इति सूत्रम्। तस्य अनेकेषां सुवन्तानां अन्यपदार्थे प्रतिपादिते सत्येव समासो विधीयते। चार्थे द्वन्द्व एतानि लौकसिद्धार्थानुवादकानिसन्ति यदि प्रत्ययानां सन्निहित ( वर्गो ) पदार्थेऽन्वयानुरोधेन उत्तरपदे लक्षणा चिकीर्ष्यते चेत् अन्य पदार्थो दुरुपपादः तं विना बहुव्रीहिविधायकशात्राणि व्यर्थत्वं प्राप्तानि भविष्यन्ति। नन्वत्र पदस्य अन्यार्थ बोधकत्वे अपर पदस्य तात्पर्य ग्राहकतया उपयोगेन समुदायशक्तिर्निष्फला अतआह किञ्च इति—अथवा चरम पदे लक्षणाऽनुरुद्धयते चेत् घटादिपदेऽपि चरमवर्णे वाचकतारूपशक्तेः कल्पना करिष्यमाणा स्यात् पूर्वं पूर्वं वर्णानां तात्पर्य ग्राहकत्वं स्याद् उपयोगश्च। चरमे वर्णे वाचकत्वं कल्पनया चरम वर्ण मान्त्रेण अर्थो बुद्धः स्यात् पूर्वं पूर्वं वर्णानां व्यर्थत्वं स्यात्। एवं प्राप्तोदक इत्यत्र उदकमात्र श्रवणेन उदककर्तृक प्राप्तिकर्मीभूतो ग्राम इत्यर्थस्य बोधापत्तिस्तुल्येति। ननु उदक मात्रश्रवणान्नलक्ष्यार्थबोधो जायते। यतः तदानी लक्षणा कल्पिकाया, उपस्थितेरभावात्। इत्याह 'अन्यत्रेति भूषणे—तत्र प्रत्ययानां सन्निहित पदार्थगत स्वार्थ बोधकत्व न सम्भवति। सर्वकः दधि इयद् ददाति इत्यादौ व्यभिचारात् दधि बहुपटुः ददाति इत्यत्र बहुजर्थस्य दध्नि अन्वयापत्तेश्च अतआह एवंञ्च—

अषष्ठ्यर्थ बहुव्रीहिसमासे व्युत्पत्यन्तर कल्पना = समुदाय शक्तिः पूर्वोक्त प्रमाणानुरोधे माननीयं स्यात्। तांविना प्रकृतिप्रत्ययार्थयोरन्वयार्थानुपपत्ति भविष्यति। आतोऽषष्ठ्यर्थबहुव्रीहौ विशिष्ट शक्तिकल्पना आवश्यकी। अगत्या = कार्याभावेन शत्त्यन्तरकल्पना = समुदायशक्ति वचनं मन्तव्यमेव। तथा क्लृप्त स्यागः = कल्पितशत्त्योपपत्तिः व्युत्पत्तित्यागश्च तव मतेऽप्यस्ति। तत् = तस्मात्

न कहिए चरम ( अन्तिम ) पद में ही लक्षणा प्रत्ययार्थ में अन्वय के अनुरोध से होगी क्योंकि प्रत्ययों का सन्निहित ( अव्यवधान ) में उपस्थित पद गत स्वार्थ बोधक होना यही व्युत्पत्ति है। पुनः विशिष्ट में शक्ति न माना जाय परन्तु ऐसा न होने पर बहुव्रीहि समास असंभव होगा। क्योंकि "अनेकमन्य पदार्थों" इस सूत्र से अनेक सुवन्तों के अन्य पदार्थ का प्रतिपादक होने पर बहुव्रीहि समास का विधान होता है। यदि प्रत्ययों के सन्निहित पदार्थ में अन्वय के अनुरोध से उत्तर पद में लक्षणा चाहते हो तो अन्य पदार्थ का उपपादन न होने से बहुव्रीहि समास विधायक शास्त्र ही व्यर्थ हो जायेंगे।

एवं चाषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना, उक्तयुक्तेः, अगत्या शक्त्यन्तरकल्पना। क्लृप्तत्यागः क्लृप्तशक्त्योपपत्तिरिति व्युत्पत्तित्यागश्च तवारित, तत्किं सर्वत्र समासे शक्तिं न कल्पयेरिति वाक्यार्थः।

यत्तु व्यपेक्षावादिनः नैयायिकमीमांसकादयः—न समासे शक्तिः। राजपुरुष इत्यादौ राजपदादेः संबन्धिलक्षणैव राजसंबन्ध्यभिन्नः पुरुष इति बोधोपपत्तेः।

❀

किं = कथं समासे शक्तिं = समासावच्छेदेन विशिष्ट शक्तिं न कल्पयेः संप्रश्नेलिङ् अत्र व्यङ्ग्यार्थः, व्यपेक्षाया, स्वीकरणमपि। अतएव यत्र भाष्ये संसृष्टार्थः समर्थमित्युक्तम्। तत्रैव संसर्गस्य पृथगुपस्थिति निवन्धनत्वात् परस्पर व्यपक्षेव सामर्थ्यमित्युक्तम् इसुसोः सामर्थ्ये ७-३-४४ सूत्रे समर्थपदस्य व्यपेक्षार्थकत्वं सवैरङ्गीकृतम् पराङ्गवद्भावानुरोधात् व्यपेक्षा शक्त्यङ्गीकारे परादिवद्भवो भवितुर्हति। अर्थात् उभयोः पक्षयोः प्रमाणं प्रमितं वर्तते।

यत्तु व्यपेक्षावादिन नैयायिकमीमांसकादयः। ते स्वसिद्धान्तं समासेऽति

और भी अन्तिम वर्ण की या पद की लक्षणा में घटादि पद भी अन्तिम वर्ण में बाचकता रूप शक्ति की कल्पना हो जायगी, तो भी पूर्व वर्णों को तात्पर्य का ग्राहक मान कर उपयोग ठीक बनेगा। चरम वर्ण की वाचकता की कल्पना होनी चाहिए। परन्तु ऐसा होने पर चरम वर्ण मात्र से ही अर्थ के बोध की आपत्ति होगी, और प्राप्तोदकः में उदक मात्र श्रवण होने से उदक कर्तृक प्राप्ति कर्मी भूतो ग्रामः इस अर्थ के बोधापत्ति भी समान होगी। यह बात अन्यत्र विस्तृत है।

यदि व्यपेक्षावादी की उक्त युक्तियों को स्वीकार करने पर षष्ठयन्त और सप्तम्यन्त बहुव्रीहि समास में अन्य व्युत्पत्तियों की कल्पना समुदाय में शक्ति के अनुरोध पर माननी पड़ेगी। क्योंकि प्रत्यय अपने प्रकृति के अर्थ से मिलकर स्वार्थ के बोधक होते हैं। यदि समुदाय में शक्ति न मानी गयी तो प्रकृत्यर्थ और प्रत्यार्थ का अन्वय भी नहीं बनेगा। विशिष्ट शक्ति की कल्पना आवश्यक = अगत्या कोई चारा न चलने पर अन्य शक्ति की कल्पना करनी पड़ेगी। कल्पित ( उपस्थित ) अर्थ का त्याग भी करना पड़ेगा। इसलिए जितने समास हैं, सब में विशिष्ट शक्ति की कल्पना क्यों नहीं करते ? कोई व्यपेक्षा वादी नैयायिक या मीमांसक कहते थे कि समास में शक्ति होती है। नहीं राजपुरुषः इत्यादि स्थल में राजपद से सकल राजा की उपस्थिति पुरुष पद से सकल पुरुष की सम्बन्धी अर्थ में अभिन्न पुरुष है ऐसा बोध होगा।

**अत एव राज्ञः पदार्थैकदेशतया न तत्र शोभनस्येत्यादिविशेषणान्वयः। न वा घनश्यामो निष्कौशम्बिर्गोरथ इत्यादावविवादिप्रयोगापत्तिः उक्तार्थतयेव क्रान्तादिपदप्रयोगासंभवात्। न वा "विभाषा" इति सूत्रावश्यकत्वम्। लक्षणया राजसंबन्धवानिति बुबोधयिषायां विग्रहस्येत्यादिप्रयोगनियमसंभवात्। नापि पङ्कजपदप्रतिबन्दी शक्तिसाधिका। तत्रावयवशक्तिमजानतोऽपि बोधात्।**

विग्रहवाक्य में व्यपेक्षा ही होती है। समास में एकार्थीभाव ही होता है।

रिक्ताशक्तिर्नास्तीत्येवं ब्रुवन्ति। वैयाकरणैः प्रदत्तं पूर्वोक्तं दोषं लक्षणया कवलीकुर्वन्ति। तद्यथा—राजपुरुष इति समासस्थले राजपदेन राजत्वावच्छिस्य (राजधर्मविशिष्टस्य) उपस्थितिः। पुरुषपदेन पुरुषत्वावच्छिनस्य (पुरुषगुणविशिष्टस्य) उपस्थितिर्भवति। तदनन्तरं राजपदार्थस्य स्वत्वसम्बन्धेन (आत्मीय भावेन) पुरुषपदार्थेऽन्वयः। ततः संसर्गतावादिमते (सम्बन्ध आङ्क्षयाभासते इति पक्षे) स्वत्वसंसर्गकः (आत्मीय सम्बधवान्) राजप्रकारकः (राजा अस्ति प्रकारः विशेषणं यस्यस) पुरुषविशेष्यकः (पुरुषप्राधान) शाब्दबोधो जायते। प्रकारतावादिमते राजपुरुष इति समासस्थले राजपदस्य राजससम्बन्धिनि लक्षणा। तेन राजपदस्यार्थो राजसम्बन्धीति जातः। तस्य अभेद सम्बन्धेन पुरुषपदार्थेऽन्वयः। ततो राजसम्बन्ध्यभिन्नः राजपुरुष इत्यर्थो सुतरां सिद्धः प्रशस्तश्च न काचन हानिः। न मन्तव्याऽतिरिक्ताशक्तिरिति इत्येवं व्यपेक्षावादः। उक्ततर्केण नैयायिक मीमांसकाः तेषामनुयायिनश्च विद्वांसः सामासे विशिष्टशक्तिंनाङ्गी कुर्वन्ति। यतोहि सर्वत्र समासे पूर्वपदस्य स्वसम्बन्धिनि लक्षणयैव राजसम्बन्ध्यभिन्नः पुरुष इत्येवं बोध उपपद्यते सर्वत्र स्वीकार्यश्च। अतः परित्याज्या विशिष्ट शक्तिरिति।

अत एव=समासे पूर्वपदस्य स्वसम्बन्धिनिलक्षणा स्वीकारादेव राजपदस्य पदार्थस्य एकदेशतया तत्र=राजनि शोभनस्य ऋद्धस्य इत्यादि विशेषणानां मन्वयो न जायते। पदार्थः पदार्थेनेति न्यायविरोधात्। शोभनस्य ऋद्धस्येति वा राज पुरुष इति प्रयोगो न सम्भवति विशेषणं नोपपद्यते। तथा—घन इव श्यामो घनश्याम इत्यत्र इवपदसादृश्यबोधकं घन सदृशः श्यामः घनप्रतियोगिक सादृश्यानुयोगिकः श्याम इति शाब्दबोधः। तत्र घनपदस्य घन सदृशे लक्षणायां सादृश्यार्थप्रतीतिः घनसदृशश्याम इति बोधोपपद्यते उक्तार्थानामप्रयोग इतिन्यायवलात्, लक्षणया प्रतिपाद्य सादृश्यर्थस्य बोधार्थं इवादि प्रयोगो न करिष्यते। एवं कौशाम्ब्याः निष्क्रान्तः निष्कौशाम्बिरित्यत्र कृते समासे कौशाम्ब्य वधिक निष्क्रमणकर्ता

इति वोधः इत्यस्मिन्नर्थे तत्र कौशम्बि पदस्य लक्षणां कृत्वा कौशाम्ब्यधिक निष्क्रमण कर्तरि लक्षणां कृत्वा निष्पदस्य द्योतकत्वं तात्पर्यग्राहकत्वम्वा मन्तव्यम् । तेन निष्क्रान्तपदस्यार्थो लक्षणयैव लब्धा क्रान्तपदं न करिष्यते । उक्तार्थत्वात् एवं गोयुक्तो रथौ गोरथ, इत्यत्र गोपदस्य गोयुक्ते लक्षणां कृत्वा, रथेन सह कृते कर्मं घारय समासे गोरथः इति जायते लक्षणयैव लब्धोयुक्तार्थः पृथक् न करिष्यते । एवं लक्षणया इव-क्रान्त-युक्त इत्याद्यर्थानां बौधात् तेषां पृथक् प्रयोगस्य असम्भवात् । तदुक्तं 'पूर्वं विभाषा' २-७-११ इति सूत्रं कार्यम् । तत्खण्डनार्थमाह न वेति ग्रन्थकारः नैयायिकादि पक्षतः ब्रूते विभाषा सूत्रमनावश्यकम् । न च विभाषा सूत्राभावे समासस्य विग्रहस्य च प्रयोग नियमः कथं सम्भाव्यते तदाह—लक्षणा द्वारा राजसम्बन्ध्यभिन्नः पुरुष अर्थबोधस्य वुबोधयिणायां=ममासस्य प्रयोग नियमः संभाव्यते यदा लक्षणया राजसम्बन्धवान् इति वुबोधायिषा चेत् विग्रहस्य प्रयोगनियमः संजायते । एवं समासस्य वाक्यस्य च द्वयोः सिद्धिर्भविष्यति । अतो विभाषा सूत्रस्य आवश्यकतैव नास्ति ।

राज पद को पदार्थ का एक देश होने पर उसमें शोभन पदार्थ का विशेषण नहीं जुड़ेगा । 'शोभनस्य राजपुरुषः ऐसा प्रयोग नहीं होगा । और घनश्याम घनपद की घनसदृश में लक्षणा करने पर और सादृश्यार्थ की प्रतीति सम्भव होने पर भी उक्त अर्थ का अप्रयोग होता है । इस न्याय के आधार पर इव का प्रयोग नहीं करना पड़ता । निष्कौशाम्बिः यहाँ पर कौशाम्बी को अवधि ( सीमा ) मानकर निष्क्रमण कर्ता अर्थ में लक्षणा करके निरपद को तात्पर्य का ग्राहक मानकर निष्क्रांत अर्थ लक्षणा से लब्ध होगा । क्रान्त पद का प्रयोग असम्भव हो जायेगा । इसी तरह गौ रथः पद में भी गो पद की गो युक्त में लक्षणा करके रथ के साथ कर्मं धारय समास करने पर उक्त अर्थ का लाभ हो जायगा । युक्त अर्थ नहीं करना पड़ता और न विभाषा सूत्र ही करना आवश्यक होगा । इन प्रश्नों के समाधान को दृष्टि में रखकर भूषण कार वोले कि—विभाषा सूत्र की आवश्यकता नहीं है । क्योंकि लक्षणा से ही राजसम्वन्ध्यभिन्नः पुरुषः इस अर्थ के बोध की अभिलाषा से समास की और राज सम्बन्धवान पर विग्रह वाक्य के प्रयोग का नियम सम्भव होने से समास और वाक्य दोनों की सिद्धि होगी । अतः विभाषा सूत्र को आवश्यकता नहीं है । नापि=पंकज पद में प्रतिवन्दी ( समर्थन के लिए अन्य दृष्टान्त की आवश्यकता ) शक्ति की सिद्ध करने वाली नहीं हो सकती । क्योंकि अवयव शक्ति को न जानने वाले पुरुष को भी पङ्कज पद से कमल अर्थ का बोध होता है । समुदाय शक्ति को न मानने वालों को भी बोध नहीं होना चाहिए । तात्पर्य यह है कि जिस प्रकार अवयव शक्ति न जानने वाले को पंकज पद से कमल अर्थ का बोध होता है । वैसे ही न मानने पर भी होता है ।

**न च शक्त्यग्रहे लक्षणया तेभ्यो विशिष्टार्थप्रत्ययः संभवति। अत एव राजादिपदशक्त्यग्रहे 'रापुरुषः' 'चित्रगुः' इत्यादौ न बोधः। न च चित्रगुरित्यादौ लक्षणासंभवेऽप्यषष्ठ्यर्थबहुव्रीहौ लक्षणाया असंभवे बहुव्युत्पत्तिभञ्जनापत्तेरिति वाच्यम्। प्राप्तोदकइत्यादावुदकपद एव लक्षणास्वीकारात्। पूर्वपदस्य यौगिकत्वेन तल्लक्षणाया धातुप्रत्ययतदर्थज्ञानसाध्यतया विलम्बितत्वात्। प्रत्ययानांसंनिहितपदार्थगतस्वार्थबोधकत्वव्युपित्त्यनुरोधाच्च।**

❀

इदानीं पूर्वोक्त समुदायशक्तिसाधकं 'शक्तिः पङ्कजशब्दत्' इति दृष्टान्तं खण्डयति विपक्षी, नापीति—न तावत् पङ्कज पदप्रतिबन्दी=पङ्कजादि पदे पद्मत्वादिविशिष्ट शक्ति साधिका विरूद्धः। विरोधिनां पङ्कजपदे समुदायशक्तिस्वीकारोक्तिः अनिष्टसाधिकेत्यर्थः

न च शक्ति विनाशक्यार्थाऽभावे शक्यसम्बन्धरूपालक्षणा न भवितुर्हति न च पद्मत्वावच्छिन्नस्य बोधोजायते तथा च अवयवशक्तिज्ञानं विनापि पद्मत्वा वच्छिन्नबोधः सर्वानुभवसिद्धः तस्मात्समुदायशक्तिरावश्यकी तन्न, तत्र=पङ्कजपदे येऽवयवशक्तिं न जानन्ति ते पुरुषाः पङ्कजपदात् कमलमित्यर्थबोधं प्रकुर्वन्ति। तत्र कारणं समुदायशक्तिज्ञानविहीनानां बाधो न जायेत इति। नैयायिकस्यायमभिप्रायो यत्, यथा अवयवशक्तिमजानन्तः कमल बुध्यन्ते, एवं समुदायशक्तिज्ञानमन्तरापि बोधवारणे न कश्चित्क्षमः।

न च शक्त्यग्रहे=अवयवशक्तिग्रहणाभावे शक्यार्थस्यानुपस्थितौ शक्यसम्बन्धरूपलक्षणायाः अभावे लक्षणया तेभ्यः=पङ्कपदघटकावयवेभ्यः विशिष्टार्थप्रत्ययः=(पद्मत्वादिरूपेण पद्मत्वावच्छिन्नस्य बोधः कर्तु न शक्यते। अर्थात् अवयशक्ति ज्ञानं बिना लक्षणया विशिष्टार्थी बोद्धं न शक्यते। अत एब=विशिष्टार्थ बोधेऽवयवशक्तिज्ञानस्य कारणत्वादेव राजादिपदेषु अवयवशक्तिज्ञानंविना राजपुरुषः एवं चित्रगुरित्यादिषु शाब्द बोधो न जायते। न बोधः=अवयवशक्तिज्ञानशून्यदशायां

अवयव शक्ति के न जानने पर भी वाच्य की अनुपस्थिति में वाच्य सम्बन्धी लक्षणा सम्भव नहीं होगी। पद्मत्वावच्छिन्न को बोध नहीं होगा। इसलिए राजादि पद के शक्तिग्रह न होने पर राजपुरुषः चित्रगू इत्यादिक में भी शाब्दबोध नहीं होगा। चित्रगु इत्यादि में लक्षणा सम्भव होने पर भी अषष्ठ्यर्थ बहुव्रीहि में प्राप्तोदक इत्यादि स्थल में लक्षणा असम्भव होगा। अनेक व्युत्पत्तियों को तोड़ना पड़ेगा। समान विभक्ति वाले प्रातिपदिकों का अभेदान्वय भी भंजित होगा। उस

घटादिपदे चातिरिक्ता शक्तिः कल्प्यमाना विशिष्टे कल्प्यते विशिष्टस्यैव संकेतितत्वात्। बोधकत्वस्यापि प्रत्येकं वर्णेष्वसत्त्वात्। प्रकृते चात्यन्तसंनिधानेन प्रत्ययार्थान्वयसौलभ्यायोत्तरपद एव सा कल्प्यत इति विशेषः। स्वीकृतं च घटादिपदेष्वपि चरमवर्णस्यैव वाचकत्वंमीमासकमन्यैरित्याहुः।

❀

शाब्दबोधाभावः सर्वानुभवसिद्धः। तदिष्ट एव। इदानीं अषष्ठयर्थ बहुव्रीहौ ये दोषा उक्ताः तान् परिहरति नापि = यद्यपि चित्रगुरित्यादौ लक्षणाऽसम्भवा— एवंमषष्ठयर्थ बहुव्रीहवापि योगे पूर्वपदलक्षणाया—असम्भवः = अर्थात् प्राप्तोदक इत्यादिस्थले लक्षणायाः असम्भवेऽपि वहुव्युत्पत्तीनां समान विभक्तिकनामार्थयोरभेदान्वय इत्यादीनां भञ्जनं करिष्यते इत्यादि दोषाः पुर्वमुक्ताः तत्समाधानार्थं नैयायिकैरुच्यते 'प्राप्तोदक' इत्यादि समासघटक उदकपदस्य (उत्तरपदस्य) उदक कर्तृक प्राप्तिकर्म इत्यस्मिन्नर्थे लक्षणायां जातायां प्राप्तपदं तात्पर्य ग्राहकं मत्वा लक्षणायाः उपपत्ति करिष्यते। यदिपूर्वपदे लक्षणा उच्यते तदा पूर्वपदस्य (प्राप्त पदस्य) यौगिकत्वेन (प्र अप्+क्त) यल्लणायाः = पूर्वपदयौगिकलक्षणाया धातुश्च प्रत्ययश्च तदर्थश्च धातुप्रत्ययतदर्थाः तेषां ज्ञानेन साध्यतया सा विलम्बिता भविष्यति यतोहि पूर्वपदे लक्षणायां यावद् धातुज्ञानं तेषामर्थज्ञानं तत्पश्चाल्लक्षणा एतावती या प्रतीक्षा तदपेक्षया शीघ्रोपस्थितिकत्वमुत्तरपदलक्षणायां दृश्यते अणुरपि विशेषोऽ–(विलम्बो) ध्यवसायकरः = इतिन्यायेन उत्तरपदे एव स्थल के लिए नैयायिक कहते हैं कि प्राप्तोदक पद में उदक पद का उदक कर्तृक प्राप्ति कर्म इस अर्थ में लक्षणा करके प्राप्त पद को तात्पर्य ग्राहक मानकर लक्षणा की सिद्धि होगी। यदि प्राप्तोदक पद में पूर्व पद लक्षणिक माना जायगा तो उसके यौगिक होने के कारण लक्षणा धातु प्रत्यय तदर्थक ज्ञान के सापेक्ष होने से विलम्ब से उपस्थित होगा और प्रत्ययों के सन्निहित पदार्थगत स्वार्थ का बोधक इस नियम के अनुरोध से उत्तर पद में लक्षणा की जाती है।

और घटादि पद में कल्पित अतिरिक्त शक्ति भी घट इस आनु पूर्वी विशिष्ट में शक्ति कल्पित है। क्योंकि विशिष्ट शक्ति ही अर्थ बोध के लिए कल्पित है बोधकत्व रूप अर्थवत्व प्रत्येक वर्णों में असम्भव है। प्रसंग में प्राप्तोदक इत्यादि स्थल में अत्यन्त सन्निहित होने से प्रत्ययार्थ का अन्वय सुलभ होने के लिए उत्तर पद में लक्षणा कल्पित होगी और मीमांसक मन्य विद्वानों ने भी घटादि पद के अन्तिम वर्ण में वाचकता स्वीकार किए हैं।

**अत्रोच्यते—समासे शक्त्यस्वीकारे तस्य प्रातिपदिकसंज्ञादिकं न स्यात्, अर्थवत्त्वालाभेन "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इत्यस्याप्रवृत्तेः। न च "कृत्तद्धितसमासाश्च" इत्यत्र समासग्रहणात्सा, तस्य नियमार्थताया भाष्यसिद्धाया वैयाकरणभूषणे स्पष्टं प्रतिपादितत्वात्।**

❀

लक्षणा न बोधावृत्तिरुपं दूषणम्। ननु विलम्बे यौगिकत्वं कारणं मन्यते चेत् उदक पदेऽपि व्युत्पत्तिपक्षे यौगिकत्वसम्भवात् उदकपदज्ञानं तदर्थज्ञानञ्चापेक्ष्यते उभयत्र विलम्बे साम्यमेव। तदाह प्रत्यानामिति प्रत्ययानां सन्निहित=समीपस्थ पदार्थगत=शब्दस्यार्थस्तेनैव स्वार्थबोकत्वम्। तदनुरोधात्–उत्तरपदे लक्षणा क्रियते

पूर्वोक्तनियमानुरोधात् चरमपदे एव लक्षणा स्यात् प्रतिवन्दितया = अनिष्टान्तरसाधिकया युक्त्या शाब्दिकेनोक्तम् घटपदेऽन्तिमवर्णे वाचकता स्यात् तन्निराकरोति। घटपदे या अतिरिक्ताशक्तिः कल्पिताऽस्ति, सा विशिष्टे (समुदये) कल्प्यते बोधविषयतां प्राप्यते। घ्-अ-ट्-अ इति आनुपूर्व्यवच्छिन्ने समुदाये शक्ति निश्चिता भवति। अर्थबोधाय विशिष्टस्यैव = समुदायस्यैव सकेतितत्वात्। उपदिष्टत्वाच्च। कोषादिना बोधितत्वात्। बोधकता शक्तिरपि चरमेषुवर्णेषु न भविष्यति शक्तिं विना बोधकतायाः असम्भवात्। बोधकत्वं शक्तिरिति पक्षेऽपि बोधकत्वरूपमर्थवत्त्वं प्रतिवर्णेषु न दृश्यतेऽसम्भवात्।

विशेषः = घटपदापेक्षया समासे लक्षणायां वैषम्यम्। घटेसमुदायशक्तिः समासे चरमपदवाचकता। घटादिपदेऽपि अन्तिमवर्ण वाचकता मीमांसकादिभिरपि स्वीकृता। इत्याहुः कुम्भस्य समीपमुपकुम्भमित्यादौ प्रत्ययार्थान्वयसौलभ्याय उत्तरपदस्य कुम्भसमीपे लक्षणा पूर्वपदं तात्पयग्राहकम्। एवं तत्पुरुषेऽपि।

इदानीं एकार्थीभाव समर्थकैः प्रदत्ताः दोषाः नैयायिकैः परिहृता। इदानीं शाब्दिक पक्षमपलम्ब्य "व्यपेक्षायां सामर्थ्ये समासे एकोऽसंगृहीतो भवति। इति भाष्य वचनमाश्रित्य नैयायिक मतं दूषयति ग्रन्थकारः अत्रोच्यत इति—यदि समु-

विशिष्ट शक्ति के समर्थन में वैयाकरण बोले कि समास में शक्ति न स्वीकार करने पर प्रातिपदिक संज्ञा आदि नहीं होंगे क्योंकि समास में वृत्तिमत्व रूप अर्थवत्व नहीं रहेगा। और अर्थवान शब्द स्वरूप को ही प्रातिपदिक संज्ञा होती है। निरर्थक को नहीं। यदि कहिए कि कृत्तद्धित सूत में समास ग्रहण से प्रातिपदिक संज्ञा हो जायगी विशिष्ट शक्ति क्यों। यहाँ भूषणकार ने कहा कि समास ग्रहण को भाष्यकार ने नियमार्थक माना है। भाष्य सिद्ध नियमार्थकता वैयाकरण भूषण में स्पष्ट रूप से प्रतिपादन किया गया है। प्रातिपदिक संज्ञा के लिए विशिष्ट शक्ति मानना आवश्यक है।

शंका - जो तिङन्त और सुबन्त नहीं होता वो प्रातिपदिक होता है।





॥अतिप्प्रातिपदिक करने से एक-२ अक्षर की प्रातिपदिक संज्ञा होने लगेगी।

समासवाक्ये शक्त्यभावेन शक्यसंबन्धरूपलक्षणाया अप्यसंभवेन लाक्षणिकार्थवत्त्वस्याप्यसंभवात्। अथ "तिप्तस" इत्यारभ्य "ङ्यो-स्सुप्" इति तिप्प्रात्याहारो भाष्यसिद्धः। तमादाय "अतिप्प्रातिपदि-कम्" इत्येव सूत्र्यताम्, कृतमर्थवदादिसूत्रद्वयेन, समासग्रहणं च निय-मार्थमस्तु, तथा च अतिप्—तिबन्तभिन्नं प्रादिपदिकमित्यर्थात्समा-सस्यापि सा स्यादिति चेत्तथाऽपि प्रत्येकं वर्णेषु संज्ञावारणायार्थवत्त्वा-वश्यकत्वेन समासाव्याप्तितादवस्थ्यमेव। तथा च प्रातिपदिकसंज्ञारूपं कार्यमेवार्थवत्त्वमनुमापयति धूम इव वह्निम्।

❀

दाये शक्तिर्नाङ्गीक्रियते तर्हि तत्र बृत्तिमत्वरुपार्थवत्वाभावात् समासे समुदस्य अर्थवच्छब्द स्वरूपं विना प्रतिपदिकसंज्ञा न स्यात्, आदिपदेन सुब्लुक समुदाया-त्सुवुत्पत्तिश्चनस्यात् निरर्थकत्वात् शब्दाधिकार प्रसंगश्च यदर्थवत् सूत्रे न भन्यते। चित्रगुरित्यादावसम्भवश्च। न च निरर्थकस्य कृते कृत्तद्धितसमासाचेत्ति सूत्रमस्ति। तत्रापि अर्थवत्पदानुवृत्तेः। न च समासे समास निमित्तक प्रातिपदिकसंज्ञा भवि-ष्यति। यतोहिविधिनियम सम्भवे विधिरेवज्यायान्। अंतआह तस्य = समासंग्रह-णस्य नियमार्थत्व भाष्यकारेणेक्तमिति वचनं विचार्यं निश्चीयते यत् यावद्विशिष्ट शक्तिर्नस्यात् तावत् अर्थवत्वाभावात् प्राति पदिकसंज्ञा न स्यात्। इति भूषणे—असू-र्यम्पश्या इत्यत्र सूर्यकर्मकदर्शनाभाववतिशक्ति कल्पनया प्रातिपदिकसंज्ञा भविष्यति शशश्रृङ्गमित्यादौ खण्डशः शक्तिः शशरुपः श्रृङ्गपुरूश्चार्थः आरोपितार्थवत्वात् संज्ञा अथवा वौद्धार्थमादाय अर्थवत्वं मुचितम्।

यदि इदमुच्यते यन्मया लक्षणां करिष्यते, तदपि न सम्भवति। यतः समासे शक्तिं बिना न शक्यार्थः, शक्यार्थविनां तत्सम्बन्धरूपालक्षणापि न। स्वज्ञाप्यसम्बन्ध-लक्षणापि वक्तुं न शक्यते, अपभ्रंशे तस्या अतिप्रसङ्गात्—

तस्भात् समुदायशक्तिः एकार्थीभावत्मिका मन्तव्यैव। इदानीं नैयायिकः, स्वत-र्केण सूत्रभंगंकृत्वा समासादि समुदायस्य प्रातिपदिक संज्ञां करोति। अथ इति तिस-स्झीति सूत्रं स्वौजस्मौडिति सूत्रं सम्मेल्य तिइत्यारम्य पकारपर्यन्तं प्रत्याहारः इति कैयटः) अतित्प्रातिपदिकम्—इत्येव सूत्रंकर्तव्यम् तिप्प्रत्याहारे अष्टादशतिङ्प्रत्ययाः एकविंशति सुप् प्रत्ययाः दरीदृश्यन्ते। तिब्भिन्नं तिङन्ततदादिभिन्नं प्रातिपदिक-संज्ञकं भवतीत्यर्थेन समासश्चेति वक्तव्यम् ततो न कश्चन दोषः। अतोऽर्थवत्सूत्रं कृत्तद्धितसूत्रंच न कर्तयव्म् गुरुभूतेन सूत्रद्वयेन कश्चित्साध्यंन्नास्तीत्यर्थः। तथा

च अतिपं सुप्तिङ्भिन्नं प्रातिपदिक संज्ञकं भवतीत्यर्थे समासस्यापि प्रातिपदिक संज्ञा भविष्यति एवं सिद्धौ सत्यायारभ्यमाणौ विधिर्नियमाय कल्प्यते अतआह—समास-ग्रहणञ्च नियमार्थमस्त्विवति। राजनङस् पुरूष इतिसमुदायः सुप्तिङभिन्न एवास्ति। तत्र प्रातिपदिक संज्ञायां न कश्चन विप्रतिपत्तिः। कथं समुदायशक्तिरिति चेन्न= तथापि=पूर्वोक्त प्रकारेण समाससंज्ञासत्वेऽपि संज्ञायामर्थवत्वाभावे सति समासघटक प्रत्येक वर्णेषु संज्ञा प्राप्नोति तां वारणाय = निवृत्यर्थं अर्थवदिति विशे-षणस्यावश्यकत्वम् विशिष्टे शक्तिः न स्यातर्हिं अर्थवत्वाभावेन समासे प्रातिपदिक संज्ञायाः अभावेन (समासाव्याप्तिः) = विध्यर्थभेव समासग्रहणं स्यात् वाक्यस्य संज्ञा दुर्वारा स्यात्। अतिव्याप्तिः पूर्ववत् स्थिता स्यात्। वाक्यस्य नेति तृतीयं सूत्रं कर्तव्यं स्यात्। तस्मात् समुदायशक्तिरावश्यकी।

पूर्वोक्त ग्रन्थानांसारतत्वमिदं यत् प्रातिपदिक संज्ञारूपं यत्कार्यं तदर्थवत्व अनु-मापयति —यथा धूमो वह्निमनुमापयति—

अर्थात् यत्र २ प्रातिपदिकत्वं समासे तत्र २ एकार्थी भावात्मक-शक्तिमत्वम्। यत्र २ वह्निस्तत्र २ धूम इव इति व्याप्तिज्ञानेन अनुगृहीतः परामर्शस्तु इत्थम्। समासः एकार्थी भावात्मकशक्तिव्याप्य प्रतिपदिकत्ववानिति परामर्शेन अनुमितिभं-विष्यति। समासः एकार्थीभावात्मकशक्तिमान् प्रातिपदिकसंज्ञकत्वात्, पङ्कजशब्द वत्। इत्यन्वय दृष्टान्तः। व्यतिरेकि दृष्टान्तस्तु यन्नैवं तन्नैवम् अर्थात् यः प्राति-पदिक सज्ञकः सः एकार्थीभावात्मकशक्तिमानपि न। यथा दशदाडिमानिषडपूपाः इत्यद्यनर्थक समुदायः। एतेन समासे एकार्थी भावात्मक शक्तिमत्वं सिद्धयति।

समास वाक्य में शक्ति के अभाव में क्योंकि लक्षणा भी संभव नहीं होगी। शक्य (वाच्य) सम्बन्ध में ही लक्षणा होती है। इस पर विशिष्ट वादी तर्क प्रस्तुत करते कि ति से लेकर सुप के पकारतक प्रत्याहार जो भाष्य में प्रसिद्ध है उसको लेकर (अतिप्रातिपदिकम्) ऐसा सूत्र करेगें। तो अर्थवत् सूत्र की आवश्यकता ही नहीं होगी जिससे कि अर्थवत्व का प्रति बन्ध नहीं होगा। पुनः विशिष्ट में शक्ति कल्पना क्यों। समास ग्रहण भी नियमार्थक हो जाय। और अतिप्=सुवन्त तिङन्त भिन्न को प्राति पदिक संज्ञा हो। इस अर्थमें समास भी कोडाकृत हो जायगा। यदि ऐसी बात है तो प्रत्येक वर्णों में प्रातिपदिक संज्ञा वारण करने के लिए अर्थवान का ग्रहण समास में आवश्यक है। और भी अर्थवत्व के बिना समास में प्रातिपदिक संज्ञा की अव्याप्ति (दोष) है।

किंचैवं चित्रगुमानयेत्यादौ कर्मत्वाद्यनन्वयापत्तिः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः। विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैव प्रकृतित्वात्।

यत्तु सन्निहितपदार्थगतस्वार्थबोधकव्युत्पत्तिरेव कल्प्यत इति, तन्न,उपकुम्भम्' अर्धपिप्पली इत्यादौ पूर्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात्। न च तत्रापि सन्निधानमेय, आनुशासनिकसंनिधेर्विवक्षितत्वात् तथा च यत्पदोत्तरं याऽनुशिष्टा सा तदर्थगतं स्वार्थ बोधयति। समासे च समस्यमानपदोत्तरमेवानुशासनमिति वाच्यम्, अर्थवत्सूत्रेण विशिष्टस्यैव प्रातिपदिकत्वेन विशिष्टोत्तरमेव विभक्त्यनुशासनात्।



यदि 'अतिप्' इत्यत्र पर्युदासोऽङ्गी क्रियते तर्हि तिप्सदृशमर्थवत्वं गृह्यते। अनर्थकस्य प्रातिपदिक संज्ञा न स्यात्, अर्थवत्सूत्रं न कर्यम्। एवं समासग्रहणस्य नियमार्थत्वेन वाक्यस्य संज्ञा वार्यते। न कश्चन दोषः अत आह किञ्चेति—अथवा एवं—समासे समुदायशक्त्यनङ्गीकारे अन्यद्योषोदीयते। यथा चित्रगुमानय इत्यादौ प्रकृतिः चित्रगु, इति तस्यार्थं बिना तत्र अम्प्रत्यार्थकर्मत्वस्य अन्वयो न भविष्यति। यतः एष नियमोऽस्ति यत् प्रत्ययानामिति—प्रत्ययाः स्वप्रकृत्यर्थेन सह अन्विताः सन्तः स्वार्थं (आत्मानमर्थं) बोधयन्ति व्युत्पत्तिःचित्रगु विशिष्टोत्तरे प्रत्ययः सन् विशिष्टे प्रकृतित्वं वर्तते अस्यांस्थितौ समुदायार्थंबिना चित्रगुपदार्थे ( प्रकृतौ ) अर्थवत्वं न सिद्धयति। यावत् प्रकृत्यर्थत्वं नोत्पद्यते तावत् प्रत्ययार्थत्वस्यान्वयोदुर्लभायते। अतो समासे समुदाय शक्तिरत्यावश्यकी।

कश्चन व्यपेक्षावादी ब्रतोति यत् प्रत्ययानां प्रकृत्यर्थान्वित स्वार्थबोधकत्वं व्युत्पत्ति बिहाय सन्निहितपदार्थगतस्वार्थ बोधकत्वव्युत्पत्तिः कल्पनीयाः सन्निहितत्वञ्च=अव्यवहितपूर्वत्वेन सन्धीयमानत्वम्। ईदृशीव्युत्पत्ति स्वीकारे द्वितीया विभक्तिः तस्याः अव्यवहि तोत्तरवर्ति चित्रग्वादिपदे गु इति तत्रान्वये न कश्चन दोषस्तन्न—यदि सन्निहित पदार्थगत स्वार्थ व्युत्पत्तिः कल्प्यते कुम्भस्यसमीपमुपकुम्मं पिप्पल्याः अर्धमर्धप्पिलीत्यादौं पूर्वपदार्थः उप-अर्ध पदार्थः तत्र विभक्त्यर्थस्य ( अमर्थस्य ) अन्वय प्रसंगे कुम्भपित्पल्यो र्व्यवधानेन विभक्तेः सन्निहित पदार्थत्वाभावात् तस्या अन्वयो व्यभिचरिष्यते। अतः प्रत्ययानां प्रकृत्यर्थान्वि-

तेति व्युत्पत्तिः स्वीकरणीयैव। अन्यथा ( समुदायशक्ति मन्तरा ) उपकुम्भमर्ध-पिप्पल्यादौ प्रदर्शितव्यभिचारो न वारयिष्यते।

समासे विशिष्टे शक्तिस्वीकृतेसति उपकुम्भमित्यादौ कुम्भस्य समीपमित्यर्थे शक्तिः पिप्पल्यवयवाधं इत्यर्थेशक्तिः। तदा विभक्त्यर्थस्य प्रकृत्यर्थे कुम्भसमीप पिप्पल्यवयवार्थ इत्यादावन्वयेन न कश्चन व्यभिचारः।

न च तत्रापि=उपकुम्भमधं पिप्पलीत्यादावपि सन्निधानम्—सन्निहितत्वेन शास्त्रबोधितत्वं न तु अव्यवहितपूर्वत्वम्। यतो व्यकरणशास्त्रे आनुशासनिकस्य = शास्त्रबोधितस्य सन्निधि; = सामीप्यं विवक्षितमस्ति। तथा च = आनुशासनिक सन्निधिः विवक्षितत्वे च यस्य पदस्य पश्चात् या विभक्तिरनुशिष्टा सा तस्य पदस्यार्थ गतं स्वार्थ = ज्ञापयति। समासे यत्समस्यमानं पदं तदुत्तरं विभक्तिरनुशिष्यते। तस्मात् समस्यमाने पदार्थे अन्वयः करिष्यते। ततो न काचनापत्तिरिति शङ्का समाधीयते—

अर्थवत्सूत्रेण पूर्वोत्तरपदविशिष्टस्य समास्य प्रातिपदिकसंज्ञा विधीयते। समसनकर्मभूतचित्रगु विशिष्ट समुदायोत्तरविभक्तिरनुशास्यते। तत्तदा उपपद्यते यदा विशिष्टे शक्तिः मन्तव्या।

अथ प्रकृतित्वाश्रये = चित्रगुप्रकृतौ तदर्थे ( अपर्याप्त्या ) विभक्त्यर्थान्वय इति सिद्धान्तः प्रकृत्यर्थे विभक्त्यर्थान्वयइत्यर्थः। अस्यांस्थितौ प्रकृतित्वाश्रयता प्रकृतिघटकपूर्वपदे उत्तरपदे च वर्तते। प्रत्ययविधाववधित्वं प्रकृतित्वम्। अस्यां दशायामुपकुम्भमित्यत्र अपर्याप्त्य = प्रकृतित्वस्य = आश्रयता समीपार्थो-

कोई व्यपेक्षा वादी बोलते हैं कि प्रत्ययों का प्रकृत्यर्थ में अन्वित होकर स्वार्थ बोधन की अपेक्षा सन्निहित पदार्थ में स्थित स्वार्थ बोध की व्युत्पत्ति कल्पित करे। ऐसी व्युत्पत्ति स्वीकार करने पर चित्र गुमानय में द्वितीया विभक्ति के सन्निहित चित्रगु पदार्थ में अन्वय होने से कोई दोष नहीं। तथा भूषणकार बोले उपकुम्भम् अर्धं पिप्पली इत्यादि पदों के पूर्व पदार्थ में विभक्त्यर्थ का अन्वय होने से व्यभिचार दोष आयेगा, क्योंकि उप अर्ध पदार्थ में विभक्त्यर्थ के अन्वय प्रसंग से कुम्भ और पिप्पली के व्यवधान से सन्निहित पदार्थता नहीं रहेगी तो अन्वय व्यभिचरित होगा। न कहिए प्रत्यय प्रकृत्यर्थ में सम्बन्धित होकर स्वार्थ बोध करायेंगे, तो कोई दोष नहीं होगा। उपकुम्भम् अर्धं पिप्पली में प्रदर्शित व्यभिचार नहीं परन्तु अनुशासनिक सन्निधि यहाँ विवक्षित है। क्योंकि व्याकरण शास्त्र में जिस पद के उत्तर में जो अनुशिष्ट हो वह तदर्थगत स्वार्थ का बोधक होता है। समास में समस्यमान पद के पश्चात् ही विभक्ति का अनुशासन है। अतः समस्यमान पदार्थ में अन्वय होगा। इस पर ग्रन्थकार बोले अर्थवत् सूत्र से विशिष्ट में संज्ञार्थ प्रतिपादित होती है। विशिष्ट के अनन्तर ही विभक्ति का अनुशासन भी है।

अथ प्रकृतित्वाश्रये विभक्त्यर्थान्वय इत्येव कल्प्यत इति चेत्तर्हि "पङ्कजमानय' दण्डिनं पश्य' 'शूलिनं पूजय' इत्यादौ पङ्कदण्डशूलेष्वानयनदर्शनपूजनादेरन्वयप्रसङ्गः। 'अघटमानय' इत्यत्र घटेऽप्यानयनान्वयापत्तिश्च। न च दण्डादीनां विशेषणतया न तत्रानयनाद्यन्वयः, 'पाकान्नीलः' 'धर्मात्सुखी' इत्यादौ पाकधर्मादिजन्यताया रूपसुखादावनन्वयप्रसङ्गात्। यच्च प्रकृत्यर्थत्वं तज्जन्यज्ञानविषयत्वमात्रं तच्चात्राविरुद्धमिति, तन्न, घटं पश्येत्यत्र घटपदात्समवायेनोपस्थिताकाशवारणाय वृत्त्या प्रकृत्यर्थत्वस्याऽऽवश्यकत्वात्।

❀

वर्तते एवमघंपिप्पलीत्यत्र प्रकृतित्वाश्रता अर्धार्थे वर्तते। प्रकृत्यर्थे विभक्त्यर्थान्वये सति न कश्चन दोषः, न मन्तव्यैकार्थीभावः, इतिचेन्न अपर्याप्त्याऽन्वयश्चेत् पङ्कजमानय इत्यत्रापर्याप्त्या पङ्केऽपि प्रकृति त्वाश्रयता वर्तते एवं दण्डिनं पश्य इत्यत्र दण्डे शूले च क्रमश आनयन पूजन दर्शनानामन्वयः प्राप्नोति। तेन पङ्कानयन दण्डदर्शनं शूलपूजनञ्च स्यात् महदनिष्टं प्रसज्यते। एतेदोपाः असन्निहितप्रकृत्यर्थे सन्निहितेऽपि अन्वयोदृश्यते। यथा 'अघटमान' इत्यत्र यथा नञर्थे तथा घटेऽपि अपर्याप्त्या आनयन क्रियाया अन्वय आपद्यते।

न च 'प्रधानाऽप्रधानयोः प्रधाने कार्यसम्प्रत्ययः इति न्यायवलात् दण्डिन् शूलिन्पङ्कज इति प्रधाने आनयनादीनामन्वयो भविष्यति न तु विशेषणे दण्डशूलपङ्कादौ, अप्राधान्यात् यदि प्रधानाऽप्रधनन्यायो अनुसरिष्यतेतर्हि पाकान्नीलः

शंका—प्रकृतित्व का आश्रय ( प्रकृति ) में विभक्त्यर्थ का अन्वय होना सिद्धान्त है। ऐसी स्थिति में पूर्व और पर दोनों में प्रकृति के अर्थ की आश्रयता कल्पित होगी। कोई दोष नहीं है। "उपकुम्भम्" में अपर्याप्त्या प्रकृतित्व की आश्रयता समीप अर्थ में है। तो विशिष्ट में शक्ति क्यों? अपर्याप्त्या प्रकृतिगत अर्थ और सम्बन्ध को स्वीकार करेंगे "पंकजमानय, दण्डिनं पश्य, शूलिनं ( शिवं ) पूजय" आदि स्थल में अपर्याप्त सम्बन्ध से पङ्क, दण्ड, शूल" में क्रमशः आनयन, दर्शन, पूजन" आदि का अन्वय आक्रान्त होगा। प्रधानता होने से पाक का अन्वय नहीं होगा। धर्मात् सुखी पदार्थ में धर्म का अन्वय होने में यद्यपि न्यायानुरोध है, तथापि धर्म और पाक की जन्यता और अन्वय अप्रासङ्गिक होगा। यदि विशेषणीभूत नील पदार्थ में, और सुख पदार्थ में जन्यता की उपपत्ति करते। तो न्याय विरोध होता है। यदि वाक्य अन्वय के अनुरोध से प्रधानाप्रधान न्याय को क्वाचित्क

आम्रः ( पाकजन्यं यन्नीलं तदाश्रयः ) आम्रः पाकः विलक्षणतेजः संयोग आम्रे यदद्भुतं तेजः नीलं समागतं तत्रहेतुः पाककर्म तस्य नीलत्वेऽन्वयोचितः न तु नीलवत्पदार्थें। किन्तु प्रधानन्यायेन नीलवत्पदार्थे पाकोऽन्विष्यते । एवं धर्मात्सुखी (धर्मजन्यं यत्सुखं तदाश्रयः) अत्र धर्मः सुखस्यहेतु नतु सुखी इत्यस्य प्राधान्यात्तस्मिन्नेव अन्विष्यते । एवं नीलवति सुखिनि पाकधर्मयोरन्वयो भविष्यति उचितन्तु नीलसुखरूप विशेषणे प्रयोज्यता अनुमोपद्यतेऽतोन्याय विरोधस्तन्न, उक्तवाक्येऽन्वयानुरोधेन नीले सुखे च जन्यत्वं तदाश्रयत्वं सर्वानुभवसिद्धम् । तेन च प्रधाना प्रधानन्यायो क्वाचित्कः मन्तव्यः अत एव भवति प्रधानेऽन्वय नहि सवंत्र नीलः गुणमात्रे शक्तः धर्मः सुख मात्रे शक्तः । नैयायिकमते लक्षणया नीलगुण विशिष्टे विशेष्यता । व्याकरण सिद्धान्तेतु गुणे विशिष्टे चोभयत्र शक्तिः । अत एव गुण वचनेभ्यो मतुबो लुगिष्ट इति सङ्गच्छते प्रकृत्यर्थान्वित स्वार्थं बोधकत्वमितिन्यायः यथा कथञ्चित् प्रकृति जन्यविषयत्वं साधयति नतु वृत्या प्रकृति जन्य ज्ञान विषयत्वं तदाह यच्चेति—न च यच्च = यः कश्चित् ब्रूते प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति न्याये वृत्या (शत्त्या) प्रकृति प्रयोज्यं = जन्य ज्ञान विषयतायामिति प्रकृत्यर्थो नास्ति किन्तु यथाकथञ्चित्, प्रकृतेः ज्ञान विषयतायामन्वय इति । अतः प्रकृति जन्यज्ञान विषयत्वमात्रं मूले उक्तम् । तच्च = उक्तं प्रकृत्यर्थत्वञ्च अविरूद्धम् = अबाधितम् । उपकुम्भमर्धपिप्पलीत्यादौ प्रकृतिः उपकुम्भादिः तज्जन्यंज्ञानं = तद्विषयकश्रावणप्रत्यक्षम् तस्य विषयता तदर्थ समीपार्थे अर्धपिप्पलीत्यत्र अर्धार्थे । एवं समीपार्थः अर्धार्थश्च प्रकृत्यर्थोजातः । तस्मिन् ( प्रकृत्यर्थे समीपार्थेअर्धोर्थे ) विभक्त्यर्थस्यान्वयेन नास्तिदोषः । कथं विशिष्टाशक्तिरिति तन्न, घटंपश्य इत्यत्र दृशधातु ज्ञानसमान्यार्थेवर्तते । सामान्यज्ञानं सकलेन्द्रिय प्रत्यक्षं ज्ञानम् । शब्दस्वरूपेण घटपदेन समवायसम्बन्धेन आकाशस्मरणात् शब्दस्य समवायी आकाशः । एक सम्बमानते हो तो "पङ्कजमानय" इत्यादि स्थल में दण्डादि का भी विशेषण रूप से क्रिया में अन्वय होगा। इसलिए प्रकृतित्व के आश्रय में विभक्त्यर्थका निर्णय अयुक्त हो इस पर कोई प्रकृत्यर्थवादी बोला कि हम प्रकृति जन्य ज्ञान विषयत्व मात्र प्रकृत्यर्थ को लगें। तो वह विरुद्ध नहीं होगा। "उपकुम्भम्, अर्धं पिप्पली" आदि में प्रकृति जन्य ज्ञान विषयता समीप और अर्ध पदार्थ में हैं। वही प्रकृत्यर्थ भी है उसमें अन्वय होने से कोई दोष नहीं। इस मत पर भूषण भाषण देते है कि घटं पश्य ) यहाँ पर घट शब्द रूप है। और शब्द गुणक आकाश होता है। समवाय सम्बन्ध से उपस्थित आकाश अर्थ बोध को वारण करने के लिए "प्रकृत्यर्थत्वस्य" = प्रकृति में रहने वाली वृत्ति ( शक्ति ) के ज्ञान से उपस्थित विषयित्व ही प्रकृत्यर्थत्व है। ऐसा मानना आवश्यक है। यह समास में विशिष्टशक्ति मानने से सम्भव है।

**अथ प्रत्ययप्राग्वर्तिपदजन्योपस्थितिविशेष्यत्वं प्रकृत्यर्थत्वमिति चेन्न 'गामानयति कृष्णो दण्डेन' इत्यत्र कृष्णे तृतीयार्थान्वयप्रसङ्गात्। अथ समस्यमानपदार्थगतस्वार्थबोधकत्वं समासोत्तरविभक्तेः कल्प्यत इति चेन्न, अक्लृप्तकल्पनां क्लृप्तव्युत्पत्तित्यागं चापेक्ष्य समुदायशक्ति-कल्पनस्यैव युक्तत्वादिति दिक्।**

❀

न्धिज्ञानपरं सम्बन्धिनं स्मारयति। आकाशस्य बोधवारणाय प्रकृतौ विद्यमाना या वृत्तिः (शक्तिः) तस्याः ज्ञानाधीनोपस्थितेः विषयः प्रकृत्यर्थः। अत एतादृशोऽर्थोऽवश्य-मानिष्यते। समुदाये शक्ति बिना प्रकृति निष्ठ वृत्तिज्ञानाधीनोपस्थिति विषयत्व-रूपप्रकृतित्वं समासार्थे न संघटते। तत्र विभक्त्यर्थान्वयो न समाव्यते। तस्मात् विशिष्टे शक्ति।

वादि वाक्ये यावन्तोऽर्थाः सम्भवन्ति इति न्यायेन अत्र प्रययसन्निहित पदार्थ-त्व प्रकृतित्वं न ग्राह्यं किन्तु प्रत्ययप्राग्वर्तिपदार्थत्वम् ग्राह्यम्। अत आह अथ इति प्रत्यय प्राग्वर्ति पदजन्यो परिथति विशेष्यत्वं प्रकृत्यर्थत्वम्ग्राह्यम् ते उपकुम्भमर्ध पिप्पली त्यादौ प्रत्ययो = विभक्ति तत्प्राग्वर्ति उपकुम्भ-अर्ध पिप्पली च तज्जन्यो पस्थिति—श्रावण प्रत्यक्षज्ञानं तस्य विशेष्यतया समीपार्थे अर्धार्थे च तथान्वये नानु-पपत्तिस्तन्न अत्र भूषणकारः—गामानययति कृष्णेदण्डेन इत्यत्र दण्डपदोत्तर तृतीया विभक्तिः तस्याः प्राग्वर्ति पदं यथा दण्डः तथा कृष्णोऽपि अतः प्रकृतिजन्योपस्थिति विशेष्यत्वम् कृष्णपदार्थे गमिष्यति। तेन तत्र तृतीयार्थस्य अन्वयः प्रसज्यते विभक्तिः प्राप्नोति। समुदाये० मन्तव्या।

ननु प्रत्यय प्राग्वर्तिनि विशेष्यार्थे प्रकृत्यर्थ स्वीकारेऽपि बहुबट्टःदधिद्वयददाती-त्यादौ अव्याप्तिः, अतिव्याप्तिश्चोपपोद्यतेसमस्यमानं पदं = तस्यार्थगतो यः स्वार्थः—तं बोधयतितस्यभावः तत्वम् प्रकृतित्वम् स्वीकारे तत्समासोत्तर विभक्तेरन्वय कल्पनेन न कश्चनदोषः यतः समस्यमान पदार्थः उपकुम्भ पदे उपइति, अर्धपिप्पलीत्यत्र अर्ध इति तद्वत् स्वार्थ बोधकत्वसमासोत्तर विभक्तौ कल्प्यते। इति समाधानम्, ग्रन्थकारेण—अक्लृप्तकल्पनापेक्षया (समस्यामान पदार्थ गतस्वार्थ बोध कत्वमित्येवं रूपा) क्लृप्तव्युत्पत्ति त्यागः—(प्रकृत्यर्थान्वितेत्यादि नियमत्यागापेक्षया समुदाये शक्ति

व्यपेक्षा पक्षी बोले—कि हम समस्य मान पदार्थ में स्थित स्वार्थ की बोधकता समास के उत्तर में जो विभक्ति है। ऐसी कल्पना करेगें। विशिष्ट शक्ति न माननेः पर भी दोष नहीं है। समाधान—अकल्पित की कल्पना और कल्पित व्युत्पत्ति का त्याग इसकी अपेक्षा समुदाय शक्ति की कल्पना ही उचित है।

× अपि च समासे विशिष्टशक्त्यस्वीकारे 'राजपुरुषः' 'चित्रगुः' 'नीलोत्पलम्' इत्यादौ सर्वत्रानन्वयप्रसङ्गः, राजपदादेः सबन्धिनि लक्षणायामपि 'तण्डुलःपचति' इत्यादौ कर्मत्वादिसंसर्गेण तण्डुलादेः पाकादावन्वयवारणाय प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेर्हेतुताया आवश्यकत्वात्पुरुषादेस्तथात्वाभावात् । 'तण्डुलः शुभ्रः, इत्यादौ च प्रातिपदिकार्थकप्रथमार्थे तण्डुलादेस्तस्य च शुक्लेऽभेदेनैवान्वयः । "शुभ्रेण तण्डुलेन"इत्यादौ च विशेषणविभक्तिरभेदार्था, पार्ष्णिको वाऽन्वय इति नातिप्रसङ्गः । तथा च समासे परस्परमन्वयासंभवादावश्यिकैव समुदायस्य तादृशे विशिष्टार्थे शक्तिः ।

❀

कल्पना लघीयसी तस्यैव युक्तिसाध्यत्वात् । न च समासोऽनन्तः तत्समुदायोऽपि अनन्त एव तेषु नानाशक्तिः तदपेक्षया व्युत्पत्यन्तरकल्पनार्थ कल्पितस्य त्यागे लाघवमेव न गौरवमिति तदाह दिगिति राजसम्बन्धिनि लक्षणायां राज पदार्थैक देशतया ऋद्धाद्यन्वय वारणेऽपि दास्याः पुत्र इत्यादौ अलुक् समासे लक्षणायां मानाभावेन शोभनादीनामन्वयो न वार्यते ।

समासे अस्वीकृताया विशिष्टशक्तौ सर्वत्र समासस्थले नीलोत्पलादावन्वयो न प्रसज्यते । तथा राजपदस्य राजसम्बन्धिनि लक्षणायामपि तण्डुलः पचतीत्यादौ तण्डुलपदस्य कर्मत्वसम्बधेन पाकादि फलेऽन्वयोपपद्यते । तन्निवारणाय प्रातिपदिकार्थः विशेषणरुपेण बोधनीयश्चेत् तं प्रति विभक्तिजन्यज्ञानं कारणमावश्यकम् । प्रातिपिकार्थः तण्डुल इति सः प्रकारः विशेषणंयस्य एतदर्थ बोधं प्रति अम् विभक्ति

और भी समास में विशिष्ट शक्ति न स्वीकार करने पर "राजपुरुषः, चित्रगुः, नीलोत्पलम्" इत्यादि स्थलों में अन्वय का अप्रसङ्ग हो जायेगा । यदि कहिए कि राजपद का राज सम्बन्धी में लक्षणा करने पर अन्वय सम्भव होगा, तो भी तण्डुलः पचति, इत्यादि स्थलों में कर्मत्व सम्बन्ध से तण्डुल आदि का पाक इत्यादि फल में अन्वय निवारण के लिए प्राति पदिक कार्य हो प्रकार ( विशेषण ) जिसमें ऐसे बोध के प्रति विभक्ति से उपस्थित ज्ञान कारण मानना आवश्यक है । और राजपुरुष यहाँ पर नामार्थ राज पदार्थ मे स्थित विशेषणता बोधित पुरुष पदार्थ परक विभक्ति जन्य उपस्थिति पुरुष पदार्थ जन्य न होने से शाब्द बोध असिद्ध होगा । लक्षण होने पर भी "तण्डुलः शुभ्रः" यहाँ पर तण्डुल पदार्थ का प्रातिपदिकार्थ तण्डुल का शुक्ल में अभेद सम्बन्ध से अन्वय होगा ।

जन्यमाश्रयोपस्थितिः कारणम् एवं शाब्दबोधो भवति । तण्डुल इत्यत्राम् विभक्त्यभावे कर्मत्वसम्बन्धेन तण्डुल प्रकारक पाक विशेष्यक शाव्दबोधो न जायते । राजपुरुषइत्यत्र नामार्था राजपदार्थ निष्ठविशेष्यतानिरूपितपुरूषपदार्थपरः बिभक्ति जन्योपस्थित्यभावेन शाब्दबोधोऽनुपपन्नो भविष्यति । लक्षणा सत्वेऽपि शुभ्रः तण्डुलः इत्यत्र न व्यभिचारः । यतः नामार्थ तण्डुल पदार्थस्य प्रातिपदिकमर्थो यस्यासा प्रातिपदिकार्थिका साचासौप्रथमा च प्रातिपदिकार्थप्रथमा तदर्थे तण्डुलस्या ऽभेदेन सम्बन्धेनावन्वयः । प्रथमार्थस्यच शुभ्रेऽभेदेनान्वय इति । तण्डुलभिन्नार्थाभिन्नः शुभ्र इतिबोधः ततो न व्यभिचारः ।

न च शुभ्रेण तण्डुलेन इत्यत्र विशेषणविभक्तिः साधुत्ववोधिका, शुभ्रस्य तण्डल, एवान्वयेन व्यभिचारः तदपि न तत्र विशेषणविभक्तिः अभेदार्थिका न तु साधुत्वमात्रप्रयोजिका । ननु समानाधिकरणस्थले नीलं घटमानयेत्यादौ विशेष्यवाचक पदोत्तरे या विभक्तिः तयैव कर्मत्वबोधः विशेषणवाचकपदोत्तर विभक्तिः साधुत्वमात्र बोधिका अत आह पाष्ठिकोबेति—पृष्ठे = पश्चात्काले भव पार्ष्टिकः क्वचित्पार्ष्णिक इति पाठः तस्य पृष्णिः = पृष्ठम्–पश्चात्काल इत्यर्थः कालाट्ठञ् । कर्मणि द्वितीयैव कर्मादिष्वेव द्वितीया इति नियमार्थता दर्शनात् साधुत्वार्थी वक्तुं न युक्तम् किन्तु कर्माद्यर्थकत्वमेवोचितम्—कृते समासे पदयोः परस्परमन्वयस्य असम्भवात् समुायस्य समुदित विशिष्टार्थे शक्तिः अवश्यम् मन्तव्या ।

न च प्रकारतायां भेद सम्बन्धनिवेशे तु न दोषः—अत आह किञ्च भो व्यपेक्षावदिन् राजपुरुष इत्यत्र त्वया किं क्रियते, सम्बन्धिनि लक्षणा क्रियते संबन्धेवा । नाद्यः = सम्बन्धिनि तु लक्षणा न कर्तुं शक्यते । यतः राजपुरुष इति सभासस्य राज्ञः पुरुष इति विग्रहवाक्यस्य च परस्परम् विरोधो जनिष्यतें । समास समानार्थकं वाक्यं विग्रहः, इति नियमानुरोधात् । सम्बन्धिनि लक्षणायां राज सम्बन्ध्यभिन्नः पुरुषः इति समासार्थो जायते । सम्बन्धे लक्षाणायां राज सम्बन्धवान् पुरुष इति विग्रहवाक्यार्थो भविष्यति । एवं विग्रहार्थे समाससमानार्थकत्वस्य अदर्शनात् वाक्यत्वामसम्भविष्यति अस्यां परिस्थितौ विग्रहवाक्ये समासशक्ति निणयौऽसंभविष्यति । समास समानार्थकवाक्यैव शक्ति निर्णयजनकत्वात् । सम्बन्धे लक्षणायाञ्च राजसम्बन्धवान् रूपः पुरुष इत्यनिष्टार्थः संयुज्यते यतो विरुद्धविभक्तिरहि-

'शुभ्रेण तण्डुले+' यहाँ पर विशेषण विभक्ति अभेद अर्थं वाली है । अथवा "पार्ष्ठिकः= क्वाचित् या शाब्द बोधोत्तार कालिक अन्वय होने से कोई अति प्रसङ्ग, दोष नहीं होगा तथा च समास में पदों के परस्पर में' सम्बन्ध असम्भव है । इसलिए आवश्यक है कि समुदाय का वैसे स्थल में विशिष्टार्थं शक्ति स्वीकार करें ।

**किंच 'राजपुरुषः' इत्यादेः संबन्धिनि संबन्धे वा लक्षणा ! नाऽऽद्यः 'राज्ञः पुरुषः' इति विवरणविरोधात्समाससमानार्थकवाक्यस्यैव विग्रहत्वात् । अन्यथा तस्मात्च्छक्तिनिर्णयो न स्यात् नान्त्यः, 'राजसंबन्धरूपः पुरुषः' इति बोधप्रसङ्गात् । विरुद्धविभक्तिरहितप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरित्यादि प्रपञ्चितं वैयाकरणभूषणे।**

❀

तयोः द्वयोः प्रातिपदिकार्थयोरभेदान्वव्युत्पत्तिरिति वैयाकरणानां सिद्धान्तसिद्धा। इति वैयाकरणभूषणसारे प्रपञ्चितम्—तत्र विभक्त्यर्थमन्तर्भाव्य नामार्थान्वयः एवोक्ताव्युत्पत्तिरित्युक्तम् ।

अतएव=समासे एकार्थीभाव स्वीकारादेव वषट्कर्तुः प्रथम भक्षः । वषट् = देवतोद्देशेन यो हविषस्त्यागस्तत्सम्बन्धी मन्त्रविशेषस्तं करोतीति वषटकर्ता वषट्नामक मन्त्रोच्चारयिता, तस्यैव प्रथमं भक्षणमिति पूर्वपक्षसिद्धान्तः । अर्थात् वषट्कर्तारमुद्दिश्य यत्प्राथम्यविधानं तस्य अयुक्तता एव एकप्रसरताभङ्गः । अत उक्तार्थे युक्तिः यदि भक्ष्यमुद्दिश्य प्राथम्यस्य विधानं स्यात्तदा वाक्यान्तरेण प्राप्तो यो भक्षः स वषट् कर्तुः प्रथमः इति पृथक्कृत्वा वाक्यभेदं विधायान्वयो वाच्यो भवति । स न सम्भवति प्रक्षमभक्ष इत्यत्र समासस्य प्राप्त्यभावात् ।

यदि अतिरिक्ताशक्ति नं स्वीक्रियेत् तर्हि एकप्रसताभङ्गरुपा आपत्तिरापतति एक रूपेणमिलितस्य प्रसरता = अनेकार्थ विपयकबोधजनकता तद्रूपैकार्थीभावस्यभङ्गः सभ्भावयिष्यति । विशिष्टेशक्तिर्नमन्यते केवलं भक्षमुद्दिश्य प्राथम्यं यद्विधानं - तन्नसंभवति इत्यर्थं । अस्यिन् विषये वषट् कर्तुः प्रथमभक्षः इति मीमांसा सूत्रस्य व्याख्या प्रसंगे "प्रभा" कारेण लिख्यते चेत् ऋत्विजो हविःशेषं भक्षयन्ति । अत्र शाब्दिकों का प्रश्न—अये विपक्षिन् राज पुरुषः में यदि लक्षणा करेगें तो वह सन्वन्धी में होगी या सम्बन्ध में । नाद्यः=सम्बन्धी में लक्षणा नही कह सकते । राजपुरुष इस सम स का राज्ञः पुरुषः इस विरुद्ध वाक्य के साथ विरोध होगा । क्यों कि समस्त पद के समान अर्थ वाले वाक्य को विग्रह कहते हैं । यदि सम्बन्धी में लक्षणा करते हैं । तो राज सम्बन्धी अभिन्नः पुरुषः की प्रतीनि होगी, और वाक्य में राज सम्बन्ध राज पुरुषः ऐसा अर्थ होगा । नो समास और व्यास का समानार्थकत्व नष्ट हो जाऐगा । शक्ति निर्णय भी नहीं हो पायेगा । यदि सम्बन्ध में लक्षणा करते हैं । तो राज सम्बन्ध रूप हो पुरुष है । ऐसा अनिष्ट बोध होने लगेगा । क्योंकि विरूद्ध विभक्ति रहित हो प्राति पदिकार्थों का अभेद अन्वय होना व्याकरण का सिद्वान्त सिद्ध हैं । इसी लिए समास में पङ्कज शब्द की तरह भिन्न शक्ति माननी चाहिए । इत्यादि वैयाकरण भूषण में विस्तृत विवेचना की गई हो ।

अत एव "वषट्कर्तुः प्रथमभक्षः" इत्यत्र न भक्षमुद्दिश्य प्राथम्यविधानं युक्तमेकप्रसरत्वभङ्गापत्तेरिति तृतीये, "त्र्यङ्गैः स्विष्टकृतं यजति" इत्यत्राङ्गानुवादेन त्रित्वविधानं न युक्तम्, एकप्रसरताभंगापत्तेरिति दशमे च निरूपितं संगच्छते ।, संगच्छते चारुणाधिकरणारम्भः ।अन्यथा "अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इत्यत्रारुणपदवदितरयोरप्येकपदत्वादिगुणमात्रवाचकतयाऽमूर्तत्वात्क्रीणातौ करणत्वासंभवस्य तुल्यत्वादारुण्यस्यैव वाक्याद्भेदशङ्काया असंभवादिति प्रपञ्चितं भूषणे । तस्मात्समासशक्तिपक्षो जैमिनीयैरवश्याभ्युपेय इत्यास्तां विस्तरः ।। ७ (३४)

अतएव=विशिष्ट शक्ति स्वीकर करने पर "वषट् कर्तुः प्रथम भक्षः" इस मीमांसा सूत्र में केवल भक्ष को उद्धेश्य करके प्राथम्य का विधान युक्त होता हैं। और एक प्रसरता=मिले हुए अनेक विषयों को ज्ञान कराने वाला एकार्थी भाव के भङ्ग की सम्भवना भी होती हैं। भक्ष को उद्देश्य करके प्रथमता के विधान के अभाव की उपपत्ति होगी। विशिष्ट शक्ति मानन पर। इस विषय में "वषट् कर्तुः प्रथम भक्षः इस मीमांसा सूत्र के व्याख्या प्रसङ्ग में वाक्य भेद करके सम्बन्ध जोड़ते हैं। तो समास भी उत्पन्न होगा। अन्वय भी सम्भव नहीं होगा। ऐसे ही "त्र्यङ्गैं स्विष्ट कृत यजते" इस वाक्य में अङ्ग को उद्देश्य करके त्रित्व का विधान युक्त नहीं होता। क्यों कि यहाँ पर भी समास होने से एक "प्रसरता" भङ्ग की सम्भावना से अङ्ग को उद्देश्य करके त्रित्व का विधान नहीं माना जाता। और भीमांसक ग्रन्थ भी अनुपपन्न होता है। मीमांसक ग्रन्थ के दसवें अध्याय में सङ्गति ठीक बैठाई गई है। और अरूपाधिकरण का आरम्भ भी सङ्गत होता है।

अन्यथा=यदि विशिष्ट में शक्ति स्वीकृत न होती, तो अरुणया एक हायन्या पिङ्गाक्ष्या, सोमं क्रीणाति" इस वाक्य में अरूण पद की भाँति एक हायन (एक वर्ष) और पिङ्गाक्षी पद में भी गुण मात्र की वाचकता के अमूर्त्त होने के कारण क्रीणाति क्रिया में करणत्वेन अन्वय तुल्य होने से आरुण्य ही की वाक्य से भेद की आशङ्का असम्भव होगी। जब विशिष्ट में शक्ति मानते हो तो समास के दोनों स्थलों में विशिष्ट शक्ति होने सें कीणाति क्रिया के साथ साधन रूप से अन्वय होता है। तथापि आरुण्य ही की वाक्य भेद शंका उत्पन्न होनी है। ये बात वैयाकरण भूषण् में प्रपञ्चित है। इसलिए जैमिनीय आदि मीमांसकों को भी समास में अतिरिक्त शक्ति पक्ष स्वीकार करना उचित है। जिससे शक्ति विषयक वाद-विवाद निर्मल हो सकता है।

अन्यवाक्येन प्राप्तं यद्भक्षणं तदुद्देश्यं मत्वा वषट् कर्तुः प्रथमभक्षः अस्यां श्रुतौ आप्त प्राथम्य विधानं स्यात् सिद्धान्तस्तु वषट्कर्तुः = उच्चारयितुः प्रथमं भक्षणं विधेयमिति। विधेयाविमर्शे आवश्यकः अतएव प्रथम भक्ष इत्यत्र समासो भवति एकार्थीभाव सम्भवात्। यथा पण्डितो ब्राह्मण, इत्युच्चारणे य पण्डितः स ब्राह्मण इति नियमेन वुध्यते। तत्रैव पण्डित ब्राह्मण इति समासे कृते सति सोऽर्थो: न प्रतीयेते।

विधेयाविमर्शदोषः साहित्यिकैरुक्तः यदि विशिष्टशक्तिस्वीकृतिरकरिष्यत् तदा विधेयाविमर्श दोषो नाभविष्यत्। 'त्र्यङ्गैः स्विष्टकृतं यजेत्' इत्यादि वाक्ये अङ्गानुवादेन = अङ्गमुद्दिश्य — त्रित्व विधानं न युक्तम्) यतः अत्रापि समासे कृते = एक प्रसरता = एकार्थीभाव बोधजनकता उच्छिद्यते। = अतोऽङ्गमुद्दिश्य न त्रित्वविधानम् = अयं मीमांसाग्रन्थोऽनुपपद्यते = इदमपि मीमांसाग्रन्थे दशमाध्याये निरूपितं = चर्चितमस्ति। सङ्गच्छते च — एकप्रसरतारूपैकार्थीभावेसति अरूणाधिकरणारम्भः = सिद्धयति तदित्थं अरूणया पिङ्गाक्षैकहायन्यासोमं क्रिणाति। अत्र सन्देहः आरुण्यपदं एकहायन्यादि विशेषणं, क्रणाति विशेषणं वेति सन्देहे आरुण्यं (रक्तिमा गुणः अमूर्तश्च तेन क्रयणे करणत्वं न संभवति, क्रयणस्य द्रव्याधीनत्वात् उक्त वाक्ये आरुण्य पदमिव अन्य पदानामर्थात् एकं हायनंयस्या सा एकाहायनी पिङ्गेऽक्षिणोयस्या सा पिङ्गक्षी शब्दाः अपि एकाब्दत्वं = गुणमात्र वाचकाः भविष्यन्ति। एकाब्दत्वं गुणः अमूर्तश्च। तेन कारणेन क्रिणातिना सह करणत्वेनान्वयस्तुल्यः केवलमारुण्यस्यैव वाक्याद् भेदशङ्का असम्भावयिष्यते। यदाविशिष्टा मन्यते तदा समासस्य स्थलद्वये = द्रव्यविशिष्टशक्तिः एकहायन्या पिङ्गक्ष्या इत्युभयत्र पदार्थयोः क्रिणतिना सह करणत्वेनान्वयः सन्नपि आरूण्यस्यैव वाक्यभेदशङ्का असम्भवा एकार्थीभावपक्षे तद्व्याख्यानं सङ्गतं भविष्यति। तस्मात् = अरूणाधिकरणविरोधात् समासेशक्तिरिति पक्षः जैमिनीयैरपि स्वीकर्तव्य इति।

ननु समास स्थले समासव्यासयोः सानार्थत्व नियमः। राजपुरुष इत्यादि स्थले विग्रह वाक्यसमासयोः समानार्थत्वानुरोधात् राजाचासौ पुरुषश्च इत्येव विग्रह उचितः। यदि राज्ञः पुरुष इति विग्रहश्चेत् समानार्थत्व भङ्ग स्यात्। एवं चित्रगुरित्यत्र चित्राणां गवांमयमित्येव विग्रह समासार्थानुरोधात्। यदि चित्रागावो यस्येति विग्रश्चेति समानार्थत्वभङ्गः यतः समानार्थत्वञ्च — तुल्य विशेष्यत्वप्रकारक प्रतीतिजनकत्वम् = यद्यपि प्रथमान्तानां वहुव्रीहिरेवेति शेषो वहुव्रीहि सूत्रघटकशेष पदाल्लभ्यतें। तथापि पक्षे चित्रागावौ यास्येति विग्रहोऽपि लभ्यते। एवं षष्ठी सूत्रस्य समासविधानसामर्थ्यात् राज्ञः पुरुष इति विग्रहोऽपि सम्भवएव। समासे कृते राजपुरुष इत्यस्य राजाभिन्न पुरुष- इति समासार्थः अयमेवार्थः राजाचासौ

राजपुरुष इत्य दि स्थल मे समान अर्थ के अनुरोध "राजा चासौं पुरुषश्च" ऐसा विग्रह करना उचित है। राज्ञः पुरुषः ऐसा विग्रह करने पर समानत्व भङ्ग होगा। ऐसे ही 'चित्रगुः' यहां पर 'चित्र गौओं का यह स्वामी' यही विग्रह उचित है। यद्यपि

'राजपुरुषः' इत्यादौ राजा चासौ पुरुश्चेत्येव विग्रहः । 'चित्रगुः' इत्यादौ च चित्राणां गवामयमित्येव, समानार्थत्वानुरोधात् । यद्यपि प्रथमान्तानामेव बहुव्रीहिरिति "शेषो बहुव्रीहिः" इति सूत्राल्लभ्यत इति प्रथमान्तं, पक्षे वाक्यं 'चित्रा गावो यस्य' इत्येवं संभवत्येव, "षष्ठी" इति समासविधानाद् 'राज्ञः पुरुषः' इति पक्षे वाक्यं, तथाऽपि तस्य न विग्रहत्वं भिन्नार्थत्वात्, किं तूक्तस्यैवेति मीमांसकाः । तान्प्रसङ्गान्निरस्यति—

आख्यातं तद्धितकृतोर्यत्किचिदुपदर्शकम् ।
गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः ॥८॥ (३५)

तद्धितकृतोर्यत्किचिदर्थबोधकं विवरणम् आख्यातं, तत्र विपर्ययो दृष्टः । तथा हि—'आक्षिकः' 'कुम्भकारः' इत्यत्राक्षकरणकव्यापाराश्रयः, कुम्भानुकूलव्यापाराश्रय इति बोधः । 'अक्षैर्दीव्यति' 'कुम्भं करोति' इत्यत्राक्षकरणिका देवनानुकूला भावना, कुम्भोत्पत्त्यनुकूला भावनेति बोधः कृत्प्रत्यये कारकाणमाख्याते भावनायाः प्राधान्यं वदतो मीमांसकस्यापीति गुणप्रसानभावांशव्यत्यासो न विवरणत्वबाधक इति नात्र पाक्षिकस्य 'चित्रा गावो यस्य' इत्यादेर्विग्रहत्वे बाधकमस्तीति भावः ॥८॥ (३५)

❀

पुरुषः इति विग्रहे वाक्ये प्रतिपादितं भवति । समासदशायां षष्ठी सूत्रानुरोधात् राज्ञः पुरुषः इति वाक्यमपि तिष्ठति । परन्तु विग्रहत्वं तत्र न तिष्ठति । भिन्नार्थत्वसम्भवात् = समानार्थाऽभावात् । किन्तूक्तस्य = चित्राणां गवामयं, राजाचासौ पुरुष, एवेति–( प्रथमान्त ) चित्रादि पदघटितस्य व्यवच्छेदकः विग्रहः शक्यते । अस्य मीमांसक निर्देशस्य खण्डनार्थवैयाकरणैः तर्कः दीयते आख्यातमिति-तद्धितकृतोः = तद्धितप्रकरणे कृदन्तप्रकरणे च यत्किमपि उपदर्शकं = अर्थबोधकविवरणं = व्याख्यनम् आख्यातं = तिङन्तंतिङन्तघटितविवरणं गुणप्रधानभावादौ = विशेषण विशेष्यभावप्रसङ्गे तत्र सर्वत्र विपर्ययः = व्यतिक्रमोदृष्टः । अर्थात् विशेषण विशेष्यभाव व्यत्यासो दृष्टः । सर्वंसोदाहरणंविवृणुते—तथाहीति—अक्षैर्दीव्यति, आक्षिकः

तेन दीव्यतीति कर्तरि ठक् अत्र अक्ष करणको व्याराश्रय इत्यर्थः । अक्षकरणिका देवनानुकूलाभवनेति विपर्ययः । एव कुम्भ करोतीति कुम्भकारः, कर्तयंण् । कुम्भोत्पनुकुल व्यापाराश्रः । एवं प्रत्य यार्थ प्रधानकः शाब्दबोधो दृश्यते । अत्रापि प्राधान्याप्राधान्ये विपर्ययो दृश्यते । चित्राणां गवामयमिति विग्रहो भाष्यवार्तिकविरुद्धः । तत्र दृष्टो विपर्ययः इत्ययमर्थो यत् कर्त्रादिमुख्यविशेष्यबोधजनकं विग्रहवाक्यम् भावना मुख्यबोधजनकत्वं कृत्तद्धितादेः इत्यादि दृष्टम् । विपर्ययो द्विधा देवदत्तस्यस्वभावविपर्ययः इति समानाधिकरणः प्रथमः । द्वितीयस्तु चैत्रस्वभावात् मैत्रस्वभावो विपरीतः एवं विवरणविग्रीयमाणयोः भिन्नार्थत्वेऽपि विग्रहस्य वाचकता न दृश्यते । ननु तिपस्तत्रापि कर्तृलक्षकतया अक्षकरणव्यापाराश्रय इति बोधान्न समानार्थत्वभङ्गः तदाह कृत्प्रत्यय इति–कारकाणां=कर्त्रादीनां प्राधान्यं तथा तिङन्त स्थले भावनायाः प्राधान्यं बदतां भीमांसकादीनां गुणप्रधानभावांशव्यत्यास=प्रधानाप्रधानयोः वैपरीत्यम् । विशेष्यविशेषणभाव वैगुण्यम् वित्ररणस्य न वाधकत्वम् । अतोऽत्रापि चित्रागावो यस्य, राज्ञः पुरुपः इत्यादि प्रथमान्तो का हं। बहुव्रीहि सभास "शेपां वहुब्रीहि" सूत्र के शेप पद से लब्ध होता है । तथापि पक्ष में चित्रा गावो यस्य ऐसा भी अर्थ होता है । इसी तरह "षष्ठी" सूत्र के समास विधान से राज्ञः पुरुषः' वाक्य भी सम्भव है। पक्ष में वाक्य भी रह जाता है। राजा भिन्न पुरुप यह समास का अर्थ हो वही अर्थ राजा चासौ पुरुषश्च इस विग्रह से भी प्रतिपादित है। समास दशा में "षष्ठी" सूत्र के अनुरोध से वाक्य भी रह जाता है। तथापि विग्रह तो नहीं रह जाता, क्योंकि वह भिन्न अर्थ है। और उक्त वाक्य ही विग्रह हो सकता है इस मीमांसक के निर्देश को खण्डित करखे के लिए वैयाकरण सिद्धान्त उपस्थित करते हैं ।

जैसे तद्धित और कृदन्त में जो कुछ अर्थ का पोषक विवरण प्रतिपादित है। वहाँ पर विशेष्य भी देखा गया हो विशेषण विशेष्य भाव का व्यत्यास दृष्ट हो वह गुण प्रधान भाव से समझाना चाहिए। जैसे "अक्षै र्दीव्यति इति आक्षिकः" यहां पर अक्षकरणक क्रियाश्रयः अर्थ है। कुम्भकारः का कुम्भ की उत्पत्यनुकूला क्रिया का आश्रय ऐसा अर्थ है। यहाँ पर प्रत्ययार्थ प्रधान शाब्दबोध देखा गया है। तथा च अक्षै र्दीव्यति 'यहाँ पर अक्षकरणक देवनानुकूला क्रिया इस तरह शाब्दबोधीय प्राधान्य और अप्रधान्य में विपर्यय भी दृष्ट है। अतः विवरण और विग्रीयिभाण के भिन्न अर्थ होंने से उनके विग्रह का बाधक नहीं होता ऐसे ही कृत् प्रत्यय स्थल में कारकों का प्राधान्य तथा तिङन्त स्थल में भावना का प्राधान्य स्वीकार करने वाले मीमांसक के मत में भी विशेष्य विशेषण भावांश के व्यत्यास में विवरण बाधक नहीं होते। न तो पाक्षिक ही दोष होता है। चित्रा गावोऽस्य राज्ञः पुरुषः" इत्यादि वाक्यों के विग्रहत्व में कोई बाधक नहीं है।

नन्वस्तूक्तरीत्या सर्वत्र समासे शक्तिः, अस्तु च तथा विग्रहस्तथाऽपि षष्ठीतत्पुरुकर्मधारयोः शक्तिमत्त्वाविशेषात् निषादस्थपत्यधिकरणसिद्धान्तसिद्धिर्न स्यादित्यत आह—

पर्यवस्यच्छाब्दबोधार्दविदूरप्राक्क्षणस्थितेः ।
शक्तिग्रहेऽन्तरङ्गत्ववहिरङ्गविचिन्तनम् ॥९॥ (३६)

❀

वाक्ये, विग्रहत्वस्य बाधकं नास्ति कश्चित् । प्रकृति प्रत्यार्थयोः प्रत्यार्थस्य प्राधान्यमिति न्यायेन भावप्रधानमाख्यातमिति निरुक्तार्त ऋषिवचनात् विपर्ययो युक्तएव ।

नन्वस्तूक्तरीत्या—समास विग्रहयोः विपर्यय दर्शनात् सर्वत्र समासे एकार्थीभावरूप शक्तिरस्तुनाम तथा विग्रहः चित्रागावोऽस्य राज्ञः पुरुष इति रूपोऽस्तु तथापि षष्ठीतत्पुरुषकर्मधारयोः = उभयत्र एकार्थीभावात्मिकायाः शक्तेः दर्शनात् शक्तिमत्वे ( एकार्थीभावे ) अविशेषात् = तुल्यत्वात् निषादस्थपत्यधिकरण सिद्धान्तस्य सिद्धिर्न भविष्यति = विप्रात् शूद्रायां जातो निषादः सिद्धान्तस्य = प्रमाणंनिश्चितार्थस्य सिद्धिः = साधुत्वोपयोगिनी निष्पत्तिः यथा—वसन्ते निषाद स्थपतिं याजयेत् इति श्रुतिः कः निषादस्थ पत्यधिकरण सिद्धान्त, इति जिज्ञासायां किमत्र षष्ठीतत्पुरुषः बहुव्रीहिः कर्मधारयो वेति सन्देहे । निषादश्चासौ स्थपतिश्चेति कर्मधारय समासे अपूर्वविधिकल्पनाप्रयोज्यगौरवं ज्ञात्वा निषाद एव स्थपतिः येषामिति बहुव्रीहिसमासं विग्रहवाक्ये लक्षणाया कारणेन गौरव ज्ञात्वा लाघवात् षष्ठी तत्पुरुष एव भवतीति, निषदस्य स्थपतिरिति पूर्वपक्षः । सिद्धान्तेतु तत्पुरुसमासेऽपि पूर्वपदे लक्षणायाः सम्भवात् । कर्मधार यापेक्षया गौरवं मत्वा लाघवात् कर्मधारयसमासो मन्तव्यः । यद्यपि कर्मधारये अपूर्वविद्याकल्पनरूपं गौरवं तथापि फलमुख गौरवं न दोषावहम् । फलं लाघवरूपं मुखं = आदौ यत्र तत् न दोषाधायकम् अतः कर्मधारय समासस्तत्र सिद्धान्तितः । तदेव स्पष्टीकर्तु समास शक्ते रन्तिमाकारिका भूषणकारेण विवेच्यते । पर्यवस्यतीति पर्यवस्यंश्चासौ-फलमुखीभवन्शाब्दबोधश्च तस्मात् = फलोन्मुखशाब्दबोधात् अविदूरश्चासौ प्राक्क्षणश्चाविदूरप्राक्क्षणः=अव्यवहितपूर्णवर्तिकारकः तस्याः अर्थात् फलित शाब्दबोधस्याव्यवहितंप्राक्क्ष णकालिकं लाघवमादाय अधिकरणस्य=उक्ताधिकरणस्य अविरोधः अर्थात् ममासजन्यः शाब्दबोधस्तस्मादव्यवहितं पूर्णकालिकं शक्तिज्ञानं तन्निष्ठान्तरङ्गवहिरङ्गभावस्य चिन्तनमादाय विस्तारिता व्याख्यातु—

(१) निषादस्थपतिशब्दस्य समासे एकार्थीभावरूपशक्ति पक्षे निषादश्चासौ स्थपतिश्चेत निषादरूपे, (२) निषादानां=निषादजातीयानां स्थपतौ=निषादसम्वन्धिस्थपतौ

निषादों का स्वामी

**पर्यवस्यंश्चासौ शाब्दबोधश्च तस्माददूरश्चासौ प्राक्क्षणश्च तदानीतनलाघवमादायाधिकरणाविरोध इत्यर्थः । अयं भावः—निषादस्थपतिपदं समासशक्तिपक्षे निषादरूपे निषादानां च स्थपतौ निषादस्वामिके पुरुषान्तरे चेत्येवं सर्वत्र शक्तत्वान्नानार्थकम् । तथा च "नानार्थे तात्पर्याद्विशेषावगतिः" इति न्यायेन तत्कल्पनायां पदद्वये पूर्वोपस्थितार्थ एवोपस्थित्यादिलाघवात् तत् कल्प्यत इति । परेषाम्मते सतितात्पर्ये 'यष्टीः प्रवेशय' इतिवल्लक्षणाया दुर्वारत्वात्तात्पर्यमेव कल्प्यकोटावव शिष्यत इति दिक् ॥९ (३६)**

❀

निषादः स्थपतिः ( स्वामी ) यस्येति बहुव्रीहौ पुरुषान्तरे पुरुषाधारे वा सर्वत्र एकार्थीभावरूप समुदायशक्तिस्वीकारत् शक्तत्वात्=शक्तिसत्वात नानार्थत्वम्=अनेकार्थता सम्भाव्यते । अस्थांस्थितौ नानार्थे=अनेकविधार्थे तात्पर्यात्=इष्टार्थावधारणात् विशेषावगतिः बुद्धिस्थग्रहः । इति न्यायेन तत्कल्नायां=तात्पर्याज्ञाने पदद्वयेन पूर्वोपस्थितार्थ एव समासशक्तिज्ञानात् पूर्वा पदद्वयेन उपस्थितेः निषाद

पूर्वोक्त रीति में सर्वत्र समास में शक्ती भलेहीस्वीकृत हो वैसा विग्रह भी भले ही ठीक हो तो पर भी षष्ठी तत्पुरुष और कर्म धारय में शक्तिमत के विषय में कोई विशेषता या भेद न होने से निषादस्थपत्यधिकरण सिद्धान्त की सिद्धि नही होगी जैसे वसन्ते निषादस्थ पतिं, याजयेत यह श्रुति है इस पर शंका होतौ है कि निषादस्थ पति शब्द में षष्ठी तत्पुरुष है या बहुव्रीहीं या कर्म धारय इस संशय पर कर्म धारय समास में अपूर्व विधि कल्पना जन्य गौरव समझकर लाघव के कारण षष्ठी तत्पुरुष माना । यह पूर्ववत् हुआ । षष्ठी तत्पुरुष में भी लक्षणा समान होने से कर्मधारय की अपेक्षा गौरव । लाघवात् कर्मधारय ही निश्चित किया । फलमुख गौरव दोषाधायक नहीं हीता । अतः कर्मधारय समास को सिद्धान्तित किया इसी को स्पष्ट करने के लिए समास शक्ति की अन्तिम कारिका "पर्यवस्यतीति"—परिपूर्ण होता हुआ शाब्दबोध उससे अविदूर=अति सभीपस्थ जो प्राक्कालिकक्षण उसकाल के लाघव को लेकर अधिकरण का विरोधाभाव निश्चित किया गया है । भाव यह है कि निषाद स्थपति शब्द का समास में शक्ति स्वीकार करनें पर निषाद रूप में तथा निषाद सम्बन्धि स्थपति में या निषाद स्वाभिक पुरुषाधार में सभीः अर्थों की प्रगति सर्वत्र होने से नाना अर्थ की आपत्ति सम्भावित होती है ।

प्राभाकरी हिन्दी टीकायां समास समासशक्ति. प्रकरणम् ।

रूप स्थपतौ एव। इत्यर्थो लाघवात् उपस्थितार्थेऽन्तरङ्गत्वसत्वात् प्रथम उपस्थित्यपि लाघववशात् कर्म धारयसमासजन्यो योऽर्थः तस्य प्रतीतिनिमित्तिका अपूर्वा विधिकल्पना उचितैवास्ति। अन्तरङ्गत्वात्।

ननु मीमांसकसिद्धान्ते समासे नानाशक्तेरभावात् कथं नानार्थकल्पना काच विशेषार्थावगितिरिति अतआह परेषामिति—नैयायिकादीनां मतेसति तात्पर्ये= तात्पर्यमिष्टं चेत् यष्टीः प्रवेशय इत्यत्र यष्टिपदस्य यष्टिधारिणि लक्षणायाः= षष्ठ्यर्थ सम्बन्धविशिष्टे अन्यपदार्थ बिशिष्टे च दुर्बारत्वात्=तात्पर्यग्राहिकायाः लक्षणायाः वारयितुमशक्यत्वात्। एवं निषादस्थपतिरित्यत्रापि षष्ठ्यर्थ सम्बन्ध बिशिष्टे अन्यपदार्थबिशिष्टे च लक्षणा भविष्यत्येब। कल्प्यकोटी=कल्पनायां तात्पर्यमेब अवशिष्यते=अर्थ निर्णायकमिति भावः। हर्युक्तेषु संयोगः बिप्रयोगादिषु तात्पर्य ग्राहकाः सम्यगुक्ताः। ननु निषादस्थपतिं याजयेदित्यत्र स्थपतिशब्दः स्वामिपर्यायः श्रेष्ठपर्यायो बा उमयथापि स्थपति शब्दार्थस्य नित्य सम्बन्ध सापेक्षत्वेन षष्ठीसमास एव व्याप्यः। न तु कर्मधारयः तदाह दिगिति—दिगर्थस्तु जैमिनिना अतएव स्वारसात् लिङ्गदर्शनाच्च इति हेत्वन्तरमुक्तम्। लिङ्गञ्च दृश्यते कूटञ्चं दृश्यते शवरस्बामिना कूटं हि निषादानामेवोपकारकम् नत्बार्याणाम् तथा च तन्निषादानामेव स्वमिति भाष्ये व्याख्यातम्।

इति समास शक्ति निरूपणम्.

प्रकरणावतरणम्—अथ शब्द आरम्भार्थकः सङ्गत्यर्थकः सम्बन्धार्थकोऽनन्तरार्थकादिश्च। प्रकरणस्य प्रकरणान्तरेण सह सम्बन्धसंयोजनं सङ्गतिः पूर्वप्रकरणेऽतिरिक्ता जहत्स्वार्था एकार्थी भावरूपा वृत्तिः सप्रमाणमुक्ता। स पदार्थयोः संयोजिका, एकार्थ बौधिकाच। व्यापेक्षायां पृथकपदार्था शक्तिः। सा कीदृशी किंतत्स्वरूपमिति निर्णयाकाङक्षयांमह अथेति, पदार्थयोः संयोजनेन संश्लिष्टार्थिका बृत्तिः का त्तस्याः किमहत्वं अतः आह शक्तिः, शक्लसाभर्थ्ये, सामर्थ्यंशब्दार्थोभयस्थो धर्मः तस्मातकर्तरि क्तिन्। एवं शक्नोति पदार्थौ संयोजयति बोधविषयतांप्रापयति या सा शक्तिः तांविना न कोप्यर्थो स्फुरति। यथा कस्यचिन्नाम् ज्ञातमस्ति तस्य स्वरूपमपि समक्षमुपस्थितम् वर्तते परन्तु नामनामिनोः सयोजिका शक्तिज्ञाता नास्ति तदा पृच्छति कोऽयंमिति सम्बन्धे ज्ञाते सति तुष्यति अयमेवेति। अतएव शाब्दबोधे वृत्ति विशिष्टज्ञानं कारणमुक्तं येषांपदार्थानामर्थ परिचायिकायाः वृत्तेः—शक्तेः लक्षणायाः वा अभिज्ञानंनास्ति। तेषां पदार्थोपास्थितिः शाब्दिकं ज्ञानञ्च न जायते। अतस्तस्याः निर्णयः प्रारम्भ्यते।

इन्द्रियों के द्वारा अपने स्वरूप, शक्ति, अर्थों को प्रकट करने की शक्ति अनादि है।





## अथ शक्तिनिर्णयः ।

शब्द का सामर्थ्य, ताकत

शक्तिप्रसङ्गात्तस्याः स्वरूपमाह—

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।**
**अनादिरर्थैः शब्दानां सबन्धो योग्यता तथा ॥१॥(३७)**

❀

शक्तिप्रसाङ्गात् = एक संवन्धिज्ञानम पर संबन्धिनम् स्मारयति। समासेखलु भिन्नैवशक्तिः पङ्कजशब्दवदिति वचनेन समासेऽतिरिक्ता शक्तिरुक्ता, तांश्रुत्वा व्यासे पृथक शक्तिरनुभूयते तस्याः स्वरूपं स्मरण विषयः शक्तिरूपो धर्मः स्वसमान जातीयान् प्रबोधयति देवमनुष्यादिनिष्ठान् धर्मान् शक्तीश्च स्मारयति। स्मृतायाः शक्तेरूपेक्षि मनर्हत्वात्प्रसङ्गसङ्गतिमाह तस्याः = देव मनुष्यादि साधारणी भूतायाः शक्तेः स्वरूपमाह। यतो हि धर्म विशिष्ट शाब्दबोधे नरत्व विशिष्टो यः शब्दः तदर्थ विषयक शब्दजन्यज्ञानं प्रति तत्धर्मावच्छिन्न निरूपित वृत्ति विशिष्टं पदज्ञानं कारणम् नरत्वावच्छिन्न नर निरूपिता या वृत्तिः शक्तिर्लक्षणा वा तद्विशिष्टं यत्पदं = नर पदं तस्य ज्ञानं नरत्व विशिष्टनरज्ञानम् कारण। वृत्तिसहितपद पदार्थयोःरुपस्थितिरेव बोधजनक व्यापारोऽस्ति। वृत्तिम् शब्दार्थयोर्व्यवहार कारणम् बिना बोधोऽसम्भवः। विशिष्ट ज्ञानम् प्रति वेशेषणज्ञानस्य कारणत्वात्-घटत्वविशिष्टघटज्ञानंप्रति घटत्वज्ञानं कारणम् विशेषणतयावृत्तेः ज्ञानस्य आवश्यकत्वात्। वृत्ति लक्षणन्तु शब्द जन्य ज्ञाने य उपायभूतसबन्धः स वृत्तिः, पद पदार्थयोः संयोयक संबन्धो वृत्ति। सा वागर्थाविव सीतारामाविव शब्दार्थौ संयोजयति नैयायिकमते सा वृत्तिर्द्वधा शक्तिलक्षणा च, तन्मते शक्तिः ईश्वरसंकेतरुपा, अर्थे पद संकेतरुपा च तत्रार्थवोधकम् पद वाचकम् शक्त्या बोध्योऽर्थ-

## !! अथ शक्ति निर्णयः !!

**प्रकरणावतरणम्**—समास में पङ्कज शब्द के दृष्टान्त से भिन्न शक्ति स्वीकार की गयी। समास सम्बन्धी शक्ति का ज्ञान स्वतन्त्र शक्ति का स्मारक है कि शक्ति क्या वस्तु है। शब्द और अर्थ की संयोजिका शक्ति है। यदि शब्द का ज्ञान हो और अर्थ भी प्रत्यक्ष हो फिरभी पूँछते हैं कि क्या नाम है। यह सम्बन्ध की जिज्ञासा हुई, नाम और नामी का सत्य ज्ञान होने से पूर्ण बोध होता है। शब्द, अर्थ, सम्बन्ध, तीनों के पदार्थ ज्ञान से शब्द बोध रूप फल उत्पन्न होता है। सिद्धे शब्दार्थ सम्बन्धे यह भाष्य है। शब्द और ( अर्थ का उपयोगी बोध कराने वाले धर्म का नाम शक्ति है।

वाच्यः। इदानिंतनीयम् संकेतः परिभाषा शास्त्रकारादि संकेतोवा, परिभाषया अर्थबोधकम् पदम् परिभाषिकं व्यवहृयते यथा घी नदी वृद्धिगुणादिपदम्। यत्पदं शक्त्या परिभाषया वा अर्थंन वोधयति किन्तु सादृश्यादिना तात्पर्यानुपपत्यावावोधकं तल्लाक्षणिकम्। गङ्गायां घोषः, सभायां चन्द्रादौ तथा दर्शनात्। प्राचीन वैयाकरण मते शक्ति स्वरूपमाह त्रिधासु बृत्तिषु शक्तिज्ञानं विना वाच्यार्थ सम्बद्धायाः लक्षणायाः व्यञ्जनायाश्चासम्भवात् कारणस्याभावात प्रथमं शक्तिस्वरुपायाः वृतें व्याख्यानम् क्रियते। आदौ लक्षणम् प्रतिपाद्यते, लक्षणप्रतिपदिका कारिका इन्द्रियाणमिति—इन्द्रियाणां = श्रवणत्वक्चक्षुर्जिह्वाघ्राणानां स्वविषयेषु = शब्दस्पर्शरूपरसगन्धेषु ग्रहणरूपा यस्येन्द्रिस्य यो विषयः तत्तमेव स्वभावतोऽनादिकालतश्च गृह्णाति। एवं रूपा बोधजनकताशक्तिः सृष्टेरारम्भकालादेव दरौदृश्यते। चक्षुरिन्द्रियस्य रूपविषयग्राहिणी अनादिकालिकी बोधजनकता शक्तिरस्ति। एवं श्रवणैन्द्रियस्य शब्दविषयग्राहिणो रसनेन्द्रियस्य रसविषयग्रहकता त्वगिन्द्रियस्य स्पर्श विषयभेदिका, घ्राणेन्द्रियस्य गन्धविषयविद्योतिका अनादिकालिकी बोधजनकता शिक्तिः अनादिराम्भिकाऽस्ति। एवंदेवहिन्दुयवनाङ्गलपशुचेतनजडानामर्थैः सह योऽनादि कालिकबोधजनकत्व सम्बन्धः सैव योग्यता शक्तिः। योगे = पदपदार्थयोः सम्वन्धे जातम् योग्यम्। तस्यभाव योग्यता शाब्दार्थसम्बन्ध ज्ञापिका शक्तिरित्यर्थः एतेन प्राचीन वैयाकरणमते बोधजनकता शक्तिः सिद्धा।

न च पदपदार्थयोः सम्बन्ध एवशक्तिः। सम्बन्धश्चै द्विष्ठत्वे सति विशेष्यविशेषणभावभिन्नत्वेसति, विशिष्ट बुद्धि नियामकत्वरूपा। अर्थात् (शक्तिः) द्वयोः (शब्दार्थयोः) मध्ये तिष्ठतीति द्विष्ठः न विशेषणं न च विशेष्य इति वक्तुं शक्यते। किन्तु अर्थविशिष्टशब्द एतादृश्याः बुद्धेः विशिष्टाया नियन्त्रको भवति। अस्यां स्थितौ बोधजनकता (ज्ञान कारणता) केवलं शब्दे तिष्ठति। अतो बोधकारणतायां द्विष्ठत्वाभावे सति पदपदार्थसम्बन्धरूपं शक्तिस्वरूपम् नानुभूयते। कथम् बोधः जनकता शक्तिः प्राचीनैरुच्यये ?। बोधजनकतायाः द्विष्ठत्वं साधयति यद्यपि बोधजनकता (योग्यतारूपाशक्तिः) स्वारूपसम्बन्धेन शब्दे विद्यते। यतः शब्दएव बोधजनकंस्तस्मिन्नेवबोधकता तथापि सा परिचायकता सम्बन्धेन अर्थेऽपि तिष्ठति। यतः बोध्यार्थं बिना बोध जनकतायाः स्वारस्य भंगापत्तेः। अतो निरूपकतासम्बन्धेननार्थेऽपि मन्तव्या। एवं स्वारूपसम्बन्धनिरूपकतान्यतर। सम्बन्धेन बोधजनकता शब्दार्थोभयनिष्ठा संजाता तेन तस्यां पदपदार्थयोःसम्बन्धत्वमुपपन्नं भवति। अनयैव युक्त्या ईश्वरेच्छाशक्तिरपि ईश्वरमात्रनिष्ठा सती स्वरूप परिचायकतासम्बन्धाभ्यां पदपदार्थोभयस्था संजाता। एवं ईश्वरेच्छायां शक्तेः स्वारूपमिति नैयायिकानामुद्घोषः साधु संगच्छते। तदित्थत्थम् एक

निष्ठाया: ईश्वरेच्छायारुपाया: शक्ते:, द्विष्ठत्वाजन्यसम्बन्धसंसिद्धयर्थं यथा—स्वविषयार्थबोधविषयक बोधजनकत्वसम्बधेन ईश्वरेच्छा शब्दे तिष्ठति अर्थात् स्वं=घटपदं कम्बुग्रीवादि मद्विषयबोधजनकं भवतु। इत्याकारेका ईश्वरेच्छा स्वपदग्राह्या। स्वविषय:=कम्बुग्रीवादिमत् सम्पूर्णव्यक्तिरूपोऽर्थ: अर्थविषयक बोधजनकत्व घटशब्दे। उक्त सम्बन्धेन ईश्वरेच्छा एक पदस्थासंयाता सैव ईश्वरेच्छा स्वविषयबोधवियत्वासम्बधेन अर्थस्था भवति। स्वपदेत ईश्वरेच्छारूपा शक्ति: गृह्यते। तस्या: विषयोवोध: (ज्ञानं) बोधस्य विषयोऽर्थ:। बोध: विषयत्व सम्बधेन ईश्वरेच्छा अर्थगाता भवति अनया रीत्वा ईश्वरेच्छा पदपदार्थोभयनिष्ठा सिद्धा। नैयायिकमतेऽपि तस्य शक्तिमत्वं सिद्धम्।

सामान्य:=इयमीश्वरेच्छा पदविशेष्यिका, अर्थविशेष्यिका च। इदं पद ममुमर्थं बोधयतु, इत्याकारिकापदविशेष्यिका। अयमर्थ: एततृपदजन्यबोधविषयो भवतु, इत्याकारिका अर्थविशेष्यिका। विशेष्या ईश्वरेच्छापिद्विधा। इदं पदं कम्बुग्रीवादिमद् व्यक्तित्वावच्छिन्नार्थबोधजनकं भवतु, इति पदविषेश्यिका। तथैव अयं कम्बुग्रीवादिमद्व्यक्तित्वावच्छिन्नोऽर्थ: घटपदजन्यबोधविपयो भवतु इत्यर्थविशेष्यिका शक्ति:। पूर्वं नैयायिक सम्मता ईश्वरेच्छा शक्ति वैयाकरणे: न मन्यते–यतस्तन्मते आत्माश्रय दोष:, यथा शाब्दबोधरूपं कार्यं कारणीभूताया ईश्वरेच्छाया: आकारे (स्वरूपे) सन्निविष्टम्। शाब्दबोध: पदनिष्ठायाशक्ति: तज्ज्ञानाधीनोपस्थितिजन्यो॰ भवति। यस्मिन्काले नैयायिकै: शक्ति ज्ञानं क्रियते तस्मिन्क्षणे शाब्दबोधरूप कार्यस्याप्रसंगेन=अभावेन—

तादृश शाब्दबोध घटिताया: ईश्वरेच्छा रूपशक्ति स्वरूपमनुपपन्नं भवति। अत ईश्वरेच्छाशक्ति: वैयाकरण दृष्टया अविचारितरमणीयैव। यत: शाब्दबोधरूपं

शक्ति के प्रसङ्ग से उसके स्वरूप का चिन्तन आवश्यक हो गया। शक्ति का लक्षण परिभाषा, स्वरूप आदि का निर्देश करते हैं। जैसे—पाँचो ज्ञानेद्रियों का अपने २ विषय ( रूप, रस, गन्ध, स्पर्श, शब्द ) के बोध कराने की शक्ति अनादि काल से चली आ रही है। नेत्र में रूप विषयक बोध करने की शक्ति, कान में शब्द रसना में स्वाद, नाक में गन्ध, त्वक् में स्पर्श की बोध जनकता शक्ति अनादि कालिक है। ऐसे ही योग्यता शक्ति अमुक शब्द में, अमुक अर्थ के बोध की योग्यता अनादि काल से है। इस प्रकार सभी शब्दों का अपने निश्चित अर्थों के साथ योग्यता रूप सम्बन्ध अनादि काल से चला आ रहा है। इस प्रकार प्राचीन वैयाकरणों के मत में बोध जनकता शक्ति सिद्ध होती है। सभी रूपवान वस्तु में चक्षुरिन्द्रिय से घट पट मठ आदि का बोध कब से हो रहा है। इसका निर्णय एवं आरम्भ अनिश्चित होने से अनादि कहते हैं। विषयों के बोध में योग्यता इन्द्रिय कारणता स्वभावत: आनादि काल से आरम्भ अनिर्णीत है।

**इन्द्रियाणां—चक्षुरादीनां स्वविषयेषु–चाक्षुषेषु घटादिषु यथाऽनादियोग्यता—तदीयचाक्षुषादिकारणता, तथा शब्दानामप्यर्थैः सह तद्बोधकारणतैव योग्यता, सैव शक्तिरित्यर्थः।**

ग्राह्यग्राहक शब्द होता है।

❀

कार्यं ईश्वरेच्छारूपकारण कुक्षिप्रविष्टं दृश्यते। यदा कारणकुक्षौ कार्यं तिष्ठति तदा आत्माश्रयदोषः। तस्मान्निदुष्टं लक्षणं प्रतिपादयन् ग्रन्थकारः करिकां पठति। इन्द्रियाणामिति—चक्षुरादीनां निर्विषयाणां कथं विश्वबोधने सामर्थ्यं यतौहि ज्ञानेच्छायत्न-संस्काराः एव सविषया भवन्ति। अत आह स्वविषयेषु–स्वानि=इन्द्रियाणि तेषां विषयः विश्वपदाथः। यथा = चक्षुषा गृह्यते याक्षुष रूपं, श्रवणेन श्रूयते श्रावणः शब्दः, त्वचा गृह्यते त्वाकः स्पर्श, रसनया आस्वाद्यते रासनो रसः, घ्राणो गन्ध इत्यदिः—

एवमिन्द्रियाणामपि सविषयत्वं सिद्धम्। स्वविषयेषु=इन्द्रियजन्य ज्ञान विषय भूतेषु घटपटमठादिषु यथा = येन प्रकारेण अनादि = अनादिकलिकी सृष्टेरारम्भवती योग्यता=शब्दार्थयोः सम्बन्धरूपाः = तदीयचाक्षुषादि कारणता=विषयबोधीय चक्षुरादिग्रहणहेतुता अर्थबोध जनकता अर्थात् अनादिकालात् इन्द्रियाणां रूपादि विषयेषु प्रत्यक्ष जनकता शक्तिरस्ति। अर्थात् धटादि विषयेषु इन्दियजन्य प्रत्यक्षकारणता शाश्वतमागच्छति। तथा=एवभेव देशकाल घटादीनां शब्दानामपि भूमिसमय कम्बुग्रीवादिमद्व्यक्तित्वावच्छिन्नैरर्थैः सह बोधजनकतारूपा योग्यता अनादिकालिकीबोध्या। सैव शक्तिः शब्दार्थयोः सम्बन्धाभिधायिका। अनादित्वञ्च = इन्द्रियजन्य पूर्वपूर्वबोध ध्वंसकालिकत्वम् = यदा यदा चक्षुरादीन्द्रिय निष्ठज्ञानजनकता तदा तदा तज्ज्ञान पूर्वकालिक तदिन्द्रियजन्य ज्ञानाभाववत्वमनादित्वम्। अथवा चाक्षुषादिव्यापकत्वं पुरुषयत्नानपक्षत्व वा यस्मिन् यत्नस्यापेक्षानास्ति, चाक्षुषत्वादि व्यापकत्वमनादित्वम्। यज्ज्ञानं प्रयत्नसापेक्ष्यंतत् प्रागभावाप्रतियोगित्वमनादित्वम्। तत्सापेक्ष्यं न तु अजन्यत्वम्=अव्यावर्तकत्वात्।

अनादित्वेसति बोधकारणत्वेसति शब्दार्थयोः सम्बन्धत्वं योग्यतेतिप्राचीन वैयाकरण सम्मतलक्षणं सभाजयति। इदानीं पूर्वोक्तं यच्छक्तिस्वरूपं सिद्धं यतोऽनादिभूताबोधजनकता शक्तिरिति। तत्र अनादिभूतम् विशेषणं व्यभिचरितम्, अव्याप्ति सम्भवात्। क्वातिव्याप्तिः आधुनिके देवदत्तादिपदे=इदानीन्तनीये देवदत्तादीनामपि अनादित्वं नास्ति किन्तु सादित्वमेव वर्तते। यत एतत्कलिकैः माता-

**ननु न बोधकारणत्वमनादिभूत शक्तिः, आधुनिकदेवदत्तादिपदे, तदभावात्, अन्यथा पित्रादिसङ्केताज्ञानेऽप्यन्वयबोधप्रसङ्गः; लाक्षणिकातिव्याप्तेश्चेति सङ्केतज्ञानमपि हेतुर्वाच्यम्। तथाचाऽऽवश्यकत्वात् स एव शक्तिरस्तु।**

इस शब्द का ये अर्थ तथा ये अर्थ ज्ञापमान होता है।

पित्रादिभिः ग्राह्यम्। कुचुटुतुपु नामापिदे या बोधजनकता तस्यामनादित्व कथनमुपहासास्पदम्।

यद्यपि मातापित्रादिसङ्केतिते चैत्रमैत्रादिपदेऽपि बोधकारणत्वमस्त्येव। राम पदेन दशरथापत्यस्यैबोधो न तु शबरवल्मीकानाम्। तथापि अनादिभूत बोधकारणत्वं योग्यता, इत्यत्र बोधगतस्य=ज्ञानस्थस्य अनादित्वस्याभावेन बोधगत वशेषणस्याभावः सिद्धयति। तेन अनादित्वविशिष्टबोधकारणताया अभावोः भवति। अर्थात् विशेषणाभावप्रयुक्तविशिष्टाभावो भवति। यत्र विशेषणं नास्ति तत्र विशिष्टमपि न अर्थात् अनादीति विशेषणं न स्यात्तर्हि विशिष्ट बोधोऽपि न स्यात् तस्मात् अनादित्वस्य कारणत्वं सम्भवति।

यदि शक्तिलक्षणेऽनादिभूतं कारणं दीयते, आधुनिके विष्णुमित्रादि पदे इदानीन्तनीयबोधकारणता सङ्केतो वा दृश्यते, न तु अनादिभूता योग्यता तत्र अनादित्वे=पुरुषयत्नापेक्षत्वे विशेषणे सति उपस्थितिर्न भविष्यति उपस्थितिं बिना शाब्दबोधोऽनुपतिष्ठते। एतत्सर्वं स्पष्टीकर्तुमाह अन्यथेति =अनादिकालात् सम्बद्धा या बोधकारणता। सा देवदत्तादिपदेस्वीक्रियते चेत् पित्रादीनां=मातापित्राद्युच्चारितानां संकेतानां=बोधजनकानामज्ञानेऽपि=पित्रादिद्वारा बोधितस्य संकेतस्य ज्ञानंविनाप्यन्वबोधप्रसंङ्गः=अनादिकालिकबोधमात्रेण उपास्थितिसम्भवात्। परन्तु एवं न जायते तत्र सङ्केतज्ञानं कारणं भवति। सङ्केत निरपेक्षस्यशाब्दबोधो न दृश्यते।

ननु बोध कारणत्वमेव शक्तिलक्षणमस्तु नाम। अनादित्वम् न कारणम्। अत एव अनादित्वं न शक्ति शरीरे प्रवेष्टव्यम्। तेन तत्र हेतुता न सम्भाव्यते, किन्तु बोधकारणातायां प्रासिद्धार्थप्रदर्शनमात्रमर्थकम्, आधुनिके नाम्नि अनादित्व विशिष्टायाः करणतायाः अप्रसिद्धतवत्। यदि प्रसिद्धार्थबोधकत्वमनादित्वंस्यात्तर्हिसर्वत्र प्रसिद्धा शक्तिरेवस्यात्। लाक्षणिकेषु पदेष्वपि प्रसिद्धबोधकाणता शक्ति प्रसज्येत। यथा गंगायां घोषः सागरे रामेश्वरम्, सागर पदं राजसगरखातावच्छन्नेशक्तं, तत्रैव प्रसिद्धाशक्तिः तटेलक्षणा, इदीनां तटनिरूपिते सागरपदे शक्ति प्रसंगः सम्भव्यते। इत्येव लाक्षणिकातिब्याप्तिः। तथा च हरि पदं विष्णौशक्तम् हरि रूपोऽर्थः हरि पदबोध्यः इतीश्वरोयः संकेतः ततस्तत्र संकेतस्य ज्ञानं भवति

अत्र हरिरूपार्थ परिचायिकाया (साधिकाया) शक्तेः ज्ञानं जायते । एवं सागर पदे सगरखातानाच्छिन्नार्थ साधकस्य इश्वरीय संकेतस्य ज्ञानं भवति । अर्थात् सगर-कृतखातरूपोऽर्थ विषयः सागर पद शक्यः इत्याकारकस्य संकेतस्य ज्ञानेन सागर पदे खातरूपार्थस्य शक्तिज्ञानं भवति । परन्तु अत्रापूर्वखातरुपोऽर्थः सागर पद-शक्यः । एवं संकेतज्ञाने जाते सति तट रूपार्थसाधिका शक्तिर्न मन्यते । किन्तु अपूर्वखातरूपशक्यार्थसम्बन्धरूपालक्षणा मन्यते । अतः आह संकेतज्ञानमपि हेतु-र्वाच्यमिति । शक्तिज्ञाने संकेतज्ञानं कारणम् तथा च संकेतग्रहसचिवस्यबोधकत्वे नातिव्याप्तिः अपिना = योग्यता ज्ञानमपि कारणं बोध्यम् । तथाच = शाब्दबोधीय कारणतायां संकेतज्ञानस्य हेतुत्वे सिद्धे च संकेत एव शक्तिरिति कथं न मन्येत इदानीन्तनीये चैत्रादिपदे मातापित्रादीनां संकेतोऽस्ति विश्वादौ इश्वरीयः सङ्केतोऽस्ति आवश्यकत्वात—अवश्यापेक्ष्यज्ञानविषयत्वात् तदेतक्षीण सङ्केत-

शंका—पद और पदार्थ का सम्बन्ध ही शक्ति है । वह दो में स्थित रहता है । न विशेष्य है । न विशेषण है । किन्तु विशिष्ट बुद्धिका नियन्त्रक सम्बन्ध है । बोध का कारण है । परन्तु वह कारणता अनादि भूत शक्ति नहीं हो सकती । योग्यता में अनादि भूत विशेषण अनुपपन्न है । क्योंकि आधुनिक देवदत्तादि पद स्थल में जहाँ पिता ने ही नाम करण किया है । वहाँ देवदत्त नाम से व्यक्ति का बोध सादि है अनादि नहीं, अनादि भूतत्व का अभाव होने से माता-पिता के संकेत ( नाम करण ) से ग्राह्य देवदत्त पद के बोध में अनादित्व असम्भव है । यद्यपि माता-पिता से संकेतित देवदत्त पद में बोध जनकता है । तथापि बोध में अनादित्व के अभाव से विशेषण का अभाव होगा । जहाँ विशेषण का अभाव रहता है । वहाँ विशिष्ट का भी अभाव हो जाता है । तो शाब्द बोध भी सम्भव होगा । इसी को स्पष्ट करने के लिए ग्रन्थकार कहते हैं । कि अन्यथा—देवदत्तादि पद में अनादि काल विशिष्ट बोध स्वीकार करने पर माता-पिता के संकेत का ज्ञान न होने से अन्वय बोध का, या शाब्द बोध का अभाव प्रसङ्ग होने लगेगा । और लाक्षणिक पदों में अतिव्याप्ति दोष होगा । क्योंकि संकेत के विना यदि शक्ति सत्ता मानी जाय तो लक्षणा स्थल मे भी शक्ति ही से तटबोध होने हेतु लक्षणा अनावश्यक होगी । अतः संकेत साचिव्येन शक्ति सत्ता माननीय पड़ेगी अतः गङ्गा पदेन तो ईश्वर ही संकेत और आधुनिक भी अतः शक्ति स्थापना नही हो सकती अतः लक्षणा आवश्यक है । तथा गङ्गा पद के भी तट रूप अर्थ बोध में शक्ति का प्रसङ्ग हो जायेगा । जैसे—घट पद है । घट रूप अर्थ घट पद से बोध्य है । यहाँ ईश्वरीय संकेत का ज्ञान भी है । संकेत से प्रवाह रूप शक्ति का भी ज्ञान होता है । इस लिए संकेत ज्ञान भी बोध में कारण मानना चाहिए । उसकी आवश्यकता बड़े महत्त्व की हो तो उसी को शक्ति ही मानना चाहिए ।

**स चाऽऽधुनिके पित्रादेर्गवादौ चेश्वरस्येति चेत् ! अत्रोच्यते—संकेतो न स्वरूपेण हेतुः, अगृहीतशक्तिकादर्थबोधप्रसङ्गात् ।**

❀

ज्ञानमेव शक्तिः मन्यताम् सच=संकेतश्च आधुनिके संकेतविषये देव दत्तादौ सङ्केतश्च अस्माच्चदादयमर्थो बोधब्य इत्यादि पूर्वमुक्तोऽस्ति अत्र वैयाकरणैः शक्तिगाहकः संकेतः, न तु शक्तिरूपी मन्यतै, तदनुपपन्नं भवति । मीमांसकमतेऽपि जगति इश्वराभावान्न इश्वरेच्छाशक्तिः । किन्तु यस्य कस्यापि सङ्केत एवं शक्तिः । अधुनिके नाभ्नि बोधो दृश्यते । द्वादशेऽह्लिपितान.म कूर्यादिति श्रुत्यापि ईश्वरेच्छा न मन्तव्या । तत्रापि आनुपूर्वोपदे संकेतस्यैव शक्तित्वात् । तात्पर्यस्तु. न संकेतः, तस्य पदजन्योपस्थितिजनकत्वाभावात् न तत्र शक्तिः तथा च शाब्द बोधं प्रति साक्षात् कारणम् शक्तिः । यद्यपि बृत्योपस्थितेषु अनेकार्थकशब्देषु तात्पर्य एव निर्णायकः । तथापि पदपदार्थयोः सम्बन्धोऽभिधा प्रकरणादिना पदस्ययोऽर्थं, स एव वाच्यः नतु तात्पर्यगम्यः । शक्तिस्तु पदार्थान्तरम्=पदनिष्ठबोध्यानां पदपदार्थयोः वाच्यवाचकभाव निययिकाऽस्ति । सा वाचकत्व सम्बन्धेन पदनिष्ठा साधितत्व सम्बन्धेनार्थनिष्ठा इति मीमांसकमतंविखण्डयन्नाह—अत्रोच्यते इति—किमुच्यते ? किं सङ्केतः स्वरूपेण हेतुः अथवा ज्ञातः सन् होतु, वा संकेतज्ञानमपि सामान्येन हेतुः:, विशेषेण वा तदाह—संकेतो न स्वरूपेण हेतु=स्वस्य यद्रूपमितिव्युपत्या स्वस्मिन् विद्यमानौ धर्म विशेषः संकेतत्वमिति । एवं संकेतोऽज्ञातोऽपि व ह्लरिव स्वरूपतः =साक्षात् सत्तामात्रेण=अस्तित्वे न हेतुः ।

यदि संकेताख्यां शक्ति स्वरूपतः हेतुं मन्यते तर्हि अगृहीत शक्तिकात्=गृहीता =ज्ञाताः संकेतरूपाशक्तिर्यस्यासावगृहीतशक्तिकस्तस्मात् अज्ञातमंकेतरूप शक्तिकाच्छब्दात् संकेत शक्तिज्ञानंविनाऽपि शाब्दबोधः प्राप्नौति चन्न रोचते कस्मै । अयं भावः-संकेतो द्विविधो हेतुर्भवतिः सामान्येन ज्ञातः सन्हेतुः यथा – अयमर्थः एत-

जब संकेत ज्ञान में शब्द जन्य ज्ञान की कारणता है तो संकेत को ही शक्ति क्यों न माना जाय । क्योंकि आधुनिक देवदत्त पद में माता-पिता का संकेत है । और गाय जगत् आदि पदों में ईश्वर संकेत को शक्ति का ग्राहक मानते हो समाधान—यदि संकेत अपने स्वरूप से बोध कारण हैं । तो जहाँ अग्रहीत शक्ति पद है । ( जिस पद के शक्ति का ज्ञान नहीं हुआ है । ) उससे भी शाब्द बोध प्रसङ्ग होगा । जैसे—किसी ने पुत्र का नाम रख दिया, उस पुत्र में नाम का संकेत है । परन्तु इस नाम का यही अर्थ है । इसका शक्ति ज्ञान न होने से संकेत के रहने पर भी बोध नहीं होता । इसलिए संकेत स्वरूप से हेतु होगा ही नहीं ।

च्छब्दजन्यबोधस्य विषयो भवतु अर्थात् अयं कम्बुग्रीवादिमद् व्यक्तित्वावच्छिन्नोऽर्थः घटपदजन्यबोधविषयो भवतु। ईदृशी, इच्छैव संकेत इत्युच्यते। अस्मिन् सामान्य संकेते ईश्वरेच्छा मातापित्रादीनामिच्छाच उभयसंकेतसाधारणं तिष्ठति। विशेषेण संकेतस्तु केवलमीश्वरेच्छैव शक्तिः अपरस्तु स्वरूपेण ज्ञातः सन् कारणं तत्र संकेत शक्तिः स्वरूपतः साक्षात् शाब्दबोधं प्रति कारणं स्यात्तर्हि शक्तिज्ञानं विनाऽपि अर्थ-बोधः प्रसज्यते। यतः संकेतज्ञानं शाब्दबोधंप्रतिकारणं स्वरूपतस्तु कारणं न भवति यदि स्वभावतः कारणं स्यात् तर्हि संकेतज्ञानमन्तरापि शाब्दबोधः सम्भाव्यते। परन्तु एवं न क्वापिदृश्यते। तस्मात् आह सकेतः स्वरूपेण न हेतुः—किन्तु संकेत ज्ञानं बोधं प्रति कारणं भवति। यस्मिन् पदे शक्तिः गृहीता नास्ति, तत्र बोधो न जायते। यथा—दाहकतां प्रति वह्निस्वरूपतः कारणमस्ति। स्वस्य यद्रूपं धर्म-विशेषः, सः बोधं प्रतिकारणं न भवति अत एव वह्निज्ञानं विनाऽपि वह्निसंयुक्त-देशस्पृष्टचरणे दाहो जायते। एवं घटं प्रति दण्डं स्वरूपतः = साक्षात् कारणम्। घटस्य शाब्दबोधे दण्डस्य ज्ञानं भवतु मा भवतु वा किन्तुदण्डे कारणताऽस्त्येव। घट बोधे यथा घटपदार्थस्तयोः सामान्य ज्ञानं कारणं न तथा दण्डज्ञानम्। एवं पदसंयुक्तवह्नौ वह्नि शब्दज्ञानमन्तरापि दाहकतायाः बोधो जायते। अतो वह्नेः दण्डस्य च कारणत्वेऽपि स्वरूपेण न हेतुता अनया रीत्या संकेतः स्वरूपतः शाब्द बोधं प्रति कारणं न भवति, साक्षात् संकेते बोधकारणता नास्ति। किन्तु संकेत ज्ञानकारणमन्तव्यम्। पूर्वोक्तव्याख्यानेन सुनिश्चितम् यत्, शाब्दबोधं प्रति स्वरू-पतः कारणता नास्ति किन्तु संकेत ज्ञानंकारमस्ति। परन्तु तज्ज्ञानं (संकेतज्ञानं) सामान्यतो ज्ञातः कारणमिति वक्तुं न शक्यते। सामान्यतो ज्ञानं जनकाजनको-भयसाधारणंभवति = यदि सामान्यतः सर्वसाधारणधर्मेण (यस्मिन्, ईश्वरस्य पित्रादेश्च संकेतोगृह्यते) संकेत ज्ञानं (यस्यकस्यापि इच्छायाः विषयभूतं ज्ञानं) शाब्दबोधे कारणं मन्यसे तर्हि प्रमेयत्वं, आदिना = अभिधेयत्वं ज्ञेयत्वमपि गृह्यते। सर्वान्वयी भवति। ततः प्रमेयत्वेनरूपेण संकेतस्यापि ज्ञानं सम्भाव्यते। तदित्थम् = यथार्थज्ञानं प्रमा तस्याः विषयः प्रमेयः अर्थात् प्रपूर्वक मा धातोः प्रमात्मकं यथार्थ ज्ञानमर्थः। अचो यत् प्रत्ययस्य विषयोऽर्थः। अतः प्रमेयशब्दस्य यथार्थज्ञान विषयोऽर्थः। तत्र विशेष्यो विशेष्यः प्रमात्मकं यथार्थ ज्ञानं विशेषणं (प्रकारीभूतम्) प्रमेयस्य भाव इति विग्रहे तस्यभावस्त्वतलौ इतित्वप्रत्ययस्य प्रकृतिजन्य बोधे प्रकारी भूतो भावः। प्रकृतिः = प्रमेय इति तज्जन्य बोधः यथार्थज्ञान विषय इति तत्र प्रकारी भूतं—प्रमात्मकं यथार्थ ज्ञानमिति। तदेव प्रमेयत्वमभिधेयत्वं ज्ञेयत्वमनयारीत्या संकेतस्यापि ज्ञानसम्भवात् = बोध प्रसंगात् = अतः सामान्यतो ज्ञातःसन् संकेतः कारणं न भवितुमर्हति। यदि तथा स्यात् तदा प्रमेयत्वेन (सर्व-

सामान्य से भी यदि ज्ञान हो तो भी बोध नहीं होता जबतक कि वह विशेषरूप से उसी का ... 





नापि सामान्यतो ज्ञातः, प्रमेयत्वादिना तज्ज्ञानेऽपि बोधप्रसङ्गात्। नापि सङ्केतत्वेन तज्ज्ञानं हेतुः, गवादिपदेष्वीश्वरादेः संकेतत्वेन तज्ज्ञानशून्यानां लौकिकमीमांसकादीनां तत्तदर्थबोधजनकत्वग्रहवतामेव बोधेन व्यभिचारात्।

❀

साधारण धर्मेण) = यथार्थ ज्ञानत्वेन संकेतो ज्ञातः सन् शाब्दबोधं जनयति। सत्यन्विदं यत् प्रमेयत्वेन (यथार्थं ज्ञान विषयरूपेण संकेतज्ञानं शाब्दबोधं प्रति कारणं न भवति। किं कारणम् – संकेतस्य शक्तिग्राहकत्वात्, इत्यभिप्रायेण भूषणकारेणोक्तम् 'नापिसामान्यतो ज्ञात' इति। संकेतः शाब्दबोधे कारणंभवति। प्रमेयत्वेन अभिधेयत्वेन ज्ञेयत्वेन रूपेण संकेतो ज्ञातः सन् बोधकारणं मा भवतु, अतः तत्र कारणता न स्वीकर्तव्या।

नाऽपि—न च सामान्यतो=व्यापकरूपेण ज्ञानं प्रमात्मकं यथार्थंज्ञानमस्वीकृत्य अखिल सकेते (इच्छाविषये) विद्यमानो यः संकेतत्व रूपसाधरणो धर्म (संकेतत्वमिति) तस्य ईश्वर संकेतत्वादिना विशेषधर्मेण संकेतत्वेन तज्ज्ञानं=संकेतज्ञानं न कारणम्। यतोहि—गवादिपदेषु=यद्यपि गो-इत्यादि शब्देषु सस्नालांगूलादिपदार्थ्यर्थेषु ईश्वरेच्छैव संकेत इति अनादि कालत उपलभ्यते आदिना महर्षीणां संकेतत्वेन (इच्छविषयत्वेन सम्भवेन इश्वरादि कर्तृकेच्छाविषयत्वेन बोधकारणता जायेत, तथापि तज्ज्ञानशून्यनां—गो-विप्र-विश्व इत्यादिशब्देषु इदं पदमिमर्थं बोधयतु इत्यादिरूपः, ईश्वरेच्छा विषय रूपोऽर्थः, इति ज्ञानं=प्रतीतिः तच्छून्यानां नास्तिकानां ईश्वरमस्वीकर्तृणां एवमीश्वरज्ञानशून्यत्वेन संकेत (ईच्छाविषय) ज्ञान शून्यानां लौकिकनां प्रत्यक्षमात्रप्रमाणकानां व्यावहारिक पदार्थमात्र ज्ञानवतां मीमांसांमधीयते विदन्तिवा मीमांसकाः आदिना चारु=सुन्दरम् (तर्कपूर्णा वाक्) येषांते चार्वाकः नास्तिकाः, तेषां संग्रहः तेषां मते संकेतकर्तुरीश्वरस्याभावात् संकेतत्वस्य ज्ञानाऽभावेऽपिबोधदर्शनात्, तत्तदर्थबोधजनकत्वग्रहवतामेव = सो सोऽर्थस्तत्तदर्थः तेषां बोधजनकत्वं = यथा गवादिपदं सास्नालांगूलाद्यर्थ विषयबौधग्राहकं, तद्वतां लौकिकमीमांसकादीनां अर्थात् तत्तदर्थविषयक बोधवतां तत्वीश्वरसंकेतग्रहवतामेव =इदं पदं संकेतज्ञानं पृथक्करोति अर्थात् संकेत ज्ञानं विनाऽपि अर्थबोधो येन = अयं शब्दः एतदर्थ बोध विषयजनकतावानिति रूपेण शब्दविशेष्यकार्थ विषयक शाब्द बोधदर्शनेन व्यभिचारात्=ईश्वर संकेतरूपं कारणं सदुष्टमित्यर्थः। नास्तिकादिमते ईश्वरादिरूप कारणस्य योऽभावः तज्जन्यं संकेतमपि अभावग्रहग्रासितमेव

संकेतं विनापि बोधानुभवः अत एव व्यभिचारः। तस्मात् विशेष संकेतज्ञानमपि न कारणम् । अत्रायं निष्कर्षः संकेतो न स्वरूपेण हेतुः न सामान्यतो ज्ञातः न च विशेषेण ज्ञातः। एतत्सर्वं निरुपितम् ।

नै० नच न स्वपरूतः न सामान्यः न सामान्यरूपेण न विशेपरूपेण संकेत ज्ञानं हेतुः किन्तु तत्तदर्थविषयकबोध जनकत्वम् सकेतत्वम् गृह्यतामिति शङ्कानिराचष्टे न चेति अर्थधीजनकतावच्छेदकत्वेन = अर्थं विषयक बोधजनकतावच्छेदकरूपेण शक्तिज्ञानं शाब्दबोधेकारणमिति। मीमांसका अपि मन्यन्ते। अर्थात् जलयान पदं जलयान-रूपार्थ विषयकबोधजनकम् । इदं ज्ञानं शाब्दबोधस्य जनकमस्ति। एवं भूता वोध-जनकता केनरूपेण गृह्यतामित्याकांक्षाया तत्तदर्थं विषयकबोध जनकतावच्छेदक रूपेण शक्तिज्ञानमिति संगृह्यतामिति। यथाकश्चिदाह कर्गलं लेखनीञ्चानयेत्यत्र ईश्वरकर्तृकेच्छायाः विषय ज्ञानम् विनापि कर्गलं लेखनीलोटाम्बाऽनयति जलाहरण करणत्वञ्च बुध्यते ।

तज्ज्ञानम् = अर्थबोधजनकतावच्छेदकरूपेण शक्तिज्ञानम् तथा = शाब्दबोधेहेतुः ततोऽपि = अर्थ विषयक बोधजनकतावच्छेदकशक्तिज्ञानादपि लघवेन = प्रकारता-रूपेण अवच्छेदकत्वनिवेशे गौरवात् । लाघवाच्चार्थधीजनकत्वेनैव = तत्तत्पदविशे-ष्यकतत्तदर्थबोधविषयजनकत्वम् बोधकारणत्वमित्येव मन्यतां लाघवानुरोधात् । एव मर्थबोधजनकत्वरूपहेतुत्वस्वीकारे अस्मत्पक्षसिद्धेः = अस्माकम् वैयाकरणाना (भूषणकारस्य) मभिमतो बोधकत्वशक्तिरिति पक्षः। नन्वेवं तत्तदर्थ विषयकबोध

कोई कहते हैं। कि सामान्य रूप से संकेत का ज्ञान बोध में कारण नहीं होता। क्योंकि प्रमेयत्व, अभिधेयत्व, वाच्यत्व ये सब में अन्वित होते हैं। प्रमेयत्वेन ज्ञान होने पर संकेत मात्र ज्ञान से सभी का बोध सम्भव होने लगेगा। और संकेतत्व रूप से संकेत जन्य शक्ति का ज्ञान कारण नहीं हो सकता। गौः आदि पदों में जो ईश्वर का संकेत है। वह संकेतत्वेन गृहीत नहीं है। ऐसे संकेत ज्ञान से शून्य लौकिक ( चार्वाक ) तथा मीर्मासक आदि तत्तदर्थं = उन-उन अर्थों की बोध जनकता का ज्ञान होने पर ही बोध होता है। इससे ईश्वर संकेत ज्ञान व्यभिचरित हो जाता है। अर्थात् चार्वाक और लौकिक मीमांसक के मत में ईश्वर है ही नहीं, तो ईश्व-रेच्छा शक्ति कैसे हो सकती है। इस पर मीमांसक कहता है। न चार्थधी—अर्थ के विषय में बोध जनकता वच्छेदकत्वेन = ज्ञान के उत्पादक धर्म से संकेत रूप शक्ति ज्ञान को कारण मानने से शाब्द बोध हो जायेगा। इसलिए अर्थ बोध जनकता वच्छेदकत्व रूप से संकेत को कारण मानो। इस पर वैयाकरण बोले यदि उक्त

**न चार्थधीजनकतावच्छेदकत्वेन तज्ज्ञानम् हेतुः, ततोऽपि लाघवेनार्थधीजनकत्वेनैव हेतुतायामस्मत्पक्षसिद्धेः। न चाऽऽधुनिकदेवदत्तादौ संकेतज्ञानादेव बोधेनास्य व्यभिचारः, तत्रापि "इदं पदमेनमर्थं बोधयतु" इतीच्छाग्रहे पदे तदर्थबोधकत्वस्यावगाहनेन व्यभिचाराभावात्। न च स्वातन्त्र्येणार्थबोधकताज्ञानम् कारणम् वाच्यम्। अन्यथा नेदं तद्धीजनकमिति जानतोऽस्माच्छब्दादयमर्थो बुद्धोऽनेनेति जानतस्तद्ग्रहापत्तेरिति वाच्यम्, नेदं तद्धीजनकमिति ग्रहवतो बाधेन पदे परग्रहं जानतोऽपि तद्ग्रहासंभवात्। अन्यथा भ्रान्तिज्ञस्यापि भ्रान्तत्वापत्तेरिति।**

शाब्देन कश्चिदर्थो गम्यते एवं पाण्डेय पदं कश्चिदर्दबोधजनकमित्यर्थ बोधकत्वस्यावगाहनेन = विषयकरणेन ज्ञानेच्छायत्नाः सविषयाः भवन्ति। अर्थात् इच्छाग्रहे पदे अर्थविषयकबोध एवावगाहतोऽनुभूयते इत्यर्थः। व्यभिचाराभावात् = आधुनिक स्थलेऽपि अर्थबोधदर्शनात् नास्तिकश्चन व्यभिचारः।

पूर्वोक्तरीत्या अर्थबोधजनकत्वम् इच्छारूपे संकेते विषयिता सम्बन्धेन विशेषणी भूतम् तत्संकेतज्ञानं भासते। तत्रार्थबोधजनकत्वम् साक्षात्विषयो नास्ति। अतः आह न चेति—स्वातन्त्र्येण = प्राधान्येन इत (विशेषण विहीनेन अर्थात् संकेत विशेषणं बिना) अर्थाभिधायक ज्ञानम् = अर्थाभिधायक ज्ञानं कारणं मन्यते तदेव शाब्दबोधे कारणम् मन्तव्यम्, ततो न पूर्वोक्त दोषः।

जनकत्वरूप बोधकारणत्व स्वीकारे व्यभिचारो दृश्यते। यतः मातापित्रादिकृत संकेतस्थले संकेतत्वेन संकेतज्ञानम् जायते, नतु अर्थधीजनकत्वेन अतोऽर्थविषयकबोध जनकत्वज्ञानं व्यभिचरितमतआह न चेति—आधुनिकदेवदत्तादिस्थले = इदानीन्तनीये संकेतग्राह्ये, नामस्थले सूर्यप्रसाद इत्यादौ संकेत बोधजनकत्वं वर्तते नतु अर्थबोध जनकत्वमिति। अतः कारणाऽभावे कार्याऽभाव इति व्यतिरेकिनियमात् शाब्दबोधकार्यं प्रति अर्थधीजनकत्वम् कारणम्। आधुनिके नाम्नि अर्थधीजनकत्वाऽभावात्, बोधाभावः। नास्ति मूलं कुतोशाख्या, नास्तिकारणम् कथं कार्यम्। अस्य = बोधकत्वग्रहस्य = व्यभिचारः = व्यातिरेक व्याप्तेर्व्यभिचारः। निराकर्तुमाह भूषणकारः तत्रापीति—आधुनिकसंकेतमात्रादर्थबोधस्थलेऽपि अर्थात् संकेतज्ञान = संकेतनिष्ठधर्मत्वेन संकेत ज्ञानसत्वे पदविशेष्यिका या इच्छा इच्छारूप्यो यः संकेतः ईश्वरेच्छाअरूपः संकेतरूपो यो ग्रह = ज्ञानम्। अर्थात् 'इदं पदमिममर्थं बोधयतु' इतीच्छाग्रहे पदे = पद विशेष्यिका या इच्छा। तद्रूप संकेतग्रहे 'अयंशब्द एतदर्थं विषयकबोधजनकतावानित्यर्थः बोधकत्व ग्रहे तदर्थबोधकत्वस्य = आधुनिक संकेत स्थलेऽर्थं बोधनाय संकेत्यते। यथा पाण्डेय इति सत्यासत्यविवेकबुद्धिविरहेऽपि, तेन

अन्यथा=पारतन्त्र्येण भासमानस्य बोधजनकताज्ञानस्य हेतुत्वे स्वातन्त्रेण बौधोत्पादकम् ज्ञानम् कारणं न मन्यते तर्हि—नेदं तद्धीजनकम् ही=निश्चयेन इदं तज्जकम् न। अर्थात् यस्य प्रमात्मकम्=यथार्थ ज्ञानम् वर्तते सः पुत्रमाह पुस्तकमानय इति पुस्तकशब्दः पुस्तकत्वावच्छिन्नविषयक बोध जनकतावान् इत्यभिप्रायैणोक्तम्। परन्तु पुत्रेण भ्रमात् तद्वाक्यं निर्झरिणीत्वावच्छिन्न विषयकबोधजनकतावान् इत्येवं रूपेण ज्ञात्वा निर्झरिणी बुद्धा। तटस्थेन ज्ञातम् यत् अस्माच्छब्दात् =पुस्तकशब्दात् अयमर्थो=निर्झरिणीरूपोऽर्थोऽनेन पुत्रेण बुद्धः=ज्ञातः। अत्र प्रमात्मको बोधः, विशेष्य परतन्त्रः, ज्ञाने विशेषणतया भासते। पश्चात् पुत्रनिष्ठम् यद्भ्रमात्मकज्ञानविषयकम् यदर्थबोधजनकम् ज्ञानमस्ति तथापीच्छायाः पारज्ञन्त्यम् जातम्। अतः स्वास्त्र्येण अर्थविषयकबोध जनकम् ज्ञानम् कारणम् न भन्यसे चे र्त्तहि तद्ग्रहापत्तेः=शाब्दबोधापत्तेः पुस्तकशाब्दात् निर्झरिणीति बोधपत्तेः। तस्मात् स्वातन्त्र्येणार्थ विषयक बोधजनकताज्ञानम् कारण मन्तयमिति चेन्न—

उक्त कारणे दोषाः समापतन्ति तान परिहर्तुमाह नेदमिति—यस्य पुरुषस्य धर्मोऽयं न त्वधर्म इति। इदं धर्मपदमधर्मजनकम् न। अयं धर्मः अधर्मत्वावच्छिन्न प्रकार के संकेत रूप शक्ति ज्ञान को कारण मानना है। तो इससे भी लाघव केवल अर्थ बोध जनकत्वेन हेतुता मानते हैं। इससे अर्थ बोध जनकता पक्ष सिद्ध हुआ। तो हमारा ही पक्ष बोधजनकता सिद्ध हो गयी। न कहिए कि आधुनिक देवदत्तादि पदौ में संकेत ज्ञान से ही बोध होने से बोध जनकता का व्यभिचार होगा। तत्रापि= वहाँ पर भी संकेत ज्ञान होने पर भी पद विशेष्यिका इच्छा रूप जो संकेत ज्ञान अर्थात् यह पद इस अर्थ का बोधक बने। ऐसी इच्छा का ज्ञान होने पर अर्थ के विषय में बोध जनकता का सम्यक् अवगाहन हो ज्ञान से व्यभिचार का अभाव होता है।

न कहिए कि स्वतंन्त्रेण=जो किसी मे विशेषण न हो ऐसे अर्थ विशेष्यक बोध की ज्ञान कारण मानेगे तो कोई दोष नहीं होगा। अन्यथा नेंदं तद्धीदं जनकम्=यह घट पद पट बिषयक बोध का जनक है। ऐसा ज्ञान लेते हुये अमुक शब्द से अमुक अर्थ यानी यह शब्द से यह रूप अर्थ की इस व्यक्ति से समझा गया। ऐसे विपरीत ज्ञान वाले भ्रमिक व्यक्ति को भी वह ज्ञान होने लगेगा। परन्तु "तद्धीदं जनकं न" इस ज्ञान का बाध होने पर घटादि पद में परग्रह=अन्य विषयक ज्ञान जानने वालों को भी यह भ्रमात्मक ज्ञान 'संभव होगा, अर्थात् धट पद में पट का ज्ञान नहीं होगा। अन्यथा घट पद में पट के ज्ञान का अभाव निश्चित् होने पर भी भ्रान्तिज्ञ को भी भ्रान्ति होने लगेगी। जैसे रजत के अभाव में भी शुक्ति में रजत का भान होने से भ्रान्तिज्ञ पुरुष को भी भ्रान्ति होगी।

**इदं चार्थधीजनकत्वम् पित्रादिसंकेतज्ञानाद् गृह्यते । अतस्तज्ज्ञानात्पूर्वं न बोधः**

**नापि लाक्षणिकोच्छेदापत्तिः, इष्टत्वात् शक्तिग्राहकव्यवहारस्य मुख्यलक्ष्यसाधारण्यात् ।**

❀

विषयकबोधजनकतावन्निश्चयस्य प्रतिबन्धकरूपबाधसत्वेन ग्रहवतः=ज्ञानवतः भ्रमात्मकज्ञानबोधे सति पदे=पुस्तकपदे परग्रहम्=परस्य=अन्यस्य भ्रान्तपुरुषस्य ग्रह=ज्ञानम् जानतोऽपि पुस्तकपदं निर्झरिणीत्वावच्छिन्नविषयक बोधजनकमिति रूपम् जानतोऽपि तद्ग्रहस्य=भ्रान्तस्य पुरुषस्य धर्मपदेऽधर्म विषयक बोधजनकत्वाभावज्ञानम् न सम्भवति असम्भवात्=अर्थ विशेष्यकपदजन्य बोधविषयत्व ज्ञानस्य असम्भवात् अन्यथा=यदि भ्रान्तस्य पुत्रस्य वास्तविकम् (प्रमात्मकम्) ज्ञानम् स्यात् तर्हि नेदंतद्धीदं जनकमिति ज्ञानमस्ति । भ्रान्तिज्ञे पुरूषे भ्रान्तत्वापत्तिःस्यात् । यथा चैत्रस्य शुक्तौ रजतत्वस्य भ्रमोजातः । एतादृगचैत्रीय ज्ञाने शुक्तौ रजतत्वम् प्रकारेण विशेषणतया भासते—तत्र रजतंविशेषणम् शुक्तिः विशेष्येति बोधकाले भ्रमात्मकम् ज्ञानम् । एवमेव यस्य पुत्रस्य भ्रान्तिः संजातः तस्यापि शुक्तौ रजतत्वप्रकारक ज्ञानं भविष्यति चेत्, सोऽपि भ्रान्तोभविष्यति । एतादृशम् ज्ञानं यद्यपि न भवति, तथापि भ्रमात्मकज्ञान दशायां शुक्तिविशेष्यकरजतत्व प्रकारकावगाहिज्ञानं जायते ननु भ्रान्त्थात्यके ज्ञाने इन्द्रियसन्निकर्षस्याभावान्न तज्ज्ञानम् संकेतज्ञानम् न भविष्यति तन्न, चेष्टादिना तज्ज्ञानानुमिति सम्भवात् घटमहं जानाभि इत्यनुव्ववसायेन ज्ञानांशे घटत्व प्रकारकत्व घटविशेष्यकत्व विषयीकरणात् । अन्यथा भ्रान्तिज्ञस्य भ्रान्तत्वापत्तिरनिवार्यैव स्यात् ।

ननु अर्थबोधजनकता शब्दश्रवणमात्रेणैव जायते । एवमगृहीत संकेतात् परशुरामशब्दात् श्रवणमात्रेण शाब्दबोधो जायताम् ? अत्र आह—इदञ्चार्थधारिति—इदं=शक्तित्वेनाभिमतमर्थबोधकत्वम् । अर्थात् अर्थविषयक बोधजनकत्व शक्तिः ईश्वरपित्रादि संकेतज्ञानात्=बोधार्थं कृतन्नामोच्चारणादेव भवति । अतः=शक्ति ज्ञानं प्रति संकेतज्ञानस्यकारणत्वात् तज्ज्ञानात्=संकेत ज्ञानात् पूर्वं शाब्दबोधो न

यह अर्थ विषयक बोध जनकता माता-पिता के संकेत ज्ञान से ही हो जायेगा। इसलिए माता-पिता के संकेत ज्ञान के पहले शाब्द बोध नहीं हो सकेगा। और लाक्षणिक पद का उच्छेद भी नहीं हटेगा। क्योंकि लाक्षणिक पदों में भी शक्ति ही इष्ट है। गङ्गा पद की तीर में भी शक्ति ही मानी जायेगी क्योंकि शक्ति का ज्ञान कराने वाले व्यवहार के प्रधान होने से सभी लक्षणों में व्यवहार ही ज्ञान का कारण होता है शब्द में अन्य में भी लक्षणास्थल में भी शक्ति से ही ज्ञान होगा।

प्रत्यक्ष से यदि शब्दों की प्रतीति हुई तो शाब्दबोध नहीं माना ... दर्शन न हो





**किं च प्रत्यक्षादिजन्योपस्थितेः शाब्दबोधानङ्गत्वात् शाब्दबोधं प्रति शक्तिजन्योपस्थितेर्लक्षणाजन्योपस्थितेश्च कारणत्वं वाच्यम्। तथा च कार्यकारणभावद्वयकल्पने गौरवम् स्यात्। अस्माकं पुनः शक्तिजन्योपस्थितित्वेनैव हेतुतेति लाघवम्।**

अभिधा

जायते। यथा इन्दिरायाः आगमनम् इन्दिरापद जन्योऽर्थः मम बोधविषयोभवतु इतीच्छैव संकेतः। ततो इयं जवाहरलाल नेहरू पुत्रीति इन्दिरापदवाच्या इति बोधो जायते एषैव बोधकताशक्तिः।

ननु संकेतजन्य बोधकत्वम् शक्तिरित्यङ्गीकारे गङ्गापदेन शक्त्या प्रवाह विशिष्टस्यैव बोधो जायते नतु तीरत्वविशिष्टस्य, तीर साधिकायाः = लक्षणायाः अभावात् एवं लाक्षणिकोच्छेदपत्ति = लक्षणयाऽर्थबोधे संकेतस्य अभावात् नापि इति– एवं लक्षणानिर्मुलाऽस्तु नाम किन्तुलाक्षणिकानांपदानां बोधोच्छेदापत्तिर्न भविष्यति- लाक्षणिकेषु पदेषु शक्तिरेवेष्टा। तीरेऽपि शक्ति रेवास्तु। लक्षणा वृत्तिर्नास्त्येवेति। प्रवाहत्वेनैव रूपेण अप्रसिद्धशक्त्या तीरस्यापि वोधात्। शक्तिग्राहकव्यवहारस्य = शक्तिगृह्णाति बोधंप्रापयति शक्तिग्राहको व्यवहारः तस्य यथा मुख्ये=शक्यार्थे शक्ति गृह्णाति एवं लक्ष्ये परम्परया बोध्ये तीरेऽपि शक्तिग्राहत्वमुभयसाधारणम् तुल्यम् द्वयोः शक्तिस्तुल्यैव यथा मुख्ये तथा लक्ष्ये तयोः समानेन रूपेण बोधो भविष्यति।

व्यवहारस्य—वृद्ध=अनुभवी, अर्थं बोधनाय शब्दं प्रयुनक्ति पुष्पमानय इति एतादृशस्य प्रयोजक (प्रेरक) वृद्धव्यवहारस्य परम्परया शक्ति प्रापकत्वम् न तु प्रत्यक्षात् अनुभविना आज्ञापक बृद्धेन आज्ञाप्योऽनुभवी उक्तः। आसनमानय इति। ततः आसनं पुष्पम्वा आनयन्तमाज्ञाप्यं (प्रेर्यं) पुरूषं अवलोकयता वालेन अनुमितं यत् प्रयोज्यस्य पुरूषस्य चेष्टा (शरीर प्रक्रिया) पुष्पानयन विषयक प्रबृत्तिजन्यां तां कृतियत्नमनुमाय अस्य यत्नो (आसनानयनरूपोव्यवहारः) ज्ञान जन्या भवेदिच्छा इच्छाजन्या भवेत्कृतिः (यत्नः) कृतिजन्या भवेच्चेष्टा चेष्टाजन्यं भवेत्फलम् कर्तव्य ज्ञानानन्तरं ज्ञानेन इच्छा जन्यते। इच्छया च प्रयत्ना भवति। कृतिजन्यप्रयत्नेन चेष्टा (व्यापारः) भवेत् चेष्टाजन्यं (व्यापारजन्यम् फलं = जिज्ञासापूर्तिः जायते एवं

किन्त्र यदि प्रत्यक्षादि जन्य ज्ञान को शाब्द बोधका कारण नहीं माना जाएगा। तो शाब्द बोध के प्रति शक्ति ज्ञान से उत्पन्न और लक्षणादि ज्ञान से उत्पन्न ज्ञान दोनों को मानना पड़ेगा तो कार्य कारण भाव के दो रूप कल्पित होने से गौरव होगा हमारे मत में केवल शक्ति से जन्य ज्ञान कारण सिद्धान्त सिद्ध है। एक ही कार्य कारण भाव होने से लाघव है।

पुष्पानयने पुष्पपदज्ञानं कारणम् । तथा च सम्बन्धज्ञानं विना पदपदार्थं वाक्य-वाक्यार्थं विषयकं ज्ञानं न जायते । तेन सिद्धयति यत् अस्तिकश्चन सम्बन्धो नाम यं नैयायिकैः इश्वरेच्छा मीमांसकैः बोधजनकतावच्छेदिकाशक्तिः, प्राचीन वैयाकरणैः बोधजनकता शक्तिः स्वीक्रियते ससम्बन्धः शक्तिरेव । परम्परया (लक्षणया) शक्तिज्ञाने व्यवहारज्ञानं कारणम् अन्तरस्तु गङ्गापदेन प्रवाहरूपोऽर्थ प्रसिद्धत्वान्मुख्यः तीररूपोर्थः अप्रसिद्धवाल्लक्ष्यः सर्व लक्षणास्थलेएकमेव बोध्यम् ।

न च व्यवहारे तीरस्यग्राहिका लक्षणैव । तत्र गङ्गापदे तीरज्ञापिकाशक्तिर-प्रामणिकी । अन्यथा तीरप्रवाहयाे पर्यायतापत्तिः स्यात्, तथा च तीरत्वोपपत्तये लक्षणावृत्तेरावश्यकत्वेन कथं सा न मन्यसेऽत आह किञ्चेति - प्रत्यक्षादि=प्रत्य-क्षानुमानोपमानशब्दप्रमाणादिजन्योपस्थितेः = बोध्योपस्थितिकारणतायाः शाब्दबो-धस्य=शब्दजन्यज्ञानस्य अनङ्गत्वात्=अकारणत्वात् प्रत्यक्षादिकं ज्ञानं शाब्दबोधं प्रति नकारणमिति मन्यते, किन्तु सामान्यरूपेण कार्यकारणभाव लाघवमनुभूय शक्ति जन्योपस्थितेः=ज्ञायमानशक्तिज्ञानबोध्योपस्थितेः ज्ञायमानलक्षणाजन्योपस्थितेश्च द्वाभ्यां कारणत्वं वाच्य भविष्यति । एवं शक्तिजन्योपस्थितिम् लक्षणा जन्योपस्थि-तिञ्च कारणद्वयकल्पने गौरवम् । अस्माकं वैयाकरणानां मतेवाचकेषु लाक्षणिकेषु च पदेषु शक्तिजन्योपस्थितित्वेनैव कारणता मन्यते अतः कार्यकारणभावद्वय कल्पना प्रयोज्यं गौरवम् न जायते, किन्तु लाघवमेव न च केवलं शक्तिस्वीकारे तीरबोधविषयकजनकता भिन्ना, प्रवाहविषयकबोधजनकता भिन्नेति सर्वानुभवः ।

एवमेकस्मिन् गङ्गापदे द्वयोः कल्यनेऽपि गौरवम्, शक्यसम्बन्धरूपालक्षणा तु सिद्धैव न भवतिः, अनुमानादि बोधजनकतायामतिव्याप्तिसत्वान्न बोधजनकतात्वम् शक्तिः, 'अन्यायश्चानेकार्थकल्पनमिति' न्यायात् गङ्गापदेऽनेकार्थकल्पनमनुचित-मित्यादि महद्गौरवम् पर्यालोच्याह भूषणकारः, अपि चेति—यदि पृक्षक् लक्षणा-वृत्तिरंगीक्रियते तर्हि द्वयोः कार्यकारणभावयोः प्रत्येकं=शक्तिज्ञानजन्ययोरुपस्थित्योः सर्वत्र स्थले व्यभिचारः=अर्थात् कारणाऽभावे कार्याभावरूपव्यभिचारः व्यतिरेकि-रूपोऽपि सम्भाव्यते । शक्यसम्बन्धेलक्षणेति क्वाचित्की, यतः शक्तिजन्योपस्थि.तम् विनाऽपि=यत्र शक्त्याबोधो न जायते, लक्षणया उत्पन्नं यज्ज्ञानं । तन्मात्रेणैव बोधोजायते तत्र लक्षणाजन्यो पस्थिति सत्वेऽपि शक्तिजन्योपस्थितिम् विना नैया-यिकमते व्यभिचारः समायाति लक्षणाजन्योपस्थितिमात्रेण शाब्दबोधो दृश्यते यथा—स्वज्ञाप्य सम्बन्धो लक्षणा इति मीमांसकमतेन शक्ति निरपेक्ष्या सा ।

तस्मात्तवभतेऽपि व्यभिचारः । पूर्वोक्त व्यभिचारवारणायाह—न चेति—अर्थात् कार्यतावच्छेदकावच्छिन्ने=। शाब्दबोधरूपकार्ये। कारणस्य (बोधनकत्वस्य) अव्यव-हितोत्तरत्वस्य = अव्यवधानेनोत्तरवर्तित्वस्य निवेशेन न व्यभिचारः शक्तिज्ञाना धीना यां उपस्थितिः तस्याः अव्यवहितोत्तर जायमानं शाब्दबोधप्रतिशक्ति ज्ञाना-

अपि च लक्षणावृत्तिस्वीकारे कार्यकारणभावस्य प्रत्यैकम् व्यभिचारः, शक्तिजन्योपस्थितिं विनाऽपि लक्षणाजन्योपस्थितितः शाब्दबोधात्। न च अव्यवहितोत्तरत्वसंबन्धेन तत्तदुपस्थितिमत्त्वं कार्यतावच्छेदकम्, तत्तदुपस्थितित्वं च कारणतावच्छेदकम्, अनन्तकार्यकारणभावप्रसङ्गात्। किं च पदार्थोपस्थितिं प्रत्यपि शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च हेतुतेति व्यभिचारो गौरवञ्च प्राग्वदेव द्रष्टव्यम्।

न च "इदं पदमेतदर्थबोधकम्" इति शक्तिज्ञानकार्यकारणभावकल्पनेऽपि तत्तदर्थभेदेनानेककार्यकारभावकल्पने गौरवं तवापि समानम्, परस्परव्यभिचारवारणायाव्यवहितोत्तरत्वटितत्वे च सुतरामिति वाच्यम्।

धीनोपस्थितिः कारणम्। एवं लक्षणाज्ञानाधीना या उपस्थितिः तस्याः अव्यवहितोत्तरं जायमानं शाब्दबोधं प्रति लक्षणा ज्ञानाधीनोपस्थितिः कारणम्। एवं मव्यवहितोत्तरत्वघटितकार्यकारणभावस्वीकारे शक्तिज्ञानाधीनोपस्थित्यव्यवहितोत्तरजायमानं शाब्दबोधं प्रति शक्तिज्ञानाधीनोपस्थिति रेव कारणम्। तत्र लक्षणाज्ञानाधीनस्यानुपस्थिरयकिञ्चित्करी न बाधिकेत्यर्थः। एवं लअणाज्ञानानाधीनोपस्थित्यव्यवहितोत्तरं जायमान शाब्दबोधं प्रति लक्षणाज्ञानाधीनोपस्थितिःकारणम्। तत्र शक्तिज्ञानाधीनोपस्थितेरभावेऽपि न प्रतिबन्धकम्। एतदेवाभिप्रेत्यग्रन्थकारः नचाव्यवहितोत्तरत्व सम्बन्धेन=तत्तदुपस्थितिमत्वम् = शक्तिज्ञानाधीनोपस्थित्यव्यवहितोत्तरजायमानशाब्दबोधत्वं लक्षणाजन्योपस्थितिविशिष्टशाब्दबुद्धित्वञ्च कार्यतावच्छेदकम् = तत्तदुपस्थितित्वञ्च = शक्तिज्ञानजन्योपस्थितित्वं लक्षणाज्ञानजन्योपस्थितित्वञ्च कारणतावच्छेदकम्। यथा—गंगायां घोषः। अत्रहि शक्तिज्ञानजन्यप्रवाहरूपार्थंबोधे तदन्वयस्य बाधितत्वेन तत्सम्बधिनस्तीरस्य लक्षणीयत्वात्। कार्यवच्छेदकं शाब्दबुद्धित्वम्। कारणता लक्षणाज्ञानत्वम्।

अनयारीत्या अनन्तकार्यंकारणभावस्य प्रसंगदर्शनान्नाव्यवहितोत्तरत्वनिवेशः कर्तव्यः। न च यथा उपस्थितिःद्विधा, एवं कार्यकारण भावोऽपि द्विविधएव कथमनन्त इत्युच्येत, व्यक्तिभेदेन आनन्त्य सम्भवादित्याशयात्। गौरवान्तरं दीयते किंचेन्ति—लक्षणास्वीकारे पदज्ञानं द्वारं तत्रपदार्थधी। एवं पदार्थोपस्थितिं प्रति अर्थात् वृत्तिज्ञानजन्योपस्थितिः, उपस्थितिजन्यो बोध उपस्थितिं प्रति शक्तिज्ञानत्वेन लक्षणाज्ञानत्वेन च कारणत्वस्यावश्यकतया यत्र शक्तिज्ञानादुपास्थितिस्तत्र लक्षणा ज्ञानं नास्ति। यत्र लक्षणाज्ञानादुपस्थितिस्तत्रशक्तिज्ञानं नास्ति। इत्थं व्यति

रेकेणोपस्थितव्यभिचारवाराणाय ज्ञाने यावत्यो व्यक्तयः तावतीच्छाशक्तिः लक्षणां च प्रकल्य स्वाव्यवहितोत्तरञ्च निवेश्य कार्यकारणभावकल्पने व्यक्तीनामानन्त्यात् कार्यकारणभावानन्त्येऽति गौरवम् । तस्मात् शक्तिरेवगरीयसी । श्रेयसी प्रागदेव = शक्तिज्ञानं विनाऽपि लक्षणाज्ञानात् पदार्थोपस्थितिः इत्यादि गौरवं पूर्ववद्दष्टम् ।

उभयोः पक्षयोः गौरवसाम्यप्रदर्शनार्थमाह न चेति—इदं पदं =गंगापदमेतदर्थ-बोधकं=प्रवाहरूपार्थविषबोधजनकमित्यादौ शक्तिमात्रज्ञानेन = वोधकतामात्रबोधेन उपस्थितिं प्रति कार्यकारणभावकल्पनेऽपि =उपस्थितेः शाब्दबोधस्यादर्शनेन तत्त-

लक्षणा वृत्ति स्वीकार करने पर अनेक कर्यंकारण भाव होंगे। और प्रत्येक स्थलों में व्यभिचार होगा। क्योंकि शक्ति से उपस्थित ज्ञान का बाध होने पर लक्षणा होती है। उसके बिना लक्षणाजन्य उपस्थिति नहीं होगी तो शाब्दबोध भी नहीं होगा। यदि शक्तिजन्यबोध के बिना भी लणक्षाजन्य ज्ञान से शाब्दबोध स्वीकार करेंगे। तो शक्तिज़न्य ज्ञान के विना व्यभिचार होगा।

शङ्का—कार्यंतावच्छेदकावच्छिन्न ( कार्यं=शाब्दबोध है, उसमें कार्यंता=बंधः में रहने वाला धर्मं, उससे अवच्छिन्नयुक्त ) में कारणाव्यवहितोत्तर ( कारण=वृति उसके अव्यवधान के पश्चात् ) सम्बन्ध विशेष के निवेश से व्यभिचार वारित हो सकता है। अर्थात्—शक्तिज्ञान के अधीन उपस्थिति ( ज्ञान ) अव्यवधान के पश्चात् जायमान शाब्दबोध के प्रति शक्तिज्ञान के अधीन ज्ञान कारण होता है। लक्षणाज्ञान के अधीन ज्ञान के अनन्तर जायमान जो शाब्दबोध उसके प्रति लक्षणाज्ञान से उपस्थितज्ञान कारण होता है। इस प्रकार अव्यवहित अनन्तरत्वघटित कार्यं कारणभाव स्वीकार करने से व्यभिचार क्वाचित्क है। क्योंकि शक्तिज्ञनाधीनोपस्थिति न रहना अनुचित है। इसी अभिप्राय से ग्रन्थकार ने "न च अव्यवहितोत्तरत्व सम्बन्धेन" इत्यादि कहा। तत्तदुपस्थितिमत्वम्=शक्तिज्ञानाधीन उपस्थिति के पश्चात् जायमान शाब्दबोधत्व ही कार्यंतावच्छेदक=कार्य में रहने वाला धर्मं, है, और तत्तदुपस्थि-तित्वपदपदार्थशक्ति की उपस्थितित्व भी कारणतावच्छेदक=कारण में रहने वाला धर्मं जानना चाहिए। परन्तु अनन्त कार्यंकारणभाव का प्रसंग होगा, गौरवग्रस्तता भी होगी और भी पदार्थों की उपस्थित के प्रति भी कहीं शक्तिज्ञान रूप से और लक्षणाज्ञान रूप से कारणता की कल्पना करनी पड़ेगी, तो व्यभिचार होगा। गौरव तो पूर्ववत् समझना चाहिए। इस पर वैयाकरण मीमांसक को दुष्ट=दूषित कर रहा है। कि अमुक पद अमुक अर्थ का बोधक है। इस रीति से शक्ति ज्ञान के माध्यम से कार्य कारणभाव की कल्पना करने पर भी तत्तदर्थं=उन-उन अर्थों के भेद से अनेक कार्य कारणभाव की कल्पना में तुम्हारे मत में भी गौरव समान है। और परस्पर में व्यभिचार की निवृत्ति करने के लिए "अव्यवहितोत्तरत्व-घटित" ऐसा निवेश करने पर गौरव और सुस्पष्ट हो जायगा।

शक्तिभ्रमानुरोधेन तत्तत्पदतत्तदर्थभेदेन कार्यकारणभावानन्त्यस्य तवापि साम्यात् । लक्षणाकार्यकारणभावकल्पनागौरवं परं तवातिरिच्यते ।

अथ वृत्तिजन्योपस्थितित्वेनैव शाब्दबोधहेतुता, वृत्तिज्ञानत्वेन च पदार्थोद्रस्थितिकारणतेत्यैवं मया वाच्यमिति चेन्न, शक्तिलक्षणान्यतरत्वस्य शाब्दबोधहेतुपदार्थोपस्थित्यनुकूलपदार्थसंम्बन्धत्वस्य वा वृत्तित्वस्य कारणतावच्छेदकत्वात् शक्तित्वमपेक्ष्य गौरवाच्छाब्दबोधहेतुतावच्छेदकस्य पदार्थोपस्थितिवृत्तेरज्ञाने तत्घटितकार्यकारणभावग्रहस्यासंभवात् । शाब्दबोध के बताने का जबतक ज्ञान न हो तबतक हम उसका ज्ञान नहीं सकता।

त्पदं तत्तदर्थश्च, पदतदर्थौ तयोर्भेदेन यथा —भगीरथखातवच्छिन्नप्रवाहविषयकोपस्थितिंप्रति बोधजनकम् । अर्थभेद—यथा—गंगापदं शक्तिज्ञानाधीनोपस्थिति प्रयोज्यप्रवाहरूपार्थबोधजनकं । एवं गगापदं लक्षणांज्ञानाधीनोपस्थिति प्रयोज्य तीर रूपार्थ बोधजनकं । अर्थभेदेन कार्यकारणभाव भेदः । अनेक कार्यकारणभावकल्पनेव यावान्ति पदानि यावन्तोऽर्थाः तावन्ति कार्याणिकारणानि कल्प्यन्ते इति तव मतेऽपि गौरवं समानं तुल्यमित्यर्थः यथा—लक्षणाकार्यकारणभावगौरवं । इदं गंगा पदं स्वप्रवाहबोधकंमिति शक्तिज्ञानेन कार्यकारणभाव कल्पनेऽर्थानांभेदेन गौरवम् ।

परस्परव्यभिचारवारणाय = गंगापदनिष्ठतीरबोधकत्वग्रहं विनापि = उक्तरीत्या परस्परव्यभिचारवारणाय अव्यहृतोत्तरत्वघटिते च सुतरां गौरवमिति वाच्यम् । भावः । गंगापदस्य तीरादिपदनिष्ठ तादृश शक्तिग्रहणे = तीरबोधात् परस्परजन्यबोधे व्यभिचार निवारणाय अव्यवहितोत्तरत्व घटित निवेशे च = प्रवाहविषयकबोधं प्रति गङ्गापद निष्ठ वृत्ति ज्ञानाधीनो पस्थितिः कारणम् ।

सुतराम = अति गौरवमिति वाच्यमित्तिचेन्न, शक्तिभ्रमानुरोधेन = यत्र गंगापदं तीरे शक्तमिति, शक्तिभ्रमदशायां तीरोपस्थितिः, तां प्रति गंगापद निष्ठ शक्तिज्ञानं कारणम् । यत्र गंगापदं तीरे लाक्षणिकमिति ज्ञानं तस्मात्तीरोपस्थितिः तां प्रति तदा तन्निष्ठ शक्तिज्ञानं कारणम् । एवं तीरोपस्थितिं प्रति तटनिष्ठशक्तिज्ञानमपि कारणं भविष्यति इत्यादेः सर्वसम्मतसिद्धतया एवं तत्तत्कारणता वच्छेदककोटौ = गंगापदे जाह्नवीपदे च तत्तत्पदानां = तेषां तेषां शब्दानां तत्तदर्थानां = तेषां २ बोध्याऽर्थविषयाणां निवेशस्यावश्यकत्वात् तेषामानन्त्येन कार्यं कारणभावानां नान्तरीयकतया (स्वभावतः) आनन्त्य कल्पनासम्भवात् तवमतेऽपि गौरवस्य साम्यात् = तुल्यत्वात् न कश्चनान्तरम् । अपितु तव मते लाक्षणिक कार्यकारणभाव कल्पनेगौरवं = लक्ष-

णायामधिकं कार्यकारण सम्भवादधिकं गौरवम् । मम मतेतु गंगापदं तीरेलाक्षणिकमिति ज्ञानमेव न भवति । तीरोपस्थितौ लक्षणाज्ञानकारणस्य अव्यवाहितोत्तरत्व निवेशस्याभावेन लाधवं तवमते गौरवं दुष्परिहरणीयमिति । ननु लक्षणाज्ञानं भ्रमस्थले शक्तिज्ञानं तटपदनिष्ठ शक्तिज्ञानञ्च तौरोपस्थितौ करणत्रयस्य स्वीकारे गौरवमस्तुनाम । परन्तु शाब्दबोधं प्रति वृत्तिज्ञानम् कारणं मयामन्यते । लक्षणा ज्ञानं बृत्ति ज्ञानेऽन्तभूतम् ततो बोधंप्रतिबृत्ति ज्ञानं काणमिति कायकारणभावस्यैक्यान्नगौरवम् । अत आह अथेति—शाब्द बोधं प्रति बृतिज्ञानाधोनोपस्थितिः कारणम् । एवं शक्ति जन्योपस्थितिर्भवतु लक्षणाजन्योपस्थिति प्रवाहे वृत्तिज्ञानंकारणस्वीकारे गौरवाभावः । उभयोः वृत्तिजन्यत्वात् । एकैव शाब्दवोधहेतुता—शब्दजन्यज्ञानकारणता । बृत्तिज्ञानत्वेन=लाक्षणिकार्थं प्रति पदनिष्ठशक्तिज्ञानंकारणम् । एवं तटशब्दस्थ शक्तिज्ञानमपि तीरोपस्थितौ कारणं । इत्थं पदार्थानां या उपस्थितिः तस्यां या कारणता सा एकैवेति मयावाच्यम् तन्न—भो नैयायिकाः ? मीमांसकाः ? भवद्भि वृत्तित्वं कीदृशं गृह्यते यदि वृत्तित्वं शक्तिलक्षणाऽन्यतरत्वं गृह्यते अर्थात् प्रवाहार्थिका शक्तिः, तटरूपार्थिका लक्षणा, तयोर्भेदात् शक्तिभेदविशिष्टो यो लक्षणाभेदो लक्षणाभेदविशिष्टो यश्शक्तिभेदः । एवं तयोः विशेषणविशेष्यभावपरिवर्तनेन

शक्तिभ्रम के अनुरोधर से अनेक पदों में अनेक अर्थों के भेद से कार्यकारणभाव की अनन्त कल्पना से तुम्हारे मत में भी गौरव समान है और लक्षणा कार्यकरणभाव जन्य गौरव लक्षणावादी के मत में अधिक विशेषता है । इस शंका पर वृत्ति (शक्ति) ज्ञान के अधीन उपस्थिति होने से शाब्दबोध में कारणता बनती है । हमारे मत में कोई गौरव नहीं । इस पर लक्षणावादी बोलता है कि शक्तिज्ञान रूप से पदार्थ की की उपस्थिति में कारणता स्वीकार की गयी है । क्योंकि शक्य सम्बन्ध लक्षणा में शक्ति का भी प्रवेश है । इसलिए वृत्तिज्ञानरूप से उपस्थिति होगी कोई दोष नहीं होगा । तत्र=ऐसा नहीं कह सकते । क्योंकि शक्तिज्ञान और पदार्थ की उपस्थिति दोनों का समान विषयक होना आवश्यक है । अन्यथा गंगा का तीर के साथ सम्बन्ध को न जानने वाले तुरुष को और सम्बन्ध जानने वाले पुरुष के बोध में कोई अन्तर नहीं रहेगा । इसलिए शाब्दबोध में कारणभूत जो पद और पदार्थ की उपस्थिति उनकी चाहे शक्तिजन्यज्ञान हो या लक्षणाजन्यज्ञान में कारणता हो तभी बोध होता है । दोनों की समान उपस्थिति में बोध बाधित होता है । इस प्रकार वृत्तित्व को कारणता का अवच्छेक मानने पर शक्तित्व की अपेक्षा होने से गौरव होगा । शाब्दबोध में कारणता का अवच्छेदक वृत्ति है । वह पद पदार्थ की उपस्थिति में रहती है । वृत्ति का ज्ञान न होने से वृत्तिघटित कार्यंकारणभाव का भी ग्रहण असंभव हो जायगा ।

**अथ ममापि शक्तिज्ञानत्वेनैन हेतुता, शक्यसंम्बन्धरूपलक्षणायां शक्तेरपि प्रवेशादिति चेन्न, शक्तिज्ञानदार्थोंपस्थित्योः कार्यकारणभावे समानविषयत्वस्याऽऽवश्यकत्वात् । अन्यथा गङ्गातीरयोः संबन्धाग्रहवतो गङ्गापदशक्तिं जानतोऽपि 'गङ्गायां घोषः' इति वाक्यात्तीरबोध प्रसङ्गः शक्तिज्ञानस्य हेतोः सत्त्वात् ।**

निवेशप्रयुक्तगौरवस्य स्वरूप कृत गौरवस्य च सत्वात् । शाब्दबोस्य = शब्दजन्यज्ञानस्य यो हेतुः=कारणभूता या पदार्थोपस्थितिः = पदतदर्थयोर्ज्ञानं तदनुकूलः = तस्य जनकः (उत्पादकः) पदपदार्थयोः सम्बन्धः स शक्तिरूपः लक्षणारूपो वा भवतु। तत्सम्बन्धत्वं वृत्तित्वं तस्य तयोर्वा कारणतावाच्छेदकत्वात् = पदार्थो ·स्थितिप्रत्ति वृत्तिज्ञानं कारणंभाव्यते चेत्तदा बृत्तिज्ञाने साक्षात्परम्परया वा पद्विशेषणीभूतं तत्सवं कारणतावच्छेदकं भविष्यति वृत्तिज्ञाने वृत्तित्व (शक्तित्व) मपेक्ष्य = स्वाश्रयविषयत्व सम्बन्धेन=विशेषणीभूतां शक्तिमपेक्ष्य गुरुत्वात् = एवं वृत्तित्वस्य गुरुभूतत्वात् । मम मतेतु शक्तिज्ञानत्वेन कारणत्वं स्वीकृत्य लघुभूते शक्तित्वे एकं कारणतावच्छेदकं ग्राह्यम् । एवं वृत्तिज्ञानत्वेन कारणत्वं तिरस्कार्यम् । शाव्दबोधानुकूलत्वस्य=शाब्बोधहेतुताया जनकत्वस्य कारणतावच्छेदकोपस्थित्यधीनत्वेन कारणतावच्छेदकस्य=पदपदार्थोपस्थितिवृत्तिज्ञानाऽधीनत्वेन विशेषणज्ञाने विशिष्टज्ञानस्य कारणतया विशेषणीभूतं वृत्तिज्ञानं विना न सम्भवतिः एवं कार्यं कारण भावोऽपि न सम्भवति । यतः वृत्तिज्ञाने शाब्दबोधे पदपदार्थोपस्थित्योः ज्ञानं कार्यं कारण भाव ज्ञानं कारणं, कार्यकारणभावज्ञाने वृत्तित्वज्ञानं कारणमित्यन्योन्याश्रयः तत्र वृत्तिज्ञानं न सम्भवति ।

इदानीं लक्षणाऽङ्गीकर्तुरपि शक्तिज्ञानत्वं कारणतावाच्छेदकमिति स्वीकृत्य गौरवं परिहरति अथ ममापीति—मीमांसकमतेऽपि शक्यसम्बन्धरूपा लक्षणा न केनाप्यपलपितुंशक्या लक्षणायाः कारणता, सर्वसम्मता । किन्तु वृत्तित्वेन कारणता मास्तु, किन्तु शक्तिज्ञानत्वेनैवहेतुता=शाब्दबोधं प्रति, शाब्दबीधानुकूलपदार्थोपस्थितिं प्रति च, शक्तिज्ञानत्वेन कारणता मन्तव्या । यतोहि लक्षणा शक्तिविषयार्थ सम्बन्धरुपा एवं लक्षणा ज्ञान विषयता च शक्तावपि सिद्धयति । ननु यस्य मते 'शक्यार्थादशक्यार्थोपस्थितिर्लक्षणा' इति बर्तते तस्य मते लक्षणा अशक्यार्थं तीरमुपस्थापयति । तेन शक्तौ लक्षणा ज्ञानस्यविषयता न सिद्धयति, कथं शक्तिज्ञानत्वेन हेतुता उच्येत तदाह शक्येति—शक्यसम्बन्धेस्य=वाच्यार्थ संकेतस्य ज्ञानरूप लक्षणायां=शक्तेरपि प्रवेशात्=अर्थात् लक्षणाज्ञानस्य शक्तिज्ञानत्वेनैव हेतुता मन्तव्या इति तन्न—यदि विषय=मनिवेश्यैव=शक्तिज्ञानपदार्थोपस्थित्योः कार्यकारणभावः

सम्भवेत् तदा स्यादुक्त प्रकारः=सदेव (शक्तिज्ञानत्वेन कारत्वं) दुर्लभं भवति तदाह शक्तिज्ञानेति—शक्तिज्ञान-पदार्थोपस्थित्योः द्वयोः परस्पर कार्यकारण भावे समान विषयताया आवश्यकत्वात्=अर्थात् तत्तादर्थविषयकोपस्थितिं प्रति तत्तादर्थनिरूपित पदनिष्ठशक्तिज्ञानं कारणम्। अस्य आवश्यक ज्ञानं द्रढ़यितुमाह अन्यथेति अन्यथा=शक्तिज्ञानपदार्थोपस्थित्योः समानविषयताया अस्वीकारेऽपि कार्यकारणभावो मन्यते तर्हि गंगातीरयोः यः लक्षणारूपः सम्बन्धः तस्य अग्रहवतः=अज्ञानिनः पुरूपस्य केवलं गंगापदशक्ति=प्रवाहो गंगापदशक्यः, इति भावज्ञानवतः किन्तु गंगापद-शक्य शम्बन्धितीरमिति अज्ञानवतः पुरूषस्य गंगापदत्तीर बोधो न जायते। यदि असमान विषयकस्यापि शक्तिज्ञानस्य कारणत्वं मन्यसेः तदा गङ्गायां घोष इति वाक्यात्तीरबोधप्रसंगात्=तीरोपस्थितिः शाब्दबोधश्च सम्भाव्येत। तथाहि शक्ति-ज्ञानरूपो यो हेतुः स वर्तत एव।

न च समानविषयत्वसिद्धयर्थं वृत्तिज्ञान जन्योपस्थितिः शाब्दबोधश्चानयोः पर-स्परकार्यकारणभावे नोक्तापत्तिरिति तदाह अपिचेति—घटमानय इति वाक्यम् हस्थिनञ्च स्मरतः=पुरूषस्य घटपदात् घटस्य उपस्थितिर्जायते गजशब्दात् हस्तिपकस्येति समूहालम्बनात्मकं स्मरणं जातम्। एवं घटानयनवत्=यथा घटस्य समूहालम्बनात्मकश्शाब्दबोधो जायते। एवं हस्पिकस्यापि समूहा लम्वनात्वशाब्द-बोधः स्यात्। यतः समूहालम्बनात्मिका=समूहविषयात्मिका या पदार्थोपस्थितिः तस्यां कार्य कारणभावसंयोजनकं वृत्तिज्ञानजन्यत्वमस्त्येव। तथा वृत्तिज्ञानाधीनो-पस्थिति विषयो घटोऽस्ति आनयनादिकन्तु तत्र सम्बन्धग्राहकम्। एवमेव तथा वृत्या =शक्त्या हस्तिपकस्यापि उपस्थितसम्भवेन शाब्दबोध विषयता अनिवार्यते।

मेरे (लक्षणावादो के) मत में शक्तिज्ञानरूप से ही कारणता स्वीकृत है। उस में (लक्षणा में) शक्ति भी प्रविष्ट है; परन्तु शक्तिज्ञान और पद पदार्थ की उपस्थिति से कार्यकारणभाव में समान विषय का होना आवश्यक है। अन्यथा गंगा और तीर के सम्बन्ध का ज्ञान न रखने वाले व्यक्ति का और गंगापद शक्ति को जानने वाले व्यक्ति का गंगायां घोषः'' वाक्य से तीर का ही बोध होगा। क्यों कि शक्तिज्ञान रूप कारण दोनों में उपस्थिन है। और भी 'घटमानय' यह वाक्य है और 'हस्तिनं च स्मरतः' इन वाक्यों में घट से घटादि का गज से हस्तिपक का सभूहालम्बन=एक साथ मिलित ज्ञान होने से घट के साथ हस्तिपक का भी शाब्दबोध होने लगेगा। क्योंकि जहाँ समूहालम्बनात्मक उपस्थिति है। वहाँ वृत्तिजन्यज्ञान भी स्थित है। जैसे—वृत्तिज्ञानाधीन विषय घट है वैसे ही हस्तिपक भी है। उसमें बोधविषयता अनिवार्य हो जायेगी।

अपि च 'घटमानय' इति वाक्यम् हस्तिनं च स्मरतो घटपदादिभ्यो घटादेर्गजाद्धस्तिपकस्य च समूहालम्बनस्मरणवतोघटानयनवद्धस्तिपकस्यापि शाब्दबोधापत्तिः, समूहालम्बनरूपायांपदार्थोपस्थितौ बृत्तिजन्यत्वसत्त्वात् । तथा च विषयतया शाब्दबोधं प्रति तदंशविषयकवृत्तिजन्योपस्थितिर्हेतु रिति वाच्यम् । एवं च लक्षणाया अपि शक्तिज्ञानत्वेन हेतुत्वमसंभवदुक्तिकमिति । एतेन शक्तिप्रयोज्यैवोपस्थितिर्हेतुरिति न लक्षणाज्ञानकार्यकारणभावान्तरं ममापीति परास्तम् । प्रयोज्यत्वस्यानतिप्रशक्तस्य दुर्वचत्वाच्चेत्यादिकं विस्तरेण प्रपञ्चितं भूषणे ॥ १ ॥ (३७) शक्ति से ही काम चलता है लक्षणा से नहीं ।

तथा च=यदि विषयतया=विषयतासम्बन्धेन तदंशविषयकवृत्तिम जन्योपस्थितिः हेतुः=तद्विषयकत्वावच्छिन्नं यद्वृत्तिज्ञानं तन्निष्ठा या करणता तन्निरूपिता या कार्यता = तद्रूपावच्छिन्नो योधमः तदवच्छिन्नोपस्थितिः कारणम् । यथा हस्तिपकविषयकं शाब्दबोधंप्रति उपस्थितौ (पदपदार्थोपस्थितौ वृत्तिजन्यत्वाभावात् = शाब्दबोधस्य आपत्तिर्न भविष्यति । वृत्तिज्ञाने धर्मित्वेन अभानात् नोक्तापत्तिरित्यर्थः । एवञ्च = बृत्तिज्ञानोपस्थित शाब्दबोधानां समान विषयकत्वेन हेतुहेतुमद्भावः फलति । अत एव लक्षणयाबोधे शक्तिज्ञानत्वेन हेतुत्वं = कारणता असम्भवदुक्तिकम् = लक्षणाज्ञानस्य शक्तिविषयकत्वेऽपि तीरविषयक शक्तिज्ञानमसम्भवम् ।

अपभ्रंशे बोधकत्व विचारः । यदि बोध-जनकत्वं शक्तिरिति सुनिश्चौयते तत्र दोषमाशङ्कते ननु एवमिति ज्ञानोत्पदकता शक्तिस्वी-

और भी बोले कि वियवता रूप से शाब्दबोध के प्रति तदंश=शाब्दबोधांश विषयक वृत्ति से उपस्थित ज्ञान को कारण मानने पर कोई दोष नहीं होगा । क्यों कि घट में घटत्वविच्छिन्नवृत्ति में शक्ति है । इससे हस्तिपक विषयक उपस्थिति में वृत्तिजन्यत्व न होने से बोध की आपत्ति भी नहीं होगी । इसी प्रकार लक्षणा के भी शक्तिरूप ज्ञान में कारणता असम्भव है । इस प्रकार से समूहालम्बनात्मक उपस्थिति को लेकर हस्ति पक का शाब्द बोधरूप दोष के प्रदशन से शक्ति प्रयोज्य उपस्थिति को ही कारण मानने की अपेक्षा लक्षणा ज्ञान में अन्य कार्य कारणभाव की कल्पना मेरे मत में भी नहीं करनी पड़ती । ऐसा कहने वाले (लक्षणावादी) परास्त हो गये । क्योंकि प्रयोज्यत्व=जन्यजन्योभय साधारणधर्म और अनतिप्रसक्त धर्म तुम्हारे मत में दुर्वच है ।

**नन्वेवं भाषादितो बोधदर्शनाद् बोधकतारूपा शक्तिस्तत्रापि स्यात् । तथा च साधुताऽपि स्यात् । शक्तत्वस्यैव साधुताया व्याकरणाधिकरणे प्रतिपादनादित्याशङ्कां द्विधा समाधत्ते—**

कारे भाषादि = शब्दत: ज्ञानोत्पत्ति दर्शनात्, आदिपदेन लौकिकशब्दतोऽपि-बोधदर्शनात्, तत्राऽपि बोधजनकता शक्ति: सिद्धाभवति शक्तत्वञ्च साधु:। अत्र भाषाशब्दोऽपभ्रंशज्ञापक:, यज्ञादावसाधूनामुच्चारणं पापजनकम्। अतोऽपभ्रंश्यते पापंजन्यने नरकादौ पात्यते वाऽनेन ( करणेघञ्) अपभ्रंश:, विभिन्न-देशीय: लौकिक: ( लोकेप्रयुज्यमान: ) व्यावहारिकोऽसाधुशब्द:। यद्यपि भाष्यते, बुध्यतेऽर्थोयया सा ( कर्मणि अ प्र० ) इति व्युत्पत्या संस्कृताऽसंस्कृता वा भाषा गृहीतुं शक्यते। तथापि साधु शब्दप्रतिकूल प्रतिपादनेनात्रप्रयोगात् असाधूनामेव-ग्रहणम्। तत्र गगरी, गाय, गोबर गनेस गहिर गड़ेरिया इत्यादि लौकिकासंस्कृत शाब्दाद् व्यावहारिकंज्ञानं दरीदृश्यते। तेन तत्राऽपि = असंस्कृतशब्देऽपि बोधस्य या करणता शक्ति: सा अवश्यं मन्तव्या। एवमप्रभ्रंशेऽपि बोधकत्वं भविष्यति। ततस्तेषामपि अपभ्रंशात्मक भाषायामपि साधुत्वं स्यात् तथा भाषाया: शक्तत्वे च मीमांसाया व्याकरणाधिकरणे = साधुपद प्रशासके नवमाधिकाणे शक्तत्वं साधुत्व-मुक्तम्। अपि च अनादिवाचकत्वं साधुत्वंतद्विपर्ययश्चासाधुत्वम्। तत्र अनादि वाचकत्वरूपं साधुत्वंमसाधौ अपि वर्तते नहि तेषामादिकर्ता प्रसिद्ध:। इति दृष्टया अपभ्रंशोऽपि साधुर्भवति। इत्याशंकां द्विधा = अपभ्रंशानां बोधोजनकत्वा-

एवं=बोध जनकता को शक्ति स्वीकार करने पर भाषा अपभ्रंश आदि शब्दों में भी बोध कराने की क्षमता होने से बोधकता रूप शक्ति अपभ्रंश शब्दों में भी सिद्ध होती हैं। तो उसमें भी साधुता चली जायेगी क्योंकि व्याकरणाधिकरण के नवमा-धिकरण में शक्तिमान को ही साधु स्वीकार किया गया है। तो अपभ्रंश साधु क्यो न माने जांय। इस शंका का समाधान दो प्रकार से ग्रन्थकार ने किया हैं। कि असाधु शब्द साधु शब्द के अनुमान के आधार पर वाचक किसी के द्वारा माने गये है। कोई साक्षात् वाचक मानते हैं साधु शब्द और असाधु शब्द के वाचकता में अविशेष=कोई अन्तर न होने से वहां पुण्य पाप का नियम लगता है। संस्कृत शब्द के प्रयोग में पुण्य है यज्ञादि में असंस्कृत शब्द के प्रयोग में पाप है। जैसे असाधु गावी गोणी गोपोतलिका आदि अनुमानेन=गो: इस साधु शब्द का अनुमान करके बोधका विषय बनते हैं। जैसे लिपि में अर्थ की स्मारकता शक्ति है। इसके स्मरण से बोध माना जाता है। ऐसे ही अपभ्रंस में साधु शब्द के स्मरण से व्यावहारिक उपयोग होता है वह प्रत्यक्ष रूप से वाचक नही हौता इसलिए उसमें साधुत्व नहीं है। वाक्य पदीय में भी कहा गया है कि—

**असाधुरनुमानेन वाचकः कैश्चिदिष्यते ।।**

**वाचकत्वाविशेषे च नियमः पुण्यपापयोः ।।२।। (३८)**

**असाधुर्गाव्यादिः अनुमानेन साधुशब्दमनुमाय वाचको बोधकः कैश्चिदिष्यते । तथा च लिपिवत्तेषां साधुस्मरण एवोपयोगो न तु साक्षात्त द्वाचकत्वमतो न साधुत्वमिति भावः ।**

**उक्तं हि वाक्यपदीये—**



भाव व्यवस्थापनेन असाधौ बोधकत्वस्य सत्वेऽपि व्याकारणस्मृति विषयत्वं साधुत्वं, न तु शक्तत्वमिति प्रतिपादनेन द्विधासमाधत्ते = शक्तिनिर्णयः क्रियते । अतआह ग्रन्थकारः आसाधुरनुमानेनेति अस्यां कारिकायां मतद्वयसमभिव्याहृतं वर्तते पूर्वार्धकारका न्यायमतं समर्थयति । परार्धा वैयाकरणमतम् । कैश्चिन्नैयानिकादिभिः अस।धुः = असंस्कृताः लोकिकाश्शब्दाः गगर्यादयः अनुमानेन—साधुशब्दमनुमाय = स्मरणं कृत्वा ( अत्र अनुपूवक माधातुः स्मारकमर्थः अनुपश्चान्मानमिति व्युत्पत्तेः, न तु यत्र यत्र असाधुस्तत्र साधुस्मरणमिति व्याप्तिज्ञानम् । साधुशब्दज्ञानशून्यानामपि बोधदर्शनात् । अतः गौरित्यस्य विकृतः गायशब्द झटिति प्रकृतेः स्मारकः । तेन गौरिति अनुमाय—स्मरणं कृत्वा असाधवः वाचकाः— इत्यर्थः । न तु साक्षात् वाचकाः अपभ्रंशानां साधुस्मारकत्वे एवोपयोगः न तु प्रत्यक्ष वाचकता । यद्यपि स्मरणकर्तृत्वं चेतन एव दृश्यते, तथापि शब्दे चेतनत्वारोपेण स्मृतिकर्तृत्वं बोध्यम् । असाधु शब्दः साधुशाब्दमनुमायबोधकः अस्य नियामकं शास्त्रं भवति, साधु शब्दैरेवार्थोऽमिधेयो नाऽपशब्दैः" एक क्रियमाणोऽभ्युदयकारि भवति"

असाधुमात्रप्रयोगे धर्मस्य अमावः पापञ्च जायते । अप्रभ्रंशाः त्रिधाः बोधयन्ति अपशब्दः साधुं स्मार्य बोधयति, अथवा असाधुः संस्कृत शब्देन सह तादात्म्यं कृत्वार्थम्बोधयति, या, शब्द इव साक्षादर्थं ब्रवीति । अत आह तथा चेति—संस्कृत शब्द विशेषज्ञानां व्युत्पन्नानां कृते असाधु शब्द स्मरणादेव अस्संस्कृतानामुपयोगः, अव्युत्पन्नानान्तु शक्तिग्रहादेव वोधः । यथा लिपिः = लोक प्रसिद्धो वर्णः क ख इत्यादिरिव = लिपिवत् अर्थात् लिपीनामक्षरस्मरणे एवोपयोग बोधकता च मन्यते । अपभ्रंशाः साधूनां स्मारकाः न बु साक्षात् बोधकाः ततः साधुत्वमपि न तेषाम् । अत्र भतृहरि सम्मतिराह उक्तञ्चेति वाक्यपदीये—

**ते साधुष्वनुमानेन प्रत्योत्पत्तिहेतवः ।**
**तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः ।।**
**न शिष्टैरनुगम्यन्ते पर्याया इव साधवः ।**
**न यतः स्मृतिमात्रेण, त्तस्मात्साक्षादवाचकाः ।।**
**अम्बाम्बेति यदा बालः शिक्ष्यमाणः प्रभाषते ।**
**अव्यक्तं, तद्विदां तेन व्यक्ते भवति निर्णयः ।।**
**एवं साधौ प्रयोक्तव्ये योऽपभ्रंशः प्रयुज्यते ।**
**तेन साधुव्यवहितः कश्चिदर्थे ऽभिधीयते ।।इति।।**

असंस्कृताश्शब्दा साधुषु = (विषयसप्तमी) साधुविषयकमनुमानेन = स्मरणं चारयित्वा प्रत्ययोत्पत्तिहेतवः = शब्दबोधोत्पत्तिकारणानि भवन्ति । एवमेव ते = असाधुशब्दः तयोः शब्दार्थयोरात्मा तस्य भावः तादात्म्यम् साधु शब्दार्थयौरेकीभावमुपगम्य = सम्प्राप्य शब्दार्थस्य = प्रकाशकाः = प्रत्यायकाः भवन्ति । शाब्दबोधकारणतां नयन्ति । यद्यपि लोके तयोः शाब्दार्थयोस्तादाम्यमुपलभ्यते तयोरेव वाच्यवाचक भावः । यस्याथस्य यस्मिन्शब्दे तादात्म्यम् ( अभेदः ) तदर्थं प्रतिपादिकाशक्तिः तस्मिन् शब्दे बोध्याः असंस्कृतस्य भाषाशब्दस्य शिष्टप्रयुक्तत्वरूप साधुत्वस्या भावात् अर्थेन सह तादात्म्यन्नास्ति । किन्तु अप्रभ्रंशाः संस्कृतशब्दार्थेन सह तादात्म्यं प्राप्ता इव अर्थप्रकाशकाः भवन्ति । न तु साक्षात् बोधका इति । अपभ्रंशेऽर्थस्य तादात्म्येन = अभेदस्तु भ्रमाद् शकेभ्रंम इति ध्वन्यते । यथा बालाः अनुकरणेनावगच्छन्ति । अन्धाः अनुमितवृत्तयो भवन्ति, न तु साक्षाज्जानन्ति पश्यान्तीवा एवं ते सादृश्यात् साधुशब्दं स्मारयन्ति एव, विद्वान्सः अपभ्रंशशब्दात् साक्षादर्थंन पश्यन्ति । अपभ्रंशःनां सम्बन्धोऽर्थे नस्ति । अत एव प्राचीन काले अपभ्रंशैरनृतादिभिश्च वागसुरक्षिता आसीत् । तस्मादबाचका अपभ्रंशाः इति ।

असंस्कृतानामवाचकत्वे युक्तिमाह न शिष्टैरिति—शिष्टैः=प्रामाणिक व्याख्याकारैः पतञ्चल्यादिभिः ते=अपभ्रंशाः, साधवः=व्याकरणप्रक्रियानुभोदिताः अत एव सुसंस्कृताः पर्यायाः=समानार्थकशब्द इव साधुरिवासाधुरपि शिष्टैः स्मृति शास्त्रेण=शब्दानुशासनप्रक्रियाप्रातिपदिकशास्त्रेण न प्रतिपाद्यन्ते नानुगम्यन्ते; स्पष्ट प्रकृति प्रत्ययादि रूपेण न बोध्यन्ते । यतः=यस्मात् कारणात् । तस्मात् = पाणिन्यादिप्रामाणिकैरननुगृहीतत्वात् ते साक्षात् = स्वरसतोऽवाचका = अबोधका इत्यर्थः ।

अपभ्रंशाः साधुशब्दं स्मारयित्वा कथं बोधकाःभवन्तीत्याशयेनाह बम्बेति—यदा = यस्मिन् काले शिक्ष्यमाणः = मन्त्रादिभिः = अम्बा अम्बा इति कथय ? एव मनुशास्यमानो बालकः उच्चारणेऽसमर्थः सन् अशक्त्या 'म्वा-म्वा' इति अव्यक्तं अस्पष्टमक्षरं प्रभाषते = बारम्बारं ब्रवीति तदा तद्विदां='अम्बा' इति. साधु शब्द-विदां तटस्थश्रोतॄणां बालकस्य अव्यक्तशब्दस्य (असंस्कृतस्य) अम्वा इत्यनुभूय तेन = साधुशब्दविकृतापभ्रंशशब्दे व्यक्ते=अपभ्रंशप्रकृतिक साधुशब्दे स्मृतेसति अर्थंबोधोजायते ।

एवंम् = उक्तरीत्या साधौ प्रयोक्तव्ये=सस्कृतशब्दप्रयोक्तुमर्हत्वेऽपि तत्स्थाने अप्रभ्रंशः=असाधुः यः=शब्दः प्रयुज्यते=प्रयुक्तो भवति तेन=उच्चरितः संस्कृतशब्देन साधुशब्दव्यवहितः – ससंकृतशब्दस्मरणद्वारा कश्चित्= प्रसिद्धोऽम्वादि-

ते=वे अपभ्रंस साधु शब्द विषयक स्मरण कराके प्रत्ययोयत्ति हेतव =शब्द-बोध की उत्पत्ति में कारण होते हैं। और तादात्म्य शब्द का=अर्थ के साथ अभेद की तरह प्रतीति होती है। वे अपभ्रंश शब्द और अर्थ के प्रकाशक है। इसलिए शिष्ट ( लक्ष्यक चक्षुष्क ) लोग भी संस्कृत शब्द के पर्याय वाची के रूप में प्रयोग नहीं करते वे स्मरणमात्र से अर्थ के बोधक नहीं होते। इसलिये प्रत्यक्ष रूप से वाचक भी नहीं होते। जैसे मां अबोध बच्चे को अम्बा कहने की शिक्षा देती है। शिक्ष्यमान बालक अपभ्रंश बम्वाबम्व ऐसा बोलता है। बालक के इस अव्यक्त शब्द को सुनकर अम्बा इस साधु शब्द का स्मरण करके बच्चे की अव्यक्त शब्द में साधु शब्द निर्णय करके तटस्थ व्यक्ति ज्ञान करता है। वमवम् में अम्बा का अनुभव करता है। साधु शब्द प्रयोग करना चाहिए था किन्तु अपभ्रंश का प्रयोग हो गया तो उससे साधु शब्द के व्यवधान में किसी अर्थ की कह रहा है ऐसा समझना चाहिए।

नन्वपभ्रंशो में साक्षात् बोध कराने की शक्ति नही है इसमें क्या प्रमाण है क्योंकि शक्ति का निर्णयक जो व्यवहार है वह समान है। ऐसी स्थिति में अपभ्रंश साक्षात् वाचक वयो नहीं तब बोले सत्यम् परन्तु तत्तदेश = अनेक देशों के भेद से भिन्न भिन्न अपभ्रंश अनेक अर्थो में व्यवहृत है। तो अनेक शक्ति की कल्पना करने में गौरव होगा न कहिए कि दोनों के पर्याय बनने में तुल्यता समानता है। तो सभी देश में एक अर्थ के अनेक साधु शब्द पर्याय माने गये है। वे सब जगह एक है एकतर पक्ष-पातिनी युक्ति के बिना सभी स्थल में शक्ति की कल्पना की जाती है। ऐसा अपभ्रंश में नही है। वह सब देशों में भिन्न-भिन्न है अन्यथा भाषा शब्दों का भी पर्याय रूप से मान्यता हो जायेगी यदि शक्तियत्व की साधुत्व मानते है तो यह मानना नैययिक मीमांसको के मत से ही समझना चाहिए।

**नन्वपभ्रंशानां साक्षादवाचकत्वे किं मानं, शक्तिकल्पकव्यवहारादेस्तुल्यत्वादिति चेत् ? सत्यम् तत्तद्देशभेदभिन्नेषु तेषु शक्तिकल्पने गौरवात् । न च पर्यायतुल्यता शङ्क्या । तेषां सर्वदेशेष्वेकत्वाद्विनिगमनाविरहेण सर्वत्र शक्तिकल्पना, न ह्यपभ्रंशे तथा । अन्यथा भाषाणां पर्यायतया गणनापत्तेश्च । एवं शक्तत्वमेवास्तु साधुत्वमिति नैयायिकमीमांसकादीनां मतेनैव द्रष्टव्यम् ।**

रूपोऽर्थोऽभिधीयते = बोध्यइत्यर्थः । एवमप भ्रंशानां वाचकत्वाभावः सिद्धः इति ।

इदानी मुक्तं तात्पर्यं सुदृढ़ीकर्तुमाशङ्कते नन्विति–अप्रभ्रंशाः साक्षात् वाचकाः न भवन्तीत्यत्रकिं प्रमाणं । यतोहि शक्तीनां=शाब्दार्थयोः सम्बन्धानां कल्पकः= प्राधान्येन प्रतिपादकः प्रमुखो व्यवहारादिः=शक्तिग्राहकशिरोमणिः वृद्धव्यवहार एव=तस्य अप्रभ्रंशेष्वपि तुल्यत्वात्=समानत्वात् । अर्थात् वृद्धव्यवहारेण असंस्कृता अपि संस्कृतवत् बोधका दरीदृश्यन्ते । कथन्न तेषां वाचकताऽङ्गीक्रियते । इति चेत् = यद्येवं तर्हि सत्यं=स्वीक्रियते । परन्तु तत्तद्देशभेदेन=सकलशाब्दोच्चारणाधिकरणीभूत विभिन्नेषुदेशेषु भिन्नेषु=पृथक् २ जातेषु तेषु २ नानाप्रकारकेषु प्रसिद्धेषु आसाधु (गावीगोणी गोतादिषु) शब्देषु शक्तिकल्पने=नाना शक्तिकल्पने गौरवात् । अर्थात् अपभ्रंशस्य नानात्वेन नाना शक्तिकल्पनारूपंगौरवात् । संस्कृतस्यतु सर्वत्रैकरूपेण बोधकता दर्शनेन तत्रैवलाघवाच्छक्तिः । न च शक्तिग्राहकशिरोमणेः व्यवहारस्य तुल्यत्वात् संस्कृताऽसंस्कृतयोः पर्यायतुल्यता शङ्क्या, अर्थात् एकस्यार्थस्य प्रतिपादिकाऽनेकेशब्दाः प्रयार्याः भवन्ति । एवमपभ्रंशस्य पर्यायता मन्यताम् । तन्न, तेषां=साधुपर्यायाणाम् सर्वदेशेषु=अखण्ड भूमण्डलेषु एकत्वात् =एकजातीयत्वात् एकरूपत्वात्=रामः परशुरामः बलरामः सर्वत्र एकरूपेण बुध्यते । विनिगमनाविरहेण=एकतरपक्षपातियुक्त्यंभवेन तथा—एकजातीयत्वमेकरूपता एकशक्तिकल्पनाच नहि=न कर्तुं शक्यते । सा भिन्ना २ । अन्यथा= एक जातीयत्वस्य ( एकरूपताया ) शक्तिकल्पनायामविवक्षितत्वे साधूनामिव भाषाणाम्=अप्रभ्रंशनां पर्यायतया सामानार्थं इव गणनापत्तेश्च=कोषा ौप्रतिपादनं स्यात् । एवञ्च—असाधूनामशक्तत्वेच शक्तिमत्वं साधुत्वमेवास्तु । असक्ता असाधुर्भवति । इत्यादि नैयायिकादिमतेन=तत्सिद्धान्तेन । ते साधुष्वनुमानेन इत्यादि प्रमाणेन दृष्टव्यम् । नतु वैयाकरण सिद्धान्तेन ।

इदनीं=अधूना वैयाकरणमतमुच्यते=वाचकत्वाऽविशेषेऽपि नियमः पुण्यपापयोरिति— वाचकत्वाविशेषे=अपभ्रंशसाधुशब्दयोर्वाचकत्वस्य =अर्थबोधकत्वस्य

**इदानीं स्वमतमाह—वाचकत्वविशेषे चेति। अयं भावः—अपभ्रंशानामशक्तत्वे ततो बोध एव न स्यात्। न च साधुस्मरणात्ततो बोधः, तानविदुषां पामराणामपि बोधात् तेषां साधोरबोधाच्च। न च शक्तिभ्रमात्तेभ्यो बोधो बोधकत्वस्याबाधेन तद्ग्रहस्याभ्रमत्वात्। ईश्वरेच्छा शक्तिरिति मतेऽपि सन्मात्रविषयिण्यास्तया बाधाभावात्। शक्तेः पदपदार्थविशेषघटिताया भ्रमासंभवाच्चेति।**

द्वयोर्मध्ये नास्ति विशेषोऽविशेषः नास्ति भेद इत्यर्थः। यथा घोटकस्तथा घोड़ा इत्यसाधुनाऽपिबोधः। तथापि इयान् विशेषो यत् नियमः पुण्यपापयोः=व्याकरण-स्मृत्या नियमः साधुभिर्भाषितव्यम्। नाऽसाधुभिरिति। साधुभिर्भाषणे पुण्यम्। असाधुभिर्भाषणेऽण्यम्। वाचकत्वन्तु द्वयोपुसःमानमेव। प्रस्पशाह्निके महाभाष्ये समानायामर्थावगतौ शब्देन चापशब्देन च तत्र तयोनियमः क्रियते शब्दैरेवाऽर्थोऽतिधेयो नापशब्दैरित्युक्तम्। एतइमां युक्ति सरलतया बोधयितुमाहअयं भाव इति—अपभ्रंशानां=मसंस्कृतानां यदि अपभ्रंशाः अशक्ता=असमर्थाः, अबोधका वा स्युः तर्हि ततः=अपभ्रंशात् बोधः=अर्थज्ञानं न स्यात्। नच=यदि साधुस्मारणात्=व्याकरण नियमानुशासितशब्दंमनुमाय ततः=अपभ्रंशात् बोधः यथा द्विदलशब्दमनुमाय दाल इत्यपभ्रंशस्यबोधः। तदपि न वक्तु शक्यते। यतोहि तान्=संस्कृत शब्दान् अविदुषा—मजानतां ये साधुशब्दान् न पठितवन्तस्ते तान् जानन्त्येव न। पामराणां=अज्ञानिनामपि अशिक्षित भाषातोऽपि बोध दर्शनात्। व्यवहारेण बोधानुभवात्। तेषां=मूर्खाणां (अशिक्षितानां) साधोः=शिष्टशब्दात् अबोधात्=बोधो न जायते इत्यर्थः। अनधीतशास्त्राः पामराः सधुत्वप्रकरकं बोधमेव न जानन्ति, तैः साधुशब्दस्मरण कल्पनाऽपि न कर्तु शक्यते इति।

अब स्वमतं वैयाकरण अपना मत कहने है दोनों की वाचकता में कोई अन्तर न होने से केवल पुण्यपाप का नियम लगता है भाव यह कि अपभ्रंश में शक्ति यदि नही मानते है। तो भी अपभ्रंशों से बोध नहीं होना चाहिए किन्तु बोध अवश्य होता है यदि कहिये कि साधु शब्द के स्मरण से असाधु शब्दार्थ का बोध होता है तो जो अविथन एवं अशिक्षित हैं उनको भी बोध होता साधुत्व के स्मरण बिना भी बल्कि उनको साधु शब्द से बोध ही नहीं होता। यदि कहिए कि शक्ति का भ्रम होने से अपभ्रंशों से बोध हो जायेगा तो बोधकत्व का साधन न होने से बोधकता शक्तिज्ञान में भ्रम नहीं होगा। जो लोग ईश्वरेच्छा को शक्ति मनते है उनके मत में भी सत्तामात्र को विषय करने वाली इच्छा का भी बोध नहीं होगा तो भ्रम भी सिद्ध नही हो सकता. शक्ति के पद और पदार्थ में विशेषरूप से घटित होने के कारण भ्रम भी असम्भव है।

उक्तं च वाक्यपदीये—

पारम्पर्यादपभ्रंशा विगुणेष्वभिधातृषु ।
प्रसिद्धिमागता येन तेषां साधुरवाचकः ॥
दैवी वाग व्यवकीर्णेयमशक्तैरभिधातृभिः ।
अनित्यदर्शिनां त्वस्मिन् वादे बुद्धिविपर्ययः ॥ इति ।

अबाचकोऽबोधकः । बुद्धिविषर्ययः—अत एव वाचका नान्ये इति विषर्यय इत्यर्थः । किं च बिनिगमनाविरहाद् भाषायामपि शक्तिः । न च तासां नानात्वं दोषः । संस्कृतवन्महाराष्ट्रभाषायाः सर्बत्रैकत्वेन प्रत्येकं विनिगमनाविरहतादवस्थ्यात् ।

न च = यदि अपभ्रंशे शक्तिभ्रमात् = अर्थसाधिकाया = साधुशब्द निष्ठायाः शक्तेर्निश्चयारोपात् । तेभ्यो = असाधुभ्योऽपि बोधज्ञानं तन्न, असाधुशब्दे साधुशब्द भ्रमो न भवतुमर्हति । यतः भ्रमस्तु वस्तुनि अवस्त्वारोपो ब्रह्मणि अविद्याइव । असाधौ साधुभ्रम इति न, बोधकत्वस्य–अर्थप्रत्याय कत्वस्य अवाधेन = बाधाभावेन । अपभ्रंशे बोधकत्वस्य कालत्रयेऽपि वाधो न जायते । बोधकतायाः शक्तेः वाधो न दृश्यते । तद्ग्रहस्य = बोधकताया ज्ञानस्य अभ्रमत्वात्-वाधाभावेन भ्रमत्वाऽभावात् । भ्रमस्य वाधो भवति शुक्तवेवभ्रमस्य वाधो दृश्यते, रज्वौ सर्पभ्रमस्य वाधोऽनुभूयते, किन्तु अपभ्रंशे शक्तेर्वाधो न क्वाप्यनुभूयते । तदभाववत्ता ज्ञानंप्रति तद्वत्तानिश्चयस्य प्रतिबन्धकत्वात् अर्थात्—

वाक्य पदीय में भी कहा गया है कि विगुणेषु—वाणी और इन्द्रियों के दो । के कारण बोलने वालें ने उच्चारण का सामर्थ्य न होने की परम्परा से वे शब्द अपभ्रंश के रूप में प्रसिद्ध हो गये इसलिए उनके मत में साधु शब्द ही वाचक है । अशक्त वक्ताओं से, यह देवताओं की वाणी व्यवकीर्ण—छिन्न-भिन्न अव्यवस्थित हो गयी । अशक्तों के यहाँ असाधु शब्द ही वाचक है । उन भाषा शब्दों में अनित्यता का दर्शन करने वाले मीमांसकों की वाणी में बुद्धि का विपर्यय हो गया । अनित्य शब्दों को मानने वाले नैयायक भी बुद्धि में परिवर्तन अनुभव किये कहीं असाधु शब्दों से साधु का स्मरण करके बोध होता है । इसलिए पक्षपात पूर्ण युक्ति के बिना भाषा में भी शक्ति माननी चाहिए । न कहिए कि अपभ्रंशों में नानात्वहीने के कारण नाना शक्ति का दोष लगा तो संस्कृत की तरह महाराष्ट्र आदि भाषाओं का अनेक स्थल में होने से किसी एक के प्रति विनिगमना—प्रामाणिकता अभाव होने से पूर्व दोष यथावत् रह जायेगा ।

इश्वरेच्छा शक्तिरितिमतेऽपि = विजुलीशब्दात् विद्युद्विपयक कार्यं वोधदर्शनेन विद्युत् विजुलीपद जन्यबोध विषयतावान् भवतु, इतीश्वरेच्छाशक्तिरावश्यकी। तत्रापि सन्मात्रविषयिण्या = अस्नोति सन् सनेव सन्मात्रं तद्विषयो यस्यासा तस्या = इच्छायाः ईश्वरेच्छासम्पूर्ण सद्वस्तुनि विद्यते अपप्रभ्रंशाद् वोध सर्वानुभवसिद्धः तेन बोध विषयिण्याः इच्छाया अपि बाधाभावात् = वाधे ( निवृत्तिर्न भवति। अतः अप्रभ्रंशे इश्वरेच्छायां भ्रमत्वं न वक्तुशक्यते। तदभाववति तत्प्रकारक ज्ञानस्यैव भ्रमत्वात् नतु लक्षणिकार्थे न वाचकत्वव्यवहारः। एवमप्रभ्रंशेऽपि भास्तु एवं इश्वरेच्छायाः भ्रम इति वक्तुन्नशक्यते। अत आह शक्तेरिति–सा पदञ्च पदार्थश्च तयोर्यो विशेषः = तेन घटिता या इश्वरेच्छा तस्याः भ्रमो = ऽसम्भवात् = उक्तञ्चेति अपभ्रंशानां वाचकत्व पक्षे हरिकारिकासम्मति प्रस्तौति ग्रन्थकारः परम्परा एव = पारम्पर्यं ( स्वार्थेष्यञ् ) परम्परातः विगुणेषु = विनष्टोः गुणो येषांन्ते, तेषु वागिन्द्रियदोषवशादुच्चारेण सामथ्यशून्येयु अभिधातृषु = उच्चारयितृषु = बक्तुः परम्परातः येषु = अर्थेषु अप्रभ्रंशाः प्रसिद्धिरूढ़िभागताः = उपलब्धाः तेषां = परम्परागताऽसाधुशब्दस्यार्थानां साधुः = शब्दः स्मरणद्वारा अवाचकऽ किन्तु असाधुरेव वाचकः।

इयं दैवीवाग् = देववाणी संस्कृतरूपा अशक्तैरसिधातृभिः = सम्युगच्चारणसामर्थ्यशून्यैः वक्तृभिः व्यवकीर्णा = विपरीतस्वरूपा नानारूपं प्राप्ता। अनित्यदर्शिनां = शब्दोऽनित्य इति ब्रुवतां नैयायिकादीनां अस्मिन्नवादे = शक्तिः कुत्रेति सिद्धान्तविचारे बुद्धिविषयः = बुद्धे = बोधकताया विषर्ययो = भेद इति अर्थात् एते = वाचकाः एतेऽवाचका अन्ये वाचकाः इति न भेदः। किन्तु सर्वेवाचकाः। न च तेषाम् = अपभ्रंशानां नानात्वं = देशकालभेदात् भिन्नम् ततो नानाशक्ति कल्पनेति दोषः। अननुगतधर्मत्वात्। तत्र शक्तिर्न मन्तव्या इति न। संस्कृतवत् = यथा संस्कृतभाषा सम्पूणदेशेषु एकरूपेण-वर्तते, १ का महाराष्ट्र-गुर्जर अङ्ग-वङ्ग कलिंगादिदेशेषु सा स्वास्वप्रान्ते एकरूपेणैव वर्तते। तत्र कस्यां न शक्ति रिति न वक्तुशक्यते। विप्रिगमनाविरहः = बोधकत्वपक्षपातः तवापि नास्ति। तादवस्थ्यः = पुर्ववत् स्थितोऽस्ति।

ननु अप्रभ्रंशेषु शक्तिस्वीकारे शक्तीनां नानात्वं स्यात्। ते आनुपूर्वी गावीत्व गोणीत्व गीतात्वादि भिन्ना २ शक्ततावाच्छेदिकाः (पदत्वभेदिका) भविष्यन्ति। एवं गौरवं जन्यते तदाह ग्रन्थकारः किञ्चेति–सा शक्तिः पदे आनुपूर्वी अवच्छेदिका (वाचकत्वभेदिका) बोधजनकतावाच्छेदिका एकैव न नानेति। सा = अपभ्रंशस्था शक्तिरानुपूर्वी = पर्यासवर्ण प्रर्यायवाची शब्द इब भाषायामपि = ससंस्कृतशब्देऽपि अन्यान्यैव = अवाच्छेदिका = मानयिष्यते। अतस्तयोः = संस्कृता

किं चानुपूर्वी पदेऽवच्छेदिका। सा च पर्यायेष्विव भाषायामप्यन्याऽन्यैवेति कस्तयोर्विशेष इति विभाव्यं सूरिभिः। तथा च संस्कृतवद् भाषाशब्दाः शक्ता एव। न च पर्यायतया भाषाणां गणनापत्तिः। साधूनामेव कोशादौ विभागाभिधानात्।

नन्वेवं साधुता तेषां स्यादित्यत आह—नियम इति। पुण्यजननबोधनायसाधूनांसाधुभिर्भाषितव्यमिति विधिः। पापजननयोग्यत्वमसाधुत्वम्ः। तत्र जनकताऽवच्छेदिका च जातिः। तज्ज्ञापकं च कोशादि व्याकरणादिश्च।

पभ्रंशयोः को विशेषः=भेदोऽन्तरः इति सूरिभिः=विद्वद्भिः विभाव्यं=विचार्यम्। अतः संस्कृतवत्=अनुशासितशब्द इव भाषायाः=असाधोः सर्वत्र=स्वास्वदेशे एकत्वेन=समानरूपेण विद्यमानेन प्रत्येकं=सर्वे भाषाशब्दाः शक्ताः=शक्त्या श्रयपदानि भवन्ति।

न चेति—यथा साधुशब्दानां समानार्थकानां प्रर्यायता जायते एवमसाधुशब्दानामपि पर्यायेषु गणनाया आपत्तिः स्यात, तन्न अमर कोषादौ शिष्टानामेव शब्दानां विभाग पर्यायरूपता च दृश्यते। नन्वपभ्रंशादौ। इदानी वै०याकरणम् पृच्छति यत्, यदि भाषायां शक्तिः स्वीक्रियसे तर्हि शक्तत्वं साधुत्वमिति नियमात् भाषायामपि शक्तत्व सत्वात् साधुत्वम् सम्भवेत्। इत्याशङ्कायामाह-नियमः पुण्य पापयी रिति पुण्यजननबोधनाय=अदृष्टात्पत्यर्थं शिष्टशब्दानां प्रयोगः क्रियते। साधुभिर्भाषितव्यमिति विधिः=भाष्ये शब्देनैवार्थोऽभिधेयो नापशब्देन एवं क्रियमाण-

अपभ्रंश में नाना शक्ति के होने पर भी अनुपूर्वी में गावित्व गोणित्व आदि भिन्न-भिन्न शक्तावच्छेकक=शब्द निष्ठ धर्म अनक होने से गौरव है। इस पर ग्रन्थकार बोले कि पद में अनुपूर्वी जैसे घट शब्द में घअट्अ आदि रूप पद में शब्द भेदक धर्म है वही वाचकता का अवच्छेदक है। वह पर्यायवाची शब्दों की तरह भाषा में भी अन्यान्य की अवच्छेदिका मानी जायेगी तो संस्कत और भाषा में क्या अन्तर हांगा विद्वान् यह विचार करें। अतः संस्कृत को तरह भाषा में भी सब जगह एक होने के कारण प्रत्येक में हम शक्ति मानेगे तो साधु शब्द के पर्याय के रूप में भाषा शब्द की गणना होनी लगेगी। कोषादिक में साधु शब्द का ही पर्याय के रूप में विभाग का निरूपण किय गया। पर्यायता साधु में ही है। नैयायिक बोले भाषा में शक्ति स्वीकार करने से शक्तत्वं साधुत्वं का लक्षण अपभ्रंश में भी घटने से साधुता की आपत्ति होगी इसलिए कारिका में बोले 'नियम पुण्यपापयोः" साधु का प्रयोग पुण्योत्पत्ति के लिये है। साधु शब्दों से बोलना चाहिए। यह विधि है। असाधु शब्द से यज्ञादि में पाप का जन्म होता है। असाधु शब्द के द्वारा नहीं बोलना चाहिए यह निषेध है पुण्यजनन की योग्ता जिसमें हो उसे साधु कहते हैं। पापजनन योग्यता वालों को असाधु कहते है। जनकता की भेदिका जाति ही है। इसका प्रकाश कोष आदि व्याकरणादि हैं।

**एकमेव च राजसूयादेर्ब्राह्मणे फलाजनकत्ववद् गवादिशब्दानां नाश्वादौ साधुत्वमिति संगच्छते। आधुनिकदेवदत्तादिनाम्नामपि "द्व्यक्षरम्" इत्यादिभाष्येण व्युत्पादितत्वात् साधुत्वम्। एवं च यः शब्दो यत्रार्थे व्याकरणे व्युत्पादितः स तत्रैव साधुरिति पर्यवसितम्। गौणानां गुणे व्युत्पादनात्तत्पुरस्कारेण प्रवृत्तौ साधुत्वमेव। आधुनिकलाक्षणिकानां त्वसाधुत्वमिष्टमेव। अत एव ब्राह्मणाय देहीत्यर्थे "ब्राह्मणं देहि" इत्यादिकं लक्षणयाऽप्यसाध्वित्यादि विस्तरेण प्रपञ्चितम् भूषणे ॥ २ ॥ (३८)**

मभ्युदपकारि भवति। एकः शब्द सम्यग्ज्ञातः (साधुत्वप्रकारकज्ञान विषयीभूतः) सुप्रयुक्तः शास्त्रान्वितः स्वर्गे लोके च काम धुग्भवति इति पापजननबोधनाय= पापोत्यर्थमसाधूनां प्रयोगः नासाधुमिभाषितव्यम् इति निषेधः यज्ञादौ, न म्लेच्छित वै नापभाषित वैः अपशब्देन न भाषणीयमित्यर्थः। उपसंहारेण ब्रूते तथाचेति— पुण्यजननयोग्यत्वं साधुत्वं=अर्थात् पुण्यजनकतावच्छेदक धर्मवत्वं व्याकरणानुशसितत्वं साधुत्वं। पापजन०=पापजननयोग्यतावच्छेदकत्वमसाधुत्वम्। अत्र साधुत्वासाधुत्वयोः द्वयोः पुण्य जनकतावच्छेदिका जातिः = धर्मविशेषोऽपि। साधुत्वं पुण्यजनकम्। असाधुत्वम् अपुण्यजनकम् साधुत्वजातेः ज्ञापकम्=बोधकम् कोशादि व्याकरणादिश्च शिष्टप्रयुक्तता च।

एकमेव–शब्दानां स्वार्थेपुरस्कारेण साधुत्वादेव राजसूयादेः—रांजा राजसूयेन यजेत इति वेदवाक्ये राजसूयकरणकम् यत्फलम् तस्य भाक् राजाएव। क्षत्रियाधिकारेकृतस्य तस्य फलश्रवणात् फलाश्रयः, फलानुकूलव्यापाराश्रयश्च, राजा नतु ब्राह्मण इति। फलस्य जनकत्वेन स्मृत इति। एवमेव गवादिशब्दाः गोत्वविशिष्टार्थे शक्ताः साधवश्च नतु अश्वार्थं बोधनाय शक्त इति। गवाद्यर्थपुरस्कारेणैव गवादिशब्दानां प्रयोगे पुण्यजनकत्वम् साधुत्वञ्च। लाक्षणिकार्थतीरादौ तु शिष्ट प्रयुक्ततत्वं साधुत्वं मन्तव्यम्!

ननु आधुनिके नाम्नि देवदत्तदौ शास्त्रानुकूलानुशसितार्थबोधकता नास्ति। एवं देवदत्तादौ साधुतानास्ति कथंबोध इति। अतआह—आधुनिक देवदत्तादि नाम विषये शिष्टप्रयुक्तसाधुत्व सिद्धयर्थं भाष्यम् प्रभाणम् दीयते "घोषवदाद्यन्तरस्थं द्व्यक्षरम् चतुरक्षरम् वा नामकुर्यात् कृतम् न तद्धितम्। घोषाक्षरमादौ अन्तस्थाक्षरम् मध्ये इत्यादि संकेतेन शिष्टानुशिष्टाः शब्दाः चैत्रादौ साधुत्वम् एवं यः कश्चन शब्दः यस्मिन् कस्मिन् वार्थे व्याकरणशास्त्रेण व्याञ्जितस्स शब्दः...तत्तदर्थे साधुः बोध्यः।

गौणानां गुणादागतानां सिंहो भाणवकः, गौवाह्हीक इत्यादौ गुणे—प्रकारीभूतार्थे व्युत्पादनात्=गुणवचनेभ्यो मतुवोलुगिष्टः इत्यादि प्रतिपादनात् तत्पुरस्का-

रेण=शक्यतावच्छेदकारोपेण=नीलाद्यर्थपुरस्कारेण=प्रवृत्तौ गुणिनि=प्रयोगे साधुत्वमेव। अत एव आधुनिकलाक्षणिकानां=देवदत्तादिपदानां साधुत्वमिष्टमेव= शिष्टप्रयुक्तत्वात्, पितृदेवो भव, इत्यनुशासनात्, पितरिदेवत्वेन शिष्टत्वम्वोध्यम्। अत एव=यः शब्दो यत्रार्थे शास्त्रेणानुशसितः सः तस्मिन्नर्थे साधुः। ब्राह्मणाय-देहि इत्यर्थेऽन्यत्र लाक्षणिकोऽर्थः ब्राह्मणं देहिइत्यादि रूपो न प्रयुज्यते। तत्र लक्षणा च न साधुः

ननु व्याकरणशास्त्रकोषादिना ज्ञाप्यते यत् पुण्यजनन योग्यत्वं साधुत्वमिति येशब्दाः न व्याकरणेन प्रतिपाद्यन्ते नच कौशादिना, तेषु कथं शक्तिग्रहः कथंञ्च पुण्यजनकता, तदाह अतिरिक्तशक्तिग्रहोपायमिति—व्याकरणकोशाद्यतिरिक्ताअपि शक्तिग्रहोपायाः सन्ति। स च योग्यतारूप सम्बन्धोपायइति। तदेवाह सम्बन्धिशब्द इति—इन्द्रियाणां=चक्षुरादीनां स्वविषयेषु शब्दस्पर्शरूपरसगन्धादिषु अनादि कालिकी योग्यता प्रत्यक्षजनन कारणता। एवमेव शब्दानांमर्थैः सह यो योग्यता-रूपः सम्बन्धः सैव शक्तिः। तस्यैवसारभूतोंऽशः अस्यां कारिकायांप्रदीयते। सम्ब-न्धिशब्दे=सम्बन्धः विषयः शब्दार्थयोः संयोजनाशक्तिः सा अस्तिअस्मिन्निति सम्बन्धिशब्दः तत्र यः सम्बन्धः सः वाच्यत्वेन प्रतीतिविषयः, योग्यतारूपः। शक्ति-रूपश्च। स एव योग्यताम्प्रति सम्वन्धिशब्दं प्रति योग्यतैव विषयः। व्यवहारे-योग्यतयैव (सम्बन्धपदनिष्ठ शक्यैव। अत्र हेलाराजः सम्बन्धशब्दो यग्यतालक्षणम् सम्बन्धम् योग्यतयैव प्रतिपादयति। समयात् शब्दोऽपि=अनादिकालतः सिद्ध स्वनिष्ठया योग्यतया स्वार्थं प्रतिपादयति।

ननु शब्दार्थयोर्मध्ये योग्यतयैव सम्बन्ध इति मन्यसे चेर्तांह-संकेतस्य कुत्रोप-योगो भविष्यति अत आह समयादिति-अत्र समयोसंकेतः तस्मात् संकेतात् व्यव-हारात् योग्यतासम्विद्=अनादिकालतः सिद्धाया योग्यताया शक्तेः ग्रहः=ज्ञानम् योग्यतायां कारणम् भवितुमर्हति। दृष्टान्तेन साधयति। इयमस्य माता अयमस्य-पिता इतिव्यवहार एव संकेतः तदनन्तरम् जन्य जनकभावसम्बन्धरूपयोग्यतायाः ज्ञानं जायते तत्र संकेत ज्ञानं हेतु। यदि संकेत ज्ञानं न स्यात् योग्यतासम्बन्धस्यापि

इस प्रकार राजसुयादि यज्ञों का ब्राह्मण में फल में जनकता नहीं होती है (स्वर्गादि फलकी)। ऐसे ही गावादि शब्दों का अश्व आदि में साधुता सिद्ध नही है और आधुनिक देवदत्तादि नामों के विषय में जैसे भाषाकार ने कहा द्वयक्षरं चतुरक्षरं अनेक पुरुषानीक नाम कुर्यात इस भाष्य प्रमाण से व्युत्पादन होने के कारण साधुत्व माना जाता है। जो शब्द जिस अर्थ में व्याकरण द्वारा विशेष रूप से अभिव्यक्त है वह शब्द उसी अर्थ में साधु है। ऐसा संकेतित है। जैसे गौण शब्दों का गुण=अप्रधान अर्थ में प्रवृत्ति निमित्त रूप से व्युत्पादन किया गया है। उनको उसी अर्थ में साधुत्व माना गया है। आधुनिक लाक्षणिक शब्दों का असाधुत्व भी इष्ट है इसीलिए ब्राह्मणं देहि इस अर्थ में ब्राह्मणं देहि इत्यादिका लक्षणा से भी प्रयोग करके साधुता नही ला सकते। इत्यादि विषय वैयाकरण भूषण में विस्तत रूप से वर्णित है। श्लोक ३८।

**अतिरिक्तशक्तेर्ग्रहोपायमाह—**

**संबन्धिशब्दे संबन्धो योग्यतां प्रति योग्यता ।**
**समयाद् योग्यतासंविन्मातापित्रादियोग्यवत् ॥ ३ ॥ (३९)**

**सम्बन्धो विषयः । योग्यतां प्रति योगता सम्बन्धिशब्दम् प्रति योग्यता विषय इति । समयाद्-व्यवहारात् । योग्यतासंवित्-शक्तिग्रहः । घटपदमत्र योग्यमेतत्सम्बन्धीति व्यवहारात्सा ग्राह्येत्यर्थः ॥ ३ ॥ (३९)**

**इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे शक्तिनिर्णयः ॥**

ज्ञानं न स्यात् ।

ग्रन्थकारस्य व्याख्याप्रकारस्तु–सम्बन्धो विषयः अर्थात् सम्बन्धशब्दे विषयीभूतो यः सम्बन्धः 'अयं शब्दः एतदर्थसम्बन्धी । योग्यताशब्दं प्रति अयंशब्दो अत्रार्थे योग्यः । घटपदमत्रार्थे योग्यः एतत्सम्बन्धोस्ति व्यवहारात् । सा योग्यता ग्राह्या । सति प्रत्ययहेतुत्वम् सम्बन्धउपपद्यते शब्दस्यार्थे यतस्तस्मात् सम्बन्धोऽस्तीति गम्यते ॥

अथ शब्दः प्रस्तावार्थकः । तेन समासघटक नञर्थनिर्णयः प्रस्तूयते । यद्यपि पूर्ण प्रकरणे समासशक्तिः, शक्ति निर्णयश्च सम्पादितोऽस्ति । पुनः नञर्थनिर्णस्य कः प्रसङ्गः ? तत्र प्राचीनवैयाकरणैः अर्थवल्लक्षणें वृत्तिमत्वभङ्गीकृतम्, वृत्तिस्त्रिधाशक्तिलक्षणा, व्यञ्जना च प्रातिपदिकसंज्ञायां शक्ति + स्वरूपावृत्तिरूपयोगिनी जायते । शक्तिप्रकरणे लक्षाणामप्रसिद्धाशक्तिमुक्त्वा शक्तौ तस्याः गतार्थत्वमुक्तम् । तथापि प्रातिपदिकसंज्ञा बोधकेऽर्थवत्व लक्षणे वृत्तिमत्वनिवेशस्य किं फलमिति जिज्ञासायां निपातानां द्योतकत्व (अर्थप्रकाशकत्व) पक्षे वाचकत्वाभावेन अर्थ वत्वाभावात् प्रातिपदिक संज्ञा न स्यात् । अतः व्यञ्जनावृत्तिरावश्यकी व्यञ्जना द्योतिका विद्यते सा यदिततोऽर्थो न स्याद् वत्वमनुपपन्नं स्यात् । अतो निपाते अर्थवत्वोपपत्यर्थं लक्षणे वृत्तिमत्वं निवेशितम् । तेन शक्तिः, व्यञ्जना च संगृह्यते ।

अतिरिक्त भी शक्ति है उसके ज्ञान का उपाय बोले । सम्बन्धि शब्दे इति पूर्वकारिका में यह निर्देश किया गया है कि इन्द्रियों का स्वविषयों में अनादिकालिका योग्यता है प्रत्यक्ष बोधजनक कारणता है वैसे, ही शब्दों का अर्थों के साथ अनादि काल से सम्बन्ध रूप योग्यता शक्ति हैं । सम्बन्धि शब्दों में अर्थ के साथ जो सम्बन्ध है वही योग्यता जिसका अर्थ सम्बन्ध है । संम्बन्धी शब्द और अर्थ हैं उनका सम्बन्ध शक्ति रूप है । वहीं योग्यता है । उसका ज्ञान संकेत से होता है जैसे माता पुत्र के सम्बन्ध का ज्ञान कराने वाला सांकेतिक व्यवहार है । कि यह तुम्हारी माँ हैं ये पिता जन्य जनक भाव सम्बन्ध सिद्ध है । इसी संकेत से शक्ति का संविद = ज्ञान है । समयात् = व्यवहार से यह घट शब्द कम्बु ग्रीवादि व्यवहार से शक्ति ग्राह्य होनी है । इति प्राभाकरी टीकायांहिन्दयां शक्तिनिर्णयः ।

नञर्थ में उत्तरपद प्राधान्य होने से सर्वनाम के शब्द तो सिद्ध हो जाते हैं। नञर्थ विशेष्य होता है। — घटो नास्ति में





# अथ नञर्थनिर्णयः।

**नञ्समासे चापरस्य प्राधान्यात्सर्वनामता।**
**आरोपितत्वं नञ्द्योत्यं न ह्यसोऽप्यतिसर्ववत् ॥ १ ॥ (४०)**

नञ् से आरोपित अर्थ द्योतित होता है

**नञ्समासेऽपरस्योत्तरपदार्थस्य प्राधान्यात्सर्वनामता सिध्यतीति शेषः। अत एवाऽऽरोपितत्वमेव नञ्द्योत्यमिति। 'अभ्युपेयम्' इति शेषः।**

व्यञ्जना च द्योतकत्वरूपा तस्या व्यवस्थापनार्थं निपातानां संग्रहाय च वृत्तिमत्वमुच्यते व्याञ्जनावृत्तेराशयो निपात एव। तस्मिन् प्रसंगे निपातः स्मृति विषयो जातः। अत उपेक्षाया अयोग्यः। प्रकरणस्य प्रकारणान्तेण सह सम्बन्धः संगतिः एतदर्थं नञर्थनिर्णयः आरभ्यते।

यद्यपि समासे खलु भिन्नैव शक्तः पंकजशब्दवत्। एकार्थीभाव बोधिका शक्तिर्गततै। तत्र प्रत्येकपदसहकृत समुदाये शक्ति रस्ति। तत्रा नर्थकस्यावयवस्यानर्थकत्वात् नञर्थविषयोऽनपपन्नः। उत्तारप्रदार्थप्राधान्यमपि स्वरसतोऽसंभवम्, तयोरर्थाभिधाने हि व्यापारोऽस्याः न विद्यते इति शङ्कामपाकतुमाह नञर्थ माहेति= नञ्समासार्थमाहेतितदर्थः। यद्यपि नञ् समासस्य समासार्थनिर्णयनिरूपणमावश्यकम्, तथापि नञाद्योतकतया (व्यञ्जकतया) पृथक् व्याचष्टे, नञ समास इति यद्यपि कारिकायां समास पदप्रविष्टो नञ्। तेन नञ् समासर्निर्णय इतिप्रतीयते परन्तु स प्रस्तुत नञ्र्थनिर्णय विरूद्धः। नञ् समासार्थस्य परिहार दृष्ट्या नञर्थ माहेत्युक्तम्। नञ् समासनिर्णय आवश्यकश्चेत् समास शक्ति निर्णये एव निर्णीयात्। अतो नञर्थानां द्योतकत्व पक्षभव लम्ब्य द्योतकतामात्रनिर्णयोऽपेक्ष्यतेऽतो नञर्थ माह इत्युक्तम् कारिकायां नञसमास इति निर्दशेन अश्वो न गज जलपानं, नास्ति इत्यादावसमासस्थलेऽश्वभेदवान् गजः, जलयानप्रतियोगिकोऽभावः इति नञोऽभावार्थकत्वेऽपि न दोषः।

न च न सः इति असः। इत्यादौ तदभाव इत्यर्थेऽभावे तत्पदार्थस्य विशेषण तया संज्ञोपसर्जनभूतास्तु न सर्वादयः, इति निषेधात् सर्वनाम निमित्तककार्यं न स्यादतआह नञसमासे अपरस्य=उत्तरपदार्थस्य प्राधान्यात्=मुख्यत्वात् सर्वनामता=सर्वनाम संज्ञा तन्निमित्तकं कार्यञ्च सिद्धयति। तत्र त्रयः पक्षाः भाष्ये उक्ताः। १ अन्यपदार्थ प्रधानः, पूर्व पदार्थं प्रधानः, उत्तरपदार्थ प्रधानश्चे। नास्ति ब्राह्मणः न ब्राह्मणत्वम् यस्य सोऽब्राह्मणः। अन्यपदार्थस्य प्राधान्यत् क्षत्रियादिरिति तदर्थः। यदा नास्ति ब्राह्मणत्वम् यस्मिन् सोऽब्राह्मणः तदा पूर्व पदार्थं प्रधानः। यदा भ्रमवशात् क्षत्रियादौ ब्राह्मण शब्दः प्रयुक्तस्तदा ब्राह्मणपदार्थस्य निवृत्तिः स्वाभाविकी नञाद्योतितमुत्तरपदार्थ प्राधान्यम् जातम्। भेदप्रतियोगी ब्राह्मण इति। करिकार्थस्तु—नञसमासे=नञघटकसमासे उत्तरपदार्थस्य प्राधान्यात् सर्वनामता सिद्धयति। अत एव=उत्तरपदार्थस्य प्राधान्यादेव आरोपितत्व-

**अयं भावः–'असर्वः' इत्यादौ आरोपितः सर्व इत्यर्थे सर्वशब्दस्य प्राधान्याबाधात्सर्वनामता सिध्यति। अन्यथाऽतिसर्व इत्यत्रेव सा न स्यात्। घटो नास्तीत्यादावभावविषयकबोधे तस्य विशेष्यतया एव दर्शनात्। घटो अस्मद्रीत्या च स आर्थो बोधो मानसः। तथा च असर्वस्मै इत्याद्यसिद्धिप्रसङ्ग इति। अत्र चाऽऽरोपितत्वमारोपविषयत्वम्। आरोपमात्रमर्थो विषयत्वम् तु संसर्ग इति निष्कर्षः द्योत्यत्वोक्तिर्निपातनां द्योतकत्वमभिप्रेत्य॥ १॥ (४०)**

मेव=नञ्द्योत्यम्=क्षत्रियादौ ब्राह्मणत्व प्रवृत्तिनिमित्त प्रकाशकत्वम् नञ प्रकाश्यमारोपितत्वमिति लक्षणमर्थश्च जायते आरोपितत्वञ्च–अभाव निष्ठा या विशेष्यता तन्निरूपितप्रकारताक प्रतीतिविषयत्वमभ्युपेयमिति शेषः।

आरोपोनञर्थः। तदेव प्रकाश्योऽर्थः, अत एव तस्य अप्राधान्यम्। यथा असर्वः =सर्व वृत्तिः, आरोपविशिष्टोऽर्थः। यदि आरोपितोऽर्थो नञ्द्योत्यस्तर्हि द्योतनीयार्थस्य अप्राधान्यं भवत्येव। नच नञ्पदमभात्रार्थकम्, तस्य प्राधान्यम् न जायते। अतआह अप्रभाव इति—असर्व इत्यादिस्थले आरोपितः सर्वं इति तस्यार्थः। तत्र सर्वशब्दस्य प्राधान्ये=विशेष्यत्वे अवाधात्=नास्ति काचन बाधा। अतः सर्वशब्दस्यप्राधान्यात् असर्वइत्यत्र सर्वनामसंज्ञा जायते। असर्वे असर्वस्यै इति भवत्येव अन्यथा=आरोपार्थाभावेन उत्तरपदार्थस्य प्राधान्याभावे असर्व इत्यत्रसर्वभिन्नः सर्वाभावो वाऽर्थेऽभावस्य प्राधान्यात् अतिसर्वइव 'सर्वकर्मकातिक्रमणकर्ता' इत्यर्थे सर्वशब्दस्य उपसर्जनत्वात्=विशेषणत्वात्=सर्वशब्दस्य प्राधान्यवाधे सति संज्ञोपसर्जनीभूतास्तु न सर्वादयः इति निषेधात्: सर्वनाम संज्ञा न भवति। एवमसर्व इत्यत्रापि सा=सर्वनामसंज्ञा न स्यादप्राधान्ये नोपसर्जनत्वात्। 'एवमसः' इत्यादौनञोद्योत्यभारोपितश्चार्थः। आरोपविशिष्ट विषयतयोपालक्षितस्तद्धर्मावछिन्नोऽसः।

न च भेदप्रतियोगी सर्व इत्यर्थ उत्तरपदार्थस्य न प्रधान्यम् तदाह 'घटो नास्ति इत्यादौ अभाववोधे=घटविषयकेऽदर्शने तस्य=नञर्थाभावस्य विशेष्यताया= प्रधानतायाः दर्शनात्=प्रतीतेः। नैयायिकमते=सत्तावान् घटाभावइतिबोधः। अस्मद्रीत्या (शाब्दिकमते) तु स घटो। भिन्न इत्याकारक सर्वजनानुभवसिद्धबोधआर्थः उपास्थिति विषयादागतः। अर्थतो लम्यो न शाब्द बोधविषः। शाब्दबोधविषयस्तु आरोपित् घटत्वाश्रय इति। एतदेवमानसः=हृद्योबोधः। यतो यो आरोपित घटाश्रयः स एव घटभिन्न। तत्र आरोपित घटत्वस्यान्वयभेदेन सामाधिकारण्यं फलति। तथा च=नञर्थस्य आरोपार्थे च असर्वस्य इत्यादि प्रयोगाणामसिद्धिः= असाधुतयाः प्रसंगस्य अवसरो न जायये। आरोपितनञर्थंस्तु आरोपविषय=अन्यधर्मस्यान्यास्मिन्प्रापण विषय इति तदर्थः। एतेन आरोपमात्रं नञर्थोऽङ्गीकार्यः। आरोपश्च=अभावविशेष्यकतत्प्रकारको बोधविषयत्वम्=विषयता. सम्बन्धेन

**घटो नास्ति, अब्राह्मण इत्यादावारोपबोधस्य सर्वानुभवविरुद्धत्वात्पक्षान्तरमाह—**

**अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात् ।**
**विशेषणं विशेष्यो वा न्यायतस्तदवधार्यताम् ॥ २ ॥ (४१)**

**तदर्थो नञर्थः । अर्थपदं द्योत्यत्ववाच्यत्वपक्षयोः साधारण्येन कीर्तनाय । भाष्यस्येति । तथा च नञ्सूत्रे महाभाष्यम्—"निवृत्तपदार्थकः" इति । निवृत्तं पदार्थो यस्य "नपुंसके भावे क्तः" इति क्तः । अभायार्थक इत्यर्थः**

आरोपविशिष्टो यः संसर्गः=ब्राह्मणत्व तद्वान् अब्राह्मण इति बोधः भष्येतु सर्व एवैते शब्दाः गुणसमुदायेषु वर्तन्ते ब्राह्मणः, क्षत्रियः, वैश्यः, शूद्रः, तपः श्रुतञ्च योनिश्च एतद् ब्राह्मण कारणम् तपः श्रुताम्यां यौ हीनो जातिब्राह्मण एव सः गुण समुदाये विद्यमानो ब्राह्मण शब्दोऽवयवेष्वपि वर्तते । जातिहीने गुण हीनेऽपिवर्तते । नञः कदाचित् गुणं निषेधति तथा–अब्राह्मणोऽयम् यः तिष्ठन्भूत्रयति । अब्राणऽयं यः तिष्ठन् खादति । अत्रब्राणशब्दो जतिभात्रपरः । अत्र नञपदं गुणक्रियाराहित्ये प्रकाशयति । गुणक्रिया रहितो ब्राह्मणजातिमानर्थः । यदि आरोपो नञर्थस्तर्हि द्योतनार्थभङ्गाःस्यात् तदाहद्योंत्यत्वोक्तिः । यस्य ममे निपाताः द्योतकाः न तु वाचकाः तन्मते निपातानां द्योतकत्व पक्षमङ्गी कृत्य मन्तव्यम् ॥ ४० ॥

ननु यः समासयोग्यो नञ् स एवारोपार्थकः इति मूले उक्तम् घटो नास्तीत्यत्र समासाभावस्थले आरोपिता घटकर्तृका सत्तेत्यर्थो न स्यात् यदा इ–घट इति—यद्यपि घटो नास्ति अत्र घटस्याश्रयभूता या सत्ता ( दर्शनं ) तस्या अभावः एवमब्राह्मण इत्यत्र 'वाह्मणभिन्नः' एतादृशार्थे बोधः सर्वजनानामनुभवानुकूलः । आरोपबोधस्य=द्योतितार्थ प्रतीतेरारोपिता घट आश्रयो यस्या सा सत्ता, आरोपितब्राह्मणधर्मविशिष्ट इत्यर्थस्य सर्वानुभव विरुद्धत्वात्=सर्वेषां योऽनुभवः=आप्तत्वं प्रामणिकता वा तस्मात् प्रतिषिद्धः । अतः षक्षान्तरमाह—आरोपातिरिक्त पक्षमाह—अभाव इति—नञ्पदस्य अभावः (अदर्शनं) तदर्थः=सोऽर्थः । आरोपितार्थं अस्तु । भाष्याशयउभयत्र वर्तते । विशेषणं विशेष्यो वा नञर्थऽस्तु । सर्व न्यायतः=औचित्यमाश्रित्य (यौऽर्थः पत्र संघटते स यत्र मन्तव्यः) अवधार्यताम्=निश्चीयताम् ।

कारिकायां तदर्थ=नञर्थ इत्यत्र 'अर्थ' पदं द्योत्या (आरोपिता) र्थो वाच्यार्थ० (अभावा) र्थ इति द्वयोः पक्षयोः साधारण्येन=समान्येन संकीर्तनाय=सङ्ग्रहाय बोध्यार्थकम् । तत्र असति बाधके वाचकत्वे सति तु तस्मिन् ( नञि ) द्योतकताऽपि=प्रकाशकताऽपि । यथोत्तरं 'मुनीनां प्रामाण्यमितिवचनात्' आरोपितार्थं विहाय अभावार्थो नञर्थ इत्यंगीकृतः पतञ्जलिना । अतो 'भाष्यस्य' इति प्रतीकमादाय

अभाव - आवान्तर - वैदान्तिक

कैयट
कुञ्चीकों से भिन्न
नञ् निवृत्त: = अभाव पदार्थ वाच्य



**यत्तु निवृत्तः पदार्थो यस्मिन्नित्यर्थः। सादृश्यादिना ऽध्यारोपितब्राह्मण्याः क्षत्रियादयोऽर्था यस्येत्यर्थ इति कैयटः; तन्न, आरोपितब्राह्मण्यस्य क्षत्रियादेर्नञवाच्यत्वात्। अन्यथा सादृश्यादेरपि वाच्यतापत्तेः।**

आरोपित क्षत्रिय विशेष ब्राह्मण

ग्रन्थकारेण भाष्यतात्पर्यं वर्ण्यते तथा च नञ्सूत्र इति—निवृत्त पदार्थकः। अत्र कैयट कृतविवरण प्रसंगे निवृत्तं (अर्थस्य अभाव) पदार्थो=अर्थो यस्य=नञः सः। इत्यभावार्थको नञ्। यतो निपूर्वक वृत् धातो नपुंसकार्थे भावे = सिद्धव्यापारेऽर्थे क्त प्रत्ययो जातः। अतो निवृत्त पदस्य अभावोऽर्थः।

अतः परं केषांचिन्मतस्य निदर्शनं कृत्वा अथवा आरोपितार्थको=निवृत्ति-पदार्थ इति कैयटोक्त खण्डयति यत्त्विति—तेन निबृतः=आरौविषयोभूतः पदार्थः =मुख्यं ब्राह्मण्यं (ब्राह्मणस्य भावः घर्मोवा) यस्मिन् क्षत्रियादौ सः। अर्थात् सादृश्यादिना=धर्न ( गुणेकियादि ) साम्येन अध्यारोपितं=प्रतीतिविषयीकृतं ब्राह्मण्यं (ब्राह्मणत्वं धर्मः शुच्या चारादिः) येषु (क्षत्रियादिषुते अध्यारोपितब्राह्मण्याः क्षत्रियादयः। अर्थात्। सादृश्यसम्बन्धेन आरोपिताः ब्राह्मणधर्माः क्षत्रियादयो गृह्यन्ते। यस्यां व्यक्तौ ब्राह्मणत्वमध्यस्तं वर्तते स निबृत्तिपदार्थको नञ् तन्न अध्यारोपितस्य=आरोपेण बोधविषयी कृतस्य ब्राह्मण्यस्य=विप्रधर्मस्य क्षत्रियादौ नञाबाच्यत्वात्=नञः वाच्यार्थो नेत्यर्थः। किन्तु द्योत्यार्थएव अन्यथा = यदि सादृश्यादिना आरोपिताऽर्थो नञर्थश्चस्यात् तर्हि सादृश्यादेरपि=यथा चन्द्रवन्मुखं चन्द्रसदृशंमुखमित्यर्थं चन्द्रःप्रतियोगी (उपमानं) मुखमनुयोगी उपभेदः प्रतियोगितावच्छेतकी भूतोधर्मः आह्लादकत्वं। तेन चन्द्रमुखयोः सादृश्यं गृह्यते।

ब्राह्मण सदृशक्षत्रिय इत्यत्र सादृश्यादि नञः वाच्यत्वापत्तेः=वाच्यार्थस्यापत्ति स्यात्। सादृश्यादिस्तु न वाच्यार्थः। किन्तु अर्थात् उपलब्ध्योऽर्थः, आर्थिक इत्यर्थः आरोपितार्थस्तु द्योत्यार्थभावस्तु वाच्यार्थः। आर्थिकार्था स्पष्टयितुमाह यत्तु केचन आचार्याः नञर्थस्य षड्भेदानंगीकुर्वन्ति षड्नञर्था नुरोधेन तेषामाचार्याणामनुयायिवर्गः षण्णां नञर्थानामर्थनिर्धारणं कृतवन्तः तेतु सादृश्यम्, अभावः, अल्पता, अप्राशस्त्यं, विरोधश्च क्रमेणोदाहरणं विवरणञ्च दीयते—यत्तुतत्सादृश्यं—अब्राह्मण इत्युक्तेः ब्राह्मण सदृश इत्यर्थो भाति। तत्र नञर्थः सादृश्यम्। तच्च प्रतियीगितावच्छेदकव्यापकीभूतो धर्मः सवत्र गृह्यते। प्रतियागिता व्यवहारः स्थलत्रये भवति १अभावस्थलेदुष्टाभाववद् भूतलम् अत्र दुष्टः प्रतियोगी भूतलमनुयोगी। २—सादृश्यस्थलेअब्राह्मण इत्यत्र ब्राह्मण सादृस इत्युर्थे सति सादृश्यस्य प्रतियोगी ब्राह्मणः प्रतियोगिनिष्ठोधर्मः ब्राह्मणत्वं, तस्य व्यापकीभूतोधर्मः मनुष्यत्वं अनुपयोगी सादृश्यम्। ब्राह्मणस्य मनुष्यत्वेन सादृश्यं गृह्यते ब्राह्मणसदृशोमनुष्यः क्षत्रियादिः। ३—सम्बन्धस्थलै—सम्बन्धस्यापि एकः प्रतियोगी अपरोऽनुयोगी भवति यथा राष्ट्रस्य पुरुषः। प्राचीन वै० मते स्वस्वामिभावसम्बन्धेन राष्ट्रपदार्थस्य

**यत्तु—** कैयटानुसार

**"तत्सादृश्यमभवश्च तदन्यत्वं तदल्पता ।**
**अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" ॥**

**इति पठित्वा अब्राह्मणः, अपापम्, अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गोऽश्वेभ्य, अधर्म इत्युदाहरन्ति; तत्तु आर्थिकार्थमभिप्रेत्येति स्पष्टमन्यत्र ।**

पुरुषपदार्थेऽन्वय उक्तः सम्बन्धस्य राष्ट्र प्रतियोगी ( विशेषणं ) पुरुषोऽनुयोगी (विशेष्य) संजातः ।)

अभावश्च—अभावार्थक नञर्थस्योदाहरणम् । अपायम् । पापानामभाव इति विग्रहे पाप+आम् नञ् इति दशायां अर्थाभाव इत्यर्थे वर्तमानस्य नञः पाप आम् इति सुवन्वेन सह अव्ययं विभक्तीत्यादिना समासे 'अपापम्' अत्र पूर्व प्रधानोऽव्ययीभावानुसारेभावो विशेष्यः पापं विशेषणम् । अन्यत्वं=नञर्थः यथा—न अश्वोऽनश्वः (आश्वादन्यः) अश्वभिन्नः इत्यर्थ । तदल्पता=अल्पता=नञर्थः यथाअनुदरा=अल्पमुदरं यस्या सा (कल्या) । अप्राशस्त्यं नञर्थः । अप्रशस्ताः पशवोऽपशवः । गोऽश्वेम्योऽन्य पशवोऽप्रशास्ताः । विरोधश्च=नञर्थः यथा-अधर्मः न धमोऽधर्मः धर्म धिरूद्धः इत्यर्थः । इत्युदाहरन्ति = पूर्वोक्त षड्नञर्थस्य प्रमाणं प्रस्तावयन्ति । एते नञर्थाः नञ्वाच्याः न भवन्ति यदि सादृश्यादयो न नञ्वाच्यास्तर्हि कथं तेषां बोधः । अत आह—तत्तु = सादृश्यादयस्तु आर्थिकार्थाः अर्थत उपलब्धोऽर्थाः । नतु वाच्यार्थ आब्रह्मणश्च इत्यत्र आरोपित ब्राह्मणत्व विशिष्टः १ आरोपित पापविशिष्यते पिताल्पताद्यभिप्रेत्य=भाविमानसबोधाभिप्रायेत्यन्यत्र स्पष्टम् ।)

(विशेषणं विशेष्योवा न्यायतस्त्ववधार्यताम्) इति कारिकांशस्य विवरणं प्रस्तूयते । नञर्थः क्वचिद् विशेषणं क्वचिद् विशेष्यो भवति न्यायतः = नञर्थस्य विशेषणता विशेष्यतावा यत्र तदेव निश्चीयताम् । ∴सन्नतौ=नम्रीभूतौ अपाङ्गौ यस्या सा तथा अनेकया योषयोः कृष्णः सैव्यते । आदौ विशेषणं विवृणोति । उत्तरपदार्थप्रधानस्थले नञर्थो विशेषणम् । ननु विशेषणस्य विशेष्यसाकाङ्क्ष्यत्वान्नञर्थस्य को विशेष्य इतिजिज्ञासायां प्रतियोगिनी = नञर्थस्य यः प्रतियोगी सः विशेष्यः शेषः=प्रतियोगिविशेष्यको बोधोऽवधार्यताम् यथा—नञर्थो भेदः । सः प्रतियोगितासम्बन्धेन विशेषणतासम्बन्धेन प्रतियोगिनिविशेषणम् यथा=ब्राह्मणः क्षत्रियः अत्र क्षत्रियः सादृश्यस्यानुयोगी, ब्राह्मणः प्रतियोगी । क्षत्रियनिष्ठो यो भेदः तस्य प्रतियोगी ब्राह्मणः ब्राह्मणभिन्न इति मानसोबोध । अब्राह्मणः क्षत्रिय इत्यादौ क्षत्रियवृत्ति भेदप्रतियोगी ब्राह्मणः । नञा सह समासे उत्तर पदार्थप्राधान्ये उदाहरणमाह तथा च—न सर्वोऽसर्वः । अत्र भेदस्य प्रतियोगी (विशेषणं) सर्वशब्दः । तस्य प्राधान्ये सर्वनामसंज्ञा जायते । अतेकमन्यपदार्थे रूपे 'सेव्यतेऽनेकया' इत्यादौ

अतिशयोगी के हीन से नञ् - विशेषण होता है तथा ब्राह्मण उत्तरपद में होने पर (प्रधान) विशेष्य " " ।





विशेषणमिति । प्रतियोगिनीति शेषः : तथा च सर्वपदे सर्वनामसंज्ञा, "अनेकमन्यपदार्थे" "सेव्यतेऽनेकया संनतापाङ्गया" इत्यादावेकशब्दार्थप्राधान्यादेकवचननियमः, अब्राह्मण इत्यादावुत्तरपदार्थप्राधान्यात्तत्पुरुषत्वम्, अत्वं भवसि, अनहं भवामीत्यादौ पुरुषवचनादिव्यवस्था चोपपद्यते । अन्यथा त्वदभावो मदभाव इतिवदभावांशे युष्मदस्मदोरन्वयेन युष्मत्सामानाधिकरण्यस्य तिङ्क्ष्वसत्त्वात्पुरुषव्यवस्था न स्यात् ।

एकशब्दस्य प्राधान्यात् एक वचनं भवति । अत्र भाष्यमम्—"किमत्रसंगृहीत एक वचनम्" यदि अनेकशब्दो वहूनां वाचकस्तर्हि वहुवचनं प्रान्पोति । तथा च सेव्यते ऽनेकया सन्नतायाङ्गया ÷ अस्मिन्नव्यये उत्तरपदार्थेभूतएकशब्दस्याप्राधान्येनैकवचनस्य नियमोजातः । अब्राह्मण इत्यत्रोत्तरपदार्थस्य प्राद्यान्येसति उत्तरपदार्थं प्रधानस्तत्पुरुषः इति तत्पुरूषलक्षणं मघटते । यतोऽब्राह्मण इत्यस्य भेद प्रतियोगी= आश्रयो ब्राह्मण इत्यर्थो जातः । अत्वं=नञर्थभेदवान् त्वं न भवसि । अनहं = नञर्थभेदवानहंभवामि । अत्रत्वं शब्दस्य, अहं शब्दस्य, तिवर्थेन सह अभेदान्वयेसति सामाना धिकाण्नम् । तत पुरूषव्यस्था वचनव्यवस्या च जायते ।

अन्यथा=नञर्थाभावस्य प्राधान्ये सति अनहं शब्दस्य भदभावोऽत्वमित्यस्य त्वदभाव इत्यर्थे आभावस्य प्राधान्ये सति अभावांशे भेदे युष्यदस्दमौरन्वयेन तिऽर्थेनसह युष्मदस्मदो सामानाधिकाण्य न स्यात् प्रथममध्यमोत्तम पुरुषवचन व्यवस्था च न स्यात् । यतः तिङवाच्य नञ्समासे उपसर्गत्वऽपि सर्वनाम संज्ञा भवति । (कर्ता-कर्म-भाव) कारक वचिनि युत्मद्युपपदे स्थानिनि मध्यमपुरुषो जायते शेषे प्रथम इत्यादि । अभावस्य प्राधान्ये तिङोऽभावेन सह समानाधिक रण्यं सम्भविष्यति न नु पुष्मदासह ।

अस्मन्मते=मम वैयाकरणसिद्धान्ते तु तञर्थो भेदः तस्य प्रतियोगीविशेषणं त्वमिति । तस्य प्राधान्यं तेन तिऽसह तत्रैव समानाधिकरण्यम् । अतो भेदस्य प्रतियोगिता (विशेषणता) सम्बन्धेन त्वर्थे मदर्थे चा न्वयंकृत्वा तयोः तिङर्थाश्रयेऽन्वयो जायते । ततः निष्ठत्वसम्बन्धेन भवनक्रियायां मन्वयः । ततोऽत्वं भवसीत्यस्य भेद प्रतियोगि = आश्रयः त्वदभिन्नाश्रयिका भवनक्रिया इत्यर्थेन सामानाधिकाण्यस्य अनुपपत्तिः = असंगतिर्न ज्ञायते इति नञर्थस्य विशेषणत्व मतिसूपाददम् ।

अथ विशेष्योबा = अथवा नञर्थो विशेष्य इतिमन्तव्या । विशेषणाकांक्षायां— प्रतियोगिनी = उत्तरप्रदार्थरूप प्रतियोगिनीत्यर्थः शेषइति = अब्राह्मण इत्यादेः व्राह्मणभिन्नक्षत्रियापिरित्यर्थः । नन्वव नमर्थोभेदः सः प्रतियोगिनी=विशेष्यः विशेषणस्य प्रधान्यं न स्यात् । तेन 'असः' इत्यस्य न सः (तन्दिन्तेत्यर्थः) ततः तत्पदार्थस्य विशेषणतया ( गौड़तया ) त्यादादीनामः इत्यत्वं नस्यात् अत आह

अस्मन्मते च भेदप्रतियोगित्वदभिन्नाश्रयिका भवनक्रियेत्यन्वया-त्सामा नाधिकरण्यं नानुपपन्नमिति भावः ।

विशेष्यो वेंति । प्रतियोगिनीति शेषः । अयं भावः—गौणत्वेऽपि-नञ्समासे "एतत्तदोः सुलोपोऽकोरनञ्सलासे हलि" इति ज्ञापकात्सर्व-नामसंज्ञा नानुपपन्ना । असः शिव इत्यत्र सुलोपवारणायानञ्समास इति हि विशेषणम् । न च तत्र तच्छब्दस्य सर्वनामताऽस्ति गौण त्वात् । अकोरित्यकच्सहितव्यावृत्त्या सर्वनाम्नोरेव तत्र ग्रहणलाभात् । तथा चानञ्समास इति ज्ञापकं सुवचम् । "अनेकमन्यपदार्थे" इत्या-दावेकवचनं विशेष्यानुरोधात् । "सुबामन्त्रिते पराङ्गवत्स्वरे" इत्य-तोऽनुवर्तमानं सुबग्रहणं विशेष्यमेकवचनान्तमेव । किं चानेकशब्दाद् द्विवचनोपादाने बहूनां बहुबचनोपादाने द्वयोर्बहुव्रीहिर्न सिध्येदित्युभय-संग्रहायैकवचनं जात्यभिप्रायडौत्सर्गिकं वा ।

गौणत्वेऽपि=अयंभावः=नञसमःसेसर्वादीनां गौणत्वेऽपि =अप्राधान्येऽपि=इति सूत्रस्यज्ञापकात्—नियमनात् सर्वनाम संज्ञा नानुपपद्यते यतः 'असः' इत्यत्र तत्प-दार्थोगौणः । तत्र अत्वेन ज्ञायते यदि नञर्थो विशेषणं स्यात् तर्हि तत्पदार्थस्य गौण त्वाभावेन आपकात् सूत्रस्थसमासग्रहण ज्ञापकार सर्वनाम संज्ञायाः अनुपपत्ति वारणपरकं भाष्यमसङ्गतस्यात् । यदि प्रतियोगिनिनञर्थभेदस्य विशेस्यभङ्गीक्रियते तदो तत्पदार्थस्यगौणसत्यपि 'असः शिव' इत्यत्र सुलोपवारणाय अनञ् समासे इति विशेषणो । नच तेत्र =अस इत्यत्र तच्शब्दस्य सर्वादिगणपठिततत्पदस्य सर्वनाम-संज्ञा गणपठितत्वादेव सिद्धा, तन्न गौणत्वात्उपसर्गनत्वात् । संज्ञोपमर्जनीभूतास्तु न सर्वादया । अतो न सर्वनामता ननु सूत्रे सर्वनाम्नो ग्रहण मिति मानाभावः स्तन्न अकोरिति सर्वनामनिमित्तको योऽकच् तत्सहितस्य व्यावृत्ति रूप प्रमाणेन सूत्रे सर्वनाम्नोः=सर्वनाम संज्ञकस्य ग्रहणम् सर्वनाम संज्ञकस्य तच्छब्दस्य ग्रहण-मितिभावः । अनस् समास इतिज्ञापाकं सुवचम् ।

यदा नञर्थो विशेष्योऽप्रतियोगी स्वोक्रियते तदा अनेकमन्य पदार्थं इति सूत्रे अनेकपदात्तरमेकवचन विशेष्यानुरोधात्=असति वाधकेऽभेदेन विशेषणीभूतां-र्थक पद विशेष्य पदसमानबचनकमिति नियमानुरोध त् 'या विशेष्येपुदृश्यन्ते लिङ्गसंख्या विभक्तयः । प्रायस्ता एवं कर्तव्या समानार्थे विशेषणे । अनेक मन्य पदार्थे इति सूत्रे सुवामन्त्रिने सूचात् सुबग्रहण मनुवर्तते । सः सुप् विशेष्यः । एक वचनान्तश्च । अतोऽनेक मितिपदं विशेष्य प्रथमान्तम् शेषपदार्थत्वात् ननु धातोः यत्राधिकास्तत्र वचन विपरिणमते कन्चित् यथा तव्यत्तव्यानीयाः नन्दिग्रहि पचा-दिभ्यः इत्यादौ धातोः वचनं विपरिणमते एवं 'सर्व' इत्यत्रापि वचना विपरिणामः

कर्तृंशच्यते। इत्यरुचेराह किञ्च=अनेकमन्य सूत्रे द्विवहुवचनयोरिति वाचकः। तत्र अनेकशब्दात् द्विवचनस्यो पादानं ग्रहणं करिष्यते। यत्र वहूनां ग्रहणं तत्र वहुवचनस्यो पादानंकरिष्यते ततो बहुव्रीहि र्नस्यात्। अत उभय संग्रहाय एक वचनं दीयते। अथवा जात्यभिप्रायेण=एक भिन्नत्वरूप सामान्य गतैकत्वमिति-प्रायेणौकवचनम् अथवा औत्सर्गिकं=एक वचन मुत्सर्गतः कारिष्यते। यतो न केवलाः प्रकृतिः प्रयोक्तव्या नापि केवल प्रत्यय'। इयाभिप्रायेण। जात्यमिप्रा-येणापि एकवचनम्।

सेव्यतेऽनेकया इत्यत्रापि पोषया इति विशेष्या नुरोधात् 'अनेकया' इत्यत्रैक-वचनम् प्रत्येकं=प्रति योषा (स्त्री) कर्तृक कृष्णकर्मकं सेवनमिन्यमि प्रेयेनैक-वचनम् न तू तरपदार्थस्य प्राधान्यं मत्वैकवचनं दीयते। किन्तु पूर्व पदार्थस्य प्राधान्यम्। अतएव=पूर्वपदार्थ प्राधान्यादेव। जलधेः उर्मय=तरङ्ग इव् अनेके पतानी। अत्र 'अनेक' इत्यत्रपि पूर्व पदार्थ प्राधान्यं मत्वैक वचनं।

यद्यपि 'एवत्तदो' सूत्रेऽनञ् समास इति ज्ञापकात्, उत्तरपदार्थ प्रधान पक्षेऽत्वं भवसि इत्यत्र पुरुष वचन व्यवस्था न स्यात् तत्र तत्र युष्मदस्दोः त्वद्भिन्तेऽस्मत् भिन्ने च लक्षणा क्रियते तस्याः नञ् द्योतकः=तात्पर्यग्राहकः तथा च=पूर्व पदार्थ प्राधान्येऽपि ज्ञापकात् उत्तर पदार्थप्राधान्यं गृह्यते। तेन त्वद्भिन्नेन युष्मदर्थेनतिङः =तिङर्थस्य सामानाधिकरण्यात्=अभेदसम्बन्धात् पुरुष (प्रथममध्यमोत्तम) वचन व्यवस्था संजायते।

नञर्थस्य क्रियायामन्वय क्रीदृशः शाब्दबोधप्रकारः तत्प्रदर्शयति, त्वद्भिन्न इति—त्वत्तःभिन्न आश्रयो यस्सा सा एवंभूता भवन क्रिया। एवं=पूर्वोक्तप्रकारेण न त्वं पचसीत्यत्र त्वत्तोऽभिन्तोऽऽश्रयो यस्या सा पाकानुकूला भावना, तस्या अभाव इति बोधः। घटोनास्ति इत्यादौ घटादभिन्नोऽऽश्रयो यस्यतत्। अस्तित्व-मभावश्चेति शाब्दबोधः। असमस्तनञः समासो न दृश्यते। तस्यक्रियामेवान्वयो जायते। यथां प्रसज्य (विधाय) प्रतिवेत्रे। अतोः नञसूत्रे भाष्ये नञस्चैषः स्वभावोयत् प्रसज्य क्रियागुणौ पश्चान्निवृत्तिं करोति। इति भाष्य विरोधात् प्रसज्यप्रतिषेधस्यनञो गुणेऽप्यंन्वय क्रिययासह यत्रनञ इति लक्षणे क्रियापदं गुण-स्यापि उपलक्षणम्।

नञर्थो द्विविधः पर्युदासः प्रसज्यप्रतिषेधश्च। येन पदेन सह नञः सामर्थ्यं तस्माद्भिन्नस्ततसदृशोऽर्थः पर्युदासार्थः=परि+उत्+आस्=एषोऽर्थस्तत्रैव भवति यत्र समासे उत्तरपदार्थस्य स्वभिन्नस्वसदृशेऽर्थे लक्षणाजायते। नञ् तदर्थस्य तात्पर्यग्राहकः। असभ्य इत्यत्र सभ्यभिन्नेसभ्यदृशेऽर्थे लक्षणाजायते। तदर्थस्य तात्पर्यं नञाप्रकाश्यते। सभ्यभिन्न सभ्यसदृशोऽसामाजिक इति शब्दबोधः। समास-स्थलेनञ् सत्तारूपार्थे दृश्यते। अतस्तत्र नञर्थोऽन्योन्याभावरूपः।

**सेव्यतेऽनेकयैत्यत्रापि योषयेतिविशेष्यानुरोधात्प्रत्यैकं सेवनान्वय-बोधनाय चैकवचनं, न तूत्तरपदार्थप्राधान्यप्रयुक्तम् । अत एव "पतन्त्यनेके जलधेरियोर्मयः" इत्यादिकमपि सूपपादम् ।**

**अत्वं भवसीत्यादौ युष्मदस्मदोस्तद्भिन्ने लक्षणा । नञ् द्योतकः । तथा च भिन्नेन युष्मदर्थे न तिङः सामानाधिकरण्यात्पुरुष व्यवस्था । त्वद्भिन्नाश्रयिका भवनक्रियेति शाब्दबोधः । एवं न त्वं पचसीत्यत्र त्वदभिन्नाश्रयकपाकानुकूलभावनाऽभावः । घटो नास्तीत्यत्र घटाभिन्ना श्रयकास्तित्वाभाव इति रीत्या बोधः । असमस्तनञः क्रियायामेवान्वयबोधात् ।**

**स चाभावोऽत्यन्ताभावत्वान्योन्याभावत्वादिरूपेण शक्यस्तत्तद्रूपेण बोधादित्यन्यत्र विस्तरः ॥२॥ (४१)**

एवं प्रसज्य प्रतिषेधस्थले यत्र समासो न जायते तत्र नञः सत्ताया अत्यन्ताभावरूपार्थो भवति । यतः असमस्त नञः क्रियायामेवान्वयो जायते यथा—नत्वं पचसिइत्यत्र त्वदभिन्नाश्रये विद्यमानो विक्लित्यनुकूल व्यापाराभाव इति आकारक नञर्थाभाव मुख्यविशेष्यक शाब्दबोधः । एवं घटोनास्तीत्यत्रं घटरूपसत्ताया अभाव इति अयमेव 'अभावः' अत्यन्ताभावत्वान्योन्याभावत्वरूपेण नञः शक्यार्थः ।

ननु अभाव एव शक्यार्थस्तर्हि शक्यता केनरूपेण गृह्यते शक्यतावच्छेदकं किं भविष्यति । यदि अभावत्वेन गृहणयःत् मैत्रोन गच्छति, अत्रापि भेदबोधः स्यात् । यदि प्रसज्य प्रतिषेधत्वेन स्यात्तर्हि 'अत्वंभवसि' इत्यत्र दोषः = युष्मदोऽभावस्य समानधिकरणावोः यथावत्स्थितः स्यात् । यत्र च क्रिया न तिष्ठति तत्र अभावस्य प्रतोति नं । अतआह सचेति अन्योन्याभावत्वेन—अत्यन्ताभावत्वेन अभावे शक्ति कल्पने न कश्चन दोषः । अत्यन्तमिति—सान्तोऽत्यन्तः घटोनास्ति, अत्र घटस्यात्यन्ताभाव स्तादात्म्येन सम्बन्धावच्छिन्न प्रतियौगिताकोऽभावः । त्रैकालिक संसर्गाभावः अन्यस्य अन्यस्मिन्नभावोऽन्योन्याभावः तादात्म्येन अभवनम् = भेद स्वरूपं तदात्मा तस्य भावः तात्म्यम् = अभेदः तादात्म्य सम्बन्धा वच्छिन्न प्रतियोगिताकाभावोऽन्योन्याभावः यथा—अश्वो गर्दभः । अत्र समानविभक्तिन्यत्वात् नीलोघट इतिवत् अभेदप्रतीतिः । रावणो न रामः अत्र रावण भिन्नो रामः इतिबोधो जायते । अतोऽभेद सम्बन्ध निषेधकतृंकोऽभा वोऽन्योन्याभावः । अन्योन्य पदे तादात्म्यसम्बन्धपरम् अथवा अन्योऽन्य = परस्परं विद्यमानो योऽभावः सोऽन्योन्याभाव नञर्थः—तत्तच्छक्तिरूपः ॥४१॥

**इति नञर्थं निर्णयः ॥७॥**

निपात के अन्तर्गत - उपसर्ग, गति । निपात सभी आते

१८ ॥ अथ निपातार्थ निर्णयः ॥

प्रादयो द्योतकाः, चादयो वाचकाः, इति नैयायिक मतमयुक्तम्, वैषम्ये बीजाभावादिति । ध्वनयन्निपातानां द्योतकत्वं समर्थयते ।

व्याकरण का द्योतक पक्ष

द्योतकाः प्रदयोयेन निपाताश्चादयस्तथा ।
उपास्येते हरिहरौ लकारौ दृश्यतें यथा ॥ ४२ ॥

---

प्रकरणावतरणम्—ये उच्चावचयेष्वर्थेषु निपतन्ति ते निपाताः । 'नञ्' इति निपातः । तदर्थस्यात्यन्ताऽभावस्यं, अन्योन्याभावस्य च, निर्णयानन्तरं नञर्थें द्योतकत्वं स्थापितम् । तच्च सर्वनिपातानामर्थं साधारणम् । द्योतयन्ति अर्थं व्यञ्जयान्ति प्रकाशयन्ति वा द्योतका निपाताः ब्राह्मण वशिष्ठन्यापेन पूर्वप्रकरणे नञर्थरुप निपातार्थं बोधयित्वा निपातस्य स्मृति विषयत्वे सत्युपेक्षाऽर्नहत्वरुप प्रसङ्गं संगमयितु निपातार्थः प्रारभ्यते, अथ इति । वै० मते व्यञ्जकतारूपशक्तिभन्तो निपाताः । अतएव प्रजयतीत्यत्र प्रशब्दः प्रकर्षजयार्थद्योतकः नतुवाचकः तेन प्रशब्दार्थप्रकर्षे प्रधानता न प्राप्नोति । अत्र वै० सिद्धान्तशेषः इत्युच्यते । शेषी तावत् पूर्ववक्षीयाः नैयायिका ते निपातार्थं निर्णय विषये वैषम्यं वदन्ति । ब्रुवन्ति च प्रादयोः द्योतकाः प्रपरा अप सम आदिः चादयो—च वा इत्यादयोः वाचका इति तन्मतं न युक्तम् ।

यद्यपि द्योतकता व्यञ्जना रूपैव, सा तैः न भन्यते तथापि निपाताव्यवहित समीपस्थपदनिष्ठशक्तिबोधकता द्योतकता गृह्यते । एवं प्रजयतीत्यत्र प्रशब्देऽपि सा सम्भवा । प्रकर्षविशिष्टे जिधातोः तु लक्षणाऽङ्गीक्रियते । तत्र प्रशब्दस्तात्पर्य ग्राहकः चादयो वाचका इति पक्षे, प्रकर्षः प्रशब्दवाक्य एव स्यात् । तस्य विशेषणतया जिधातावन्बयः । चश्चोमयोः समो दोषः, परिहारोऽपि तयोः सभः । न्यायात् निपातानामनेकार्थत्वेऽपि प्रशब्दस्य प्रकर्षेशक्तिस्वीकारात् । परन्तु केवल प्रशब्दो न प्रकर्षकः केवलस्य प्रयोगाऽभावात् । तस्मात् प्रकर्षे शक्तिरयुक्तैव । शाक्यार्थाऽभावे लक्षणाऽपि निर्मूलैव । नै० भते चादयो वाचका इति, घटः पटश्च इत्यादौ घट समुच्चितः पटः इत्यनुभविकेषु बोधदर्शनात, चादीनां वाचकत्वं सिद्धयति । सुजन इत्यत्र क्रियायोगस्याभावात् सु इति नोपसर्गः क्रियायोगाऽभावात् । तस्मात् तस्य वाचकत्वमेव इति नैयायिकाः । अतएव निर्मक्षिकमित्यत्र निरित्यस्य

**येन हेतुना प्रादयो द्योतकास्तेनैव हेतुना चादयो निपातास्तथा द्योतका इत्यर्थः । अयं भावः—ईश्वरमनुभवतीत्यादावनुभवादिः प्रतीयमानो न धात्वर्थः, भवतीत्यत्राप्यापत्तेः । नोपसर्गार्थः, तथा सत्यप्रकृत्यर्थतया तत्राऽऽख्यातार्थानन्वयापत्तेः । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः, *अनुगच्छतीत्यादावनुभवादिप्रत्ययापत्तेश्च । न विशिष्टार्थो गौरवात् । तथा च धातोरेव विद्यमानत्वादिवाचकस्यास्तु लक्षणा । उपसर्गस्तात्पर्यग्राहक इत्यस्तु । तथा[1] च तात्पर्यग्राहकत्वमेव [2]द्योतकत्वमिति ।**

---

ध्वंसवाचकतया उपकुम्भ मित्यत्र उपइतिसमीवाचकतयाऽव्ययीभावः सिद्धयति । परन्तु वैषम्ये = भेदे प्रादयो द्योतकाश्चादयो वाचका इति विषमतायां । बीजाऽभावात् = कारणाऽभावात् । यथा—प्रादयो धात्वर्थे विशेषणम् । एव चादयोऽपि । तयोः वैषम्यं नास्तीति । ध्वनयन् = वैषम्यं मोचयितुं निपातानां = चादिगणेपठितानां द्योतकत्वं = व्यञ्जकत्वं समर्थयति = साधयति । अर्थात् निपातत्वावच्छेदेन सकल निपातानां द्योतकत्वं समर्थयतीति निष्कर्षः । अतएव द्योतकत्व समर्थिकां कारिकामवतारयति कौण्डभट्टः ।

द्योतका इति येन = हेतुना कारणेन प्रादयः = प्रपरा अप सम इत्यादय, द्योतका = विशेषार्थस्य व्यञ्जकाः । तथा — तेन कारणेन निपाताः = चादयः, च, वा, ह इत्यादयो द्योतकाः = विशेषार्थव्यञ्जकाः भवेयुः । अतएव 'उपास्येते हारिहारौ' इत्यत्र कर्मणि लकारो दृश्यते एष दृष्टान्तः । उपसर्गाणां द्योतकत्व स्वीकर्तृणां तार्किकाणां सम्भतः । तत्र भक्तः हरिहरौ उपास्ते' इति भक्तेन हरिहरौ उपास्येते । सकर्मके धातौ कर्मणिलकारः सम्भवति । वै० नैयायिकं पृच्छति यथोक्तोदाहरणे भवता कर्मणि लकारं प्रवर्तयितुम् 'उप' इत्यादिषु प्रादिषु द्योतकता मन्यते, अनयारीत्या चादिषु निपातेष्वपि द्योतकत्वं मन्यताम् ।

ननु कारिकाया उत्तरार्धभागेन चादयो :न द्योतका, किन्तु प्रमाणान्तरगम्याः । अत आह अयं भाव इति—चादीनां द्योतकत्वभावं दर्शयति—इश्वरंभनुभवतीति दृष्टान्ते य इश्वरकर्मकानुभवादिः 'आनन्दं ब्रह्म प्रज्ञानं ब्रह्म आदिः' यः प्रतीयमानः = अनुभूयमानोऽर्थ, स न धात्वर्थः = न भूधातु शक्यार्थः सोऽर्थो भूधातुः शक्यश्चेत् तर्हि 'भवति' अत्राप्यापत्तेः = अनुभवादिः प्रतीयेत । न चान्वयव्यतिरेकाभ्याम् 'अनु' इत्युपसर्गसत्वेऽनु-

वैय्याकरण

एतच्चादिष्वपि तुल्यम्। चैत्रमिव पश्यतीत्यादौ सादृश्यविशिष्टं चैत्रापदलक्ष्यम्, इवशब्दस्तात्पर्यग्राहक इत्यस्य सुवचत्वात् इति। स्वयं युक्त्यन्तरमाह— उपास्येते इति। अत्र ह्युपासना किमुपसर्गार्थो विशिष्टस्य धातुमात्रस्य वा? नाऽऽद्यः। तथा सति स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मत्वस्याऽऽस्धातोरुपासनरूपफलवाचकत्वाभावादनापत्तेस्ततः कर्मणि लकारो न स्यात्। न द्वितीयो गौरवात्[३]। तृतीये त्वागतं द्योतकत्वं तात्पर्यग्राहकत्वलाभादिति भावः। दृश्यत इति। अत्र कर्मणीति शेषः॥ १ ॥ (४२)

उपासना में उप द्योतक है।

---

भवार्थो जन्यते। यन्नैवं तन्नैवं। तस्मादुपसर्गार्थोऽनुभवादिस्तदाह नोपसर्गार्थे इति। तथा सत्युपसर्गस्य वाच्यार्थत्वेसति अप्रकृत्यर्थतया—उपसर्गार्थो न प्रकृत्यर्थस्तेन तत्र—उपसनार्थे आख्यातार्थस्य—तिङ्प्रत्ययार्थस्यानन्वयापत्ते—अन्वयो न स्यात्। यतः प्रत्ययानां—तिङादीनां प्रकृत्यर्थे—स्व प्रकृतौ आस् धात्वर्थे अन्विताः सम्बन्धिताः सन्त एवार्थं—प्रत्ययार्थबोधकत्वं—प्रतिपादक त्वमिति व्युत्पत्तिः—लोकेऽर्थप्रत्याकता।

न च फलस्थानापन्नः—अनुशब्दार्थानुभवस्तज्जनको व्यापारो धात्वर्थः। तत्राश्रयतया आख्यातार्थस्य—तिङर्थस्यान्वयेन दोषः। तदाह अनुगच्छतीत्यत्रापि 'अनुभव' इत्याद्यर्थस्य प्रत्ययापत्तेः—वोधापत्तेः। तस्मात् अनुःद्योतको न तु वाचकः। किनु भूधातावप्रसिद्धानामनुभावाद्यर्थानां प्रकाशकोऽनुः तथा स्वीकारेऽक्रियार्थकत्वेनानुभवादेः धातुत्वं न स्यत्। न विशिष्टार्थः—अनुविशिष्टभूशब्द समुदायस्यापि नार्थः, विनिगमना विरहात् विशिष्टे प्रकृतित्वाभावात्। गौरवात्—अनुभूत्वमिति शक्ततावच्छेदके गौरवात्। केवलस्यावाचकत्वात्।

तथा च—धातोरुपसर्गविशिष्टस्य वाचकत्वासंभवे, धातोरेव विद्यमानत्वात्—उपस्थितत्वात् वाचकत्वंमन्तव्यम्। यतो धातुरनुभवार्थको विद्यमानत्ववाची च। अतः शक्यसम्बन्धरूपालक्षणाऽपि सम्भवति! प्रादयस्तु न कस्याप्यर्थस्य वाचकाः। तत्र शक्यसम्बन्धरूपालक्षणाऽपि न सम्भवति। वै० मते यथा उपास्येते हरिहरौ इत्यत्र प्रीत्यनुकूल व्यापार आस् धात्वर्थः। तत्र उप इति निपातो हरिसमीपोपस्थितः तात्पर्यग्राहकः (अप्रसिद्धार्थे प्रकाशकः) न च एतेनोपसर्गस्य तात्पर्यप्रकाशकता सिद्धयति नतु द्योतकता तदाह—तात्पर्यग्राहकत्वं—तात्पर्यार्थप्रकाशकत्वमेव द्योतकत्वं प्रादीनां पृथगर्थाऽभावेऽपि क्रियायोगाऽभावो न शंक्यः। तत्र क्रियायोग

**तच्चादिष्वपि तुल्यमित्याह—**

च इत्यादि भी द्योतक होते हैं

**तथाऽन्यत्र निपातेऽपि लकारः कर्मवाचकः।**
**विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः॥ २॥ (४३)**

न्याय का चादि वाचक प्रादि द्योतक पक्ष

इत्युच्यते तेन तस्य फलस्य क्रियाविशेषणतया प्रतीतिस्तादृशार्थस्य वोधकाः, प्रादय उपसर्गसंज्ञकाः भवन्तु।

तच्च = उक्तद्योतकत्वञ्च चादिष्वपि = च, वा, ह इत्यदिष्वपि तुल्यं = समानम्। तत्रापि द्योतकत्वपक्षो मन्तव्यः। चैत्रमिव पश्यतीत्यादाविव चैत्रपदं चैत्र सदृशे लाक्षणिकम् इव पदं सादृशार्थतात्पर्यग्राहकम्। इव पदं समभिव्याहृत चैत्रपदं चैत्रसदृशार्थबोधजनकं भवतु। यदि निपाताः वाचकाः; इति मन्यसे तर्हि 'इवार्थ सदृश' इति प्रकृतेरर्थों न स्यात् तेन चैत्र पदस्य दृशि क्रियायां कर्मत्वेनान्वयोऽपि न स्यात्। तस्मात् चैत्रपदस्य चैत्र सदृशे लक्षाणा कर्तव्यैव। इव पदं तात्पर्यग्राहकमिति मन्यताम्। अतश्चैत्रमिव पश्यतीत्यस्य एकत्व विशिष्टाश्रयवृत्ति वर्तमानकालिक चैत्र सदृश कर्मकश्चाक्षुषप्रत्यक्षानुकूलव्यापार इति शाब्दबोधः।

निपातानां द्योतकत्वसंसिद्धये युक्त्यन्तरम् = अन्यां युक्तिमपि दीयते 'उपास्येते' इत्यत्र आशंकते यत् उपासनारूपोऽर्थः। उप इत्युपसर्गस्यार्थः अथबा उपविशिष्ट आस्धातोः, वा केवलं धातोरेवेति। नाद्यः = उपासना उपसर्गस्य नार्थः। यतः तथा सति = उपासनयाः उपसर्गाऽर्थत्वे सति आस धातुफलमुपासना' इति न स्यात्। एवं सकर्मकता भज्यते–तदाह स्वर्थेति स्वं=आस धातुः तत्फलमुपासनारूपं फलं तस्मात् व्यधिकरणः=भिन्नाधारस्थो व्यापारः = प्रीत्यनुकूलाक्रिया। तस्याः वाचकः सकर्मकोऽऽस धातुः। तस्य उपासनारूप फल बाचकत्वाऽभावात्। अनाप्तेः=सकर्मकतायाः असिद्धेः ततः = आसधातोः सकर्मकत्वाऽभावात् कर्मणि लकारो न स्यात्। उपास्येते हरिहराविति न सिद्धेत्। सकर्मकेभ्य एव कर्मणिलकारविधनात्। न द्वितीयः = उपोपसृष्टास् धातुरपि न वाचकः गौरवात्=उपास्त्वे शक्तताऽवच्छेदके=शव्दनिष्ठधर्मे गौरवात्। भ्वादिगणे विशिष्टस्य पाठाऽभावात्। विशिष्टेऽड्द्विर्वचनादि व्यबस्थानुपपत्तेश्च।

उक्तञ्च वाक्यपदीये=अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम्। धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः। इदं दूषणमनुभवतीत्यत्रापि बोध्यम्।

तृतीये=धातुमात्रार्थकल्पने तु, आगतं=निपातानां द्योतकत्वं = अर्थ-

**अन्यत्र साक्षात्क्रियते, अलंक्रियते ऊरीक्रियते शिव इत्यादौ। अत्रापि धातोस्तदर्थे *कर्मणि लकारसिद्ध्यर्थं तत्तदर्थवाचकत्वं वाच्यमित्युपसर्गवदेव द्योतकत्वममीषामपीत्यर्थः। यद्यपि कृधातोः सकर्मकत्वमस्त्येव तथाऽप्येष्वर्थेषु सकर्मकता न स्यात्। अन्यथा वायुर्विकुरुते, सैन्धवा विकुर्वत इत्यत्रापि* स्यादिति भावः।**

---

प्रकाशकत्वमुपलब्धम्। धातुमात्रेण विशेषार्थप्रतीतेः, उपसर्गस्य तत्र तात्पर्य ग्राहकत्वं=धातोः अप्रसिद्धार्थे बोधकत्वं लब्धम्।

अन्यथा भावे प्रत्यये सति, कर्मणि लकारो नस्यात्। उपास्येते हरिहरा विति न सिद्धेत्। तस्मात् दृश्यते कर्मणि लकार इति शेषः=वैयाकरण सिद्धान्तः। ऐतेन प्रादीनां द्योतकत्वं समागतम्।

तच्च=द्योतकत्वञ्च चादिष्वपि=च, उ, वाह इत्यादिष्वपि तुल्यम्=समानम्धातोः विशेषणत्वात्। अतआह तथेति—तथा=प्रादिवत् प्रकारेण अन्यत्र=चादिरूपे निपातेऽपि अव्यवहितोपस्थितस्य धातौर्यो लकारः स कर्मवाचकः विशेषणादीनामयोगोऽपि=विशेषण सम्बन्धाऽभावेऽपि प्रादि नामिव चादीनां समत्वं विज्ञेयम्। व्याख्या=यथा-उपास्येते इत्यादौ निपातानां द्योतकत्वस्वीकारे कर्मणि लकार इतिशेषः। एवं साक्षात् क्रियते प्रत्याशी, अलंक्रियते कन्या, उरीक्रियते शिव इत्यादौ भक्तः शिवं साक्षात् करोति माता कन्यामलङ्करोति, शिष्यः गुरोराज्ञा मुरीकरोति। एषु साक्षात्, अन्यम्, उरी एते निपाताः यदा द्योतका इति मन्यन्ते तदा साक्षात् पूर्वक कृधातोः इन्द्रियसन्निकर्षः (प्रत्यक्षानुकूल व्यापोराऽर्थाः) अलं पूर्वक कृ धातो शोभनाऽनुकूलव्यापारोऽर्थः, उरी पूर्वक कृ धातोः स्वीकरणानुकूल व्यापारोऽर्थः। यदा एते धातोरर्था इति मन्यन्ते तदा, एष्वर्थेषु कृ धातुः सकर्मकः, फलव्यापारयोः भेदाधिकरणत्वात्। अत्रापि=लक्ष्येषु उक्तोदाहरणेषु धातोः तत्तदर्थे=उक्तार्थे=कर्मणि लकारप्रवृत्यर्थं तत्तदर्थवाचकत्वं=प्रत्यक्षीकरणक्रिया अलंकरणक्रिया, स्वीकरणक्रियाऽर्थेषु धातुः वाचकः, 'उपसर्गवत्=प्रादिवत् चादिष्वपि, अमीषां=चादीनां व्यञ्जकत्वं मन्यताम्।

न च कृ धातु र्नाकर्मकः किन्तु सकर्मक एवेति कथं, कथं कर्मणि लकारेति सन्देहस्तदाह—यद्यपि—प्रसिद्धत्वात् कृधातुः सकर्मक एवास्ति='घटः क्रियते' इत्यादौ कर्मणिलकारदर्शनात्। कृञः सकर्मकताया अनुपपत्तिर्नास्ति

**अथोपासनासाक्षात्कारादिर्निपातार्थोऽस्तु "साक्षात्प्रत्यक्षतुल्ययोः" इति कोषस्वरसात्। तदनुकूलोव्यापार एव धात्वर्थोऽस्तु स्वस्वयुक्त-निपातान्यतरार्थफलव्यधिकरणव्यापारवाचित्वं सकर्मकत्वमपि सुवचमिति दृष्टान्तदार्ष्टान्तिकावयुक्ताविति नेदं साधकमिति चेत्? न, नामार्थधात्वर्थयो-र्भेदेन साक्षादन्वयासंभवान्निपातार्थधात्वर्थयोरन्वयस्यैवासंभवात्। अन्यथा तण्डुलः पचतीत्यत्रापि कर्मतया तण्डुलानां धात्वर्थेऽन्वयापत्तेरिति॥**

अतः साक्षात्कारे लक्षणाऽपि न। तथापि-ऐषु = साक्षात्कारादिष्वर्थेषु सकर्मकता न सम्भवति। यावत् 'प्रादीनां द्योतकत्वं नाङ्गीक्रियते तावत् सकर्मकता न सम्भाव्यते। 'साक्षात्क्रियते' इत्यादि प्रयोगोऽपि न सम्भाव्यताम्। अन्यथा—कुत्रचित् सकर्मकत्व दर्शनेन सर्वत्र सक्रर्मकता स्वीकारे घटं करोतीति दर्शनेन सकर्मता सिद्धावपि, वायुर्विकुर्वते = सकर्मकतापत्तिः स्यात् अत्रतु वायुकर्तृकविकारानुकूलव्यापारोऽर्थः सैन्धवकर्तृकविकारानुकूल व्यापारोऽर्थः तत्र अकर्म काच्चेति आत्मनेपदं जायते। तन्न स्यात् अतः क्वचिदकर्मकताऽपि स्वीकर्तव्यैव। तेन 'सैन्धवैः विकुर्वते' इति भावे प्रत्ययः सिद्धयति।

शं० कोष प्रमाणेन निपातानां वाचकत्वं साधयति अथेति—अथ = निपातस्य वाचकत्वमारभ्य उपासनारूपं फलं साक्षात्कार आदि = फलम् उरीत्यादीनां निपातानामर्थो भवतु नाम। यतः साक्षात् शब्दः प्रत्यक्षे तुल्ये चार्थे इति कोषस्य स्वरसात् = स्वं = साक्षात्कारादिः तस्य रसः = अर्थः प्रत्यक्षं तुल्यञ्च। रस्यतेयोऽसौ रसोऽर्थः। साक्षात्कारादीनामर्थो उपासनादिरूपः। निपातार्थः। अथ निपाताः उच्चावचयेष्वर्थेषु निपतन्ति इति निरुक्ते निपात शब्दार्थ निर्वचनेन न उपशब्दस्यापि उपासनार्थकत्वं कल्पते। तदनुकूलः = उपासनानुकूला क्रिया इत्येव आस धात्वर्थो जायतम्।

ननु उपास्यते गुरुः इत्यादौ 'उप' शब्दस्य उपासनाद्यर्थवाचकत्वेऽपि पूर्वोक्त सकर्मक लक्षणं न संघटेत्। अस्यां स्थितौ उपयुक्तं लक्ष क्षणमुच्यते स्वेति – स्वश्च = धतुश्च स्व = धातु युक्त निपातश्च अनयोरन्यतरस्य = एकस्यार्थरूपं यत्फलं तस्माद् व्यधिकरणः—भिन्नाधारे स्थितो यो व्यापारस्तदवत्त्वं = तादृशलक्षणकं सकर्मकत्वं सुखेन वक्तुं शक्यम्। एतादृश

किं च प्रादीनां वाचकत्वे भूयान्प्रकर्षः, कीदृशो निश्चय इतिवद् भूयान्प्र; कीदृशो निइत्यपि स्यात्। अस्मन्मते प्रादेरनर्थकत्वान्न तदन्वय इति। अत एव द्योतकता तेषां स्यादिति। साधकान्तरमभिप्रेत्याऽऽह—विशेषणेति। शोभनः समुच्चयो द्रष्टव्य इतिवच्छोभनश्च द्रष्टव्य इत्यस्याऽऽपरोस्तुल्यसमाधे-

---

लक्षण-स्वीकारे सति दृष्टान्ते = उपास्येते हरिहरौ दार्ष्टान्ते = साक्षात्क्रियते इत्यादौ। एतौ दृष्टान्तो निपातानां द्योतकत्वायुक्तौ = अप्रामाणिकौ उक्त-कारणत्वात्। नेदं साधकमिदं साक्षात् क्रियते इत्युदाहणं धातोर्विशिष्ट वाचकत्वस्य निपातानां वाचकत्वञ्च नोपपादकम्। तत्र = इत्थं न वक्तुं शक्यते। यतः नामार्थं = निपातार्थोपासन धात्वर्थः = आसधत्वर्थः = प्रीत्य-नुकू व्यापारो भेदेन = व्यधिकरणेन साक्षात् = प्रत्यक्षात् अन्वयस्य = सम्बन्धस्यासम्भवेन ( विभक्त्यर्थं कर्मत्वाद्यन्वय द्वारा तदन्वयो भवत्येव ) यतः साक्षात्कार रूपं फलं निपातार्थः। व्यापार मात्रं कृधात्वर्थस्तयोः जन्य जनक भाव सम्बन्ध आवश्यक भेदसम्बन्धेनान्वयेतु साक्षात्कारानुकूल व्यापार इति बोधो न स्यात्। नामार्थ धात्वर्थयोः भेदेवान्वयस्या व्युत्पन्न-त्वात्। एवं निर्वाहो न भविष्यति। अन्यथा = नामार्थस्य भेद सम्बन्धेन धात्वर्थेऽन्वयस्वीकारे तण्डुलः पचतीत्यत्र तण्डुलस्य फलाश्रयाणां कर्मतया धात्वर्थ = पच धात्वर्थेऽन्वयापत्तिः स्यात्।

निपाताः न वाचकाः। ननु नामार्थधात्वर्थयोः भेदेनान्वयोऽव्युत्पन्नः इति न्यायो निपातातिरिक्तविषयः। निपातस्य तु भेदेनान्वयो भवितु मर्हति। तदाह किञ्च = प्रादीनां वाचकत्वस्वीकारे प्रशब्दः प्रकर्षवाचकः निःशब्दो निश्चय भूयान् प्रकर्षः इति स्थाने भूयान् प्र.। कीदृशो निश्चयः इति स्थाने कीदृशोनिः इति प्रयोगोऽपिस्यात् अर्थात् प्रशब्दः स्वतन्त्रतया न प्रकर्ष वाचकः एवं निः शब्दोऽपि किन्तु शब्दशक्ति स्वभावेन धातुपरतन्त्रतया समुच्चय समुदायार्थवाचकः निपातानां समुदायार्थे नित्यसाकांक्षितत्वात् समुच्चयार्थं द्योतक पदं बिना प्रयोगासम्भवः। अस्मत् = वैया० मते प्रादेः = प्रादीना मनर्थकतया = वाच्यार्थाऽभावेन न तदन्वयः = भूयान् शब्दस्य प्रशब्दार्थे कीदृश शब्दस्य निश्शब्दार्थेऽन्वयो नेत्यर्थः। अतो द्योतकता = व्यञ्जकता तेषां = प्रादीनां मन्तव्यैव।

ई उसी प्रकार खवरखादेर में भी षष्ठी होनी चाहिए।





वाचकता का खण्डन

यत्स्यादिति भावः। अपि च निपातानां वाचकत्वे प्रातिपदिकार्थयोर्विना षष्ठ्यादिकं भेदेनान्वयासंभवः। अन्यथा राजा पुरुष इत्यस्य राजसम्बन्धिपुरुष इत्यर्था पत्तेरित्यभिप्रेत्याऽऽह–आदीति। धवखदिरयोः समुच्चय इतिवद्धवस्य च खदिरस्य चेत्येव स्यादिति भावः॥ २॥ (४३)

साधकान्तरम् = निपातानामर्थं प्रकाशकत्वस्य अन्यं साधकं = उपपादकं, उपस्थापकं प्रमाणं ब्रूते–विशेषणाद्ययोगेऽपि प्रादिवच्चादिके समे विशेषणादीनामसम्बन्धेपि = प्रादिवत् प्रादिरिव चादिकेऽपि व्यञ्जकत्वं समः = तुल्यः। यथा—च शब्दो न स्वतन्त्रतया समुच्चायकः अन्यथा शोभन समुच्चय इव शोभनश्च इत्यनेनापि च शब्दात् समुच्चायार्थ बोधः सम्भाव्येत् शोभनशब्दः समुच्चयशब्द विशेषणम् न तु च शब्दे द्योतकत्वात्। तुल्य सामाधेयत्वात् = तुल्येन = प्रादीनां निरर्थकत्वे सति द्योतकत्वरूप समाधानेन समानं चादीनां समाधानं कर्तुं शक्यत्वात्। विष्णुमुपासते इत्यत्र उपशब्दार्थे विष्णुमित्यस्य कर्मतयाऽन्वयासम्भवेन तेषां व्यञ्जकत्वमेव। यदि चादीनां वाचकत्वं चार्थे द्वन्द्व सूत्रं मानं तर्हि प्रादीनां वाचकत्वं ईषद् दुःसुषु कृच्छाकृच्छार्थेषु खलः इति सूत्रं मानम्। अतआह तुल्य समाधेयत्वादिति।

निपातानां वाचकत्वे दोषो: दीयते अपिचेति—यदि निपाताः वाचकाः स्युः तर्हि = द्वयोः प्रातिपादिकार्थयोः शोभनश्चेत्यत्र शोभन चकारयोः षष्ठीद्वितीयादि विभक्ति मन्तरा भेदेन = वैयधिकरण्येनान्वयो न सम्भवति। अतोऽभेद = भिन्न (भेद) सम्बन्धविशिष्टप्रातिपदिकार्थ विशेषणक शाब्दबोधं प्रति विशेष्यता सम्बन्धेन न विभक्तिजन्योपस्थितिः कारणम्। इत्यावश्यकोऽयं कार्यकारणभावः तेन 'धवश्च खदिरश्च' इत्यादौ चकारे उक्तकार्यकरणयोरभावेन खदिरादेः समुच्चयेऽन्वयोऽसम्भवः। विभक्तिजन्योपस्थितेरभावात्। अन्यथा = षष्ठ्यादिविभक्ति विनाऽपि नामार्थयोरभेदान्वयस्वीकारे राजा चासौ पुरुष इत्यस्य राजसम्बन्धी पुरुष इत्यर्थो भवति। अस्मिन्नर्थे आपत्तिः स्यात्। यथा राज्ञः पुरुष इत्यत्र राजसम्बन्धावान् पुरुष इव राजा पुरुष इत्यत्रपि राज सम्बन्धवानित्पर्थः स्यात्। इत्ययिप्रेत्याह आदीति—यथा घवखदिरयोः समुच्चयः विशेषण विशेष्यभावेन बोध, एवं घवश्च खदिरश्च इत्यत्रापि तथा बोधः स्यात् किन्तु तत्र तथा बोधो न ज़ायते अतः द्योतकाः निपाताः इत्येव मन्तव्यः।

निपातों को दो प्रातिपादिकार्थों में षष्ठी लगाया गई है भेद को नदखाने के लिये छोड़कर

ननु प्रातिपदिकार्थयोर्भेदेनान्वयबोधे विरुद्धविभक्तिजन्योपस्थितिर्हेतुरिति कार्यकारणभावो निपातातिरिक्तविषय एवेति नोक्तदोष इत्याशङ्क्याऽऽह—

निपातों में तू भेद दिखाने के लिए भी षष्ठी नहीं होती है।

पदार्थः सदृशाऽन्वेति विभागेन कदाऽपि न। वाचक का खण्डन
निपातेतरसंकोचे प्रमाणं किं विभावय ॥ ३ ॥ ( ४४ )

सदृशा[1] सदृशेन * समानाधिकरणेनेति यावत्। अन्वेति, अभेदेनेति शेषः। विभागेन असदृशेन, असमानाधिकरणेनेति यावत्। अयमर्थः— समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिर्निपातातिरिक्तविषयेति कल्पने मानाभावो गौरवं च अस्माकं निपातानां द्योतकत्वादन्वय एव नास्तीति नायं दोषः। अत एव घटो नास्तीत्यादौ घटपदं तत्प्रतियोगिके लाक्षणिकमिति नैयायिकाः ॥ ३ ॥ ( ४४ )

---

ननु सामान्येन द्वयोःप्रातिपदिकार्थयोरभेदान्वय नियमो व्युत्पन्नः तत्रा भेदान्वयबोधे समानविभक्तिजन्योपस्थितिः कारणम्। परन्तु प्रातिपदि कार्थयोः = नामार्थयो र्भेदान्वयबोधे = राष्ट्रस्य नेता इव भेदेन सम्बन्ध बोधे निरुद्धा या विभक्तिः = तस्या उपस्थितिः = कारणम् एतादृश कार्य-कारणभावो वदिष्यते तर्हि घवस्य च अत्रापि विरुद्धा विभक्तिरूपस्थिता वर्तते ताशदृशाब्दबोध—इष्टः कोदोषस्तत्र उच्यते भेदान्वयबोधे विरुद्ध विभक्त्युपस्थितिः कारणम् परन्तु भूयान् प्र० कीदृशो निः इत्यादौ विरुद्ध विभक्ति र्नस्ति। तदर्थं मुक्त कार्यकारणभाव निपातातिरिक्तविषयः = निपात विषयेतु भेदन बोधे विभक्त्युपस्थितिः कारणं नास्ति अतो नोक्त दोषः = इत्थमाशङ्क्य परिहरति = पदार्थः सदृशान्वेति—समानादृक् सदृक्तेन सदृशेन समानेन समानाधिकरणेन अभेदेनान्वेति सम्बद्धयते। इदृक् पदार्थयोरभेदेनान्वयो जायेत। विभागे न अन्वेति। न च मृद्रुपच-तीत्यादौ असदृशेन अन्वयो नानुनभूयते अतआह असमानाधिकरण्येनेति अतः निपातेतर संकोचे किमपि प्रमाणं नास्ति तत्र विरुद्ध विभक्ति विनाऽपि भेदवोधोजायते।

अयमर्थः—समानाधिकारणयोः=समानविभक्तिकयोः प्रातिपदिकाथयोः या अभेदसम्बन्धाववच्छिन्ना व्युत्पत्तिः = शब्दार्थ सम्बन्धविशिष्टोत्पत्तिः सा निपातारिक्त विषया = निपात स्थलं परित्तज्य प्रवर्तते। न च नामार्थ-योरभेदान्वव्युत्पत्तिः निपातातिरिक्तविषया' इति कल्पने मानाभावः=

निपात यदि वाचक हो जायेंगे तो काव्यादि में भेद से अन्वय नहीं पायेगा

**अपि च निपातानां वाचकत्वे काव्यादावन्वयो न स्यादिति साधकान्तरमाह—**

---

उक्त कार्यकारणभावस्य निपतेतर संकोचे भानाभावे च नास्ति किमपि प्रमाणम्। कीदृशोनि. इत्यादि प्रयोगानुपपत्तिः प्रमाणं मन्यसे तर्हि आह गौरवञ्च=निपातेतर संकोचे गौरवमपि वर्तते।

अस्माक=द्योतकतावादिनां वैयाकाणानाम्मते निपातानां द्योतकत्वात् व्यङ्ग्यार्थ प्रकाशकत्वात् समीपस्थपद गुतप्तार्थ बोधकत्वात् तत्र=कीदृशोनिः इत्यादावन्वय एव नास्ति=पृथगुपस्थितेरभावात्। अन्वयस्तत्र जायते यत्र पृथगुपास्थितिः सम्बन्धश्च स्याताम्। नायंदोषः, धवस्यच रदिरस्य च इत्यादौ समुच्चयार्थस्य समभिव्याहृत पदेनैव लाभात् पृथगु पस्थितिरेव नास्ति। उक्तव्युत्पत्ति विषय एव नास्तीति न दोषः धव समुच्चयस्तु धवपदे नैवोपतिष्ठते चकरस्तस्य प्रकाशकः। एवं घटश्टेत्यत्र घटः प्रतियोगी=विशेषणं यस्यस मुदायस्थ सः घट स्यार्थः नतु तात्पर्य ग्राहकः इति सिद्धान्तः।

अत एव=निपातारिक्त सङ्कोचस्वीकाराभावादेव 'घटो नास्ति' इत्यादि स्थले नैयायिका घटपदं घटप्रतियोगिकेऽभावे लाक्षणिकमिति मन्यन्ते।

नव्य नै० भेद सम्बन्धेनाऽपि नामार्थयोरन्वयः, काल्पितः यथाघटोन पटः। अत्र घटस्यभेदे भेदस्य पटेऽन्वयः। चैत्रोन पचति' आख्यतार्थ कृत्यभावस्य स्वरूपसम्बन्धेन चैत्रे, चैत्र इव चैत्रः चैत्रस्य इवार्थ सादृश्ये भेदे नान्वयः चैत्र निरूपित सादृश्यवान् मैत्रः, पुत्रेण सहागतः पिता अत्र पुत्रस्य प्रतियोगितया=सहार्थसाहित्येऽन्वयः ततः पुत्रप्रतियोगिक साहित्यवान् पिता आगतः। इत्यादि प्रयोगेषु भेदेनान्वय सिद्धयर्थ नामार्थ योरभेदान्वय इत्यस्यां व्युत्पत्तौ निपातेतरसङ्कोचः इति विशेषणंमावश्यकम्। तत्र निपातो वाचकः।

ननु नामाथयोरमेदान्वयव्युत्पत्तौ निपातेरसङ्कोचप्रवृत्तिविषयत्वेन चैत्र इव मैत्र :पुत्रेणसहागतः पिता इत्यादौ दोष परिहारेऽपि अन्यस्थले वाचकत्वे अन्वयो नोपपद्यते तदाह अपिचेति—यदि निपाताः वाचकाः=अर्थाभिधायकाः स्युः तर्हि काव्यादौ=काव्यगतवाक्ये अन्वयो=निपातार्थस्य सम्बंधो न भवेत्। साधाकान्तर=तात्पर्य ग्राहिकामान्यां युक्ति माह शरैरिति—अन्वय उसैः=किरणैरिव शरैः-वाणैः रसानिव=जलादि तत्वानिव उदी-

**शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ।**
**इत्यादावन्वयो न स्यात्सुपां च श्रवणं ततः ॥ ४ ॥ ( ४५ )**

अत्रोस्रसदृशैः शरैः रससदृशानुदीच्यानुद्धरिष्यन्नित्यर्थः । *अयं चोस्रादिशब्दानां तत्सदृशपरत्व इवशब्दस्य च द्योतकत्वे संगच्छते । अन्यथा प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधः ।

तथाहिउस्रैरिति करणे तृतीया । न चोस्रोऽत्र करणमिवार्थं सदृशस्य करणत्वेऽपि तस्य करणत्वं नानेन*बोधयितुं शक्यमप्रकृत्यर्थत्वात्* । इवशब्दस्य वाऽसत्त्वार्थकतया तदुत्तरं तृतीयाया*असंम्भवात्, *संभवे वा श्रवण-

---

च्यान् = उत्तरदेशीय राज्यान् उद्धरिष्यन् = सूर्य इव रघुः इत्यादौ इव इति निपातस्य वाचकत्वे विभक्तेरन्वयः = सम्बन्धो न स्यात् यदि कथञ्चित् स्यात्तर्हिसुपा = विमक्तीनां श्रवणं स्यात् पूर्वोक्त दोषस्तादवस्थ्यः ।

व्याख्या = यथा सूर्यः भूगतरसान्नुआकर्षति उत्तरायण पथं गच्छति एवं राजापि । इव इति तात्पर्यग्राहकः एवं रस पदं रससदृशे लक्षिणिक सूर्य पदं सूर्य सदृसे लाक्षणिकम् इव इति तद्वयञ्जकः । अत्र = उत्तर दिशः राजोद्धरणक्रियाया उस्र = किरणशदृशैः सायकैः रस सदृशान उदीच्यान् = उत्तर देशीय राज्ञः उद्धरिष्यन् स्वाधिकारे आवर्जयन् उत्तरदिशं जागामरघुः । अयश्च = उस्रैः किरण सदृशैः शरैः इति उक्तार्थान्वय बोधश्च उस्रादिपदानां उस्र सदृशे लक्षणां कृत्वैव इव पदं तात्पर्यग्राहकमिति मत्वैव करणविभक्तेः उस्रसदृश प्रकृत्यार्थेनसह अन्वय । संगच्छते अन्यथा = निपातानां वाचकत्वे उस्रादिपदानां उस्रादि सदृशे लक्षणाया = अस्वीकारे इव पदस्य सदृशार्थकत्वे उस्रशदृशशरकरणक रस सदृश उदीच्यकर्मक भविष्यकालिक उद्धारकर्ता रघुः अत्रान्यान् प्रति ययौ । इत्यर्थे विभत्तयर्थं करणकारकस्य प्रकृत्यर्थे उस्रसदृशेऽन्वयो न भविष्यति यतः प्रत्ययाः प्रकृत्यर्थेऽन्विताः = सन्त सम्बद्धाः स्वार्थ प्रकट यन्ति उद्गिरन्ति । इत्थ व्युत्पत्तिः विरुद्धयते ।

यदा इव पदं तात्पर्य ग्राहकं मन्यते तदा उस्रसदृश रस सदृश इति प्रकृत्यर्थो भवति न्यायश्च न विरुद्धयते । इदमेव तात्पर्य कारिकायाः व्याख्याप्रसङ्गे तथाहीत्यादिनोक्तम् उस्रैरित्यत्र कारणे तृतोया वर्तते । किन्तु निपातानां वाचकत्वमर्थे उस्रशब्दः करणं न भवितुमर्हति यदि इवार्थं सदृशस्य करणत्वं मन्यसे तदा उस्रगतं करणत्वंमनेन इवपदेन

प्रसङ्गात्, उस्रपदोत्तरतृतीयानन्वयप्रसङ्गच्चेत्याह - सुपां चेति सुपां श्रवणं चेत्यर्थः। चकाराद्युस्रपदोत्तरतृतीयाऽनन्वयः समुच्चीयते। इत्यदावित्यादिपदात् "वागर्थाविव संपृक्तौ" "पार्वतीपरमेश्वरौ वन्दे" इत्यत्र वागर्थयोर्वंदिकर्मत्वाभावात्तदुत्तरद्वितीयाया अनन्वय एव वागर्थस्य कर्मत्वबोधकासंभवश्च संगृह्यते। यदि च विशेषणविभक्तेरभेदार्थिका साधुत्वमात्रार्था वा तदापीवशब्दस्य वाचकत्वेऽनन्वय एव। उस्रसदृशशराणां समानाधिकरणपदोपस्थाप्यतया भेदेनान्वयायोगात्। बाधादभेदेनापि न सः। उस्राभिन्नसदृशाभिन्नः शर इत्यर्थो द्रष्टव्यः ॥ ४ ॥ (४५)

---

बोधयितुं न शक्यते। अप्रकृत्यर्थ त्वात् - उस्रसदृश रस सदृश इति प्रकृत्यर्थों न भविष्यति। ततः प्रत्ययानांमिति व्युत्पत्तिः विरुद्ध्येत। इव शब्दस्य असत्वार्थकतया - अप्रातिपदिकार्थता तदुत्तर - इवशब्दोत्तर तृतीया विभक्तेः प्रातिपदिक संज्ञायाः अभावेन असमत्वम्।

सम्भवे वा - यदि सदृशार्थवान् इवशब्दः प्रातिपदिक सज्ञा विभक्तिश्च सम्भवा इत्युच्यते तदा इवपदोत्तर विभक्तिः श्रूयेत्। कारकत्वेन अव्ययत्वं भज्येत् तेन लुगपि न संभवः। उस्रपदोत्तर तृतीयायाः अन्वयोऽपि न प्रसज्येत। अतआह सुपांञ्चश्रवणं तथा। अत्र च पदेन सूच्यते यत् उस्र पदोत्तर तृतीयायाः अन्वयो न भविष्यति। इति समुच्चीयते सङ्गृह्यते।

इत्यादावन्वयो नेत्यत्र आदिपदेन अन्यस्यापि सङ्ग्रहः सूच्यते यथावाक् च अर्थश्च वागर्थौ तौ इव सम्पृक्तौ - अभिन्नौ (एकीभूतौ) पार्वतीपरमेश्वरौ भवानी शङ्करौ वन्दे अत्र वागर्थपदोत्तर 'औ' विभक्त्यर्थ कर्मत्वस्य तत्र अन्वयो जायते। यदि इवार्थ सादृश्यं तदा तस्य कर्मत्वेनान्वयस्य असम्भवोऽपि संग्रहीष्यते। वागर्थौ इत्यत्र द्वितीयाया अनन्वयः अनुत्पत्तिश्च संगृहीष्यते। अतः इवपदं द्योतकमिति मन्यताम्। तथाच वागर्थौ लक्षणया सदृशार्थकौ तस्यार्थस्य द्योतकमिव पदम् तदा नित्यसम्पृक्तौ अभिन्नौ वागर्थसदृशपार्वतीपरमेश्वरौ कर्मिका आत्मकर्तृकी बन्दनक्रिया इतिबोधः अन्यथा वागर्थयोः वदिकर्मत्वं न स्यात् क्रियामन्वयाभावात् द्वितीयाविभक्तेरन्वयोऽपि न भविष्यति। इवार्थस्य अव्ययत्वात् कर्मत्वेन अन्वयो न भविष्यति। तस्मात् द्योतकाः इति। यदि विशेषणे याविभक्तिः सा अभेदार्थबोधिका अथवा साधुत्वमात्रमेवार्थः प्रयोजनं यस्या सा यतः न

द्योतक पक्ष

ननु त्वन्मतेऽब्राह्मण इत्यादौ तत्पुरुषलक्षणाऽव्याप्त्यापत्तिः पूर्वपदस्यानर्थकत्वेनोत्तरपदार्थप्राधान्याभावात् । *उपसर्गस्यार्थवत्त्वाभावेन प्रातिपदिकत्वाभावाद्विभक्तिश्च ततो* न स्यादित्यत आह— द्योतक होने से उसका अपना अर्थ नहीं है।

द्योतकत्व का समर्थन

नञ्समासे चापरस्य द्योत्यं प्रत्येव मुख्यता ।

द्योत्यमेवार्थमादाय जायन्ते नामतः सुपः ॥ ५ ॥ (४६)

नञ् की अपेक्षा से ब्राह्मण उत्तरपदार्थ बनता है।

केवलाः प्रकृतिः प्रयोक्ताव्याः नापिकेवल प्रत्ययः इतिभाष्यवचनात् साधुत्वमेवार्थः । तदा इव शब्दस्य वाचकत्वेऽपि अन्वयो न भविष्यति अभेदान्वयबोधे विरुद्धविभक्तिराहित्यं कारणम् । प्रसङ्गे उस्रैः इव शरैरिति सामानाधिकरण=समानविभक्तिसत्वे भेदेनान्वयोप्यसम्भवः बाधात्=सादृश्यस्य भेदघटितत्वात् अभेदेनाऽपि अन्वयो न भवितुमर्हति । वाचकत्वेतु उस्रस्य इवार्थसादृश्येऽन्वयात्तस्य अभेदेन शरेऽन्वयः तदाउस्राभिन्नसदृशः शरइत्यर्थोऽपि बाधित एव द्रष्टव्यः तेन अभेदान्वयो न भविष्यति ।

वस्तुतस्तु निपाताः द्योतकाः केचित् पृथगर्थभिधायिनः
आगमाःइव केऽपिस्युः समुदार्थस्य वाचकः ।

एवञ्चद्योत्यार्थस्य विशेषणत्वनियमेन असदृशैः शरैरिति बाधोऽपि न युक्तः । अतः नागेशमते केषाञ्चिन्निपातानां द्योतकत्वम् । घन इव श्यामः इत्यादौ धनपदं स्वसदृशे लाक्षणिकम् ।

नै० वैयाकरणं पृच्छति यत् त्वत्=द्योतकतावादिमते=सिद्धान्ते निपाताः अनर्थकाः भवन्ति । एवं अब्राह्मण इत्यादौ ब्राह्मणभिन्नब्राह्मणसदृश इत्यर्थकसमासे तत्पुरुषलक्षणस्य=उत्तरपदार्थप्रधानस्य अव्याप्त्यापत्तिः लक्ष्ये लक्षणं न प्रवर्तते । यतः द्योतकत्वपक्षे पूर्वपदं निरर्थकम् । ततो उत्तपदार्थस्य प्राधान्यं न स्यात् उपसर्गस्य=निपातमात्रस्य अर्थवत्वाभावेन=व्यञ्जकत्वेन वाचकत्वाभावबोधेनार्थवत्वाभावात् प्रातिपदिकसंज्ञा विभक्तिश्च न स्यात् इति नै० प्रश्नः वै० समाधानम् नञ्समास इति—

न ञ समासे अपरस्य=उत्तरपदस्य द्योत्यं=व्यङ्ग्यमर्थं प्रतिप्राधान्यम् तदाह या उत्तरपदप्रधानता सा द्योत्या=प्रकाश्यमर्थं स्वीकृत्य बोध्या । यथा—इतरपदार्थनिष्ठ प्रकारता निरुपितविशेष्यताशालिबोधजनकं तमेव=द्योत्यार्थमादाय इतरपदार्थपदेन त्रिविधोऽर्थो गम्यते स च वाच्य लक्ष्य द्योत्य=(व्यंग्ये) अब्राह्मण इत्यत्र आरोपितं द्योत्यार्थमादाय अर्थवत्वात्

नञ्समासादौ योऽनरपदार्थप्रधानता सा द्योत्यमर्थमादायैव। तमेवार्थमादायार्थवत्त्वात्प्रातिपदिकत्वमित्यर्थः।

वस्तुतस्तु "अव्ययादाप्सुपः" इति ज्ञापकात्सुबुत्पत्तिः। "निपातस्यानर्थकस्य" इति वार्तिकाद्वा प्रातिपदिकत्वम्। "कृत्तद्धितसमासाश्च" इत्यनुक्तसमुच्चयार्थकचकारेण निपातानां संग्रह इति बोध्यम्। तस्माद्युक्तं निपातानां द्योतकत्वम्।

---

प्रतिपदिकसंज्ञा। द्योतकत्वं व्यञ्जनैव तथावृत्या अर्थवत्वमक्षतम्। नामतः = प्रातिपदिकात्सुप्‌विभक्तयोजायन्ते उत्पद्यन्ते।

यस्मिन् पक्षे व्यञ्जनावृत्तिर्नास्ति तत्रकागतिः तदाह वस्तुतस्तु द्योतकतापक्षेनिपातानामनर्थकत्वात् अप्रातिपदिकत्वात् सुपाऽभावे अव्ययादाप् सुपः इति सूत्रे सुपोलुग्विधानं व्यर्थसत् ज्ञापयति यत् अव्ययदापि सुपः उत्पद्यन्ते। तेन निपातादपि सुप्स्यात्।

ननु स्वरादीनामव्ययाबां सत्ववचनानां वृत्या अर्थविषयकबोधजनकाना मर्थवत्वेन प्रतिपादिकात् सुप् तस्य लुग्विधानाय अपव्ययादाप्सुपः इति सूत्रं चरितार्थं कथं ज्ञापकमत अत निपातस्येति—अनर्थकस्य = अर्थप्रकाशकस्य तिपातस्य इति वार्तिकात् प्रातिपादिक संज्ञा भविष्यति।

ननु सूत्रज्ञापकात् अनर्थकस्य निपातस्य संज्ञा सिद्धा। इति बार्तिक प्रत्याख्यानपक्षे का गतिः तदाह कृत्तद्धितेति तत्र च शब्दोऽनुक्तस्य प्रतिपदं-समुच्चयार्थं = संग्रहार्थं इत्यर्थः। तेन अनर्थकानां निपतानां संग्रहः सूच्यते। तया च अधिपरी अनर्थकाविति सूत्रं वर्तते। तत्र क्रियायोगस्य अभावात् न गतिसंज्ञा न चोपसर्गसंज्ञा प्राप्नोति तद्बाधनार्थं अधिपरो अनर्थको व्यर्थीभूयज्ञापयति यत् निपातानां अर्थक्त्वप्रयुक्तकार्यंजायेत इति अतएव येषां द्योत्योऽपि अर्थो नास्ति तेषां च वा तु ह वै इत्यादीनां प्रातिपदिकत्वं सिद्धयति। तस्मात् = पूर्वोक्तानां हेतूनां सत्वात् निपाताः द्योतकाः इति सिद्धयति।

अस्य पुष्टयर्थं वैयाकरण सिद्धान्त सिद्धयर्थं मीमांसक सम्मतिः दीयते उक्तश्चेति क्वः उक्तम्, आकृत्याधिकरणे वर्तिके—किम्बुक्तं तदाह चतुर्विधे इति—व्याकरणशास्य चतुर्विधे = नामाख्यातोपसर्ग निपातरुपे पदे=सुवन्त तिङन्तस्वरुपे द्विविधस्य नामाख्यतयोः=प्रतिपदिकधात्वोरर्थनिर्णयः

*उक्तं चाऽऽकृत्यधिकरणवार्तिके—

*चतुर्विधे पदे चात्र *द्विविधस्यार्थनिर्णयः ।
क्रियते *संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥
*तयोरर्थाभिधाने हि *व्यापारो नैव विद्यते ।
*यदर्थद्योतकौ तौ तु वाचकः स विचार्यते ॥ इति ।
उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
प्रहाराहारसंहारविहारपरिहारवत् ॥

इति वृद्धोक्तावुपसर्गपदं निपातोपलक्षणम् । धातुपदं *पदान्तरस्येति बोध्यम् ॥ ५ ॥ (४६)

---

क्रियते उपसर्गस्य निपातस्य च विषये शंसयः=सन्देहः किमेषां वाचकत्वं द्योतकत्वम्वा इति शंसय उत्पद्यते तस्मात् नामार्थं निर्णय कृतः । नामाख्यात विषयेतु न शंसयः । यतः वाचकस्य प्रतिपदिकस्य किं जातौ शक्तिर्व्यक्तौ वा एवं धातोः फले शक्तिः व्यापारे उभयत्रवा इति विचारोऽपेक्ष्यते तस्मात् =अर्थनिर्णयकारणात् तयोः वाचकता सुसिद्धा । निपातोपसर्गविषये सन्देहोत्पात्तौ कारणमाह तयोरिति तयोः=नियातोपसर्गयोरर्थाभिधाने= वाचकत्वनिर्णये नास्ति कश्चन व्यापारः=शक्तिलक्षणान्यतररूपः तौ= उपसर्ग निपातौ पदार्थद्योतकौ=यस्य=नाम्नः आख्यातस्यवा अर्थप्रकाशकौ सः=नामाख्यातरूपशब्दः वाचकः=अर्थाभिधायी तदेव विचार्यते= तिङ्कृत्तद्धितघटितार्थो निर्णीयते । उपसर्गेण=निपातमात्रेण धात्वर्थः=फल-व्यापारवाचकः बलात्=हठात् अन्यः=उपसर्गातिरिक्तोऽर्थं प्रतीयते=प्रका-श्यते । यथा—प्रहारः हृधातो हरणानकूलव्यापारोऽर्थः भावे घञिकृते हार इति= हरणमर्थ परन्तु उपसर्गे कृते प्रहारः=ताडनम् आहारः=भोजनम् संहारो=विनाशः विहार=परिहारः=इतिवत्—उपसर्गवालात् अर्थ-भेदो जायते—

ननु कारिकायां उपसर्ग इत्युक्तं तच्च निपातस्य व्याप्योधर्मस्तेन चादीनां ग्रहणं न स्यात् अतः आह उपसर्गपदंनिपातमात्रस्योप लक्षणम् । तेन चादी-नामपिग्रहणम् । धातुपदं=पदान्तरस्य–अन्यस्य सुबन्तादि पदस्य उपलक्षणं बोध्यम् । यथा चन्द्र इव मुखं दृश्यते अत्र चन्द्रपदं सदृशार्थस्य बोधकं इव पदं तत्तात्पर्यग्राहकम् चन्द्र पदं स्वप्रतियोगिके लाक्षणिकम् । एवं अर्थवत्वे चन्द्रादिपदाना मुपलक्षकं धातुपदम् ।

पूर्वोक्तप्रकारेण नियातानां द्योतकता पक्षं समर्थ्य तेषां वाचकत्वपक्षं

वाचकत्व में तर्क

**नन्वन्वयव्यतिरेकाभ्यां निपातानां तदर्थवाचकत्वमेव युक्तं बोधकतारूपशक्तेरबाधाच्च । किं चोक्तरीत्या पचतीत्यादौ धातोरेव कर्तृविशिष्टभावनायां लक्षणाऽस्तु, तात्पर्यग्राहकत्वमात्रं तिङादिः स्यादित्यरुचेः पक्षान्तरमाह—**

समर्थयति नन्विति—निपातत्वावच्छेदेन सकल निपाताः वाचकाः नतु चादि मात्रं वाचकम् । इवादि निपातानामुपस्थितौ सादृश्यादयोऽर्थाः गम्यन्ते यदा इवादयो नोपतिष्ठन्ते तदा न सादृश्यादि प्रतीतिः चन्द्रइव मुखं दृश्यते इत्यादौ इवादि समभिव्याहारे सादृश्यादयोऽर्थाः प्रतीयन्ते इति अन्वय व्यतिरेकाभ्यां निपाताः तेषांमर्थानां वाचकाः स्व सम्वद्धपदवृत्त्यर्थं प्रत्यायकाः अतएव वाचकाः—ननु निपातेषु इच्छादि शक्तेरभावात् कथं वाचकता तन्न बोधकतारूपशक्तिः न बाध्यते, तत्र अनुभवः प्रमाणम् । न च अन्वयव्यतिरेकौ न वाचकत्वे प्रमाणे किन्तु तात्पर्यग्राहकत्वेनापि उपपन्नौ भवितुं शक्येते । अर्थात् इवसत्वे सादृश्यार्थसत्वमन्वयः इवाभावे सादृश्यार्थाभावः इति युक्त्या वाचकत्वं तर्क्यते । अन्वय व्यतिरेकौ द्योतकावपि भवितुमर्हतः । तात्पर्य ग्राहकत्वं द्योतकत्वं तच्चापि सम्भवात् वाचकत्वे न प्रमाणप्राबल्यम् । तदाहकिञ्चउक्तरीत्या = प्रजयतीत्यत्र प्रकर्ष विशिष्टे लक्षणया जिधात्तोरेवार्थः नप्रदीनां प्रकर्षादिवाचकत्वं तेषां तात्पर्य ग्राहकत्वेनैवोपयोगात् नन्वेवमन्वयव्यरेकप्रमाणेन पचतीत्यत्र तिङां वाचकत्वमभिमतम् परन्तु धातोरेव कर्त्र्यभिन्नाश्रयः पाकानकूलो व्यापारः इत्यत्रोपलक्षणामस्तु तिङादेः तात्पर्यग्राहकत्वंमास्तु अपिना कृतां सनादेश्च संग्रहः यदि तिङां वाचकत्वं तर्हि निपातानामपि वाचकत्वमस्तु ।

नागेशस्तु सुप्तिङामपि द्योतकत्वमिष्टंमिति मन्यते । यतः पच्वकं नामार्थ धात्वर्थश्च अत एव अजर्धा अचकात् इत्यादौ तिङाद्यभावेऽपि कर्तृसंख्ययोः प्रतीतिः । तेन तिङां द्योतकत्वमिष्टिमेव । न च लुप्तविभक्ति स्मरणात् वोधः तत्र लोपमजानतोऽपि वोधदर्शनात् । यत्र प्रत्ययस्य वाचकता यथा = पाकः इत्यादौ कृदन्ते तत्रैव प्रकृति प्रत्ययार्थयोरिति न्यायः प्रवर्तते । यत्र प्रत्ययाः अनिर्दिष्टार्थाः ते स्वार्थे भवन्ति तिङादीनां द्योतकत्वाद्यरुचिं समीक्ष्य आह निपातानामिति—अन्वय व्यतिरेकयोः सत्वासत्वाभ्यां मर्थानामुपास्थित्यनुपस्थित्योः निपातानां वाचकत्वं युक्तं वा = उचितमेव वाशब्द एवार्थे किन्तु तत् = नैयायिकोक्त प्रादयोवाचकाः चादयोद्योतकाः इतिवैषम्यं भेदोः न युक्तम् । परेषां यन्मतं द्योतकत्वं तदेव नः = अस्माकं वैयाकाणानां मतम् किन्तु वैषम्यं भेदो न युक्तः अर्धजरतीयस्य अनौचित्यत्

**निपातानां वाचकत्वसन्वयव्यतिरेकयोः ।**
**युक्तं वा न तु तद्युक्तं परेषां मतमेव नः ॥ ६ ॥ (४७)**

**एवं च धात्वर्थप्रातिपदिकार्थयोर्भेदेनान्वयबोधो न व्युत्पन्न इति निपातातिरिक्तविषयं, समानाधिकरणप्रातिपदिकार्थयोरभेदेनान्वय इत्यपि *तयेत्यगत्या कल्पनीयमिति भावः । न त्विति । नैयायिकोक्तं *प्रादिचादिवैषम्यमित्यर्थः ।**

वैयाकरण ***यत्तु सर्वेषां निपातानां वाचकत्वेऽर्थवत्सूत्रेणैव तेषां प्रातिपदिकत्वसंभवात्**

---

एवच्च=उक्त कारिकायां निपातानां वाचकत्वे नामार्थ धात्वर्थस्य भेदसम्ब्रन्धेन अन्वयो नानुत्पन्न=व्युत्पत्ति विषयो न भवति किन्तु तयोर भेदे सम्वन्धेनान्वयः एष नियमः निपातं विहाय प्रवर्तते । एवं वाचकत्वे प्रार्छतीत्यत्र प्र इत्ययं निपातः तस्य प्रकृष्टोऽर्थः सक्षात् ऋच्छधातावन्वयो न भविष्यति अव्युत्पन्नत्वात् अस्य प्रातिपदिकस्य योहि प्रकृष्टोऽर्थः स प्रातिपदिकार्थः तस्य धातुना सह भेदेनान्वयोऽव्यवहारिकः अव्युत्पन्नश्च तस्मात् न्यायोऽयं निपातिरिक्तविषयः । समानाधिकरण इत्यादि व्युत्पत्ति-स्वरूपम् तत्र समानधिकरण इति विशेषणं किमर्थम् । यदि प्रातिपदिकस्यार्थौ प्रतिपदिकार्थौ तयोः अभेदान्वय इति व्युत्पत्ति स्वीकारे पुष्पवन्तौ सूर्य-चन्द्रमसौ इत्यमरकोशात् पुष्वन्तशब्दस्य सूर्यचन्द्रमसौ वाच्यार्थौ भवतः द्वयोरेकस्य प्रातिपदिकस्यार्थयोः उक्तयोः भेदान्वयापत्तिः स्यात् नीलो घटः इत्यादौ समानविभक्तिकयोः प्रातिप्रदिकयोरर्थयोरभेदान्वयो न भविष्यति । उभयत्र निर्दिष्टस्य अव्याप्त्यतिव्याप्पिदोषस्य परिहाराय प्रातिपदिकयोरर्थौ प्रतिपदिकार्थौ इति व्युत्पत्या दोषयोः परिहारेऽपि राजा पुरुष इत्यादौ अभेदान्वयस्य आपत्तिर्भविष्यति अतः समानविभक्तिक नामर्थयोरभेदान्वयः इत्यङ्गीकारे घटश्चेत्यत्रापि अभेदान्वस्य प्रसक्तिः जायते । तस्याः परिहाराय निपातातिरिक्तविषया उक्ता व्युत्पत्तिरिति मन्तव्यैव । यदि घटश्चेत्य घटपदस्य घटप्रतियोगिके लक्षणा करिष्यते तथा चार्थसमुदाये अभेदान्वयः करिष्यते तर्हि प्रस्तुत व्युत्पत्तौ निपाततति-रिक्त इति विशेषणस्य आवश्यकतैव नास्ति । अस्याः वार्तायाः स्पष्ट प्रति-पत्तये आह इत्यपितथेति निपाततिरिक्तविषय । उक्त तात्पर्य मगत्या कल्प-नीयम् इति शब्देनध्वन्यते । नतु तद्युक्तं=चदि प्राद्योर्वैषम्यं नोचतमित्यर्थः परेषां नैयायिकमीमासकानांयत् युक्तं द्योतकता वाचकता वा तत् नः= अस्माकं सम्मतम् ।

यत्तु=नैयायिकः वैया० पृच्छति सर्वे निपाताः यदि वाचकाःस्युः तर्हि सर्बेषामर्थवत्वात् अर्थवत्सूत्रेणैव प्रति पदिकसंज्ञा सिद्धा निपातस्यानर्थकस्य

इनके संग्रह के लिए लगाया गया है





"निपातस्यानर्थकस्य" इति विधिवैयर्थ्यं, सर्वेषां द्योतकत्वे चानर्थकस्येति व्यर्थम्. तथा च केचिद् द्योतकाः केचिद्वाचका इत्यभ्युपेयमिति। तन्न, एवं हि चादयो द्योतकाः प्रादयो वाचका इति वैपरीत्यावारणात्। [1]सर्वथाऽनर्थकानां पादपूरणमात्रार्थमुपात्तानां संग्रहाय वार्तिकारम्भस्य कैयटादौ स्पष्टत्वाच्च, तस्य प्रत्याख्यातत्वाच्च। परेषामिति बहुवचनं मीमांसकसंग्रहाय। केवलवृक्ष-शब्दात्समुच्चयाबोधाच्चकारश्रवणे तद्बोधाच्चकार एव तद्वाचको न द्योतकः। किं च द्योतकत्वे पदान्तराणां तत्र शक्तिः कल्प्या चकारादेर्द्योतकत्वशक्तिश्च कल्प्येति गौरवं स्यादिति हि समुच्चयाधिकरणे स्थितं, तदपि न युक्तमिति भावः।

तथा हि—अन्वयव्यतिरेकौ तात्पर्यग्राहकत्वेनाप्युपयुक्तौ[2] घटादि-

इति प्रातिपदिकसंज्ञा विधायकं वर्तिकं व्यर्थम् स्यात् यदि सर्वे निपाता द्योतकाः स्युस्तर्हि प्रातिपादकसंज्ञा विधानार्थं 'निपातस्य' इत्येव ब्रूयात् चानर्थकस्य इत्यंशस्य वैयर्थ्यं सुष्पष्टमेव व्यावर्त्यस्य अभावे विशे-षणदानमनर्गलम्। यदि केचन द्योतकाः केचन वाचका इति मन्तव्यश्चेत् तदपि न अत्र वैयाकरणाः ब्रुवते यत् अस्यां परिस्थितौ वैपरीत्यं कुतो न जायताम् प्रादयोद्यो० चादयो वा० इत्यस्य वैपरीत्ये प्रादयोवाचकाः चाद-योद्योतकाः इति परिवर्तनम्। अनर्थस्य इत्यंशस्य साफल्यन्तु ये सर्वप्रकारणे निरर्थकाः केवलं पादपूर्त्यर्थं उपात्तानां—गृहीतानां निपातनां सङ्ग्रहाय कैयट ग्रन्थे वार्तिकस्य प्रयोजनमित्युक्तं वर्तते। तस्य—वर्तिकस्य प्रत्या-ख्यातत्वात्—अधिपरी अनर्थकावित्यनेन अनर्थकस्यपि ग्रहणात् कृत्तद्धितेति सूत्रस्थ च कारेण अनुक्तस्य अनर्थकस्य ग्रहणात्।

करिकायां परेषामिति बहुवचनेन न मीमांसाकादीनां बोधनाय तन्मते केवलं वृक्षशब्दे न समुच्चयार्थबोधकः किन्तु वृक्षश्च इति—चकार श्रवणेन तद्बोधात्—समुदयार्थबोधो जायते। तेन चकार एव समुच्चयार्थस्य वाचकः नतु वृक्षशब्दः तेन अव्यञ्जकता निपातानाम्।

किञ्च—निपातानां द्योतकत्वे घटश्चेत्यादौ पदान्तराणां चकारभिन्न घटादि पदानां तत्र शक्तिः—लक्ष्यार्थकल्पना क्रियते चकारादौ द्योतकत्व शक्तिकल्पना। इति उभयशक्तिकल्पने गौरवमिति मीमांसाशास्त्रे समुच्च-यांधिकरणे चर्चितं वर्तते। तदपि—उक्त युक्तिरपि न तर्कसंगतम्। तत्कथमत आह तथाहीति।

अन्वयव्यतिरेकौ वाचकत्वे उपयोगिनौ किन्तु तात्पर्यप्रत्यायकत्वेनापि उपयोगिनौ भवितुमर्हतः। एवं घटश्चेत्यादौ घटादिपदानामेव—केवलं

परिस्थिति संज्ञानुसार द्योतक और वाचक होते हैं



पादानामेव समुच्चिते लक्षणा तात्पर्यग्राहकः प्रकरणादिवच्चादिरिति स्वीकाराच्च शक्तिद्वयकल्पनाऽपि। अस्माकं लक्षणाग्रहदशायां बोधास्तत्कार्यकारणभाव आवश्यकः, एवं शक्तिग्रहेऽपीति पक्षद्वयेऽपि कल्प्यान्तरामात्रेण गौरवाभावादुभयमपि युक्तमित्यभिमतम्। अत एव—

"स वाचको विशेषाणां संभवाद् द्योतकोऽपि च"

इति वाक्यपदीयं संगच्छते। दर्शनान्तररीत्या वाचकत्वमेव द्योतकत्वमेवेति नियमस्तु न युक्त इति ध्वनयन्नाह—मतमेवेति ॥ ६ ॥ (४७)
पर्यवसितमुपसंहरन्नाह—

निपातत्वं परेषां यत्तदस्माकमिति स्थितिः।
व्यापकत्वाच्छक्तताऽयास्त्ववच्छेदकमिष्यते ॥ ७ ॥ (४७)

---

घटादि पदस्यैवस्वसमुच्चिते लक्षणां कृत्वा प्रकरणात्=प्रसंङ्गात् निपाताः तात्पर्यं ग्राहयन्ति यादृशं तात्पर्यं तादृशं बोधयन्ति। यथा—सैन्धवमानयेत्यत्र प्रकरणं लवणस्य अश्वस्य वा अभिप्रायं ग्राहयति प्रकरणादिनातुल्यं प्रकरणदिवच्चादिरपि अभिप्रायबोधकः इत्यंगीकारात् घटादेः निपातानाञ्च पृथक् शक्तिद्वयकल्पनाऽपि न कर्तव्या भवति। अस्माकं वैयाकरणानां समुच्चये लक्षणायाः ज्ञानं क्रियते बोधोऽपि जायेत तथाच घटप्रतियोगिक समुच्चयरुपार्थबोधं प्रति च समभिव्याहृत घटपदजन्योपस्थितिः कारणम्। आवश्यकोऽयं कार्यकारणभावः। शक्तिग्रहस्यापि=घटपदनिष्ठशक्तिज्ञानं कारणम्। एवं समष्टिविषयकबोधं प्रति समष्टिविषयकशक्तिज्ञानं कारणम्। एवं शक्तिज्ञानस्य पक्षद्वयेऽपि द्यो० वा० पक्षे कल्प्यान्तराभावेन=द्योतकतापक्षे वाचकता पक्षेऽपि तत्तत्पक्षेएकतरपक्षपाति युक्त्यभावेन गौरवोपि नास्ति तस्मात् उभयमपि=पक्षद्वयमपि युक्तं तर्कसंगतम् इत्यभिप्रेत सिद्धान्त इत्यनुभवानुरोधेन तुल्यतां अत एव=पक्षद्वयेऽपि युक्तिसाम्यादेव सः=उपसर्गः विशेषाणां विशेषार्थानां यथा सम्भवात् वाचक=प्रतिपादकः द्योतकोऽपि वा सम्भवात्। वाक्यप० संगतार्थकः। अन्यदर्शनेषु स्थितं वाचकत्वमेव द्योतकत्वं तन्नोचितम्। मतमेव नः=अस्माकं मतेपरेषां यदेकस्यवाचकत्व मपरस्य द्योतकत्वं तदेव न युक्तम् ॥ ४७ ॥

इदानीं पर्यवसितं=सिद्धान्तितं फलितं वा उपसंहरन्=वक्तव्यं समापयन् ब्रूते=परेषां=न्यायमीमांसाऽन्यवैयाकारणाश्रित्यादिषु यन्निपातत्वं=निपातलक्षणं तत्=निपातलक्षणं अस्माकं=वैयाकरणानां स्थितिः=मर्यादा सम्मतलक्षणम् तच्च चादयोऽसत्वे इतिसूत्रात् लिंगसंख्यान्वयिसत्वम् अनन्वयि असत्वम्। अद्रव्यार्थश्चादयो निपाताः स्युः चादिगणपठिताः

या निपात नामवाला निपात है

परेषां यन्निपातत्वमसत्त्वार्थकत्वे सति चादिगणपठितत्वं, शक्तिसंबन्धेन निपातपदवत्त्वं वोपाधिर्जातिर्वा तदेवास्माकमपि; परंतु सामान्यधर्मे प्रमाणानां पक्षपाताच्छक्तता (भिन्नता) द्योतकता वा तदवच्छेदेनैव कल्प्येति नैयायिकोक्तं प्राविचाद्योर्वैषम्यमयुक्तमित्यर्थः। व्यापकत्वात्। सामान्यत्वात्। शक्ततायाः इत्युपलक्षणं द्योतकताया वेत्यपि द्रष्टव्यम्॥ ७॥ (४८)

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे
निपातानां द्योतकत्वादिनिर्णयः समाप्तः।

---

निपाताः सत्वेऽर्थे = द्रव्यार्थे न निपातसंज्ञकाः किन्तु असत्वार्थे एव न च असत्वशब्दस्य सत्वभिन्नसत्वसदृशार्थः सादृश्यमर्थवत्वेन गृह्यते। तेन सर्वथा अनर्थकेषु चादिषु निपातसंज्ञा न प्राप्नोति। तदाह शक्तिसम्बन्धेन निपातपदवत्वं निपातत्वम् तत्र इश्वरेच्छा नै० संकेतश्शक्तिः वै० बोधकताशक्ति तदवच्छेदकोऽखण्डो धर्म विशेषोवा शक्तिः। न च पदवत्वे शक्यतावच्छेदकं = पदमेव भविष्यति। तेषां (पदानाम्) मानन्त्यात् गौरवम् तदाह जतिर्वा निपातजात्याश्रयत्वं निपातत्वं स्वाजातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते ततोऽर्थजातिरूपेषु अध्यारोपात्मकत्मेतत्तलक्षणमपि ममेतऽस्ति। यदि हत्वादिना सांकर्य मत्वासांकर्यस्य जातिबाधकमुच्यते तदा उपाधिर्वा उपाधिमत्वं निपातत्वम् नित्यत्वेसति अनेकसम्बद्धत्वमुपाधित्वम् जातेर्नित्यत्वात् जातिबाधकसांकर्यमपि न। एतत्सर्वं अस्माकं मतेऽपि वर्तते परन्तु सामान्यधर्मे = व्यापकधर्मे प्रादित्वापेक्षया निपातनं व्यापकोधर्मः तत्र प्रमाणानां = अवच्छेदकधर्माणां पक्षपातात् = व्यापकधर्ममाश्रित्य द्योतकत्वं वाचकत्वस्वा इति विधेय साधकत्वात्। शक्ततायाः = वाचकतायाः अवच्छेदकं = विशेषणीभूतो धर्मः तदेव व्यापकत्वात् सर्वसाधारण्यात् इष्यते— गृह्यते। वस्तुतस्तु—सामान्यं ज्ञानं न बोधोपयोगि अयं कश्चित् इतिज्ञानं न व्यावहारिकम्। किन्तु इयं माता अयं पिता इति ज्ञानंबोधोपयोगि भवति। यथा रामशब्दे केवलं रमधातुमात्रेण रामप्रातिपदिकमात्रेण वा धञ प्रत्ययमात्रेण दशरथापत्यरूपार्थस्य बोधोनजायते। एवं निपातपदेऽपि च वाहतुहि इति ऐतेनिपाता इति समान्यज्ञानं न बोधोपयोगि किन्तु चत्वादिरूपेणैवशक्यते। अतः च वाहइत्यादिरूपेण जानतां निपातरूपेण अजानतामपि बोधोंजायते। क्वचिद्योतकत्वमपि वाचकत्वमपि क्वचित् पादपूरणमात्रफलकं नैरर्थक्यमपि। तदाह हरिः—

> निपाताः द्योतकाः केचित् पृथगर्थाभिधायिनः।
> आगमाः इव केऽपिस्युः सम्भूयार्थस्य वाचकाः॥

अत एव = क्रियां प्रोक्तवन्तः इति कर्मप्रवचनीयाः क्रियानिरूपित सम्बन्धद्योतकाः। इति प्रभाकरीटीकायां निपातार्थ निर्णय इति॥ ८॥

## ।। अथ त्वादिभाव प्रत्ययार्थं निर्णयः ।।

भाव प्रत्ययार्थमाह—

कृत्तद्धितसमासेभ्यो मतभेदनिबन्धनम् ।
त्वतलोरर्थकथनं टीकायां हरिणा कृतम् ॥ १ ॥ (४९)

तस्य भावस्त्वत-लौ

पूर्वं प्रकरणे निपातार्थो निर्णीतः । तेन अव्ययं स्मर्यते । एक सम्बधिज्ञाः नमपरसम्बन्धिनं स्मारयति । सामान्येन निपातार्थं निरूपयित्वा निपातार्थं विशेषेण निरुपणमकरोत् । प्रातिपदिके विशेषणतया विद्यमाना नर्थान् निर्णेतुं त्वादिभावप्रत्ययार्थं प्रकरणमारभते । तत्र एकवचनं स्वाभाविकं त्वान्तं नपुंस्त्वं तलन्तं स्त्रियां । स्मृति विषयत्वे सति उपेक्षानर्हत्वरूपां संगतिमाश्रित्य सामान्यरूपेण प्रातिपदिकार्थं ( नाम विशेषं ) निपातार्थंञ्च बोधयित्वा प्रातिपदिकार्थेति कृतद्धितप्रकरणेषु त्वादिभाव प्रत्ययानामर्थं निरूपणमावश्यकम् । पञ्चप्रातिपदिकार्थे विशेषणतया भासमानेषु जाति व्यक्ति लिङ्ग संख्या कारकेषु स्वार्थेषु स्वार्थस्य प्रवृत्तिनिमितकस्य जातेः प्रथमोपस्थितत्वात् प्रकृत्यर्थे प्रकारीत्वात् जात्यर्थकं सम्बन्धार्थकञ्च तद्धित भाव प्रत्ययार्थं इत्याख्यं बोधयितुमाह-भावेति ष्यञ् बुञ् घञ् इत्यादीनामपि ग्रहणम् ।

प्रकृत्यर्थस्य एक देशो भावः प्रकृतिः—प्रातिपदिकं तदर्थैक देशो विशेषणी भूतो जात्यादिः सम्बन्धादिश्च । यो धर्मः स भाव उच्यते तेषां तेषां शब्दानां प्रवृत्तौ यन्निमित्तं हेतुः स भावः । अत एव प्रकृतिजन्य बोधे प्रकारीभूतो भावः इति परमलघु ग्रन्थे उक्तम् । प्रकारे मुख्यविषयतया बोध्यस्य ग्राहकः । वा भवन्ति अर्थं बोधनाय प्रवर्तन्तेऽनेनेति भाव तच्छब्दविशेषणम् । तेनं विशिष्टोधर्मः साध्यः । एतेन शब्दैः य प्रकारः ( विशेषणं संसर्गः अभेद सम्बन्धः तयोः त्वादिभावसम्बन्धेन प्रत्ययेन ग्रहणं तदेवभाव प्रययार्थः । नामार्थेषु सा त्वादीनामर्थः तस्य निरूपणंबोधनमावश्यकम् । इत्यभिप्रायेणाह-भाव इति भावे विहित प्रत्ययस्य योऽर्थस्तस्य प्रकारतया ( विशेषण ) रूपेण संसर्गतया अभेदसम्बन्ध रूपेण भेदेन द्विविधोभाव प्रत्ययार्थः एतदेव बोधयितुमाह कृत्तद्धितोऽर्थः कृत् = ल्युत् आदि तद्धितत्व त्वलादि समासेभ्य मतभेदेन — शास्त्रकृतसिद्धान्तभेदेन निबन्धनं = निमित्तकं बोधकं ज्ञापकम्बा त्वतलोः भावे विहितप्रत्ययोरर्थकथनं = तात्पर्य बोधनं हरिणा = विश्वविदुषा भर्तृहरिणा टीकायां भाष्य टीकायां — स्वयं कृत महाभाष्य टीकायां = व्याख्यायां कृतं प्रतिपादितम् । हयुक्तं वचनं कृत्तद्धित समासेभ्यः ते भावार्थे प्रत्ययाः विधीयन्ते ।

"कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनान्यत्र रूढ्यभिन्नरूपाव्यभिचरितसंबन्धेभ्यः" इति वार्तिकवचनमिति मीमांसकादीनां भ्रममपाकुर्वन्नाह—टीकायामिति । भर्तृहरिणा महाभाष्यटीकायामित्यर्थः । त्वतलोरिति भावप्रत्ययमात्रोपलक्षणम् । अयमर्थः—समासादौ शक्तिः कल्प्यमाना राजादिसंबन्धविशिष्टे कल्प्यत इत्युक्तम् । तथाच तदुत्तरभावप्रत्ययः संबन्धं वदतीत्यार्थः ।

एतदपि भेदः संसर्ग उभयं वेत्युक्तेषु पक्षेषु भेदपक्षे न संभवतीत्यत आह मतभेदेति । पक्षभेदेनेत्यर्थः ।

---

तैः केवलं सम्बन्धस्य = संसर्गस्य अभिधान = व्यवहारो भवति अन्यत्र न भवति । अर्थात् यत्र रूढ़िः अवयवार्थो न घटते । अभिन्नरूपं यत्रभिन्न = पृथक रूपं विशेषणमर्थो वा न ज्ञायते अव्यभिचरित सम्बन्ध = यत्र सम्बन्ध व्यभिचारित्ता नास्ति । एतत् स्थलत्रयं विहाय सर्वत्र भाव प्रत्ययेन सम्बन्धस्यैव बोधो जायते । मीमांसकादयो व्रुवते । यत कृतद्धित इत्यारभ्य सम्बाधेभ्यइति पर्यन्तं वार्तिकवचनमिति तेषां भ्रमः । तमपाकुर्वन्नाह टीकायामिति भर्तृहरिवचनं न तु वार्तिककारवचनं महाभाष्य टीकायां भर्तृहरिणा उक्तं यद् वचनमाध्यमेन भावप्रत्ययमात्र बोधकयोः, त्यतलोरर्थं कथनं कृतम् व कृत्स्नं हरिवचनं व्याख्यातुमाह अयं वक्ष्यमाणोऽर्थः उच्चमान तात्पर्यार्थः । समासादौ शमासकृत्तद्धितेषु या शक्तिः सम्बन्धः कल्प्ययमाता शास्त्रकारैरुच्चामाना राजादिषुयः सम्बन्धः = शक्ति स्वस्वामिभाव इत्यादिकया विशिष्टसंम्पृक्ते, सम्बन्धे एकार्थीभाव पूर्वकपुरुषे कल्प्यते इत्युक्तं राजसम्बन्धवान पुरुषः इत्येव शाब्द बोधो जायते । तथाच तदुत्तरे = समासोत्तरे विहितो यो भाव प्रत्ययः = त्वतलादिः स सम्बन्धं = उत्तरपदार्थे पूर्वपदार्थशक्तिं वदति = बोधयति एतदपि = कृत्तद्धितीरत्वतलादीनां सम्बन्धवाचकत्वेऽपित्रिविधः, सम्बन्धः १. भेदः राजकीय भिन्नपुरुषात् भदेवान पुरुष इति सभासार्थः । २. संसर्गः = राजकीय सम्बन्ध वान तुरुष इति ३. उभयम्–अराजकीय राजसम्बन्धवान् इत्यर्थः । इत्युक्तेषु = समास कृत्तद्धितेभ्यः विहित प्रत्ययस्य त्रिविधार्थे भेदपक्षे भेदोऽभावस्वरूपः स च अन्योन्याभावरूषः । अराजकीय भेदवान् इत्यभावस्वरूपो भेदः । अत्र त्व प्रत्ययस्य भेदमात्रमर्थः । संसर्ग पक्षे त्व प्रत्ययस्य स्वस्वामिभाव सम्बन्धरूपोऽर्थः । उभय पक्षे अराजकीय भिन्नराज सम्बन्धवान् त्व प्रत्ययार्थः त्रिषु पक्षेषु भेदपक्षे सम्बन्धस्यैव बोधो जायते उत्तरभाव प्रत्ययेन विशेषणी भूतो भेदार्थो गृह्यते ।

एवं च राजपुरुषत्वमौपगवत्वं पक्तृत्वमित्यादौ स्वस्वामिभाव:, अपत्यापत्यवत्संबन्ध:, क्रियाकारकभावसंबन्ध इत्यन्वयबोध: । औपगवादावव्यभिचरितसंबन्धे *स्वार्थान्तरवृत्ति- स्तद्धित मुदाहार्य: । दामोदरत्वं कृष्णसर्पत्वमित्यादौ जातिविशेषबोधादाह—*अन्यत्रेति । रूढेरभिन्नरूपादव्यभिचरितसंबन्धेभ्यश्चान्यत्रेत्यर्थ: ।

---

एवञ्च त्वादीनां सम्बन्धार्थं स्वीकारे राजपुरुषत्वमित्यत्र राजपुरुषयो: य: स्वस्वामिभाव सम्बन्ध: प्रकृति जन्यबोधे प्रकारीभूतश्च स त्व प्रत्यायार्थ: । प्रकृती राज पुरुष:, तजयन्यबोध: राज सम्बन्धवान् पुरुष इति । तत्र विशेषणीभूतो धर्म: स्वस्वामिभाव सम्बन्धरूप: प्रकृतिप्रत्यययो: प्रत्यायार्थस्यैव प्राधान्यम् । एवमौपगवमित्यत्र उपगुर्गोत्रापत्यमौपगव:, उपगु महर्षि जन्य जन्यापत्यत्वं त्व प्रत्ययार्थ: : : न जन्य जनक भाव सम्बन्धो बुद्धयते । एवं पतृक्त्वमित्यत्र पच् धातो: कर्तरि तृच पाकानुकूलव्यापारवानर्थ: । तत्र त्व प्रत्ययस्य क्रियाकारकभावसम्बन्धोऽर्थ: य: पक्ता इति प्रकृतौ विशेषणीभूत: पक्तृ निष्ठ क्रियाकारक सम्बन्ध इति बोध: । औपगवादौ = पक्तृत्वन्मियादौ कृत्तद्धित इत्यादौ समास वृत्तिषु क्रमश: जन्य जनकश्च स्वामि क्रियाकारक भावादि सम्बन्धो अव्यभिचरित = न व्यभिचरति स्वाश्रयं कथमपि न त्यजति इति सम्बन्ध: । त्व प्रत्ययेन बुद्धयते एते समवायेनोपतिष्ठन्ते च व्यभिचरितसम्बन्धस्तु । इन्द्रं हविरित्यत्र इन्द्रो देवताऽस्येत्युच्यते तदा इन्द्रहविषो: सम्बन्ध: । स च स्वोद्देश्यकदान कर्मत्वरूप: तदा सम्बन्धउदेति । पूर्वं तु स न तिष्ठति । अयमेव व्यभिचरित सम्बन्ध: अर्थान्तरवृत्तिगम्य: । अन्यया वृत्तया बोद्धय: स्वोद्देश्यका: प्रत्ययेन वाच्य इति ।

त्वतलादि भावप्रत्ययानां सम्वन्धवाचकत्वं न सर्वत्र अतआह अन्यत्र—कृत्तद्धित समासभिन्नस्थले त्वतलादय: जातिगुणयोरपि वाचका: भवन्ति यथा—दामोदरत्वं = अत्र दाम ( रज्जू ) उदरे यस्य इति व्युत्पत्तिं र्नास्ति किन्तु नारायण परम स: त्व प्रत्ययेन जातेर्बोधोजायते । यद्यपि अनेक व्यक्त्यभिचरिता जातिर्भवति तथापि कल्पभेदेन अवस्थाभेदेन वा अवतारभेदेन वा नारायणस्य भेदमादाय अनेक व्यक्त्यभिव्यङ्ग्यत्वं ग्राह्यम् कृष्णसर्पत्वमित्यत्र कृष्णासर्पो जाति विशेषे वर्तते इत्यादौ त्वतलादिना जाति विशेष बोधदर्शनादाह अन्यत्रेति—यत्र रुढि: = यां उक्ता सा दामोदरत्वंकृष्णसर्पत्वपदेनोक्ता । तद्धितान्तरुढि शब्दा: खर, हस्ति,

ऐसा) कहने से मतुप् आया और उसका लोप हो गया।





रूढिरुक्ता । द्वितीयं यथा—शुक्लत्वम् । अत्र "तदस्यास्त्यस्मिन्" इति मतुपो "गुणवचनेभ्यो मतुपो लुगिष्टः" इतिलुप्तत्वात्तद्धितान्तत्वेऽपि घटः शुक्ल इत्यभेदप्रत्ययाद् गुणस्यैव प्रकारत्वेन भानं जायते । तृतीये—सतो भावः सत्तेति । अत्र जातावेव प्रत्यय इति दिक् ॥ १ ॥ ( ४९ )

दण्डीत्यादौ प्रकृत्यर्थविशिष्ट* द्रव्यमात्रवाचकता तद्धितस्येति वदन्तं मीमांसकंमन्यं प्रत्याह— मीमांसक मानते हैं कि दण्डी में इनि प्रकृत्यर्थ विशिष्ट है।

---

कुंजर, मनुष्य, पशु पक्षि आदिशब्दाः जतिप्रकारकाः । सप्त पर्ण—लोहित शाल्वादयः समासेगृह रजक ग्राहादयः, कृदन्ते एतेभ्यः जातौ त्वतलादयो भवन्ति नतु सम्बन्धे यत्र अभिन्नं रूपं यस्य सः अभिन्नरूपश्शब्दः तत्र त्वादि प्रत्ययः गुणगुणि वाचकः यथा–शुक्लत्वम् । अत्र त्वेन अभिन्नरूपस्य बोधः शुक्लाभिन्न इति अत्र शुक्लः पटः इत्यत्रापि मतुपिकृते लुकिचकृते लुप्तत्वात् तद्धितान्त सम्भवोऽपि गुणे=शुक्ले गुणिनि=घटे च अभिन्नरूसं समानानुपुर्वीं बुध्यते अत्र प्रकारीभूते शुक्लैगुणे एव त्वादि प्रत्ययः नतु गुणगुणिनोः समवाये । अभेद बोधात् गुणस्ये विशेषणतया ज्ञानं जायतें । यत्र शुक्लोगुणः तत्र जातावेव शक्तिः तृतीयम्=अव्यभिचरितसम्बन्धः–न व्यभिचरितः सतीपत्तिमिव कथमपि स्वाश्रयं न जहाति एतादृशः सम्बन्धः समवायात्मको यस्य जात्यादेः तद्विशिष्ट वाचकः त्वलादिः । यथा सतोभावः अत्र तल् प्रत्ययार्थो जातिः सद् वस्तु कथमपि सतां सम्बन्धं न व्यभिचरति नहि पदार्थ सत्तां परिहरति सत्तारूपां जातिमपेक्ष्यैव त्वादयः प्रवर्तन्ते अतः जातौ तलप्रत्ययः । दिगिति—महाभाष्ये–यस्य गुणस्य भावात् द्रव्येशब्दसन्निवेशस्तदभिधाने त्वतलौ । यस्य गुणस्य सन्निधाने द्रव्ये=विशेष्ये शब्द प्रयोगः विशेषणीभूत. गुणाभिधाने=वाच्ये त्वतलौ भवतः । अत्र गुण पदेन यावन्ति विशेषणानि ग्राह्याणि । पराश्रयो भेदको जात्यादिः सर्वोग्राह्यः । अर्थात् यं धर्ममपेक्ष्य शब्दानामर्थ बोधने तत्परता जायते । तदेव प्रकृत्तौ निमित्तं त्वादि प्रत्ययार्थः । शब्दस्य अर्थ बोधनेरुचिस्तु क्वचिज्जाति क्वचि द् गुणं सम्बन्धं, द्रव्यं भावभ्वा अपेक्ष्य जायते यथा—क्रमेण घटत्वं शुक्लत्वं राजपुरुषत्वं, दण्डवत्वं दण्ढ़सम्बन्धो या अभाववत्वम् ।

औपगवत्व पक्तृत्वभित्यादौ सम्बन्ध मात्रत्वप्रत्यार्थ दण्डित्वमित्यत्र द्रव्यमात्र प्रत्ययार्थः मीमांसकाः त्वादीनां सम्बन्धमात्रमर्थं वदन्ति तत् खण्डनार्थमाह विशेषार्थं ब्रूते । दण्डीत्यादो दण्डः अस्ति अस्य अस्मिन्वा इति बिग्रहे व्यक्तिरूपार्थें ( दण्डधारिणि ) देशरूपार्थे इनि प्रत्ययः । यस्य

**अत्रार्धजरतीयं स्याद्दर्शनान्तरगामिनाम् ।**
**सिद्धान्ते तु स्थितं पक्षद्वयं त्वादिषु तच्छृणु ॥ २ ॥ ( ५० )**

अत्र—भावप्रत्ययविषये । तथा हि—दामोदरत्वं घटत्वमित्यादौ भावप्रत्ययस्य संबन्धानभिधायकत्वेन मीमांसकानां दण्डित्वमित्यादिष्वपि *त्वाभिधानं न स्यात् । प्रकृतिजन्यबोधे प्रकारः प्रकृत्यर्थसमवेतो हि तदुत्तरभावप्रत्ययेनाभिधीयते । *अन्यथा घटत्वमित्यादौ दण्डादेश्च तदुत्तरभावप्रत्ययावाच्यतापत्तेः । *न च तन्मते दण्डीत्यादिबोधे संबन्धः[1] प्रकारः ।

---

दण्डवान् इत्यर्थः प्रकृतिः ( दण्डः ) तदर्थविशिष्टः—दण्ड रूपार्थविशिष्ट व्यक्तिःदण्डधारी इत्यर्थे तद्धितस्य इन प्रत्ययस्य द्रव्य ( व्यक्तिः, स्थान वा ) मात्र वाचकता दण्डव्यक्त्योः सम्बन्धस्तु आकङ्क्षाभाष्यः शाब्दबोधे च एकपदार्थेऽपरपदार्थस्य सम्बन्धः संसर्गमर्यादया भासते । यतः दण्डादिरूप प्रकृत्यर्थं विशिष्टः यः कश्चन पुरुषः देशो वा स मतुबर्थः न तु दण्डव्यक्त्योः सम्बन्धार्थसम्बन्धस्य तु विशेष्य विशेषणभावानन्तरमार्थं प्रतीतिः न शाब्दः । एवं पाचक इत्यादौ क्रिया विशिष्टः कर्त्ता इत्येव बोधः कृत्प्रत्ययार्थः सम्बन्धस्तु पश्चात्भासते अतः पाकन्तु पचिरेवाह कर्ता प्रत्ययोप्यकः । पाकयुक्तः पुनः कर्त्ता वाच्यो नैकस्य कस्यचित् द्रव्यमात्र वाचकता तद्धितस्थ राज पुरुष इत्यादौ तु सम्बन्ध मात्रं, मात्रपदेन सम्बन्धस्य निराशः । तद्धितार्थः दण्डित्वभित्यत्र द्रव्यमात्रं तद्धितार्थ इति मी० नां वैषम्यं पर्यालोच्य आह अत्रार्धजरतीति—अर्धवृद्धा तुल्यन्यायोऽर्धजरती यथा कमिनो जरत्याः—अर्धवृद्धायाः अर्धाङ्गभर्धभागं विषयवासनया कामयन्ते अर्धमूर्ध्वभार्ग मुखस्तनादिकं शैथिल्यात् अतएवासौन्दर्यं साहित्यान्न कामयन्ते । अर्धभागः कामना विषयः अर्धस्त्वविषय इति अनुचितम् । अथवा जरत्याः—कुक्कुट्याः अर्धं पाकाय अर्धं प्रसवाय इति ध्यानमनुचितम् किन्तु जरत्या एव पाकाय युवत्याः प्रसवाय इत्युचितम् । यथा एकस्य द्विविधकार्यं विधानमनुचित्तम् एवं दर्शनान्तरगामिनां—मीमांसादीकानां एकस्य भाव प्रत्ययस्थ क्वचित् सम्बन्धोऽर्थः क्वचिद् द्रव्यं जतिवां इति वैषम्यंमर्धजरतीयस्वरूपम् तुल्ययोः भाव प्रत्यायोः भिन्नार्थत्व कथनं न युक्तम् । इत्याशयः । सिद्धान्ते—वैयाकरमते पक्षद्वयं त्वादिं विषये स्थितं वर्तते तच्छृण-वक्षे ।

कारिकायाः विशेष व्याख्यानम्—अत्र—भावप्रत्ययत्वतलादिविषये तथाहि—एष निर्णयः, यत् दामोदरत्वं घटत्वमित्यादौ भावप्रत्यस्य—त्वतलादीनां जातिमात्रमेवार्थ नतु सम्बन्धार्थः । परन्तु तलदीनां भाव

प्रत्ययानां सम्बन्धरूपार्थस्य अथाभिधायकत्वेन—सर्वत्र अवाचकत्वेन दर्शनान्तर गामिनां मीमांसकाना दण्डित्वमित्यत्रापि तदभिधानं—सम्बन्धाभिधानात्। किन्तु दण्डस्यैवाभिधानम् अधजरतीयन्यायविरोधात्। सम्बस्तु प्रकृति जन्य बोधे न प्रकारः। न च त्वादि भाव प्रत्ययेन धर्म विशेषो गृह्यते। प्रकृत्यर्थवृत्तित्वं भावत्वम्। दण्डिनमित्यादौ दण्ड इव संयोगादि सम्बन्धोऽपि अभिधानविषयः कथन्न तस्य ग्रहणम् तदाह—प्रकृतिजन्यबोध—इति—प्रकृतिः—प्रातिपादिकं तस्य अभिव्यक्तवोधे विशेषणीभूतो यःप्रकृत्यर्थः तस्मिन् समवाय सम्बन्धेन स्थितो यो पदार्थः स एव उत्तर भाव प्रत्येन त्वादिना बोध्यते। यथा घटत्वमित्यत्र जतिः त्वार्थः सा प्रकारीभूतजन्यबोधे समवाय सम्बन्धेन घटे वर्तते। भाव प्रत्ययेन उच्यते। भी० मतेतु दण्डित्वमित्यत्र बोधे संयोगम्बन्धः प्रकारतया नोच्यते तेन तदभिधानं न स्यात। अन्यथा– एक पक्षमात्रोपादानेतु यदि समवाय सम्बन्धेन विशेषणीभूतार्थः एव त्वादि प्रत्ययार्थो मन्यसेतर्हि घटत्वमित्यत्र द्रव्यत्वमपि समवायेन वर्तमान बोधविषयः स्यात् तदपि त्वार्थः स्यात् एव त्वन्मते दण्डित्वमित्यत्र सम्बन्धोऽपदार्थ किन्तु दण्ड एव संयोग सम्बन्धेन प्रकारः इति नियमेन प्रकारस्य ग्रहणंक्रियते द्रव्यत्वमपि घटे प्रकारः सोऽपि प्रत्ययार्थः स्यात् प्रकृत्यर्थे द्रव्यत्वमपि समवेतोस्ति वस्तुतः घटत्वं त्वप्रत्यार्थः द्रव्यन्तु उपलक्षणतया बुद्धं भवति। यदि प्रकृत्यर्थे समवेत नियमो नस्यात्तर्हि दण्डादेश्च—दण्डित्वभित्यत्र दण्डमपि तदुत्तरदण्डपदोत्तरत्वभावप्रत्ययस्य वाच्यता = अर्थः स्यात्। इत्येवापत्तिः। संयोगसवन्धस्य प्रतीतिः न स्यात्। शाब्दिकनयेतु यदाप्रकृत्यर्थे समबेत इति पदं दीयते तदा प्रकृत्यर्थे–मुख्य विशेष्ये मतुबर्थः (त्वार्थ इति स्यात् सः संयोग सम्बन्धेन प्रकारीभूतः न तु समवाय सम्बन्धेन। दण्डिशब्दस्य दण्ड संयोगवान् अर्थः तंत्र प्रकारीभूतः दण्ड संयोग इति स एव त्वार्थ त्वस्य प्रकृतिः दण्ड संयोगः सः समवाय सम्बन्धेन इन प्रत्ययार्थं व्यक्तो तिष्ठति। यद्यपि दण्डोऽपि प्रकारः तथापि प्रकृत्यर्थे पुरुषादौ समवायसम्बन्धेन न वर्तते अतो न प्रत्ययार्थः। न नहि—तन्मते—भींमसन्यमते दण्डी इत्यादौ सम्बन्धे न विशेषणं किन्तु आकाङ्क्षा भाष्यम्। तेन तस्य वाच्यता न स्यात्॥

ननु प्रकृति जन्यवोधे—यः प्रकारः स विशेषणविशेष्ययोर्मध्ये समवाय सम्बधेन न तिष्ठति स्वस्मिन्नापि समवायेन न तिष्ठति। तत्र स्व–समवेत प्रकृत्यर्थ समवेत सम्बन्धेन संयोगादि सम्बन्धोऽपि भावत्वादि प्रत्ययार्थे वर्तते न कश्चन दोषः अर्थात् दण्डीत्यत्र विद्यमानं संयोग एव समवाय

संयोग और



जहाँ पर समवाय सम्बन्ध से आश्रित नहीं है वहाँ संयोग सम्बन्ध होता है।

यत्तु—

*यदा स्वसमवेतोऽत्र वाच्यो नास्ति गुणोऽपरः।
तदा गत्यन्तराभावात्सम्बन्धी वाच्य आश्रितः॥

इति। तन्न इनादेः संबन्धवाचकत्वेनोपपत्तौगत्यभावात्। ०प्रपञ्चितं चैतदादावेव वाकरणभूषणे। ननु तवापीदं[1] वैषम्यं*[2] कथमित्यत आह-*सिद्धान्ते त्विति॥ २॥ (५०)

---

सम्बन्धेनतिष्ठति एतत् प्रमाणयितुमाहयत्त्विति यदा—यस्मिन् काले स्वसमवेतः—स्वं—प्रकृति तत्र समवेतः—समवाय सम्बन्धे स्थितोऽपरो— अन्यः सम्बन्धाद्भिन्नो गुणो यत्र – दण्डोत्वामित्त्यत्र वाच्यः—वक्तव्यो नास्ति तदा गत्यन्तराभावात्–उपायान्तराभावात् नीलत्वमिव नीलादिगुणवन्नसम्वभति तदा त्वप्रत्ययस्य सम्बन्ध एव प्रकारतवच्छेदकीभूयः सम्बन्धोवाच्य इत्याश्रितः स्थैर्यम्। दण्डादेः प्रकृत्यर्थांशे विशेषणत्वेऽपि तत्र समवेतत्वं नास्ति। तन्न, कर्तरि अर्थे विधीयमानस्य इन्यादेः–इनप्रत्ययादीनां सम्बन्धी (व्यक्ति) इति वाच्योऽर्थः। तदस्यास्त्यस्मिन् सूत्रेमतुपः सम्बन्धेऽर्थे विधानेऽपि दण्डी पुरुषइत्यादौ अभेदेन समन्वयार्थं सम्बन्धिवाचकत्वभावश्यकम्। एवं सम्बन्धिचाचकत्वेन· इन्यादीनामुपपत्तौ—सम्बन्धवाचकत्वसिद्धौ। तत्र अवच्छेकः- –सम्बन्धः इति विधया गतेः—उपायस्य अभावः—असत्ता तस्य अभावात्—शून्यात्। सम्बन्ध एव त्वप्रत्ययार्थ इति वक्तुं न शक्यते किन्तु सम्बन्धीत्येवार्थः।

न च सम्बन्धस्य मानंन्तु इन् प्रत्ययार्थस्य एकदेशस्य सम्बन्धेन जायते। अतः इन प्रत्ययेनैव सम्बन्धार्थस्य प्रतीतिर्भविष्यति। तेन गत्यन्तरस्य अभावो नास्ति अतः केवलं विशेषणीभूत दण्डएव भावप्रत्ययार्थः। यत्र दण्डसंयोगी प्रकृत्यर्थे समवेतः ·तस्य प्रकृत्यैवलाभात् अनन्य लभ्योहि-शव्दार्थः। अतः दण्ड एव विशेषणीभूतत्वात् प्रत्ययार्थ न तु संयोगः इति वैषम्यम्। एतत्—तद्धितानां सम्बन्धिवाचकत्वम् आदौ—वैश्वदेवीत्यादि प्रसंगग्रन्थे वैयाकरणभूषणे प्रपञ्चितम्—विस्तृतम्। शं० मी० भी० मते विद्यमानं यद्वैषम्यम् तत् तवापि—वैयाकरणस्यापि मते इदं वैषम्यं– –क्वचिज्जातिवाचकत्वं क्वचित् सम्बन्धवाचकत्वरूपवैषम्यम्। अतः भोः शब्दिकाः युष्माभिरपि· इनः सम्बन्धी इत्यर्थोमन्यते तेनैव सम्बन्धार्थस्यापि लाभोभविष्यति। कथं सः त्वार्थ इति। इत्याक्षेपशमनार्थं समाधानं कारिकायामाह उत्तरार्धसिद्धान्ते तु स्थितं पक्षद्वयंजायते त्वादिषु तच्छृणु। ५२ कारिकायां जायन्ते इति पठितम् वक्ष्य माणविशेषणे सदुक्तम्। तदाह

तौ पक्षावाह—

प्रयोगोपाधिमाश्रित्य प्रकृत्यर्थप्रकारताम् ।
धर्म[३]-मात्रं वाच्यमिति यद्वा शब्दपरा अमी ॥ ३ ॥ (५१)
जायन्ते तज्जन्यबोधप्रकारे भावसंज्ञिते ।

प्रयोग उपाधिर्निमित्तं प्रकृत्यर्थप्रकारतां प्रकारतया भासमानं ध वाच्यतयाऽऽश्रित्य त्वादयो जायन्ते । प्रकृतिजन्यबोधेप्रकारस्त्वाद्यर्थं इति यावत् ।

सिद्धान्ते-वैयाकारणसिद्धान्ते प्रकृतिजन्यबोधे-भावप्रत्ययो यस्मात् विधीयतेऽत्र सा प्रकृतिः (दण्डी) तज्जन्यार्थे प्रकारे--विशेषणे धर्मेत्वद्-लादयो जायन्ते प्रकृतिनिष्ठशक्तिज्ञाने यः प्रकारः—विशेषणम् तत्र--धर्मे पक्षद्वयं—तात्पर्यंद्वयं—धर्ममात्रं शब्दप्रकारश्च स्थितम् । अतः विशेषणं सम्बन्धरूपः जातिरूपोभवतु इति नाग्रहः तौ—द्वौ पक्षौ ब्रूते ॥ ५० ॥

न प्रयोगोपाधिरिति प्रयोगाणां—तच्छब्दानां मर्थबोधनाय यत् उच्चारणे यः उपाधिः--निमित्तं बोधेकारणं प्रकृत्यर्थे--प्रकारतां प्रकारतयाभासमानं धर्मविशेषणमाश्रित्य—अनुसन्धाय त्वादि प्रत्ययोः जायन्ते । अर्थगतं धर्मं दृष्ट्वात्वादि प्रयोगः यथा—घटशब्दः जातिमादाय अर्थबोधनाय प्रवर्तते तत्रघटत्वजातिः । रूपत्वमित्यत्रापि गुणमात्रवृत्तिभ्योत्वादि प्रत्यययेनाजतिरर्थः । अणुमहद्दीर्घह्रस्वादिभ्यो परमाणुरूपेगुणे एव पाचकः इत्यादौ क्रियायां एतेन प्रकृतिजन्यज्ञाने यः प्रकारः सत्वाद्यर्थौ त्वतलादि प्रत्ययार्थः । अथवा शब्दपदेनापि = एतेशब्दा (केचनवा) शब्दप्रवृति निमित्तका भवन्ति शब्दोऽपिधर्मं । यथा यदृच्छाशब्दाः डित्थशब्दे शब्दएव प्रवृत्तिनिमितंधर्मः, विशेषणं तदेववाच्योऽर्थः सैवविशेष्यः विशेषणम्बा अमी—त्वादयः शब्दधर्मका भवन्ति । तज्जन्यबोधे—प्रकृति उद्बुद्धज्ञाने यः प्रकारः तस्मिन्भावः संज्ञासंजाताऽस्येति भावसंज्ञितोऽर्थः तत्र जायन्ते उत्पद्यन्ते ।

जातिपक्षमाश्रित्य शङ्कते ननुजातिपक्षे घटशब्दस्य घटत्वं वाच्योऽर्थ-घटत्वस्य भावः = प्रकारीभूतोऽर्थः घटत्वत्वम् तदेव तत्रप्रकारः तदुत्तर-घटत्वोत्तरभाव प्रत्ययस्य वाच्यः । इति सम्भावनाचेत् इष्टापत्तेः = अभीष्ट सिद्धिरेव । अत आह धर्ममात्रं ग्राह्यम् अतएव व्यक्तिपक्षे सर्वेधर्माः गुणक्रिया जात्यादयोगृह्यन्ते । जातिपक्षे त्वत्वं (जातित्वमपि) गृह्यते ।

न च जातिपक्षे घटत्वं शक्यम् घटत्वत्वं शक्यतावच्छेदकं तच्च गुरुभूतो धर्मः । अतः व्यक्तिपक्षे लघुभूतो धर्मः अस्यां स्थितौ शक्यतावच्छेदकं

ननु घटत्वमित्यत्र प्रकारत्वात्तदुत्तरत्वप्रत्यये घटत्वत्वस्यापि वाच्यता स्यादित्यत्रेष्टापत्तिमाह—धर्ममात्रमिति। न त्वत्र लघुगुरुविचार इत्यभिप्रायः। *तत्तद्व्य[४]क्तिविशिष्टब्रह्मसत्ताया एव घटत्वघटत्वत्वाविकल्पत्वात्।

संबन्धिभेदात्सत्तैव भिद्यमाना गवादिषु। कितने भी त्व लगाइये सत्ता एक ही निकलेगी।

औत्व जातिरित्युच्यते, तस्यां सर्वे शब्दा व्यवस्थिताः* ॥

तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते।

सा नित्या सा महानात्मा तामाहुस्त्वतलादयः॥ वाक्यपदीय

भावप्रत्ययस्य संबन्धानभिधायकत्वेन मीमांसकानां दण्डित्वमित्यादिष्वपि *तदभिधानं न स्यात्। प्रकृतिजन्यबोधे प्रकारः प्रकृत्यर्थसमवेतो हि तदुत्तरभावप्रत्ययेनाभिधीयते। *अन्यथा घटत्वमित्यादौ दण्डादेश्च तदुत्तरभावप्रत्ययवाच्यतापत्तेः। *न च तन्मते दण्डीत्यादिबोधे संबन्धः[१] प्रकारः। यत्तु—

*यदा स्वसमवेतोऽर्थं वाच्यो नास्ति गुणोऽपरः।

तदा गत्यन्तराभावात्सम्बन्धो वाच्य आश्रितः॥

इति। तन्न-इनादेः संबन्धावाचकत्वेनोपपत्तावगत्यभावात्। *प्रपञ्चितं इति वाक्यपदीयात्। उक्तं च 'तस्य भावस्त्वतलौ" इति सूत्रे वार्तिककारैः—

---

घटत्वं लघुभूतोधर्मः। अतः लाधवात् व्यक्तिपक्षः श्रेयान् तदाह नत्वत्र— घटत्वे त्वत्वे वा अयं लघुभूतोधर्मः। अयं गुरुभूतोधर्मः। इति विचारो न कर्तव्यः यतः घटत्वत्वत्वे वा व्यक्तिरेवप्रकारः उभयत्र व्यक्तिविशिष्टत्वं वर्तते। अतः तत्तद्व्यक्तिविशिष्टासत्ता एव (जातिः) एव ब्रह्मसत्ता सा घटत्वरूप घटत्वत्वरुपा च। एवम् अखण्डा निरूपाधिका निर्विशेष्यिका सा तस्याःलघुगुरुधर्मविचारी निराधारः। अथवा धर्म आविद्यकः अविद्याब्रह्मासत्ता वा जातिरिति स्वीकारात् अखण्डमेव भावप्रत्ययार्थः।

व्यक्तिविशिष्टब्रह्मसत्तायाः जातित्वे भावप्रत्ययस्य वाक्यपदीयं प्रमाणं प्रस्तौति सम्बन्धीति जात्यादीनां सम्बन्धोऽस्त्यस्य इति सम्बन्धी= व्यक्तिस्तस्य भेदात्—अनुयोगिनां पृथगुपस्थितत्वात् गवादिषु—गो महीषी आकाश मानव देवदानव, घटपटादिषु भिद्यमाना—गो भिन्नेषु अविद्यमाना सति सकलगोषुसमवेता पार्थक्येन प्रतीयमाना सकल पदार्थेषु विशेषणीभूता सत्तैव—गवादिषु विद्यमाना ब्रह्मसत्तैव जातिरित्युच्यते। तस्यां ब्रह्मसत्तायां सर्वशब्दाः उच्चारणगुणविशिष्टा वाचकत्वे व्यवस्थिता— तां जातिं निमित्तीकृत्यस्वार्थबोधनप्रवृत्ता नियता च। तदेव उच्यते तां— तत्तद् व्यक्तिषु विद्यमानां ब्रह्मरुपां सत्तां प्रातिपदिकार्थं प्रचक्षते—प्रातिपदि

"यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ" इति। यस्य गुणस्य विशेषणतया भासमानस्य भावादाश्रयत्वात् द्रव्ये विशेष्ये शब्दनिवेशः शब्दप्रवृत्तिस्तस्मिन्वाच्ये त्वतलावित्यर्थः। तत्र च रूपादिशब्देभ्यो जातौ, शक्लाणु-दीर्घमहदादिभ्यो गुणे, पाचकादिशब्देभ्यः क्रियायाम्, घटादिशब्देभ्यो जातौ प्रत्ययः, रूपादिशब्दानां जातिप्रकारकबोधजनकत्वात्। पाचकादिशब्दानां क्रियाप्रकारकबोध-

---

कार्थरूप शब्दार्थोभूत्वां प्रातिपदिकार्थं (नामार्थं) इत्युच्यते। सा धातुरूपां-सत्तामितिज्ञात्वा फलस्य व्यापाररूपः धात्वर्थइत्युच्यते। जातिमन्ये क्रिया-माहुरनेक व्यक्तिवर्तिनीम्।

सा नित्या--प्रागभावाभाववती, कूटस्था अविचाली, निरूपाधिका, महान् आत्मा—प्रपञ्चस्य जगतः अधिष्ठात्री तां--तत्तक्तिद्रव्येषु विद्यमानां जातिरूपां ब्रह्मसत्तां त्वतलादयः आहुः--प्रोक्तवन्तः। अनेन वाक्यपदीय प्रमाणेन सुस्पष्टः यत् धर्ममात्रं शक्यतावच्छेदकं तत् सत्तास्वरूप-मस्ति। क्वचिज्जात्यादि क्वचित्सम्बन्धरूपा तस्यभावस्त्वतलाविति सूत्रो परिवार्तिककारैरुच्यते यस्येति=यस्य गुणस्य—गौणस्य, (अप्रधानस्य) विशेषणतया भासमानस्य--ज्ञायमानस्य अत्र गुणशब्द उपकारपर गणशब्देन यावान् कश्चित् पराश्रितोभेदको जात्यादिः सर्वमिह गृह्यते।

तेषां भावात्—सत्तायाः सत्वात् द्रव्ये--दृष्टे शब्दानां प्रवृत्ति तस्मिन् वाच्येत्वतलौ--यस्याः विशेषणतया भासमानसत्तायाः कारणम् द्रव्ये--कम्बुग्रीवदिमद् व्यक्तौ घटशब्दबोधनाय प्रवृत्तिर्जायते तस्मिन्नेव घटशब्द-रूप विशेषणीभूतार्थे त्वादययोजायन्ते। यथा रूपादि शब्देभ्यः रूपत्वजातौ त्वादयोभवन्ति आदिपदेन रसगन्धस्पर्शादीनामपिग्रहणम्। तेषामुच्चारणेन रुपादिशब्देभ्यःजातिः प्रकारतया बुध्यते सा त्वार्थः। एवं शुक्ल अणु--महत् दीर्घादयोगुणाः तेभ्यो गुणत्वाच्यत्वे त्वादयः। पाचकादिशब्दाः क्रियाप्र-कारकबोधजनकाः भवन्ति तेषु क्रियार्थे भाव प्रत्ययः। घटादिशब्दाःजाति-प्रकारकाः तेषु जातिरेवत्वार्थः। एवं रूपादिशब्दाः जातिप्रकारकबोधजनकाः भवन्ति। पाचकादिशब्दाः क्रियाविशेषणकाः भवन्ति। तस्यां—क्रियायां भाव प्रत्ययः।

संसर्गप्रकारकबोधजनकत्वं—संसर्गं—क्रियाकारक, जन्यजनकादि प्रकारः विशेषणं यस्यासौ संसर्गप्रकारकः तस्य बोधः तस्य जनकत्वम्—अभेद सम्बन्ध एव प्रकारतया ज्ञानजनक इति मते संसर्गं—सम्बन्ध एव त्वप्रत्यार्थः यथा पाचक इत्यादौ क्रियाकारकभावसम्बन्धवान् इत्यर्थः तत्पाचकत्वमित्यत्र त्वेन स्व प्रकृत्यर्थसम्बन्धउच्यते। इति व्यवस्थासूप-पादः—भावप्रत्ययः जातावेव इति नियमो नास्ति। तत्र—जातिवाचक भावप्रत्ययमध्ये जातिवाचकानां—जातिविशेषणकानां शब्दानां व्यक्तय एव

जनकत्वे तस्यां प्रत्ययः, संसर्गप्रकारकबोधजनकत्वमिति मते च संसर्ग इति व्यवस्था सूपपादेति[1] भावः । ॐ तत्र जातिवाचकानां ॐ व्यक्तय एव शक्यतावच्छेदिकाः । तथा च घटत्वमित्यत्र घटवृत्तिरसाधारणो धर्मः इति बोध इत्यादि द्रष्टव्यम् ।

पक्षान्तरमाह—यद्वेति । "यद्वा सर्वे भावाः स्वेनार्थेन भवन्ति स तेषां भावः" इति वार्तिकोक्तो यद्वाशब्दस्तत्सूचनप्रयोजनकोऽपिॐ । भवन्ति वाचकत्वेन प्रवर्तन्त इति भावाः शब्दाः स्वेन स्वरूपेणार्थेन भवन्ति प्रवर्तन्तेऽतः स तेषां भावः प्रवृत्तिनिमितत्तमित्यर्थः : अयं भावः—अर्थवच्छब्दोऽपि द्रव्ये प्रकारः हरिहर-नलेक्ष्वाकुयुधिष्ठिरवशिष्ठादिशब्देभ्यस्तत्तद्वाच्यः कश्चिदासी[2]दिति शब्दप्रकारकबोधस्य सर्वसिद्धत्वात् । ॐअन्यथा वौनौषधिवर्गादिर्नागरिकान्प्रत्यबोधकात्वापत्तेश्च ।

---

घटत्वघटत्वत्वे वाव्यक्तयएवं शक्यत्तावच्छेदिकाः-अभिधाशक्ति द्वारा व्यावर्तिकाः भवन्ति । यथा घटव्यक्तिविशिष्टोघटत्वात्पकोवाच्यः र्तह् वाच्यतया धर्मव्यावर्तिका व्यक्तिर्भविष्यति । सा एव प्रकारीभूता एतादृशस्थले घटत्व शब्दस्य घटव्यक्तिरेवार्थः । जातिपक्षेतु घटत्वविशिष्टे घटेशक्तिः ततो घटेविद्यमानोयोऽसाधारणो धर्मः ( जातिः ) सा त्वादिबोध्या ।

पक्षान्तर = तत्तच्छाव्द एव भावप्रत्ययस्य वाच्य इति मतान्तरमाह—यद्वति—शव्दपरा अर्था = त्वादयः प्रकारीभूतशव्दस्य वाचकाः सन्ति । सर्वेभावा,--भवन्ति अर्थ वाचकत्वेन प्रवर्तते इति भावाः शव्दा स्वेन = आत्मीयेन अर्थेन भवन्ति = प्रदुर्भवन्ति घटत्वादयः घटेन सहैवोत्पद्यन्ते सोऽर्थः तेषां भावः प्रकारीभूतः प्रवृत्तिनिमित्तः । इति उक्त र्वतिककारस्य र्वतिकोक्तेः तस्यभावस्त्वतलाविति सूत्रोपरि वतिर्ककारोक्तेः वार्तिके स्वेनार्थेन भावन्तीत्यत्र स्वशब्दः आत्मीयवाची अतः आत्मदि र्न जात्यादि रर्थ प्रकाशयितुं प्रवर्तन्ते शव्दाः इति सूचना प्रयोजनं यस्य पक्षस्य सः सूचना प्रयोजनक यद्वाशव्दः । कारिकायां यद्वाशव्दः पक्षान्तर द्योतकः वर्तिक स्वाद्यपश्च यद्वा सर्वेभावाः स्वेन भावेन भवन्ति स तेषां भावः । ततभिधाने स्त्वतलौ । त्रिभिः = भावग्रहणैः क्रियते । एकेन शव्द प्रतिनिर्दिश्यते द्वाम्यामर्थः । यद्वा सर्वेशव्दाः स्वेनार्थेन भवन्ति स तेषामर्थः । तदभिधान त्वतलौ भवत इति वक्तव्यम् त्वाः प्रवर्तकाः शव्दाः । अर्थवोधनाय शव्दा प्रयुज्यन्ते तत्र शव्द प्रयोगेऽर्थस्य कारणत्वम् ।

अर्थो द्विविधः = वाच्यः प्रवृत्तिनिमित्तंश्च तत्र वाच्या द्रव्य,शव्दोवा अन्यत् घटेषु जातिः पाचक दिषु क्रिया क्वचित्सम्बध डित्थादिषु संज्ञा इति यथायोग्यं वोध्यम् । धातूनामनेकार्थत्वात् अतः भूधातुः प्रकृत्यर्थकः । आः आवशव्द प्रवृत्तिप्रयोजक शव्द पर्यायः आः सर्वभावाः = शव्दाः प्रवृत्ति निमित्तकाः भवन्ति प्रवृत्तौ = शाव्दबोधे निमित्तं = कारणीभूताः=

*एवमेवाप्रसिद्धार्थकपदेष्वनुभवः *सर्वसिद्धः, न तु घटादिपदेष्विव *तत्तज्जात्यादिरूपेण। तथा चो*भयमवच्छेदकम्*। यस्य*तथाशक्तिग्रहस्तस्य जात्यादिरूपेणैवोपस्थितिः। पदप्रकारकः शक्तिग्रहस्तु *विशिष्य नापेक्षितः किंतु इदं पदं क्वचिच्छक्तं साधुपदत्वादित्यादिरूप एवापेक्ष्यत इति गृहीतशक्तिकेभ्यः * तथैव[१] बोधः। तथा च शब्दोऽपि त्वप्रत्ययार्थं इति प्रपञ्चितं भूषणे ॥ ३१ ॥ ( ५१३ )

इति रङ्गोजिद्भट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे भाव प्रत्ययार्थनिर्णयः।

---

जाति–गुण क्रिया सम्बन्ध शब्द द्रव्यादयः प्रयोजकाः भवन्ति तेषु शब्दोऽपि प्रकारः सोऽपि त्वप्रत्ययार्थः अत आह अर्थ वच्छब्दोऽपि = यत्र शब्दस्य शब्द एवार्थः यत्र = डित्थादिषु ) तत्र शब्दोऽपि द्रव्ये = अर्थे विशेषणम् जात्यादिव शब्दोऽपि विशेषणम् शक्यतावच्छेदकश्च। यथा हरि हर नल इत्यादि शब्देभ्योवाच्योऽर्थाः आसन् इति तत्र शब्द शिषणक बोधोजायते। सर्वसिद्धत्वात् = सर्वत्र अप्रसिद्धार्थकपदेषु शब्द विशेषणकोऽनुमवः सर्वसिद्धः। अन्यथा—अर्थांशे शब्दप्रकारक वोधस्य अस्वीकारे वनौषधिवर्गादपिः = शब्दमात्रस्य प्रतितिः नागरिकान् = नगरेभवाः नागरिका तान् प्रति अवोधकत्वापत्तेः = अर्थस्य प्रतीत्यमावात् बोधोजायते। तत्र शब्दएव शब्दार्थः। प्रवृत्तौ निमित्तम् विशेषणमित्यर्थः। जांङ्गलिकेषु एवं न वक्तुं शक्यते तेष सन्निकर्षेण अमुक जाति धर्मका औषधय इति जानन्ति। यथा घटादिपदेषु जाति-गुण क्रिया सम्बन्धी प्रकारकवोधो जायते। तथा अप्रासिद्धार्थकेषु शब्देषु ज्ञात्यादि विशोषणक वोधो नजायते। अतः शब्दश्च अर्थश्च उभौ व्यवस्थामेदेन अवच्छेदकौ भवतः।

यस्य पुरुषस्य शब्दे शक्ति ग्रहः तस्य जाति गुणादि विशेषणतोपस्थितिर्जायते यस्येतु न तथा तत्र शब्दस्य द्वेघाभानंमपि भवति तत्तदैव सम्भवति यदा शब्दोऽपि प्रकारः स्यात् अतःसोऽपि भाव प्रत्यार्थ। यथा शक्ति ग्रह = जात्यादि विशेषणक वोधः तस्य जात्यादि ऊषेजेवो षास्थिपदम् अप्रकारः = न विशेषणं यस्या सः पदाप्रकारकः एवं भूतशक्ति स च = सम्बन्ध ज्ञानं वशेष्या = शब्द विशेषणक शाब्दबोधो नापेक्षितः— अनावश्यकः परन्तु इदं पदं क्वचित् = अज्ञातार्थेऽप्रसिद्धार्थे वा शक्तम् साधु पदत्वात् = शक्तत्वं साधुत्वं पक्षे यतः साधुरयं शब्दोऽतश्शक्तः इति। तात्पर्यमंवेक्ष्य॥ विष्टि = विशेष्यविशेषण भावं कृत्वा न गृहीत = ज्ञाता शक्तिः = सम्वन्धी येषान्तेः विशिष्टगृहीतशक्ति काःतेस्यः–तथैव = उक्तप्रकारेण ज्ञानं तथा च = पूर्वोक्त व्याख्यानेन शब्दोऽपित्वप्रत्ययार्थः।

॥ इति प्राभाकरी टीकायां त्वादिभाव प्रत्यार्थः ॥

## अथाभेदैकत्व संख्यानिर्णयः

**वृत्तिप्रसङ्गात्तत्राभेदैकत्वसंख्या प्रतीयत इति सिद्धान्तं दृष्टान्तेन प्रतिपादयति—**

**अभेदैकत्वसंख्याया वृत्तौ भानमिति स्थितिः ।**
**कपिञ्जलालम्भवाक्ये त्रित्वं न्यायाद्यथोच्यते ॥ १ ॥ ( ५६ )**

अविद्यमानः भेदो = विशेषो यस्या सो अभेदा, एकत्वस्य सङ्ख्या एकत्वसङ्ख्या अभेदाचासौ एकत्वसङ्ख्या च इत्यभेदैकत्वसङ्ख्या = सङ्ख्या सामान्या तस्याः विवक्षाधीनो निर्णयः । वृत्तिस्थलेषु बहुव्रीहि रहितेषु समस्यमान पदार्थगतसङ्ख्याविशेषानवगम इति तात्पर्यम् ।

पूर्वं प्रकरणे देवतासम्बन्धि प्रत्ययार्थनिर्णये कृते सति, अभेदैकत्वसंख्या निर्णयस्य कः प्रसङ्गस्तदाह = वृत्तिप्रसङ्गादिति-वृत्तिमात्रे कृत्तद्धितसमास सनाद्यन्तैकशेषमात्रेऽतिरिक्तशक्ति प्रसंगात् = वार्तनं शब्दार्थयोः व्यवहार कारणं वृत्तिः, 'वर्त्येते शब्दार्थौ व्यवहारविषयी क्रीयेते' इति वृत्तिः । शब्द-निष्ठबोधकताशक्तिः । विशिष्टबोधं प्रति वृत्तिज्ञानं कारणम् । तन्निरूप-कस्य बोधकस्य विषयस्य समासादेः प्रसङ्गात् प्रकरणत्वात्तत्राभेदेन भास-माना या संख्या सा स्मृति विषया । तदर्थमभेदसंख्याप्रकरणंनिरूपणमा-वश्यकम् । सा वृत्तौ प्रतीयते । यथा पीताम्बरः, अत्रैकवचनं प्रतीयते । सर्वत्र वृत्तौ एकत्वं द्वित्वं त्रित्वादिकन्न भासते । तदस्यास्त्यस्मिन्नित्यादौ एकत्व संख्या अविवक्षिता । तेन वृत्तौ संस्यात्वं सुष्पष्टम् । यद्यपि प्रत्ययार्थ निरूपणप्रसङ्गे संख्यादिनिरूपणभावश्यकं, तथापि पूर्वं सुबन्तप्रकृतेरे वोपस्थितत्वात् क्त्वेत्यादौ संख्यायाअभानात् वृत्तौ तस्या निरूपणमुचित-मेव । तच्चाभेदैकत्व संख्या = एकार्थीभावे व्यापेक्षायां वा अभदेन = संश्लि-ष्टेन, अविभागेन अविरोधेन वा संख्यात्वविशिष्टा प्रतीयते इति । वैया-करणानां सिद्धान्तस्तं दृष्टान्तेन सप्रमाणेनोपपादयति । हृदयाकर्षकं स्फोटयति, । अभेद इतिः—वृत्तौ = कृत्तद्धितसमासादिष्वभिन्ना संसृष्टा या एकत्वादिधर्मविशिष्टा संख्या तस्याः भानं = प्रतीतिरिति मर्यादा । सिद्धान्तः संख्यास्वभावः । यथा कपिञ्जलानालम्भेति वाक्ये शस् विभक्तिः बहुषुप्रबहुवचनमुपतिष्ठते । तत्र बहुत्वव्याप्यत्रित्वसंख्यात्मनः प्रथम-मुपस्थितिः प्रथमोपास्थितिन्यायात्, उपस्थितं परित्यज्यानुपस्थितकल्पने मानाभावात् । यथा 'कपिञ्जलान्' उदाहरणे प्रथमं त्रित्वस्यैव भानं, तथैव वृत्तौ संख्यात्वेनोपस्थितासु एकत्वादिसंख्यासु एकत्वस्य प्रथमं भानम् । अतोऽभिन्नायाः एकत्वसंख्यायाः निर्णयः क्रियते ।

संख्या का अभेदरूप से सम्बन्ध होना।

**संख्याविशेषाणामविभागेन सत्त्वमभेदैकत्वसंख्या ।**

**उक्तं च वाक्यपदीये—**

**यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।**
**अविभागेन वर्तन्ते तां संख्यां तादृशीं विदुः ॥ इति ।**

तत्र विषये मतद्वयं दृश्यते। प्रथमं यथा-संख्याविशेषाणां संख्यात्वेनोपस्थितानाभेकत्वादीनामविभागेन = अभेदेन। सत्तामात्रस्त्रीत्वेन, स्थितिः अभेदो = भेदाभावः। एकत्वत्वभेदस्याभावोयस्यां संख्यायां सा अभदैकत्वसंख्या। अभेदेन प्रतीतौ भर्तृहरिवचनं प्रमाणं प्रस्तौति उक्तञ्चेति—यथा सर्वे औषधिरसाः = वनस्पत्यादीनां रसाः = सारभूताः स्वादप्रदगुणाः रस्यन्ते आस्वाद्यन्ते इतिरसाः भ्रमरैः मधून्यभदेनाहिताः = समर्पिताः, स्थापिताः शक्तयः आस्वादगुणाः—अभेदेन अविभागेन वर्तन्ते। यथा मधूनि सर्वरसानां रसमात्रेण प्रतीतिः स्तथैव वृत्तौसर्वसंख्यानां संख्यात्वेन प्रतीतिः। संख्यासूचिकां विभक्तिविनाऽपि एकत्वद्वित्वबहुत्वादयः प्रतीयन्ते। अथवा आहिता = परित्यक्ताः विरोधशक्तिः = परस्पर प्रतिवन्धप्रतिबन्धकभावो यैस्ते औषधादिषु विरुद्धधर्माअपि रसाः, सम्पूर्णं विरोधं परित्यजन्तस्तिष्ठन्ति एवं वृत्तौ विरुद्धार्थैकत्वदित्वबहुत्व संख्या अविरोधेन तिष्ठन्ति। अतो अविरोधेन वर्तमावां तादृशीं = मधुरस तुल्यामभेदैकत्वसंख्यांविदुः: बुद्धयन्ते स्म। नहि त्रिपुत्रो द्विपुत्र व्यपदेशं लभते। द्वितीयमतमुपक्रमते—यथा मधूनि स्थिता सर्वरसानां सत्ता नाना रोगविनाशिनीति फलमस्ति। परन्तु राजपुरुष इत्यादिवृत्तिस्थलेसंख्या विशेषस्य, सद्भाव (सत्तामात्रस्वीकारे नकिमपि फलम्। अतो दृष्टान्त दार्ष्टन्तिकयीः साम्यं संगच्छते। आचार्येण पूर्वंकल्पितं संख्याविशेषमविभागेन सत्वमित्यभेदैकत्व संख्या लक्षणम युक्तं, तद्विरुद्धं विशेषलक्षणमुच्यते।

परित्यक्तः = दूरीकृतो विशेषः = एकत्व द्वित्वं बहुत्वादि, (उल्लिख्यमाना जातिः) तत्रत्वमित्यत्र प्रतीयमानमेकत्वधर्मः, अबोधकालिकसंख्यात्वमभेदैकत्वसंख्यारूपमित्युच्यते। संख्यासामान्यरूपमेकत्वसंख्यारूप मित्युच्यते। प्रमाणमत्र भर्तृहरिणोक्तं, भेदानामिति = संख्याभेदानामेकत्वादि धर्माणाम्परित्यागादबहेलनाच्च अप्रतीतेः, संख्यात्मा = संख्यामात्र संख्यात्वेन भावमाना आत्मा = स्वरूपंभासमानस्वरूपपदार्थः। तथाविधः = अभकैत्व संख्यापदव्यावर्त्यः। अस्मिन् सामान्य संख्या लक्षणे प्रमाणं प्रस्तूयते उत्तरार्ध-

जिसने विशेषता को छोड़ दिया ऐसा

परित्यक्तविशेषं वा संख्यासामान्यं तत्। संख्यासामान्य होता है।

उक्तं च—भेदानां वा परित्यागात्संख्यात्मा स तथाविधः। विशेष होती है।

व्यापाराज्जातिभागस्य भेदापोहेन वर्तते॥

जाति वाली अगृहीतविशेषेण यथा रूपेण रूपवान्। रूप की दृष्टि से एक

प्रख्यायते न शुक्लादिः, भेदापोहस्तु गम्यते॥ इति। उसी प्रकार संख्या संख्या की दृष्टि से एक

अस्यां वृत्तौ समासादौ भानं न्यायसिद्धमिति शेषः। इति मतस्थिति-वैयाकरणानाम्। संख्यात्वरूप से संख्या समास है संख्या सर्वदा भेद को भी रखती है।

कारिकायां व्यापारादिति = जातिभागस्य = एकत्व द्वित्वत्वादिरूपस्य व्यापारात् = सख्याभेदत्यागरूप व्यापारात् भेदापोहो न वर्तते = भेदस्य संख्या विशेषणस्य यो अपोहः = अग्रहः = तत्तद्रूपव्यापारात् अभेदरूपोयो व्यापार स्तत्र भेदस्य परित्यागेन संख्यासामान्यात्मा = एकत्वादिविशेषस्य भेदाज्ञानरूपो यो व्यापारः स विशेषान् तान् तदेवाभेदैकत्वसंख्या पदवाच्या। तत्पक्षपातिनः राजपुरुष इति वाक्यस्य संख्यावत् सम्बन्धिराजपुरुष इति बोधः। वृत्तिविग्रहयोः सामानाथर्कत्वनियमोऽपि। एकाथंत्वे तु नियमः स्यात् संख्या—सामान्यं त्क्त्वा राजसम्बन्धी पुरुष इति ब्रूपे तर्हि नियमः विरोधोऽपिस्यात्। अत्र हरिः प्रमाणयति। न गृहीतोऽपरित्यक्तोविशेषः श्वेतत्वरक्तत्व पीतत्वादि धर्मोयस्मिंस्तत्। शुक्लादेर्यो भेदरूपोऽपोहः (पृथक्कृतिः) शुक्लत्वादि रूपः तद्व्यावृत्तिः तस्य निवृत्तिर्नजायत-इत्यर्थः यथा दूरस्थितो घटादिः पूर्वं शुक्लत्वादि रूपेण न भासते। किन्तु घट त्वेन सामान्यरूपेण च भासते। एवं राजादिपदार्थः संख्यावानिति सामान्येन प्रतीयते, एकत्वादिविशेषेण न प्रतीयते। घटादिः स्वरूपेण रूपावनिति प्रसिद्धो भवति तस्मिन् काले शुक्लादिभेदस्य ज्ञानं न जायते। अस्याः, अभेदैकत्व संख्यायाःसमासतद्धितादौ भानं न्याय सिद्धम्। उपस्थितं परित्यज्यानुपस्थित कल्पने मानाभावात्।

न च संख्यात्वेन, संख्याप्रकारकबोधस्तु न न्यायशास्त्र सम्मतः। अतआह वैयाकरणानांमते = सिद्धान्ते इयं स्थितिः = मर्यादा। अन्येषां मते इयं स्थितिर्नेत्यर्थः। न च संख्यात्वे। संख्यायाःवृत्तौभाने किं प्रमाणं तत् समर्थयति। अयंभाव-इति-राजपुरुष इत्यादौ संख्यायाः संख्यात्व धर्मेण ज्ञाने एकस्य द्वयोस्त्रयाणां राज्ञां पुरुष इत्यभिलषितो यथा संख्याबोधः। अभिन्न संख्यात्वस्यास्वीकारे संख्यायाः निश्चित निर्णयो न स्यात्। सामान्य

समास से कौन सी संख्या है यह ज्ञात नहीं होता है।
विशेष ज्ञान कब होता है
उसी प्रकार समास से सामान्यज्ञान होता है।





अयं भावः—राजपुरुष इत्यादौ राज्ञः राज्ञोः राज्ञां वाऽयं पुरुष इति जिज्ञासा जायते। विशेषजिज्ञासा च सामान्यज्ञानपूर्विकेति सामान्यरूपेण तत्प्रतीतिः अतस्तस्यां शक्तिरिति। तस्या एकत्वेन प्रतीतौ न्यायमाह—कपिञ्जलेति। बहुत्वगणनायां त्रित्वस्यैव प्रथमोपस्थितत्वात्तद्रूपेणैव भानवदेकत्वस्य सर्वत्र प्रथमोपस्थितत्वमस्तीति भावः। वस्तुतस्तु जिज्ञासैव नानुभवसिद्धा। तथात्वे वा ज्ञानेच्छयोः समानप्रकारकत्वेन हेतुहेतुमद्भावाच्चात्तद्रूपेणैव वाच्यता स्यादिति ध्येयम्॥ १॥ (५६) इति भूषणसारेऽभेदैकत्व संख्या विवक्षानिर्णयः।

इच्छा से ज्ञानोत्पत्ति होती है

संख्यैव अन्यदेकत्वसंख्या उच्यते। सामान्यज्ञानसत्वे वृत्तौ संख्याऽस्तीति-ज्ञाने जाते विशेषजिज्ञासा भवति एकत्वं द्वित्व बहुत्वंवेति जायते। विशेष धर्मं प्रकारकजिज्ञासां प्रति सामान्यधर्मप्रकारकज्ञानं कारणम्। यदाऽयं शूद्र इति ज्ञानं नास्ति तदा कोऽयं शूद्र इति।

ज्ञानेच्छा एक ही प्रकार की होती है

किसी का ज्ञान किसी की इच्छा

विशेषजिज्ञासा न जायते। अतआह विशेषस्य = अभिप्रेतज्ञानस्य जिज्ञासा = बोद्धुमिच्छा तदा यदा सामान्यं = व्यापकं यज्ज्ञानं तस्मात्पूर्वं चेत् शब्दात् संख्यायाः व्यापकरूपेण प्रतीतिः (बोधः) आवश्यकी। तस्यां = समासादिषु सामान्य संख्यायां शक्तिः कल्प्यते। तामेव अभेदैकत्व-संख्या इत्युच्यते। तस्याः = अभेदैकत्वसंख्यायाः वृत्तिघटक पदार्थोपसर्जनीभूत-व्यक्ते रेकत्वत्वेन = एकत्वावाच्छेदकधर्मेण प्रतीतौ = बोधे न्यायंमाह-उपस्थितं परित्यज्य अनुपस्थितकल्पने मानाभावः यथा = कपिञ्जलानालभेत। कपिञ्जलपदोत्तर बहुत्व संख्याया गणनायां त्रित्वादारम्य परार्धसंख्यापर्यन्त संख्यानामुपस्थितौ सत्यामपि प्रथमोपस्थितत्वात् यथा त्रित्वसंख्या उपतिष्ठते। एवं त्रित्वविशिष्टं कपिञ्जलकर्मकमालम्भनमिति प्रतीति जायते। एवं राजपुरुष इत्यत्रापि एकत्वसंख्या प्रथममुपतिष्ठते। तत्तस्य भानमावश्यकम्। एवं सर्वत्र एकत्वस्य सर्वप्रकारेण उपस्थिति रस्त्येव।

वही पेड़ वही फल

ननु जिज्ञासायां समा यधर्मप्रकारकज्ञानदर्शनमपेक्षितमिति न नियमः। यतः आम्रादिफलदर्शनेनापि तद्रसस्थ आस्वादनेच्छा जायते। इतिव्यभिचारात् तदाह वस्तुतस्तु = जिज्ञासेव नानुभवसिद्धाः यतो राजपुरुष इत्यादौ बोधानन्तरम् एकस्य द्वयोः त्रयाणांम्बा राज्ञां पुरुष इति जिज्ञासैव नोदेति। अत्र विषये सार्वजनीनानुभवाभावात्। पूर्वोक्तजिज्ञासाबलेन तत्कल्पनमनुचितम्। सामान्यज्ञान-विशेषज्ञानयोः कार्यकारणभावो नानेन खण्डयते। किन्तु जिज्ञासोदयस्तु भवत्येव।

## अथ संख्याविवक्षादिनिर्णयः

संख्याप्रसङ्गादुद्देश्यविधेययोः संख्याविवक्षाविवक्षे निरूपयति— उदाहरणों के अनुसार विवक्षित

उदाहरण लक्ष्यानुरोधात्संख्यायास्तन्त्रातन्त्रे मते यतः।
पश्वेकत्वादिहेतूनामाश्रयणमनाकरम् ॥ १ ॥ ( ५७ )

यज्ञपात्र ग्रहं संमार्ष्टीत्यत्रोद्देश्यग्रहगतमेकत्वमविवक्षितमितिवन्नास्माकमुद्देश्यविशेषणाविवक्षानियमः, धातोरित्येकत्वस्य विवक्षितत्वात्। अष्टा० प्र० - विधेय

तथात्वे = जिज्ञासा उद्देश्य ज्ञानयोः कार्यकारणभावकल्पना सत्व अनुभवसिद्धत्वे वा। ज्ञानस्य इच्छायाश्च समानप्रकारकत्वनियमः समानरूपेण हेतु-हेतु भद्भावात् कार्यकारणभावात् समानप्रकारकत्वेन सदृशत्वेन तत्तद्रूपेण वाच्यता = एकत्वत्वादिरूपेण बोध्यतात्वमायताम्। यद्विषयिणी इच्छा जायते तद्विषयकं ज्ञानं भवति। अयमेव कार्यकारण भावो लोके प्रसिद्धः अस्यां स्थितौ जिज्ञासायाः कारणीभूतं ज्ञानं-पदार्थज्ञानमात्रं न तिष्ठति किन्तु इष्ट साधनत्व प्रकारकं ज्ञानमप्यस्ति। इदं मदिष्ट साधनमितिज्ञानादेव जिज्ञासा उदेति। सा ज्ञानेच्छास्वरूपा भवति। इच्छायाः स्वातन्त्र्येण बिषयो ज्ञानम्। अनयोः कार्यकारण भावस्तदा सम्भवति यदा यद्विषयकं यत्प्रकारकं ज्ञानं तद्विषयिणी तत्प्रकारिका इच्छा भवेत्। ] तद्रूपेणैवबाच्यता मन्येत। अतो सामान्यज्ञानंयुक्तम् वृत्तौ संख्याविशेषरूपेणैव ज्ञानस्य जिज्ञासायाश्च कार्यकरण भावोभवति। वृत्ति घटक विशेषणीभूत धर्मे—संख्या सामान्यज्ञानमयुक्तम्। प्रथमोपस्थितत्वात् एकत्वबिषयकं ज्ञानं युक्तम्। अतएव यस्य पुरुषस्य सद्यः शुक्रकरम्पयः इति ज्ञानं जायते तस्य पयो मे जायतामिति ज्ञानमुत्पद्यते।

इति वै० भू० सारे अमदैकत्वसंख्याविबक्षानिर्णयः ॥ ११ ॥

प्रकरणस्य प्रकाणान्तरेण सहसम्बन्धः संगतिः। पूर्वप्रकरणेऽभेदैकत्व — समान्य संख्या निरुपिता। प्रसंगे कपिञ्जलानालभत, इत्युक्तमस्ति तत्र बहुत्वंसंख्यायाः विचारे तस्या स्मृतिविषयत्वम्।

संख्यायाः उपोद्घाते सन्दर्भेवा सा क्वः ? मासते उद्देश्ये विधेयेवा। क्वविवक्षा क्वाऽविवक्षा परमतनिराकरणपूर्वकं स्वमतं सिद्धान्तयति : मीमांसकानां मते उद्देश्यगता संख्या न भासते किन्तु विधेयगता संख्या भासते, इति नियमः। परन्तु वैयाकरणानां मते उद्देश्यत्वावच्छिन्ना संख्या विधयेत्वावच्छिन्ना वा संख्या इति नियमोनास्ति। विवक्षाऽविवक्षा वा लक्ष्यानुरोधिनी ज्ञेया। अतः संख्यायाः = लोकप्रसिद्धायाः लक्ष्यानुरोधात् = लक्ष्यः = उदाहरणं, ( प्रयोग ) यत्र अनुरुध्यते = उद्देश्ये तिष्ठतु विधेये वा। तथा

उत्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि।
तदा सर्वैर्विशिष्येत द्वन्द्वोत्पन्नसुबर्थवत्॥

इति शब्दान्तराधिकरणे भट्टपादैरभिधानाच्च। "आर्धधातुकस्येड् वलादेः" इत्यत्रानुवाद्यार्धधातुकविशेषणस्य वलादित्वस्य विवक्षितत्वाच्च। एवं पशुना

लक्ष्यसिद्ध्यनुकूलं तन्त्रम्-विवक्षा अतन्त्रम्=अविवक्षा ते मते=व्याकरणशास्त्रसम्मते। यतः=पश्वेकत्वादि हेतूनां=पशुना यजते इत्यत्र हेतुभूतैकसंख्यायाः विधेयगतायाः आश्रयणं=स्वीकरणम् अनाकरम्=अशास्त्रसिद्धं भाष्यविरुद्धञ्च।

यथा—ग्रहं समार्ष्टि इत्यत्र ग्रहशब्द उद्देश्यः समार्ष्टि=सम्मार्जनं ग्रहकर्मकैकत्वविशिष्टाश्रवत्तिसम्मार्जनं वर्तमानकालिको विधेयः। उद्देश्यग्रहे एकत्वसंख्या अविवक्षिता। नहि एकस्य ग्रहस्य शान्तिर्विधेया। अपितु ग्रहत्वावच्छिन्न ग्रहमात्रस्य शान्तिः विधेय इतिवत्=अस्माकं=वैयाकरणानां मते उद्देश्यगत एकत्वस्य विवक्षा नास्ति वृत्तिषु उद्देशे संख्याया विशेषण विवक्षाप्यस्ति। यथा धातोः, इत्यत्र एकत्वसंख्या विवक्षिताऽस्ति। अन्यथा मी० मत इव उद्देश्ये संख्या अविवक्षिताचेत् द्वाभ्यां धातुभ्यांमपि-प्रत्ययः सम्भवेत्। यदि तथा स्यात्तर्हि उत्पद्येत् इति सर्वेभ्यो धातुभ्यो यदि प्रत्ययः उत्पद्येत्।

तदा द्वन्द्वोत्पन्न सुबर्थवत् सर्वैः विशिष्यते। अर्थः—सर्वेभ्यः धातुभ्यः भू, गा, जि, ध्या, पां इत्यादि समुदायात् प्रत्ययो जायेत। तदा सर्वैः धात्वर्थैः=प्रत्ययार्थो विशिष्येत=गानकर्म, ध्याज्ञकर्म, जयकर्म, गानादि धात्वर्थाः=प्रत्ययार्थे कर्मादौ=विशेषणी भूताः स्युरिति दोषः=यथा=द्वन्द्वसमासे सुवर्थवत्=धवखदिरौच्छिन्धि इत्यादौ सुवर्थ कर्मणि औविभक्तौ धवादयः विशेषणतां यान्ति। तथा—सर्वेषां धात्वर्थानां प्रत्यार्थं प्रतिविशेषण-गता स्यात् इत्थम्—मीमांसायां शब्दान्तराधिकरणे भाट्टपादैः कुमारिलभट्टैः उद्देश्ये संख्याविवक्षायाः अभिधानात्—व्यवहृतत्वात्। यदिसर्व-धातुभ्य एकएव प्रत्ययः स्यात् तर्हि एकैव भावना सर्वधातुषु अनुरक्तास्यात्। अत्रतु यजतेः, ददातेः जुहोतेश्च पृथक्-पृथक् प्रत्ययो दृश्यते इति नाना धात्वर्थानुरक्ता भावना भिन्ना-भिन्ना इति कुमारिल भट्टैरघिभीयते।

मी० विधेयविशेषणं मन्वते। तत् खण्डयति एवः मिति=पशुः उद्देश्य यजनं विधेयः यथा उद्देश्यगता संख्या अविक्षिता एवं विधेयगतं संख्या विशेषणमाप्य विवक्षितम्। तत्र विवक्षानियमो नास्तीत्यर्थः। लक्ष्यानुसारेण

  

व्याकरण में विधेय में संख्या विवक्षित हो जरूरी नहीं है

यजेतेतिवद्विधेयविशेषणं विवक्षितमित्यपि न। "रदाभ्यां निष्ठातो नः पूर्वस्य च भिन्न इत्यत्र नकारद्वयलाभो न स्यात्। "आद् गुणः" इत्यादावेकत्वविवक्षयैवो-पपत्तौ "एकः पूर्वपरयोः" इत्यत्रैकग्रहणवैयर्थ्यापत्तेश्चेति भावः। शब्दार्थस्तु—संख्याया लक्ष्यानुरोधात्तन्त्रातन्त्रे यतो मते, अतः पश्वेकत्वाधिकरणो-क्तहेतूनामाश्रयणं नास्मत्सिद्धान्तसिद्धमिति। आदिना*ग्रहैकत्व-संग्रहः ॥ १ ॥ (५७)

विवक्षाऽविवक्षे ज्ञेये। सर्वत्र विधेये विशेषणविवक्षायां दोषः दीयते रदाभ्या-मिति—उद्देश्यस्तु रदाम्यमिति विधेयस्तु नकारः। स एकैव विधेये एकत्व संख्या विवक्षिता चेत् तदा भिन्न इत्यादौ नकरद्वयस्य विधानं न स्यात्। नकारे एकत्वस्य विवक्षणात् नकारद्वयस्यलाभो न स्यात्। एवमेव आद्रगुणः इत्यादौ विधेये गुणे एकत्वस्य विवक्षा चेत् गुणपदोत्तर सुविभक्त्यैव एकत्वलाभे एकःपूर्वपरयोरितिसूत्रे एक ग्रहणं व्यर्थं ;स्यात्। तदेव व्यर्थी भूय ज्ञायपति यत् विधेये संख्याविशेषणस्य नियमो नास्ति। इति ज्ञापनेन स्थानद्वये प्राप्तस्य गुणद्वयस्य वारणाय एकग्रहणमावश्यकम्।

शब्दार्थस्तु—कारिकार्थस्तु एकत्वादिसंख्यायाः लक्ष्याणां = प्रयोगाणां सिद्ध्यनुरोधात् विवक्षाऽविवक्षा वा यतः = यस्मात् कारणात् मते—सिद्धान्त सिद्धे अतः = अस्मात्कारणात् पश्वेकत्वाधिकरणोक्तहेतूनां यथा पशुना यजेत उद्देश्यगतएकत्वस्य विवक्षाया एकत्वविशिष्टपशुकरणकयाग की सिद्धि होती है। यदि पशु पदोत्तरटाविभक्तिजन्य एकत्वस्य अविव-क्षायां द्वौ पशुकारक योगे वैगुण्यंस्यात्तदेत्तन्त्रम्यो उदाहरम् आश्रयण = स्वीकारणम् अनाकरम् = अस्मत् — वैयाकरण सिद्धान्तसिद्ध न्नेत्यर्थः। पश्वे-कत्वादि — इत्यत्र आदि पदेन ग्रहैकत्वसंग्रहः = ग्रहं समाष्टि अत्रापि अविवक्षा लक्ष्यानुरोधात् च इदं अतन्त्रस्य उदाहरणम्।

शंका विधेये संख्याविशेषण मावश्यकमिति समर्थयितुमाह नन्विति—विधेये सर्वत्र संख्यायाः विशेषणस्य विवक्षा — व्यवहार आवश्यकः। यद्येवं न स्यात्तर्हि सुध्युपास्यः मद्धवरिः धात्र्यंश इत्यादौ यकारवकार — रकारणां असंख्यातापत्तिः स्यात्। अनन्त यकारादयो मा भूवन् इति विधेये संख्या विवक्षा कर्तव्यैव। भिन्न इत्यत्र यथा नकारद्वयं संगच्छते एव मन्येषां — यकारादीनाभानन्त्यापत्तिर्दोषः। यदि विशेषणी भूत संख्याविवक्षायां एकः पूर्वपरयोरिति एक ग्रहणस्य वैयर्थ्यमाशङ्कते तर्हि एकग्रहणं स्थानिनि इकि भेदात् आदेशां = यणादीनां भेद वारणाय एक ग्रहणं सार्थकम्। ननु

विधे

ननु विधेयविशेषणविवक्षाऽऽवश्यकी। अन्यथा सुध्युपास्य इत्यत्राऽनन्तयकाराद्यापत्ते, भिन्नमित्यत्र नकारद्वयवद*न्येषामप्यापत्तेः, "एकः पूर्वपरयोः" इत्यत्रैकग्रहणं च स्थानिभेदादादेशभेदवारणायेत्यभिप्रेत्याऽऽह–

विधेये भेदकं तन्त्रमन्यतो नियमो न हि।
ग्रहैकत्वादिहेतूनामाश्रयणमनाकरम् ॥ २ ॥ ( ५८ )

भेदकं—विशेषणं तन्त्रं-विवक्षितम् = विधेयविशेषणं विवक्षितमित्यस्तु, तथाऽप्यन्यतः—अनुवाद्यस्य नियमो न हि। क्वचित्तन्त्रं क्वचिन्नेत्यर्थः। ग्रहैकत्वादौ यो हेतुर्वाक्यभेदादिस्तस्यात्राऽऽश्रयणमनाकरम्। एकत्वविशिष्टं धातुं वलादित्वविशिष्टमार्धधातुकं चोद्दिश्य प्रत्ययेडागमावे विधिसंभवादिति भावः॥ २ ॥ ( ५८ )

विधेये संख्याविशेषण निवरणकम्। इत्यभि प्रायेण आह विधेये इति विधेये = विधेयविषये भेदकं = विशेषणं तन्त्रं = विवक्षितम्। अन्यत्रः = विधेय भिन्नस्थले ( उद्देश्ये नियमो = विवक्षाऽविवक्षा वा नियमो नास्ति ) एतेन विधेयेविशेषणता समर्थिता। अनुवाद्यस्य - उक्त नियमो नास्ति। तत्र क्वचिद् विवक्षितं क्वचिन्नविवक्षितम्। ग्रहैकत्वादिहेतूनां = ग्रहं सम्मार्ष्टि पशुना यजेत् इत्यादौ प्रदर्शिता या विवक्षा अविवक्षा वा एकत्वं = संख्यात्वं एकत्व द्वित्वं बहुत्वसाधककारणानाम् आश्रयणं = तेषां २ साधकत्वेन उपस्थापन वाक्यभेदादिः = प्राजापत्या नवगहाः अत्र यदि नवपदस्य उपादानं नस्यात्तर्हि प्राजापत्याः गहाः इत्युच्चारितेसति प्रथमोपस्थितत्वात् बहुत्वव्याप्यैकत्वसंख्या ग्रहण होने या छग्रहों में प्राजापत्यत्व विधान न हो सकेगा। तस्याश्रयणम् = स्वीकारम् = अनाकरम् = आकीर्यन्ते प्रकाश्यन्ते सिद्धान्ताः यत्र स आकरः = भाष्यादिः तद्विरुद्धमनाकरम्।

ननु उद्देश्ये = संख्या विशेषण नियमाभावे धातोरिति एकत्वस्यआर्धधातु कस्येडवलादेरित्यत्र वलादित्वस्य अविवक्षा सम्भवति तदाह एकत्वविशिष्टमिति - धातुसमुदाये क्रियावाचकत्वाभावेन धातुसंज्ञाया अभावात् धातुत्वादेव प्रत्ययविधानाच्च क्रियावाचकात् एक संख्याविशिष्टात् धातोः प्रत्ययस्य उद्देश्यत्वात्। इडागमविधौ बलादि ग्रहणसामर्थ्यात् वलादित्वबिशेषणबिशिष्टंमार्धधातुकत्वं मावश्यकम्। तदैव इडागमादेः विधानं मसम्भवन्। एकत्व विशिष्ट धातु मुद्दिश्य इडागमादयोविधीयन्ते।

ननु बिधेये भेदकं ( विशेषं ) तन्त्रं = विववितं मन्यसे चेत्तर्हि भिन्न इत्यत्र बिधेयभूतस्य नकारद्वयस्य लाभो न स्यात् तत्साधयितुमाह रदाम्या-

नन्वेवं भिन्न इत्यत्र नकारद्वयलाभो न स्यादित्यत आह—

रदाभ्यां वाक्यभेदेन नकारद्वयलाभतः।
क्षतिर्नैवास्ति तन्त्रत्वे विधेये भेदकस्य तु ॥ ३ ॥ ( ५९ )

चकारसूचितं—'निष्ठातस्य नः, पूर्वदस्य च नः' इति वाक्यभेदमादाय नकारद्वयलाभ इत्यर्थः ॥ ३ ॥ ( ५९ )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे उद्देश्यविधेययोः संख्याविवक्षानिर्णयः समाप्तः ॥

भिति—रदाभ्यांनिष्ठातो नः पूर्वस्य च दः इति सूत्रे चकारोच्चारणेन वाक्य भेदः सूच्यते निष्ठातस्य नः इत्येकं वाक्यम्। पूर्वस्य दकारस्य च नः इत्यपरं वाक्यम्। इति नकरद्वयस्य लाभो भविष्यति। अतः विधेये भेदकस्य = विशेषणस्य तन्त्रत्वे = विवक्षितत्वे कश्चिचक्ष तिः = अव्यवस्था नास्ति एव।

इति वै० भू० सारे प्रभाकरीटीकायां सङ्ख्यविवक्षानिर्णयः ॥ १२ ॥

प्रकरणस्य प्रकरणान्तरेण सह सम्बन्धः संगतिः। पूर्वप्रकरणे 'धातोः' इति उद्देश्ये एकत्व विशिष्टं विवक्षितमिति प्रतिपादितम्। एकत्वविशिष्ट धातो वलादित्वविशिष्टमार्धधातुकमुद्दिश्य इडागमादायो विधीयन्ते। एतेन धातोः विहितः प्रत्ययः स्मृतिविषयो जातः स्मृति विषयत्वेसति उपेक्षानर्हत्वं सङ्गतिः। धातोः विहितानां प्रत्ययानामर्थाः निरूपयितुमारभन्ते। क्त्वाद्यर्थं इति न च क्त्वा प्रत्ययार्थौ भावः। यः लिङ्गसंख्यानन्वयि साध्या क्रियारूपः तस्य लाभस्तु प्रकृतितः सम्भवात् कथं क्त्वादेरर्थनिरूपणमिति चेत् न, प्रकृत्यर्थः फलमपि। तस्य व्यावृत्तये क्त्वाप्रत्ययार्थं निरुपयति। धातोः विहित तुमुन्नादीनाञ्च स्मरणादाह अव्ययकृत् इति। अव्ययकृतो भावे = अव्यय संज्ञाविषकाः प्रत्ययाः असत्वभूतेभावे भवन्ति।

इति वर्तिकोक्तेः = वचनात् तुमादयः = तुमुन् आदयः प्रत्ययाः भावे (क्रियायां) प्रकृत्यर्थं = स्वप्रकृतिभूतधात्वर्थव्यापारे भवन्ति। तत्रापिः असत्वभूते। आदिपदेन क्त्वादीनां सङ्ग्रहो मन्तव्यः। एषां = तुमुन्नादीनां द्योत्यं व्यञ्जनया बोध्यं समानकर्तृकत्वादिः = समानः कर्ता ययोः क्रिययोः सः समानकर्तृकः तथा भावः इति स्थितिः–मर्यादा। अयं भावः। यः साध्यावस्थापन्नः सच धातुनालब्धः तस्यैव तात्पर्यग्राहकत्वं क्त्वादीनां मतो यः समानः कर्ता ययोः क्रिययोः समानकर्तृकाः तेषां तु त्वादि अव्यवहितपूर्वापरी भाव सम्बन्धश्च। एतौ तुमन्नादीनां व्यङ्ग्यार्थौस्तः, असत्वभूतयोः क्रिययोः सम्बन्धे तात्पर्यग्राहकत्वमेव द्योतकत्वं तेषाम्।

## अथ क्त्वाद्यर्थनिर्णयः ।

क्त्वाप्रत्ययादेरर्थं निरूपयति—

अव्ययकृत इत्युक्तेः प्रकृत्यर्थे तुमादयः ।
समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिः ॥ १ ॥ ( ६० )

तुमादयस्तुमुन्नादयः । प्रकृत्यर्थे—भावे । आदिना क्त्वादेः संग्रहः । भावे इत्यत्र मानमाह-अव्ययकृत इति । "अव्ययकृतो भावे" इति वार्तिकादित्यर्थः । ननु "समानकर्तृकयोः पूर्वकाले" इत्यादि सूत्राणां का गतिस्तत्राह—समानकर्तृकत्वादीति ।

नैया० मतेतु तेषां वाचकत्वम् तेषांमतेऽनेकसम्बन्धनिरूपितशक्तिकल्पने गौरवं तस्मात्त्याज्यम् । वैयाकरणमतेतु तात्पर्यग्राहकाः तुमन्नादयः । भाष्ये 'कः पुनरसौ तुमन्' भावः सच धातुना लब्धः । अतो अनिर्दिष्टार्थः । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति । इति स्वार्थे = धात्वर्थव्यापरे भविष्यन्ति । यथा—चैत्रो भुक्त्वा व्रजति । अथ भुजधात्वर्थं भोजनस्य व्रज धात्वर्थं व्रजनक्रियया सह स्वसमानकतृकत्वेसति ( चैत्र एव द्वयोरेकः ( समानः कर्ता ) स्वाव्यवहितोत्तरत्वसम्बन्धोऽपि वर्तते तेन तस्य वाक्यस्य शाब्दबोधविषयता जायते । एष सम्बन्धः क्त्वाप्रत्यय व्यंग्यार्थः । एवं 'चैत्रः भोक्तुं व्रजति' इत्यत्र तुमुन् प्रत्ययस्य स्वप्रकृत्यर्थभुज्धात्वर्थ भोजनस्य च व्रजनक्रियया सह स्वसमानकर्तृकत्वे सति स्वाव्यवहित-पूर्वकर्तृकत्वमप्यस्ति, एतत्तुमुन् द्योत्यम् ।

भावार्थे प्रमाणमाह—अव्यय इति—अव्ययसंज्ञको यो कृत् स भावे भवति भावो धात्वर्थः । यद्यपि द्वौ धात्वर्थौ ( फलव्यापारौ ) स्त तथापि प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः । तत्रप्रधानीभूतव्यापार एव गृह्यते । प्रधानीभूतव्यापार एव क्त्वाद्यर्थः । अव्ययसंज्ञकः कृत् क्त्वातुमुन् णमुलादीनां अव्ययसंज्ञाविधानम् । क्त्वातोसुन् कसुनः, कृन्मेजन्तः इत्यादिना भवति । अत एते अव्ययसंज्ञकाः भावे भवन्ति । कारिकायां तुमादय इत्यस्य विवरणं तुमुन्नादय इति । प्रकृत्यर्थे इत्यस्य विवरणं भाव इति । अपि पदेन क्त्वा णमुलादीनां सङ्ग्रहः ।

न च पाकः इत्यादावपि भावार्थकप्रत्ययदर्शनात् 'अव्यय' इति विशेषणेन तेषामसंग्रहस्तन्न. वार्तिके भावपदेन लिङ्गानन्वेयिनामसत्वभूतानां ग्रहणम् । घञादीनांञ्च 'घञजपः पंसि' इति लिङ्गानुशासनानुरोधान्न तेषांग्रहणम् । एतेन क्त्वादयः धात्वर्थमनूद्यन्ते इतिफलितम् ।

ननु क्त्वादीनां धात्वर्थस्य द्योतकत्वाङ्गीकारे। समानकर्तृकयोःपूर्वकाले इति सूत्रस्य कागतिः यतः। समानकर्तृकयोः क्रिययोः पूर्वकाले विद्यामाना याक्रिया तद्वाच्ये क्त्वाविधीयते। एषोऽर्थः भावार्थस्वीकारे बाध्यते। अस्य समाधानमुत्तरार्धेन दीयते। समानकर्तृकत्वादिः द्योत्यमेषामिति स्थितिः। क्त्वादीनां स्वार्थिकत्वेन भावो वाच्यार्थ एव समानकर्तृकत्वं पूर्वकालत्वमुत्तर कालत्वञ्च, तेषां द्योयं=व्यङ्ग्यार्थम्। सूत्रे समानशब्दः एकार्थवाचो न तुल्यार्थकः। तुल्यार्थकत्वे तुविभिन्नकर्तृकयोः क्रिययोः तुल्यार्थता यत्र तत्र क्त्वादीनामापत्तिः वक्तुं शक्यते यदा एकवाची तदा एकः कर्ता भवति। सूत्रे द्विवचनमविवक्षितम्। अत एव स्नात्वाभुक्त्वा, पीत्वा, गच्छति इत्यादौ अनेकक्रिया सत्वे समानकर्तृकत्वमव्यवहित पूर्वापरीभावश्च सङ्गच्छते।

अत्र ग्रन्थकारः स्वमतं प्रकटयितुमुपक्रमते अयं भाव इति।

भोक्तुं भचति मुक्त्वाव्रजति, इत्यादौ साक्षात् परम्परया वा एकवाक्यः विशेषणविशेष्यभावसम्पन्नता सर्वेषां मतावलम्बिनां सिद्धा=निष्कर्षमापन्ना। भोजन-पाक क्रिययोरेकवाक्यता परस्परं विशेष्यविशेषणभावं विना न सिद्धयति। अन्यथा=द्वयोः क्रिययोः विशेष्यविशेषणभावं विनाऽपि पदसमुदायमात्रस्य एकवाक्यतास्वीकारे भुङ्क्ते, व्रजति. इत्यादावपि यत्किञ्चित् कर्तृका भुजिक्रिया यत्किञ्चित् कर्तृका व्रजनक्रिया च इति पदसमुदायेऽपि एकवाक्यताया आपत्तिसम्भवात्। तत्र एक वाक्यत्वे दोषाभावस्तर्हि सर्वजनानुवो विरुद्धेत। तथा च-एकवाक्याता स्वीकारे च तयोः=क्रिययोः भोक्तुं पचतीत्यनयोः यः विशेष्य विशेषणमाव निरुपकः=बोधकः नियामकः संसर्गः सम्बन्धः अस्थांस्थितौ स संसर्गः क्वचिज्जन्यत्वरुपः एतन्न्यायमते तन्मते जन्यत्वं संसर्गः परन्तु जन्यता जनकतावा न संसर्गः द्विनिष्ठुत्वाभावात्। वैयाकरण मते जन्यजनकभावः संसर्गः। स द्विष्ठः वृत्तितानियामकश्च=सम्बन्धः लोके अनुभवगम्यो भवति। येन सम्बन्धेन लोके विशिष्टबुद्धिः प्रसिद्धयति स एव सम्बन्धः वृत्तितानिमानको भवति। यथा स्वरुपे आश्रयतानियामकत्वं आश्रयतायाः-बृत्तिता (आधेता) नियामकत्वम्। नैः मो वाक्याथंतावच्छदकत्वेसति अनुयोगिबृतित्वम्।

बृत्तिता नियामकस्यैव संसर्गत्वात्। क्वचित्सामानधिकरण्यं संसर्गः, स च एकाधिकरणबृत्तिरुपः। समानकर्तृकत्वस्वरूपो न पृथक् द्योत्यः।

विशेष्य विशेषण के जानने पर ही एकवाक्यता होती है।





अयं भावः—भोक्तुं पचति, भुक्त्वा व्रजतीत्यादावेकवाक्यता सर्वसिद्धा भोजनपाकक्रिययोर्विशेषण विशेष्यभावमन्तरेणानुपपन्ना। अन्यथा भुङ्क्ते व्रजतीत्यादावप्येवाक्यतापत्तेः। तथा च तयोर्विशेषणविशेष्यभावनिरूपकः संसर्गो जन्यत्वं, सामानाधिकरण्यं, पूर्वोत्तरभावौ, व्याप्यत्वं चेत्यादिरनेकविधः। तथा च भोक्तुं पचति, भुक्त्वा तृप्त इत्यादौ भोजनजनिका पाकक्रिया, भोजनजन्या तृप्तिरिति बोधः। अत एव जलपानानन्तर्यस्य तृप्तौ सत्त्वेऽपि पीत्वा तृप्त इति न प्रयोगः। सामानाधिकरण्यस्यापि संसर्गत्वेन अर्थात् समानकर्तृकत्वमपि लब्धम्। भुक्त्वा व्रजतीत्यादौ पूर्वोत्तरभावः सामानाधिकरण्यञ्च संसर्ग इति भोजनसमानाधिकरणा तदुत्तरकालिकी व्रजनक्रियेति बोधः।

समानाधिकरण में रहना ही सामानाधिकरण्य है

क्वचित् पूर्वोत्तरभावः=अव्यवहितसम्बन्धः विशेष्यविशेषणभावेऽव्यवधानमावश्यकम् अव्यवहितत्वञ्च—क्रियायाः क्रियायां वर्तत एव। व्याप्यत्वञ्चादिः नियतसाहचर्यसम्बन्ध एव व्याप्यत्वमुत्युच्यते। अदिना अव्यवहितसम्बन्धोऽपि गृह्यते। स च योग्यतारूपः तात्पर्यवशात् दण्डमासमुहूर्तादिरूपा योग्यताऽपि। यथा भोक्तुं व्रजतीत्यत्रकर्ता भोजनाश्रयः, स एव गमनाश्रयोऽपि। अत्र उभयोः क्रिययोः व्याप्यव्यापकभावसम्बन्धः। स च समानकर्तृक स्थल एव। यत्र विभिन्नौ कर्तारौ तत्र कश्चिदन्यो भुङ्क्ते कश्चिदन्यो गच्छति। अत्र नोभयोरुक्तः सम्बन्धः। आदिना अव्यवहितस्य सङ्ग्रहे 'अथ अधीत्य श्वो व्रजति' इत्यादौ व्यवधानेऽपि न दोषः। पूर्वकालः उत्तरकालो वा न क्त्वावाच्यः। भोजनोत्तरं व्रजतीत्यन्वयबोधात्। अव्यवहितयोग्यताऽपि न शक्यार्थः भुक्त्वा सम्बत्सरानन्तरं व्रजतीत्यापत्तेः। यत्र यथा तात्पर्यं तत्र तथा इष्टमेव।

इत्याद्यनेक विधः सम्बन्धः क्रिययोः दृश्यते। तथा च—अनेक विध सम्बन्ध स्वीकारे च भोक्तुं पचति इत्यत्र तुमन् प्रकृत्यर्थस्य ( भुजधात्वर्थ भोजनस्य ) पच् धात्वर्थविक्लित्यनुकूलव्यापारेण सह सामानाधिकरण्य= एकाधिकरणावृत्तित्व सम्बन्धः अत्र भोजन क्रियायाः पाकक्रियया सह जन्य जनकभाव सम्बन्धश्च भोजनं जन्यं तस्य जनिका पाकक्रिया। द्वयोः सामानाधिकरण्यं=समान कर्तृकत्वं पूर्वोत्तरभावोप्यस्ति। एवं भुक्त्वातृप्तः इत्यत्र भोजनजन्या तृप्तिरित्यर्थः जन्यजनकभावसम्बन्धोऽप्यस्ति। जनकत्व सम्बन्धेन भोजनविशिष्टापाकक्रिया जन्यत्वसम्बधेन भोजनविशिष्टा तृप्तिः। अतएव=क्रिययोः जन्यजनकसम्बन्धस्वीकारादेव। जलपानस्यानन्तरं=पश्चात् तृप्तौ=क्षुन्निवृत्तौ सत्यपि पीत्वातृप्त इति प्रयोगो न

अधीत्य तिष्ठति, मुखं व्यादाय स्वपितीत्यादौ चाध्ययनव्यादानयोरभाव-कालेऽप्रयोगाद्यदा यदाऽस्य स्थितिः, स्वापश्च, तदा तदाऽध्ययनं मुखव्यादानं चेतिकालविशेषावच्छिन्नव्याप्यत्वबोधेद्व्याप्यत्वं सामानाधिकरण्यं च संसर्गः ।

जायते। यदा पान जन्यत्व विवक्षा तृप्तावस्ति, तदा पीत्त्वा तृप्तः इत्यपि प्रयोगो भवति। सामानाधिकरण्यस्य = समानकर्तृकत्वस्य अपि निश्चयेन संसर्गत्वेन = सम्बन्धत्वेन संसर्गः तदुत्तर व्रजनकालिकीक्रियारुपर्थसत्वात्। समानः कर्ता यस्यासौ तस्य भावः तत्वादि समानकर्तृकत्वादिति अर्थो लभ्यते। तयोः व्यापारयोः सामानधिकरण्ये संसर्ग सम्भवात् भुक्त्वाव्रजतीत्यत्र अव्यवहितपूर्वोत्तरसम्बन्धः प्रतीयते। भोजनोत्तरकालिकी व्रजनक्रिया इत्यर्थश्च गम्यते। सामानाधिकरण्यं = समानकर्तृकत्वमपि सम्बन्धो गम्यते। क्त्वा प्रत्ययार्थस्थले व्याप्यव्यापक भावोऽपि सम्भाव्यते। उदाहरणम्, अधीत्यतिष्ठतीति—न च अध्ययनकालः स्थितिकालश्च भिन्नोभिन्नः। अतएव एककालाभावः आनन्तर्यमव्यवधानाभावश्च। अत उक्तः प्रयोगो न स्यात्। द्वयोरेक कालेऽसम्भवश्च। यदि द्वयोरव्यवधानं सामानाधिकरण्यं स्वीकरिष्यते, तर्हि अन्योदोष आपतिष्यते। यत्र दिनैकस्याध्ययनं मास पर्यन्तस्थितिस्तत्रापि अधीत्यतिष्ठतीति भविष्यति। अतः क्त्वा प्रकृत्यर्थस्य तिङ्प्रकृत्यर्थक्रियया सह व्याप्यव्यापकभावोऽङ्गीकार्यः। यत्र यत्र कर्तुः स्थितिः तत्र तत्र अध्ययनम्। एतादृशी विवक्षा यत्र तत्रैवोक्त प्रयोगः। यत्र व्याप्यव्यापकभावः तत्रैव सामानाधिकरण्यं पूर्वापरीभावसम्बन्धश्च सफलीभवति। एतेन स्थितौ व्याप्यत्वं मध्ययने व्यापकत्वञ्च सिद्धचति।

एवं मुखं व्यादाय स्वपिति इत्यादौ मुखव्यादानस्य अभावकाले न प्रयुज्यते। यदा स्वापः = शयनं = तदा मुखव्यादानं = आलस्यादिना मुखस्य विस्तृतीकरणम्। अत्रापि कालविशेषावच्छिन्नं = यत्व्यादानं = विस्तृतिः तत्र व्यापकत्वं, स्वापेच व्याप्यत्वं प्रतीयते। अतो मुखव्यादाननिष्ठविशेष्यतानिरूपितव्याप्यतावान् वर्तमानकलिको यत्किंञ्चित्कर्तृकः स्वापः। यत्र व्याप्यत्वसम्बन्धस्तत्र सामानाधिकरण्यभावश्यकम्। अतः समानकर्तृकत्वं अव्यवहितत्वं व्याप्यव्यापकभावश्च यत्र प्रतीयन्ते तत्र क्त्वादयः प्रत्ययाः प्रयुज्यन्ते। एते संसर्गाः सम्बन्धाः शाब्दबोधे चैकपदार्थेऽपरपदार्थस्यसंसर्गः संसर्गमर्यादया भासन्ते।

एवञ्च = व्याप्यत्वं सामानाधिकरण्यञ्च अन्यलभ्यत्वात् = संसर्गमर्यादया-लभ्यत्वात्। केवलं सूत्रात्तेषां लाभो न भविष्यति। इत्येव युक्तम् = उचितम्।

एवं चान्यलभ्यत्वान्न सूत्रात् तेषां वाच्यतालाभ इति युक्तमव्ययकृतो भाव इति। एवं च प्रकृत्यर्थक्रिययोः संसर्गे तात्पर्यग्राहकत्वरूपं द्योतकत्वं क्त्वादीनाम्। अत एव "समानकर्तृकयोः" इति सूत्रे 'स्वं शब्देनोपात्तत्वान्न' इति भाष्यप्रतीकमादाय पौर्वापर्यकाले द्योत्ये क्त्वाविर्विधीयते न तु विषय इति भाव इति कैयटः।

अतएव 'अव्ययकृतो भावे'। भाववाच्ये भवन्ति। प्रकृत्यर्थयोः द्वयोः क्रिययोः यः पूर्वनिर्दिष्टः संसर्गः। तद्विषयकतात्पर्यग्राहकत्वं क्त्वातुमुन्नादौ वर्तते। अतएव—तात्पर्य ग्राहकत्वस्वीकारादेव समानकर्तृकयोरिति सूत्रे स्वशब्दोपात्तत्वात् अत्र स्वशब्दः = समानकर्तृकत्वमिति। तस्य गृहीतत्वात्। समानकर्तृकत्वं न क्त्वावाच्यम्। इति भाष्यसङ्केतमादाय पौर्वापरीभावादिः द्योत्ये - त्याज्यत्वे क्त्वाविधीयते। न तु विषये = वाच्यवाचकभावे।

कस्यचित् विप्रतिपन्नं नैयायिकमतं दूषयितुमुपन्यस्यति—यत्तु इतितन्मते 'समानकर्तृकयोः पूर्वकाल' इतिसूत्रे उभयोः समानकर्तृकइति पूर्वकाल इति च पदयोः वहुव्रीहिसमासे अविशेषेऽपि = नास्तिकश्चनभेदः पूर्वकालं क्त्वावाच्यम् इतरार्थोद्योत्यः इति वैषम्येबीजाभावात्। अन्यथा = यदि वैषम्यं स्यात्तर्हि समानकर्तृक इत्यर्थस्य क्त्वाऽवाच्यत्वे 'ओदनं पक्त्वाऽहं भोक्ष्ये' इत्यत्र कर्ता अनुक्तः स्यात्। अनुक्ते कर्तरितृतीयेति नियमः प्रभवेत्। अहम् इति स्थाने मया इति तृतीया स्यात्। इदमेव समानकर्तृकत्ववाच्यत्वेफलम्।

ननु 'अनभिहिते' इतिसूत्रे नञः प्रसज्यप्रतिषेधार्थकतया कर्तुस्तिङोऽभिधानात् न तृतीया प्रसङ्ग। आह नचेति—'भोक्ष्ये' इत्यत्र आख्यातेन कर्तुरभिधानमस्ति न तृतीयेति प्रश्ने समाधानम् भोजनरूपायाः क्रियायाः यः कर्ता तस्य उक्तेऽपि पाकक्रिया = विक्लित्यनुकूलायाः कर्तुरभिहित भिन्नत्वात् तदभावात् = कर्तुरभिधानाभावात् तृतीयाप्रसङ्गो दुर्वारः। अतः समानकर्तृकत्वं क्त्वावाच्यमिति न मन्तव्यमेव। वस्तुतः अनभिहित इत्यत्र न प्रसज्य प्रतिषेधः किन्तु पर्युदास एव। तत्र शक्तिः कारकमिति पक्षश्चश्रेयान् भाष्येतु पर्युदासाभिप्रायेण समाहितम् अनभिहिते भवतीति अभिहित अभिधानसदृशे कर्तृत्वादि धर्माश्रयवाचकात् कारकविभक्तयो भवन्ति। इति पर्युदासस्य = तद्भिन्नतत्सदृशस्य आश्रयणात् = स्वीकरणात् 'न दोषः = अत एव = लाघवात् पर्युदासाश्रयणादेव प्रसादे आस्ते, शयने आस्ते इत्यादौ प्रसादन = क्रियाधिकरणस्य ( प्रसीदान्ति जनाः, अस्मिन्नि ) अर्थस्य प्रसाद-

अनुक्त - तृतीया



यत्तु-समानकर्तृकयोरिति सूत्रात्समानकर्तृकत्वं क्त्वावाच्यम्। अन्यथा "ओदनं पक्त्वाऽहं भोक्ष्ये" इत्यत्र मयेति तृतीयाप्रसङ्गाच्च। नचाऽऽख्यातेन कर्तुरभिधानान्न सेतिवाच्यम्। भोजनक्रियाकर्तुरभिधानेऽपि पाकक्रियाकर्तुस्तद-भावात्। अनभिहिते भवतीति पर्युदासाश्रयणात्। अत एव प्रासादे आस्त इत्यत्र प्रसादनक्रियाधिकरणस्याभिधानेऽप्यस्तिक्रियाधिकरणस्यानभिधानात्सप्तमीति; तन्न सूत्रात्तस्य वाच्यत्वालाभात्। समानकर्तृकयोः क्रिययोः पूर्वकाले क्त्वेत्येव तदर्थात्। अन्यथा समानकर्तरीत्येव सूत्रन्यासः स्यात्। तृतीयापादनं त्वाख्यातार्थक्रियायाः प्रधानभूतायाः कर्तुरभिधानात्प्रधानानुरोधेन गुणे कार्य-प्रवृत्तेर्न संभवति।

नक्रियाधिकारणस्य उक्तेऽपि अस्तिक्रियानिरुपिताधिकरणस्य अनभिधाने = अनुक्तेऽपि सप्तमी। यतः यत्र तिङन्तक्रिया कृदन्तक्रिया च प्रसज्येते, तत्र तिङन्त क्रियायाः प्राधान्यम्। तेन अनभिहिताऽपि अप्रधानी भूता या कृत्प्र-कृत्यर्थंक्रिया = तन्निरूपिताधिकरणस्य उक्तेऽपि प्रधानीभूताक्रियाधिक-रणस्यानुक्तेसति सप्तमी जायते। तस्मात् = अतिप्रसङ्ग सम्भवात् = वक्ता-इत्यत्र समान कर्तृवाचित्वमावश्यकमिति यत्तूनां प्रश्नः तत्समाधीयते— केवलात् तस्य समानर्तृकत्वस्य लाभो न भविष्यति। यतः समानः = एकः कर्त्ता ययोः विशेषणःविशेष्यभावयोः क्रिययोः पूर्वकाले = प्रथमक्रियायां धातोःक्त्वा इति सूत्रस्यार्थः। एतेन समानः कर्ता न क्त्वाच्य इत्यायाति। अन्यथा = एतत्सूत्रस्यकर्तरिशक्तिरिति प्रत्यय वाचकवे 'समान कर्तरि क्त्वा' इत्येव सूत्रं वदेत्—किंसिद्धम् तत्र यत्तु, उवाच—तृतीयापादनं—तृतीयाः आपादनम् = आपापत्तिदानं यत्कृतं तस्येदं समाधानम्——आख्यातार्थेषु या प्रधानीभूताक्रिया तस्याः कर्तुरभिधानात् = यदि कर्ता उक्तस्तदा प्रधाना-नुरोधेन गुणे = अप्रधानीभूत स्त्रियां कार्यप्रकृत्तिः = द्वितीयादिःन सम्भति। आख्यातार्थाक्रिया प्रधानम् तेन कर्तुरभिधानं जायते। गौड़क्रिया कृदन्त-किया, अनुक्ता जायते। तथा च प्रधानाप्रधानयोः प्रधानेकार्य संप्रत्ययः। अतस्तृतीयाः आपत्तिर्न भविष्यति। इदमेवतात्पर्यमादाय उक्तञ्चेति वाक्य-प्रदीये-यत्र = वाक्ये प्रधानेतरयोः = मुख्यगौणयोः। क्रिययोः द्रव्यस्य = एकस्य कर्तुः (कारकस्य) द्रव्यं = कारकम्) शक्तिः = उक्तानुक्तशक्तिः पृथक्-पृथक् दृश्यते। तत्र गुणाश्रया——गुणे = अप्रधाने आश्रयो यस्या सा शक्ति, प्रधानं प्रधानं यामनुरुद्धयते। अर्थात् अप्रधानंक्रिया प्रधानक्रियारोधिनी भवति। यदि प्रधानक्रिया उक्तावर्तते तर्हि अप्रधानक्रिया शक्तिः उक्तैव भाव्या। यदि सा अनुक्ता तर्हि स्व उक्ताऽपि अनुक्ता। प्रधानविषया =

उक्तं च वाक्यपदीये—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते ॥ इति ।

किं चान्यथा कर्मणोऽपि क्त्वार्थतापत्तिः "पक्त्वौदनो मया भुज्यत" इत्यत्र द्वितीयायाः प्रकारान्तरेणावारणात्, इत्यास्तां विस्तरः ॥ १ ॥ ( ६० )

इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे क्त्वाद्यर्थनिर्णयः समाप्तः

---

प्रधानक्रिया विषयिणी शक्तिः प्रत्ययेन—धातोरुत्पन्नेत्यादिना अभिधीयते उक्ता इति निश्चीयते। यदि प्रधान विषया शक्तिरनुक्ता तदा साऽपि अनुक्ता ज्ञेया।

यथा—प्रासादे आस्ते' अत्र अधिकरणे घञबोधकता शक्तिसत्वे। अस्तिक्रियानिरूपिताशक्तिरनुक्ता वर्तते। अतः अनुक्तेऽधिकरणे सप्तमी। पक्त्वा ओदनोभुज्यते इत्यत्र अप्रधाना पचि क्रियानिरूपिताकर्मत्वशक्तिरनुक्ता वर्तते। परन्तु भुजिक्रियानिरूपिताकर्मत्वशक्तिरुक्ता वर्तते। प्रधानक्रियानुरोधेन उक्ते प्रथमा ओदनः इत्यत्र सिद्धयति क्त्वानिरूपितशक्ति

अन्यथा—प्रधानेतरयोरितिन्यायानङ्गीकारे। यथा क्त्वाप्रत्यय वाच्यः कर्ता एवं कर्म अपि वाच्यम् स्याते। तुल्यन्यायेन कर्म अपि क्त्वा प्रत्ययस्यार्थः स्यात्। मया ओदनः पक्त्वा भुज्यते द्वितीया केनापि प्रकारेण वारयितुमशक्यत्वात्—

अवजानासि मां यस्मात् अतस्ते न भविष्यति
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप स।

अत्र मत्प्रसूतिमनाराध्य ते प्रजा न भविष्यति, इत्यर्थात् विभिन्नकर्तृकादपि क्त्वा दर्शनात् समानकर्तृकत्वमयुक्तमिति वाच्यम्। एतादृश समानकर्तृकक्रियावाचकात् भावेऽपि क्त्वान्तप्रयोगस्तर्हि अन्वययोग्या प्रधानक्रिया च अध्याहार्या। 'स्थितस्य' इत्यध्याहार्यं व्याख्येयम्। एवं स्नात्वा कनखले पुनर्जन्म न विद्यते' प्रातःकालेशिवं दृष्ट्वा निशिपापं व्यपोहति। इत्यादवपि बोध्यम्।

श्री वै० भू० सारे प्राभाकरीटीकायां क्त्वाद्यर्थनिर्णयः ॥ १२ ॥

# ॥ अथ स्फोट निर्णयः ॥

**सिद्धान्त निष्कर्षमाह—**

**वाक्य स्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः ।**
**साधुशब्देऽन्तर्गता हि बोधकाः न तुत्स्मृताः ॥६१॥**

o

स्फोटसाधनं = व्याकरणम् । तत्र सिद्धाभूतनिष्कर्षस्य = निर्णीत-परिणामस्य वाक्यस्फोटरूपस्य च सिद्धिर्ब्रूते—

नैयायिक मीमांसकमतं खण्डिगितुमाह वाक्यस्फोट इति—आरोहक्रमेण आरभ्यमाणस्यास्य ग्रन्थस्यान्तिमो मुख्यः स्फोटसिद्धान्तः वास्यस्फोटेऽपेक्ष्य-माणानि प्रकरणानि साधुव्याख्यातानि । अवशिष्यते केवलं स्फोटप्रकरणम् परिशेषादत्र संगतिर्नापेक्ष्यते । वैयाकरणसिद्धान्ते स्फोट एव मुख्यो वाचक-शब्दः । स्फुटति = विकसति, शाब्दबोधविषयो भवति अर्थोऽनेनऽस्माद्वा । यत्रार्थो विकसति स स्फोट इत्युच्यते । न चाष्टौ स्फोटा इति अनुपदमेवोच्यते कथं वाक्यस्फोटमात्रमिति । तदाह—अतिनष्कर्ष इति अत्यन्तः—प्रमाणैः निर्णीतो निष्कर्षः = सक्षिप्तोऽर्थः । यद्वा अतिनिष्कर्षे = परमार्थे—परमार्थस्तु वाक्यस्फोट एवार्थवानिति वैयाकरणानां मतस्थितिः = सिद्धान्तव्यवस्था तिष्ठति = कूटवत् स्थिरावर्तते । तत्र माधुशब्दे = पचतीत्यादौ अन्तर्गताः = प्रकृतिः = पच् इति व्यङ्ग्यः, ति इति व्यङ्ग्यः स्फोटः ते = प्रकृति प्रत्ययादयः बोधकाः ज्ञापकाः, द्योतका, वाचकाः, सन्ति वा । तत्स्मृताः = तिवादिभिः स्मृताः = स्मर्यमाणाः लादयो न बोधका इति सिद्धान्तः ।

अवरोहण क्रमानुसारी ग्रन्थकार का अन्तिम मुख्य सिद्धान्त स्फोट है । उसका साधक धात्वर्थ लकारार्थ सुवर्थ न मार्थ शक्ति आदि अपेक्षमाण प्रकरण प्रस्तुत हो चुके हैं । स्फोट मात्र शेष होने से अन्य कोई सगति अपेक्षित नहीं हैं । इसलिए वैयाकरणों का सिद्धान्त भूत निष्कर्ष निरुपण करते हैं । स्फोट में ही मुख्य रूप से व्यावहारिक एवं पारमार्थिक बोधकता शक्ति शब्द में स्वीकृत है । जिससे अर्थ स्फुटित, विकसित कमल की तरह खिल जाय उसे स्फोटात्मक शब्द कहते हैं । मनुष्य शब्द के उच्चारण से म. ऊ. न, उ, ष, स, अ आदि वर्ण प्रथम क्षण में आविर्भूत द्वितीय क्षण में स्थित तृतीय क्षण में नष्ट क्रमानुसार संस्कार रूप से स्फोट आत्मा में स्थिर होते हैं । तब अर्थ स्फुटित होता है । पूर्व-पूर्व वर्णो के अनुभव जनित संस्कार से सञ्चित अन्तिम वर्ण अनुभव पर्यन्त स्मृत विषय होते हैं । परन्तु स्फोट अखण्ड निर्विकल्पक उपाधिशून्य

को जाति स्फोट भी कहते — स्फोटी शब्द से वर्ण का निकलना

यद्यपि वर्णस्फोटः पदस्फोटो ऽखण्डपदवाक्यस्फोटौ वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षाः सिद्धान्तसिद्धा इति वाक्यग्रहणमनर्थकं दुरर्थकं च, तथाऽपि वाक्यस्फोटातिरिक्तानामन्येषामवास्तवत्वबोधनाय तदुपादानम् ।

यद्यपि = स्फुटति = विकसति, प्रकाशते, ज्ञातो भवति, वाऽर्थोऽनेन अस्माद्वेति व्युत्पत्या अर्थविषयकोपस्थितिजनकशक्तिमतः शब्दस्य स्फोट पदव्यवहार्येण वर्णस्फोटशब्देन पदभिन्नो वाक्यभिन्नश्च यः प्रकृतिप्रत्ययादिरुपः तद्व्यङ्ग्यस्यैवग्रहणम् । भजतीत्यादौ तथा दर्शनात् तदेव तार्किकमतेऽपि । तन्मते शक्तं पदं प्रकृतिरपि शक्ता, प्रत्ययोऽपि शक्तः, तदेव व्याकरण सिद्धान्ते स्फोटपदव्यवहार्यम् । अत्र वर्णपदबोध्यंचरमवर्णाभिव्यक्तबोधो जायते । वर्णव्यक्ति, वर्णजातिभेदेन द्विविधोऽयम् । एकः प्रकृति प्रत्यादिभिः व्यङ्ग्यः । पुरुषः अपरः प्रकृति प्रत्ययादिगतजातिमात्रव्यङ्ग्यः यथा— इयं प्रकृतिः अयं प्रत्ययः इत्यदिषु एकाकारा प्रतीतिग्राहिका जातिः नित्याः । एवं यत्र सुबन्तेन तिङन्तेन तदादिघटितेन = अन्त्यवर्णेन च अभिव्यक्तिः अर्थबोधस्य प्रतीतिस्तत्र पदस्फोटव्यवहारः । स द्विविधः = स खण्डपदस्फोटः यत्र प्रकृति प्रत्ययाद्यर्थ भेदपुरःसरव्युत्पत्या बोधः यथा—वाहकः नायकः धावकः इत्यादौ । अखण्डपदस्फोटः = स च यत्र प्रकृतिप्रत्ययजन्यबोधो न दृश्यते किन्तु पदस्फोट मात्रेण बोधोऽस्ति सः यथामणि नूपुरादौ पदजतिस्फोटः = यत्र पदत्वजातिमात्रस्य बोधकता तत्र सः ।

वाक्यस्फोटः = यत्र सुवन्ततिङन्तपदजन्यपदार्थबोधपूर्वकचरमवर्णाभिव्यक्तोऽर्थस्तत्र सः । सोऽपि त्रिविधः = अखण्ड वाक्यस्फोटः = यत्र पदानांमर्थोपस्थितिर्नास्ति, अस्माच्छब्दादयमर्थो बोधव्यः इति विवेको नास्ति, किन्तु

होता है । जैसे निर्गुण ब्रह्म ( स्वां प्रकृतिमधिष्ठाय ) अपनी प्रकृति का आश्रय लेकर रूपवान भेदवान् होता है ऐसे ही स्फोट ब्रह्म की प्रकृति (भेदिका) ध्वनि है जिससे स्फोट के व्यग्य अर्थ को व्यजना वृत्ति से व्यक्त किया जाता है । ध्वनि के भेद से प्रकृति के भेद की तरह स्फोट भेद वाला हो जाता है उपाधि वर्ण भेद पद भेद वाक्य भेद विभिन्न रूप से स्फोटात्मा में कल्पित होते हैं । जब ध्वनि जन्य उपाधियां निरस्त होती हैं । तब स्फोट रूप पर ब्रह्म परावाक रूप मुख्य स्फोट सिद्धान्तित होता है ।

उक्त अभिप्राय से सिद्धान्त भूत निष्कर्ष वाक्य स्फोट की सिद्धि है । साधु शब्द "शृणोति कृष्णः" इत्यादि के अन्तगत तिप् और विसर्ग आदि प्रत्यय ( वर्ण स्फोट ) बोधक (वाचक) है । उनसे स्मृत स्थानी ल या सु वाचक नहीं होते ।

वाक्यश्रवणमात्रेण अर्थाः स्फुटन्ति ( विकसन्ति ) तत्र सः । यथा व्याकरण-बोधशून्यानां कर्तृकर्मकरणादिज्ञानरहितानां वाक्यतो बोधः । सखण्ड वाक्य-स्फोटः = यत्र वाक्यार्थबोधे पदार्थज्ञानस्य कारणत्वात् पदपदार्थज्ञानपुरःसरं बोधः, तत्र सः । वाक्यजातिस्फोटः = यत्र वाक्ये जातिमात्रं बुद्ध्यते । यथा— इदं वाक्यं, इदं वाक्यं इत्यादिषु एकाकारा प्रतीतिः ।

इति–इत्थं अष्टौ पक्षाः = भागाः सिद्धान्ते = शाब्दिकनये सिद्धाः = निर्णीताः । तर्हि कारिकायां केवलं वाक्यस्फोट इत्युच्चारणम् निष्प्रयोजनं, स्फोट इत्येव वक्तव्यत्वात्, अव्यावर्तकत्वाच्च अनर्थकम् = सम्भव व्यभि-चाराभ्यां स्याद् विशेषणमर्थवत्—

दुरर्थकश्च = उपाधिभेदेन भिन्नानां सप्तस्फोटानाम् संग्रहोऽपिदोषः दुष्ठः = दूरङ्गतोऽर्थ प्रयोजनं यस्य तत् = अन्येषांस्फोटानांम संग्रहरूपं दुरर्थकं बोध्यम् । तथापि = वाक्यस्फोटग्रहणेऽपि अन्येषां = वर्णस्फोटादिपञ्चानां वाक्यस्फोटातिरिक्तानां अवास्तवत्वबोधनाय = वाक्यस्फोटान्तर्गताः शास्त्र-प्रक्रियामात्रोपयोगिनः लोकेऽन्यवहार्या इति प्रतिपादनाय तदुपादानं = वाक्यस्फोटस्य ग्रहणम् । तत्र स्फोटत्वम् = स्फुटति = अभिव्यक्तोभवति अर्थो-ऽस्मात् इति व्युत्पत्या अर्थप्रकाशकत्वं तस्य प्रकाशश्च = ज्ञानम् तथाचार्थनिष्ठ विषयता निरुपकत्वं पर्यवस्यति । एतदेव = शास्त्रप्रक्रियामात्रोपयोगित्वम-वास्तवत्वध्वननाय । अन्येषामुपायभूतत्वं यथा शुद्धब्रह्मज्ञानाय अन्नमय-प्राणमय–मनोमय–विज्ञानमय–आनन्दमयकोशेषु पारमार्थिक ब्रह्मबोधनो-पायत्वम् । एवं उपायाः शिक्ष्यमाणानां बालानामुपलालनाः ।

असत्ये वर्तमनि स्थित्वा ततः सत्यं समीहते । एवं वाक्यस्फोटादन्ये उपायभूता, अपारमार्थिकाः, पारमार्थिकत्वन्तु वाक्यस्फोटस्यैव । ध्वन-यति = व्यञ्जयति, अतिनिष्कर्ष इति । अतिनिश्च्यूतपरिणामे वास्तविक

करिका में वाक्य स्फोट की ही स्मृति क्यों ? की गयी । क्योंकि आठ स्फोट हैं । १—प्रकृति प्रत्यय से अर्थ जहाँ खिले वहाँ वर्ण स्फोट होता है । पद से और वाक्य से अर्थ स्फुटित हो पद या वाक्य स्फोट कहते हैं । तीनों जाति रूप अर्थ स्फोट के भेद से अधिक हो जाते हैं, पद वाक्य मे अखण्ड सत्ता भी भाषित है । ये पक्ष अपने वैया-करण सिद्धान्त सिद्ध माने गये हैं । इसलिये वाक्य ग्रहण पूर्णतया अभिप्रेत अर्थ का ग्राहक नहीं है, दुरर्थक = संकीर्ण विचार का प्रस्तावक है वे अवास्तविक हैं । वाक्य स्फोट ही वास्तविक है । इसी तत्व को समझाने के लिए वाक्य का ग्रहण किया गया । इसी को ध्वनित करते हैं । कि अतिनिष्कर्ष इति । महा वैयाकरण महाभाष्यकार

**एतदेव ध्वनयन्नाह—अतिनिष्कर्षं इति । मतस्थितिर्वैयाकरणानां महाभाष्यकारादीनाम् । तत्र क्रमेण सर्वांस्तान्निरूपयन्वर्णस्फोटः प्रथमसाह— साधुशब्द इति । साधुशब्दानन्तर्गता वाचका न वेति विप्रतिपत्तिः ।**

o

सिद्धान्ते वैयाकरणानां महाभाष्यकारादीनां मतस्थितिः=सिद्धान्तसिद्धमर्यादा, व्यापकबोधश्च । तत्र=अष्टासु स्फोटेषु क्रमेण=यथासंख्यं सर्वान्=सम्पूर्णान् तान्=स्फोटान् निरुपयन्=बोधयन् प्रथमोपस्थितत्वात् आदौ वर्णस्फोटं ब्रूते विवृणोति वा । अत्र वर्णपदेन प्रकृतिप्रत्ययरूपोवर्णो गृह्यते नतु चतटप इत्यादिः । यतः प्रकृति प्रत्यय विशिष्टसमुदायः पदम् । पदसमुदायो वाक्यम् । प्रकृतिप्रत्ययाः स्थानिरूपाः, आदेशस्वरूपा वा भवन्तु इति विचारणायां साधुशब्दस्य प्रस्तुतत्वात् आह साधुशब्द इति कारिकायाः उत्तरार्धांशं विवृणोति वर्णस्फोटमारभ्यत इत्यर्थः । साधुशब्देषु=पचतीत्यादिषु अन्तर्गताः=प्रविष्टाः तिवादयः अननार्गता साधुशब्देषु अप्रविष्टाः लादयः वाचकाः बोधकाः न वा इति विप्रति पत्तिः=संशयजनकं वाक्यं परस्पर विरुद्धधर्मविशेषणकं एकधर्मिकं ज्ञानं विप्रतिपत्तिः यथा स्थाणुर्वा पुरुषोंवेति । स्थाणुत्वं पुरुषत्वमिति परस्परविरुद्धो धर्मः तत्र परस्परविरुद्ध धर्म प्रकारकं ज्ञानं जातम् । अतएवात्र संशय इति । वस्तुतः साधारणधर्मावगाहि, विशेषधर्मावगाहि किञ्चिदिदर्मिति ज्ञानमेव संशयः । अतएव विशेषापेक्षोविमर्शः संशयः । व्याघातः, असहभावः, विप्रतिपत्तिः, संशयः, आत्मा विभुर्वा अणुर्वा इति विरुद्धधर्मज्ञानात् संशयो जायते । विरुद्धा या प्रतिपत्तिः एकधर्मिकः विरुद्धधर्म विशेषणकंमिति ।

कारिकायाः उत्तरार्धभागेन स्वमतं ससाधयति साधुशब्देष्वन्तर्गता प्रकृति प्रत्ययादयो वाचका इति सिद्धान्तः । विप्रतिपत्तौ (सन्देहे) तु अनन्तर्गताः=अप्रविष्टाः लादयः वाचका न वा कः वाचकः इति प्रश्नः । नैयायिकमते साधुशब्देषु विद्यमानेन तिबादिना स्मारितानां लकारादीनां वाचकत्वम् । ते

आदि का यह स्थिर सिद्धान्त तथा व्यवस्था हैं । क्रमशः इन्हीं सबों का निरूपण करते हैं । प्रथम—वर्ण स्फोट जो प्रकृति प्रत्यय के अर्थ का स्फोटक है, स्वर व्यजन मात्र गृहीत नहीं होता उसे वर्ण स्फोट कहते हैं । प्रकृति प्रत्यय विशिष्ट समुदाय पद है, पद समुदाय वाक्य है । कारिका के उत्तरार्ध से मतान्तर निरसन पूर्वक वर्ण स्फोट आरम्भ करते हैं साधु शब्दों के अन्तर्गत तिप् बिसर्ग आदि बोधक हैं या नहीं, ऐसी विप्रतिपत्ति—विरुद्ध ज्ञान या शंसय । अथवा साधु शब्द के अनन्तरगत लकारादि बाचक हैं या नहीं इस सन्देह पर लकारादि बाचक हैं ।

**विधिकोटिरन्येषां नेति वैयाकरणनाम्। साधुशब्दे पचति राम इतिं प्रयुज्मानेऽन्तर्गतास्तिब्विसर्गादय एव बोधका वाचकास्तेषामेव शक्तत्वस्य प्राग्व्यवस्थापितत्वान्न तु तैः स्मृता लादयः स्वादयश्चेत्यर्थं ॥१॥ (६१)**

o

लादयः स्थानिरूपाः। वैयाकरणमते आदेशरूपतिब्विसर्गादयः वाचकाः। विप्रतिपत्तिस्तु कः वाचकः इति शंसय रूपः। साधुशब्देषु लादयो न वाचकाः किन्तु "पचति रामः' इत्यादि प्रयुज्यमानपदेषु तिब्विसर्गादयः वाचका इति शाब्दिकानां सिद्धान्तः। स्मृताः लादयः वाचका = इति विधिकोटिः अन्येषां–नैयायिकादिनां, विधिः–विधानम्। कोटिः–पक्षः। एकस्मिन्नधिकरणे विरुद्ध धर्मश्चेत् पक्ष इत्युच्यते यथा "अस्ति आत्मा" "नास्ति आत्मा' एकत्र-आत्मनः सत्ता प्रतीयते। अन्यत्र सत्तायाः अभावरूपात्मा प्रतीयते। नानाधिकरणेषु विरुद्धो धर्मश्चेत् स न पक्षः। यथा–आत्मानित्यः बुद्धिरनित्या। अत्र नानाधिकरणेषु सत्वात् विरुद्धत्वे–च नायं पक्षः, किन्तु सिद्धान्त एव। यत्र एकस्मिन्नात्मनि विरुद्धधर्मसत्ताया अभावस्य च प्रतीतौ—संशयः। एवं लकारादयः स्मृति विषयत्वेन वाचकाः—इति नैयायिकानां सिद्धान्तः। तन्मते साक्षात्वाचकत्वं लकारे वर्त्तते। वैयाकरण मते तु स्मृतेषु लादिषु वाचकत्वं नास्ति। अत आह नेति वैयाकरणानामिति = ये स्मृतास्ते वाचकत्वाभाववन्तः। एतेन निषेधकोटिः शाब्दिकानामिति। पचति रामः इत्यादौ तिप् विसर्गादिषु मुख्यं वाचकत्वं विधिः। एतदेव विशदयति साधुशब्द इति—व्याकरण नियमानुशासितेषु शब्देषु प्रयुज्यमाने = विधीयमानेषु अन्तर्गताः = प्रयोगप्रविष्टाः प्रत्ययादयः बोधकाः = शाक्तत्वेनशक्त्याश्रयत्वेन वाचकाः। तस्यैव = तिवादयो आदेशा एव बोधकाः इत्यस्यैव शाक्तत्वस्य = शक्त्याश्रयत्वस्य वाचकत्वस्य प्राक् = पूर्वप्रकरणे शक्तिनिरुपणे व्यवस्थापितत्वात् = प्रमाणैः वस्तु तत्वावधारणं व्यवस्था। सा संजाताऽस्येति तत्वात् इन्द्रियाणां = विषयप्रत्यक्षसाधनानां चक्षुरादीनां स्वविषयेषु रूपरसगन्धस्पर्शादिषु यथा अनादिकलिकी योग्यतारूपा शक्तिः, इन्द्रियेषु विषयग्रहणकारणता एवं शब्देषु अर्थ ग्रहणे बोधकारणता योग्यतारूपा सैवशक्तिः। नतु = बोधकतारूपा शक्तिः पदार्थान्तरे = स्मृत लकारादौ न तिष्ठति। किन्तु

**यह विधि कोटि नैयायिकों का है वैयाकरण लकारादि को वाचक नहीं मानते अर्थात् पठति रामः ये साधु शब्द हैं। इनमें प्रयुज्यमान और अन्तर्गत तिप् विसर्ग आदि ही स्वार्थ के वाचक हैं। वही बोधक हैं। उन्हीं को ही समर्थ पहले व्यवस्थित किया गया है उनसे स्मृत लकारादि और स्वादि शक्त और समर्थ नहीं हैं (६१)**

कुछ लोग - तिप् और विसर्ग, आदेश आदि वाचक नहीं होते।

ये—तु प्रयोगान्तर्गतास्तिबादयो न वाचकास्तेषां बहुत्वेन शक्त्यानन्त्यापत्तेः। एधांचक्रे ब्रह्मेत्यादावादेशभूतलुगादेरभावरूपस्य बोधकत्वासंभवाच्च, किन्तु तैः स्मृता लकाराः स्वादयश्च वाचकाः। लत्वस्य जातिरूपतया शक्ततावच्छेदकत्वौचित्यात्, अव्यभिचाराच्च। आदेशानां भिन्नतया परस्परव्यभिचरित्वात्। "लः कर्मणि" इत्याद्यनुशासनानुगुण्याच्च। न ह्यादेशेष्वर्थबोधकमनुशासनमुपलभामह इत्याहुः।

०

उच्चारितः शब्दो बोधकः। एवमनुच्चारितेषु लकारादिषु बोधकत्वाभावो सिद्धः। तेन लादिषु शक्त्यमावोऽपि सिद्धः। एवं तैः=आदेशैः स्मृताः= ध्यानपथमागताः लादयः विसर्गादि स्थानिकाः स्वादश्च न वाचकाः।

नैयायिकाभिमतं स्मृतानां वाचकत्वं दूषयितुमाह येतु—दर्शनान्तरीयाः प्रयोगेषु=व्याकरण नियमानुशासितेषु अन्तर्गता=संप्रविष्टाः उच्चरिताः तिप् विसर्गादयो न वाचकाः। तिवादीनां वाचकत्वाभावे प्रमाणं प्रस्तुवन्ति। तेषामिति—विपक्षिणो ब्रूवन्ति यत् तिवादीनां बहुत्वेन=बहुसंख्याकत्वेन शक्त्यानन्त्यापत्तेः-न अन्तो यस्यासावनन्तः तस्यभावः आनन्त्यम्। एतच्च लादेशापेक्षया आनन्त्यम् बोधयम्। लकारे शक्तौ तु लकाराणाभनेकत्वेऽपि शक्ततावच्छेदकत्वं=लत्वं शब्दत्वमेकमेव ततश्शक्तिरप्येकैव। यद्यपि एधाञ्चक्रे इत्यादौ आदेशः=लुक्रूपः अभावरूपश्च तेनार्थबोधोऽसंभवः यतः वै० मते उच्चारितः शब्दो बोधकः। श्रूयमाणे शब्दे बोधकता सुनिश्चिता। यद्येवं तर्हि ब्रह्मपदोत्तरसोर्लुक् सोऽपि अभावरूपादेशः। तत्रापि

जो नैयायिक प्रयोग में आसक्त—घटित तिप् विसर्ग को वाचक नहीं मानते। क्योंकि उनकी संख्या बहुत है तिप् तस झि आदि, सु-औ-जस, आदि में शक्ति के अनन्त होने की सम्भावना से गौरव होगा ल् में शक्ति लाघवकरी होगी, उसका धम लत्व एक ही होगा। आदेश की बाचकता में धर्म और शक्ति का अधिकार हो जायेगा और भी एधाञ्चक्रे में लकार ब्रह्म में सु का लोप हुआ है। आदेश का भी लुक्, जो अभाव रूप है उनका बोध असम्भव होगा इस लिए तिप् विसर्ग से स्मृत लकार और स्वादिक को बाचक माने। लत्व जाति रूप है, ऐसे धर्म में शक्ततावच्छेदक होना उचित है। इस प्रकार बाचक का धर्म लत्व जाति रूप होने से लाघव स्पष्ट है कोई व्यभिचार भी नहीं हैं क्योंकि स्थानी लकार ही होगा। वह अव्यभिचरित है। एक है। आदेश तो अनेक हैं परस्पर में व्यभिचरित भी है। 'लः कर्मणि' इत्यादि सूत्र के कर्ता अर्थ में लकार के अनुसासन से अनुकूलता भी सिद्ध है आदेशों में अर्थ का बोधक कोई अनुशासन हमें नहीं मिलता ऐसा नैयायिकों ने कहा।

वोधकता न सम्भवति, श्रवणाऽभावात्। एवं आदिना नक्षत्रेण युक्तः कालः तिष्यः पुण्यनक्षत्रेन युक्तः कालः पुष्यः इत्यादौ कालार्थकस्याणो लुकि सति ततः कालस्यबोधो न जायेत् विववादीनां सर्वापहारिलोपेऽपि तथा ज्ञेयम्। एवं तिवादयो न वाचकाः इति सिद्धयति। किन्तु तैः=आदेशैः स्मृताः=ये लकारादयः स्वादयश्च स्थानिनस्ते वाचका—बोधका इत्यर्थः।

नैयायिकानामयमाशयो यत् दशसु लकारेषु अनुगतरूपेण भासमाना जातिः एकैव तदाह लत्वस्येति=लत्वरूपाजातिः सर्वस्मिन् लकारे तिष्ठति तत्र शक्यतावच्छेकत्वे=लत्वे लाधवम्। अव्यभिचाराच्च-परपरं व्यभिचार-दोषो नास्ति। आदेशः शक्त्याश्रयश्चेत् तिपि तसि ततः झौ च एवं प्रत्ये-कस्मिन् व्यभिचार सम्भवात्। नै० मते तु स्मृतो लकारः एकोऽनुगतश्च तत्रैव कल्प्यमानो धर्मः। लत्वादिघटितलकारे स्वीकारात् कमलादि-लकारेऽदोषात्। तेन अन्यूनानतिरिक्तोधर्मः शक्ततावच्छेदक इति न्यायः संगच्छते। लत्वस्य=लत्वजातेः शक्ततावच्छेदकत्वं=शब्दार्थव्यावर्तकत्वं सिद्धम्। जातौ प्रमाणं सरुपसूत्रस्थं भाष्यम्—कथं पुनर्ज्ञायते ज्ञायते एकाकृतिरिति ?

आक्रियते व्यावर्त्यंते या साऽऽकृतिर्जातिः। उत्तरं प्रख्याऽविशेषादिति। प्रख्या—बुद्धिः तस्या अविशेष=एकरूपता। भिन्न-भिन्न व्यक्तीनामवगाहिनी समानरूपेण प्रतीयमाना बुद्धिः। अयन्नरः अयन्नर इत्यादि प्रतीतिरूपा। बुद्धावेकाजातिरेव समानरूपेण अनुगम्यते अतएव लत्व जातिः सर्वस्मिल्ल-त्वादि घटक लकारे एकरूपेण जातिः विषयतया प्रतीयते। 'समानप्रसवा-त्मिका जाति' इति वदता गौतमेनापि समानः—समानाकाररूपेण प्रसवः—आत्मनः प्रतीतिः यस्या सा जातिः। अनुगत प्रतीतिसाधिका केचन् नैया-यिकाः कारणतावच्छेदिका=कार्यतावच्छेदका वा जातिः। सा शक्यता-वच्छेदिका, तत्र लाघवमपि। कश्चन व्यभिचारोऽपि न दृश्यते। आदेशा-नाम्—तिब्विसर्गादीनां विभिन्नतया—अनेकरूपतया परस्पर व्यभिचरित-त्वात्—व्यभिचार स्वरूपं तु यत्रैकं कार्यं तत्कारणञ्चानेकं तत्रैकस्मात्कार-णात् कार्यसिद्धौ कार्यानन्तरे कारणानन्तरस्य व्यभिचारः। यदि तु कार्य-स्यापि प्रतिकारणं भिन्नं तदा व्यभिचाराभावः। नैयायिका ब्रुवन्ति लकारादयो वाचका इति—तन्मतन्तु पाणिनिसूत्रेणापि समर्थ्यते। यथा—"लः कर्मणि चा भावे चाकर्मकेभ्यः" इत्याद्यनु—शासनम्—कर्मणि कर्त्तरि लकार विधानं मम सिद्धान्तस्य—आनुगुण्यं आनुकुल्यमेतेन—स्थानिनासर्था-नुशासनं प्रमाणितम्। अत्रेनलत्वस्य शक्यता वच्छेदकत्वे पाणिनिसम्मतिः

तान् स्वसाधकयुक्तिभिर्निराचष्टे—

व्यवस्थितेर्व्यवहृतेस्तद्धेतुन्यायतस्तथा ।
किं चाऽऽख्यातेन शत्र्ाद्यैर्लंडेव स्मार्यते यदि ॥२॥
कथं कर्तुरवाच्यत्ववाच्यत्वे तद्विभावय । (६२)

व्यवस्थानुरोधात्प्रयोगान्तर्गता एव वाचका न तत्स्मृता इत्यर्थः । तथा हि, पचतीत्यादौ लकारमविदुषो बोधान्न तस्य वाचकत्वम् ।

०

सूचिताः आदेशेषु—तिबादिषु अर्थवत्ताबोधकम्—आदेशानामर्थं बोधनानुशासकं किमपि पाणिणिसूत्रं नोपलभामह इत्याहुः नैयायिकाः ।

तान्—नैयायिकादीन् प्रति स्वसाधक युक्तिभिः—स्वकीयं प्रयोगेषु श्रूयमाणानामादेशानामिति स तं युक्त्या-समर्थयन् विरुद्ध मतं निराचष्टे—खण्डयति । व्यवस्थितेरिति—व्यवस्थानुरोधात्, व्यवहृते—व्यवहारानुरोधात्, तद्धेतु न्यायात् साधु शब्दानन्तर्गताः वाचकाः । न तु तत्स्मृता स्थानिनो लादयः इति दर्शयन्नादौ व्यवस्थितेरिति ब्रवीति—प्रमाणेन-पदार्थ निर्धारणं व्यवस्था तां विवृणोति—तथाहि—पचतीत्यादौ लकारमविदुषः—अजानतो बोधात् न तस्य—स्थानिनो लकारस्य वाचकता । यतः शाब्दबोधे वृत्ति विशिष्टज्ञानं कारणम् । वृत्तिज्ञानञ्च तद् विषयक उद्बुद्ध संस्कारः, उच्चारित पदश्रवणं—स्मरणात्मकं वृत्ति ज्ञानमाश्यकम् । तज्ज्ञानमनुच्चारित लकारे न सम्भवति । यतः लकारमवजानतः तिवादिकञ्च श्रृण्वतोवैयाकरणस्यापि बोधो जायते । एतेनान्वय व्यतिरेकाम्यां तिबाद्यादेशानामेव वाचकत्वम् ।

नैयायिकों की उन उक्तियों को अपने सिद्धान्त के साधक युक्तियों से निरस्त करते हैं व्यवस्थितेरिति—व्यवस्था व्यवहार का कारणीभूतन्याय शक्ति आदि और आख्यात से लट् यदि स्मृत हो जाय तो कर्त्ता का उक्त या अनुक्त व्यवहार कैसे हो सकता है ।

व्याख्या—व्यवस्था के अनुरोध से प्रयोग में तिप् आदि प्रत्यय बाचक होते हैं । उन आदेशों सें स्मृत स्थानी लकारादि बाचक नहीं होते । जैसे पचति इत्यादि में लकार को न जानने वाला व्यक्ति भी अर्थ समझता है अतः लकार बाचक नहीं होता । न कहिये कि उनका लिङ् में शक्ति के भ्रम से बोध हो जायेगा परन्तु लकार में ति का भ्रम होने में कोई प्रमाण नहीं है । यदि आदेशों—स्थानी में वाचकता शक्ति मानते हैं तो भिन्न-भिन्न वैयाकरणों नें अपनी इच्छा से भिन्न-भिन्न स्थानी की कल्पना किये हैं जब स्थानी भी भिन्न-भिन्न है और आदेश भी तो कौन समर्थ हैं कौन नहीं ?

भ्रम में प्रमाण नहीं है

**न च तेषां तिङ्क्षु शक्तिभ्रमाद् बोधः, तस्य भ्रमत्वे मानाभावात् आदेशिनामपि तत्त द्वैयाकरणैः स्वेच्छया छिन्नभिन्नाना मभ्युपगमात्कः शक्तः को नेति व्यवस्थानापत्तेश्च। सर्वेषां शक्तत्वे गौरवं व्यभिचारश्चास्त्येव। आदेशानां प्रयोगान्तर्गततया नियतत्वाद् युक्तं तेषां शक्तत्वम्। तथा चाऽऽदेशिस्मरणकल्पना नेति लाघवम्।**

o

न च तेषां लकारमजानतां तिङ्क्षु—आदेशेषु शक्तिभ्रमात्—लकार निष्ठ वाचकतायास्तत्र--आरोपात् बोध इति वक्तुं शक्यते तन्न, तस्य-शक्ति भ्रमत्वस्य तिङि शक्तिमत्व ज्ञानस्य भ्रमत्वे प्रमाणाभावात्। बोधोत्तरकाले तिङ् पदं न कृतिबोधकं भ्रमत्वे बाधकज्ञानं कारणम्, बाधकत्वे प्रमाणाभावः 'पचति राम' इत्यादावुच्चारितः शब्दः प्रत्यायको भवतीति व्यवस्था। तदनु-रोधात् आदेशाः तिबादयो वाचका अनुच्चारितो लकारादिः न वाचक इति सर्वैर्ज्ञायते। अतः शक्तिभ्रमाद्बोधः इति वक्तुं न शक्यते तन्न, किमपि न प्रमाणम्। नन्वादेशाः बहवः सन्ति तेषां बाहुल्येन तिङादिषु शक्तिमत्वं लभ्यते। यद्येवं तर्हि आदेशिनाम्—स्थानिनामपि भिन्नत्वं बाहुल्यञ्च दृश्यते। यतः ततद्वैयाकरणैः—शाकटायनापिशलायनस्फोटायनादिभिः वैयाकरणैः स्वेच्छया लाघवेन प्रक्रियानिर्वाहार्थंविभिन्नानां स्थानिनां कल्पनया लट् लिट् इतिवत् कड् किट् खड़ खिट् इत्यादि रूपेण स्थानिन उक्तवन्तः। तत्र यथा ककारादयो न वाचकाः, एवं लकारादयोऽपि न वाचकाः। यथा—आदेशानां भेदे गौरवं तथा—स्थानिनामपि भेदे गौरवम्। कः शक्तः को न शक्त इति व्यवस्था न सिद्ध्यति। सर्वेषु शक्ति स्वीकारे व्यभिचारः समापतति। अष्टादश तिपः शतृशानचौ द्वाविंशति लादेशाः सर्वत्र वाचकत्व कल्पने गौरवम्। व्यभिचारश्च इति—यथा बहूनां तिबाद्यया-देशानां--वाचकत्वे गौरवं तथा तव मते बहुनां स्थानिनाऽमपि वाचकत्वे गौरवम्। न च स्थानिनां वाचकत्वमा—देशानां वेत्यत्रैकतर पक्षपातिनी युक्ति र्नास्ति तदाह आदेशानामिति—आदेशाः तिब्विसर्गादयः प्रयोगेष्वन्त-र्गताः—प्रविष्ठाः सन्ति। नियताश्च तेषां—शक्तत्वं शक्त्याश्रयत्वं युक्तम्। तथा च—आदेशाां व्यापक रूपेणोपस्थितत्वादेव—आदेशिनां स्मरण कल्पना-ऽपि न क्रियत—इति महल्लाघवम्।

**इसकी व्यवस्था खटाई में पड़ जायेगी। यदि दोनों या सभी को समर्थ मानें तो गौरव होगा। व्यभिचार भी। आदेशों के प्रयोग में प्रविष्ट होने के कारण नियत स्थित है इसलिए उनका बाचक-शक्त, समर्थ, होना उचित है स्थानी के स्मरण की कल्पना भी नहीं करनी पड़ती, यह भी लाघव है। इससे आदेशों का बाचक होना सिद्ध होता है।**

शक्तिग्रहण में व्यवहार मुख्य होता है

साधकान्तरमाह—व्यहृतेरिति। व्यवहारस्तावच्छक्तिग्राहकेषु मुख्यः। स च श्रूयमाणतिङादिष्वेवेति त एव वाचका इत्यर्थः किं च—तद्धे तुन्यायत इति। लकारस्य बोधकत्वे 'भू-ल' इत्यतोऽपि बोधः स्यात्। तादृशे बोधे भवतीति समभिव्याहारोऽपि कारणमिति चेत्तर्ह्यावश्यकत्वादस्तु तादृशसमभिव्याहारस्यैव वाचकत्वशक्तिः। अन्यथा लकारस्य वाचकत्वं समभिव्याहारस्य कारणत्वं चेत्युभयं कल्प्यमिति गौरवं स्यात्। तच्च तादृशसमभिव्याहारः समभिव्याहृता वर्णा वेत्यत्र विनिगमकाभावात् प्रयोन्तर्गता वर्णा वाचकाः इति सिध्यतीति भावः।

भवति के साथ 'भू-ल' आ जाये तो अर्थ प्रकट होगा।

o

ननु वोधकता रूपाशक्तिः तिङ्क्षु सिद्धयति। यद्यपि स्थानि स्मरणरूप कल्पनायां गौरवं वर्त्तते न दोषावहमत आह व्यवहृतेरिति—आदेशानां वाचकत्वे व्यवहारो मुख्यः व्यवहृतिः शास्त्रं विनाऽपि शाब्द बोध प्रतिपति व्हारः।

"शक्ति ग्रहं व्याकरणोप मान, कोशाप्त वाक्याद् व्यवहार तश्च।

वाक्यस्य शेषात् विवृतेर्वदन्ति। सांनिध्यतः सिद्धपदस्य वृद्धा।"

इति प्रामाणिकोक्तेः व्यवहार एव शक्तिग्राहकशिरोमणिः कश्चन प्रेरको वृद्धः स्व शिष्यं प्रेरयति लेखनीं कार्गलञ्चानयेति। आज्ञाप्य वृद्धे-

दूसरा साधक व्यवहृते—किसी भी शब्द के शक्ति ज्ञान में व्यवहार मुख्य कारण होता है। वह व्यवहार प्रमाण शब्द तिबादि में ही देखा जाता है अतः आदेश ही बाचक हैं।

तत–तिप् आदि, उसका हेतु ल आदि कारणता सम्बन्ध से न्याय द्वारा प्रथम उपस्थित होता है इसलिए लकार को बोधक मानेंगे तो 'भू-ल' इससे भी बोध होने लगेगा ऐसे बोध में यदि तिप समभिव्याहार—अव्यवहित उपस्थितिः को यदि कारण मानें तो वैसा कारण आवश्यक है। तो समभिव्यवहार को ही क्यों न वाचक ओर शक्तिज्ञान माना जाय। इससे सिद्ध होता है कि तिप् के रहने पर कर्त्ता अर्थ का बोध होता है; न रहने पर नहीं। अर्थ बोध जनकता शक्ति तिबादिक में न्यायतः उपलब्ध है अन्यथालकार में ही बाचकता स्वीकार करने पर समभिव्याहार को भी कारण मानना दोनों की कल्पना में गौरव होगा तथापि उस प्रकार के समभिव्याहार में कोई पक्ष पातिनी युक्ति न होने से प्रयोग में स्पष्ट बर्ण ही बाचक सिद्ध होते हैं।

नानोयेते। तेन पश्यन् कश्चन बालकः इयं लेखनीदं कर्गलमिति शब्द जन्यं ज्ञानं शास्त्रं विनाऽपि व्यवहारात्करोति। एवमेव पचति राम इत्यादौ कर्त्रर्थेऽस्य प्रतीतिः व्यवहाराज्जायते। व्यवहारात् शक्ति ज्ञानञ्च श्रूयमाणेषु— उच्चारितेषु तिङादिष्वेव—आदेशेष्वेव तिबाद्यादेशाः—एव वाचकाः = वोधका इत्यर्थः ननु व्यवहारेण वाक्येष्वेव शक्तिग्रहः प्रथमं संभवः तथाऽपि अनुशासनं स्थानिष्वर्थं वोधयति। तेन स्थानिनामेव वोधकता अत आह— किञ्च तद्धेतुन्यायादिति तस्य कारणीभूतस्य हेतुस्तद्धेतुः स चासौ न्यायश्च। न्यायस्तु स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति रूपः लाधव मूलकोऽयं न्यायः। अत्र तस्य—आदेशस्य वोधकत्वे हेतुः कारणम्। यतः तिप्ति-सर्गादि निष्ठांल्लोके प्रसिद्धां वोधकताशक्तिमादाय शसादिविधानवत्। तिब्वादौ वास्तविकी शक्तिः लकारे तु काल्पनिकी।

न च लकारोऽपि वाचकश्चेत् को—दोषः तदाह—लकारस्येति तस्य वाचकत्वे भू+ल इत्यादौ तिबादिना स्मृतस्य लकारस्य बोधकत्वे प्रत्यक्ष श्रुतस्य लकारस्य बोधकत्वं सुतरां सिद्धम्। तेन भू+ल इत्यनेनापि बोधः स्यात्—कर्त्राद्यर्थ वोध आपद्यते तादृश वोधे—भू+ल इत्यत्रैक कर्तृक वर्त्तमानकालिक कृत्यनुकूल व्यापार विषयक वोधो भवतीत्यस्य समभिव्याहारोऽपि—अभ्यहितस्योपस्थितिः, नियमः पूर्वाऽपरि भावश्च। कारणमिति चेत् यदि भवतीत्यस्य समभिव्याहारः पूर्वापरि पावापन्न वर्ण समुदाय आवश्यकश्चेतस्यां स्थितौ यस्मिल्लकारे वोधकत्वस्यापत्ति संभावनया भवतीति समभिव्याहारस्य वाचकतां मन्यसे तर्हि तादृश समभिव्याहारे वांचकत्व शक्तिः कल्पनीया, न तु लकारे वोधजनकता शक्तिः समभिव्याहृतस्य वाचकत्वे साधनम्। अन्यथा तिबाद्यादेशानां समभिव्याहारस्य वाचकता नङ्गीकारे गौरवं दीयते। तच्च लकारस्य बोधकत्वं समभिव्याहारस्य पूर्वापरि समभिव्याहारस्य कारणत्वं—हेतुर्वामिति उभयोः कल्पने गौरवम्।

ननु पूर्वंपरि भावविशिष्टाः वर्णाः वाचका इति सिद्धं, न तु साधु प्रयोगान्तर्गताः वर्णाः वोधका इति।

तदाह—तथाचेति तादृश समभिव्याहृताः वर्णाः वाचका आदेशाः वा वाचका इत्यत्र विनिगमना विरहात्—द्वयोः पक्षयोर्मध्ये एकस्यैव पक्षस्य साधिकायुक्तिः विनिगमना अस्यामवस्थायां प्रयोगें प्रविष्टाः वर्णाः वाचका इति सिद्धयति।

**अपि च लकारस्यैव वाचकत्वे कृत्त्वे कृत्तिङोः कर्तृभावनावाचकव्यवस्था त्वत्सिद्धान्तसिद्धा न स्यादित्याशयेनाऽऽह—आदेशानां वाचकत्वे तिङ्त्वेन भावनायां, मानत्वादिनाकर्तरि शक्तिरित्युपपद्यते विभाग इति भावः। न च शानजादौ कृतिर्लकारार्थं आश्रयः शानजर्थ इत्यस्तु 'कर्तरि कृत' इत्यनुशासनादित्याशङ्क्यम्, स्थान्यर्थेन निराकाङ्क्षतया शानजादौ "कर्तरि" इत्यस्याप्रवृत्तेः। अन्यथा घञादावपि प्रवर्तेत ॥ ६२ ॥**

नै० नन्वादेशै स्मारितानां स्थानिनां वाचकत्वे लः कर्मणीत्यनुशासनमुपलभ्यते। आदेशानां वाचकत्वसाधकं शास्त्रं नोपलभ्यते। अथवा स्थान्यर्थाभिधान समर्थस्यैवादेशता स्थानिनोलकारस्य कृतिरर्थः तदर्थाभिधाने समर्थतिब्बोधकः, लकारगत शक्तिज्ञानोपायेन शाब्दबोधे हेतुता—आदेशेषु शक्ति कल्पने मानाभावः। तेन तद्धेतुन्यायस्याप्यवसरो न भवितुमर्हति। अत आह—अपिचेति लकारस्यैव वाचकत्वे कृत्तिङो—कृत् कर्त्ता कारकं तिङ्—'पठतीत्यादि लकारो यदि वाचकस्तर्हि तव मते कृत् प्रत्यायानां ण्वुलतृज्शानजादीनां :"कर्त्ता" इत्यर्थो न भवति। एवं ति प्रत्ययस्य भावना इत्यर्थो न भविष्यति कर्तृ भावनयोः=वाचकत्व व्यवस्था त्वत्सिद्धान्ते नैयायिक मीमांसक सिद्धान्ते सिद्धाः-निष्पन्ना न स्यात्। नैयायिक मते तिङ्: कृतिरित्यर्थः भावना पदञ्च कृत्यर्थकम्। आदेशैः शतृशानजादिभि; स्मारितौलकारो यत्नाश्रय रूपस्य कर्त्तुबोधकः। तिङा स्मारितस्य लकारस्य यत्नार्थ बोधकत्वमिति तव मते व्यवस्था न सिद्धयति। यतः अनुशासेन कृतावेव लकारस्य शक्तिबुध्यते न तु तिङि, लोके व्यवहारस्तु पचतीत्यस्यैव भवति। न तु "पच्=ल्" इत्यस्य अत आह किञ्चेति—

और भी लकार की ही बाचकता पक्ष में कृत और तिङ प्रत्ययों से कर्त्ता और भावना की बाचकता की व्यवस्था तुम्हारे सिद्धान्त से सिद्ध नहीं होगा अतः किञ्चेति।

आदेशों को बाचक मानने पर तिङ्त्व विशेषणी भूतब्यापार (भावना) शानज आदि प्रत्ययों से कर्त्ता में शक्ति उपस्थित है यह विभाग भी है। नैयायिक कहते हैं कि कृतित्व लकारार्थ है वही शानजर्थ भी होगा। जो कृति का आश्रय है कर्तरिकृत इस सूत्र के अनुशासन से उक्त व्यवस्था क्यों नहीं होगी। समाधाने—स्थानी के अर्थ विधान में समर्थ भी आदेश होता है इस न्याय से शानज आदि कृति अर्थ में निराकाङ्क्ष है उनका कर्तरि अर्थ में प्रवृत्ति नहीं होगी यदि आकांक्षा को अर्थ ज्ञान में कारण नहीं मानेंगे तो घञ् आदि के अर्थ में भी कर्त्ता की प्रवृत्ति हो जायेगा। (६२)

किञ्चाख्यातेन शत्राद्यैर्लडेव स्मार्यते यदि ।
कथं कर्त्तुर वाच्यत्व वाच्यत्वे तद् विभावय ॥

आख्यातेन—तिङ, शत्राद्यैः—शतृशानजादिभिः लडैव–लकार एव, स्मरण विषयो यदि भवति र्तहि कर्त्तुरवाच्यत्वं–अनुक्तत्वमनभिधानं वा कर्त्तुर्वाच्यत्वं–उक्तत्वभभिधानं वा कथं स्यात् तद् विभावय अनुसन्धीयस्व यतः यतः लोके तिङ् प्रत्ययेनैवाभिधान मनभिधानं वा ज्ञायते न तु लादिना । एष दोषः प्राचीन नैयायिक मते भवति । नव्य मते तु नेयमापत्तिः व्याकरणवत् स्वीकारात् आदेशानां वाचकत्वे तु पूर्वोक्त दोषो न जायते यतः तिङ्त्वेन तिप् प्रत्थयस्य समभि व्याहारेण भावनायां शक्ति स्वीकारें स्वभावतः उक्तानुक्त व्ययस्था निर्विपन्ना । शानजादिना कर्तरि शक्तिरप्यादेशेनैवोपपद्यते । इति विभागः सुलभः । नैयायिकाः स्वमते समापतितं दोषं समुद्धरन्नाह न चेति—शतृ शानजादौ पचन् पचमान इत्यादौ–कृतिः–यत्नः लकार स्यार्थः शानजादीनामादेशानामाश्रयः (कर्त्ता) इत्यर्थोऽस्तु । "कर्त्ता" इत्यर्थे कर्त्तरि कृत इत्यनुशासनेन कृत्याश्रयोलभ्यते । एतेन स्थानिलकारः समाधत्ते—स्थान्यर्थेनेति स्थानिनो योऽर्थः तस्य प्रतिपादने यः समर्थः स आदेश इति भवितुमर्हति । यः स्थान्यर्थः स एव आदेशार्थश्चेत् अर्थ भेदे तु यथालकारस्य कृतिरर्थः । शानजर्थः कर्त्ताअनयोर्निराकाङ्क्ष तया परस्परापेक्षा भावेन निराकाङ्क्षतया—यदर्थाभिधानसमर्थं; स तस्यादेशः इति प्रमाणिकोक्तिः । "स्थानेऽन्तरतमः" परिभाषया कर्तृ वाचक लकार स्थाने कर्तृ वाचक शानजादेशः । कर्मार्थकलाकारविषयिण्याकाङ्क्षा निवर्त्तते तेन "कर्त्तरिकृत" इत्यस्यानुपस्थितिः, अर्थाकांक्षाया अभावात् ।

अन्यथा=अर्थाकाङ्क्षा भावेऽपि शास्त्रस्य प्रवृत्तिस्यात् र्तहि घञादावपि प्रर्वतेत् । अर्थात् 'भाव' इत्यधिकारसूत्रेण यत्र घञ् प्रत्यार्थस्याकाङ्क्षा नास्ति तत्रापि "कर्त्तरि कृत" इति सूत्रं प्रवर्तेत् । अत आदेशेऽपि वाचकता शक्ति स्वी कर्त्तव्यैव ॥ ६२ ॥

न च शतृ शानजादीनामर्थवत्वाऽभावेऽपि प्रमाणान्तरेण कर्तृ वाचकत्वमस्ति तद्यथा—देवदत्तः पचमान इत्यादौ देवदत्त पदस्य शानजन्त पचमान् पदेन सह सामानाधिकरण्यमावश्यकम् । तच्च समानविभक्तिकत्वेसति एकार्थं वाचकत्वं स च उक्तोदाहरणे वर्त्तत् एव । तेनाभेद सम्बन्धेन कारणेन शानच्प्रत्ययः कर्त्तृवाचकः अनुरोध प्रामाण्यात्—इत्याशंक्य=अनुरोधेन कर्तृ वाचकत्वमस्तु स्वाभावेन अत आह—तरबाद्यन्तेति–तरप् प्रत्ययः अन्ते येषां ते तरबाद्यन्ताः । ते च तिङ् च तेषु नामता—प्रातिपदिक संज्ञा

**देवदत्तः पचमान इत्यादिसामानाधिकरण्यानुरोधाच्छानचः कर्ता वाच्यः स्यादित्याशङ्क्याऽऽह—**

**तरबाद्यन्ततिङ्क्ष्वस्ति नामता कृत्स्विव स्फुटा ।।३।। (६३)**
**नामार्थयोरभेदोऽपि तस्मात्तुल्योऽवधार्यताम् ।।**

**पचतितरां मैत्रः, पचतिकल्पं मैत्र इत्यादिषु नामार्थत्वाभेदान्वययोः संभव एवेति कर्तृवाचकता स्यादिति भावः। न च पचतिकल्पमित्यत्र समानाधिरण्यानुरोधात्कर्तरि लक्षणा। पचमान इत्यत्राप्यापत्तेः, इति लः कर्मणीत्यानुशासनं च लाघवाय कल्पिते लकारे कर्त्रादिवाचित्वं कल्पितमादायेत्युक्तम् ।।३।। (६३)**

**इति रङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे स्फोटवादे वर्णस्फोटनिर्णयः समाप्तः।**



इव-यथा कृत्सु—कृदन्तेषु नामता स्फुटा स्पष्टं प्रतीयते। तत्र नामार्थयोः—नामार्थश्च नामार्थश्च नामार्थौ तयोः नामार्थयोः—प्रातिपदिकार्थयोः अभेदोऽपि सामानाधिकरण्यमपि सिद्धयति। तस्मात् तुल्योऽवधार्यताम्। अर्थात् नामार्थ योरभेदे कृत इव नामार्थस्थलेऽपि तुल्योऽभेदान्वय इत्यवधातार्यम्—इत्थं मनसि निश्चीयताम्। यथा—पचतितरां मैत्रः। अतिशयेन पचति—अतिशयिता या पाकानुकुलाभावना तया सह मैत्रस्या भेदान्वयो भवति। तदर्थं तिङामपि कर्तृ वाचाकतावश्यकी। एवं पठति कल्पं पचति कल्पं मैत्र इत्यादाविषदसमाप्ता या विक्लित्तिस्तदनुकुला भावना। एवमिषद

पयमानों देवदत्तः इस वाक्य में समान अधिकरण समान विभक्ति के अनुरोध से शानच का कर्त्ता अर्थ वाच हो जायेगा। इस शंका पर बोले कि तरप आदि प्रत्यय हों अन्त में जिसकें उसमें कृत प्रत्यान्त की तरह प्रतिपदिक प्रादिपदि कार्य अस्पष्ट है नामार्थ-नामार्थ का अभेद सम्बन्ध होता है। इसलिए तुल्य समान विभक्ति निश्चित करनी चाहिए जैसे पयतितरां मैत्रः पद को तद्धितान्त मानकर प्रतिपदिक संज्ञा हुई। मैत्र के साथ अत्यन्त पाकाश्रय सम्बन्ध है। पचति कल्प मैत्रः "इन दोनों स्थलों में दोनों के नामार्थ होने से अभेदान्वय सम्भव हुआ। इसलिये कर्तृ वाचकता सिद्ध होगी। न कहिये पयति कल्प में। समान विभक्ति समान अधिकरण के अनुरोध से कर्ता में लक्षणा करेंगे तो पचमानः यहाँ पर भी लक्षण से ही कर्त्ता के बोध की आपत्ति आ जायेगी। लः कर्मणि सूत्र का अनुशासन भी लाघव के अनुरोध से तिप् में कर्तृवाचकता लकार में आरोपित करके कल्पित वाचकता लेनी चाहिए। (६३) इति वर्ण स्फोट निरूपणम्।

समाप्तं यज्ज्ञानं तदनुकुलाभावना तया देवदत्तस्याभेदान्वयसिद्ध्यर्थं तिङोऽपि कर्त्राद्यर्थक इत्यादि स्थलेषु प्रातिपदिकार्थयोरभेद सम्बन्ध एव सम्भवति। अतः कर्तृ वाचकता स्वभावसिद्धाः; अनुरोधः सर्वत्र न कारणं किन्तु शास्त्रं कारणम्। अत आह–गीतायां—तस्माच्छास्त्रं प्रमाणं ते कार्याकार्य व्यवस्थितौ। अतः अभेदे वाचकत्वकल्पनमावश्यकम्। तच्च नैयायिक मतेऽनिष्टं कृति राख्यातार्थं इति स्वीकारात्। यद्यनुरोधो न भवितुमर्हति तर्हि लक्षणया सामानाधिकरण्यम्–अभेद सम्बन्धोऽस्तुनाम। अत आह न चेति पचति कल्पमित्यत्र कल्पप्रत्यय इषदर्थकः तस्य न कर्त्तरि शक्तिः।

आदेशस्तिङ् तव मते न कर्तृवाचकः कथं मैत्रेण सहाभेद–सम्बन्धः समानाधिकरण्यानुरोधात् कृत्यर्थकस्यलस्य कर्त्यर्थे लक्षणा क्रियते यतः आदेशानामवाचकत्वे शान जादिषु शक्त्यभावेन शक्य सम्बन्धरूप लक्षणा न सम्भवति। यदि लक्षणा स्यात् देवदत्तः पचमानः इत्यत्रापि लक्षणयैव कर्त्तुबोधः स्यात् वाचकत्व प्रयासो निरर्थकः स्यात्।

नन्वादेशानां वाचकत्वे स्थानिनि वाचकत्वानुशासकं सूत्रं व्यर्थं स्यात् तदाह—लः कर्मणीति लः कर्मणि सूत्रेण कर्त्तरि कर्मणि वाऽर्थे लकारस्यानुशासनं लाधवाल्लकारे कर्त्राद्यर्थ वाचित्वं कल्प्यते। तं कल्पितमर्थ मादायाख्यातार्थं निरूपणं युक्तं तत् यथा—नकार विसर्गादि निष्ठांलोके बोधजनकता शक्तिमादाय शसादि विधानवत्। एवं स्थानित्वेन कल्पते लकारे बोधकता शक्ति प्रकल्प्य लकाराः कर्त्तरि कर्मणि च विधीयन्ते। इति वर्णस्फोट निरूपणम्—प्रयोगे श्रूयमाणा या प्रकृतिः यश्च प्रत्ययः तादृश वर्णेषु शक्तिः वर्णस्फोट इति पर्यबसन्नम्॥ ६३॥

अथपदस्फोटः। स्फोटो हि पारमार्थिकं ब्रह्म, तज्ज्ञानायाष्टौ स्फोटा उपायभूता अपारमार्थिका हर्यादिभिरुक्ताः। तेषु पूर्व-पूर्व बहिरंगत्वमुत्तरोत्तरमन्तरङ्गम्। सर्वस्फोटापेक्षया वाक्यस्फोटस्यान्तरङ्गता वाक्यस्फोटोऽति निष्कर्षे–तिष्ठतीति मतस्थितिः। एतेन निर्विकल्पकं निरूपाधिकं निखिलानां प्रपञ्चानां कारणीभूतं शब्दब्रह्माष्टौस्फोटाद भिन्नम्। वर्णस्फोटः सर्वस्माद् बहिरङ्गभूतः पूर्वप्रतिपादितश्च तदपेक्षया पदस्फोटो–अन्तरङ्गभूतः, तेन पदस्फोटं निरूपयितुमाह—आदेशा इति—बहिरङ्गेण स्मारितेन साकांक्षात्वात् पदस्फोटः स्मृतिविषयो जातः। आदेशाः—तिब्विसर्गादयः वाचकाः—अर्थस्य बोधकाश्चेत्, पदस्फोटः पदेन स्फुटति प्रकाश्यतेऽर्थोऽनेन, ध्वनि व्यङ्ग्यः स्फुटः स्पष्टतयाऽनुगतः वर्णस्फोट पदस्फोटयोः परस्परं कार्यकारणभावं दर्शयितुं मूलमवतारयति–एवमिति–आदेशानां लकार स्थावापन्नानां

(२) **अथाऽऽदेशा वाचकाश्चेत्पदस्फोटस्ततः स्फुटः ॥४॥ (६४)**

**एवमादेशानां वाचकत्वे सिद्धे पदस्फोटोऽपि सिद्ध एवेत्याह-अथेत्यादि। आदेशास्तिब्विसर्गादयः। अयं भावः—समभिव्याहृतवर्णानां वाचकत्वे सिद्धे तादृशवर्णसमभिव्याहाररूपपदस्य वाचकता सिध्यति। प्रतिवर्णमर्थस्मरण-स्यानुभवविरुद्धत्वात्प्रत्येकं वर्णानामर्थवत्त्वेन प्रातिपदिकत्वापत्तौ 'नलोपः प्रातिपदिकान्तस्य" इत्यादिभिर्धन वनमित्यादौ नलोपाद्यापत्तिश्च।**

o

वाचकत्वम्–अर्थबोधकत्वम्। कार्यं तत्पूर्वं सिद्धे—निष्पन्ने सति कार्यभूतः पदस्फोटोऽपि सिद्धः। साधु प्रयोगेषु प्रविष्टानां प्रकृति प्रत्ययरूपाणां पूर्वपर-घटितवर्ण समुदायरूपाणां वर्णस्फोटानामर्थ बोधकत्वे सिद्धे तुल्यन्यायेन वर्ण-समुदायपदस्फोटस्य वाचकता सिद्धयत्येव। वर्ण वाचकत्वे सति पद वाच-कत्वमन्वयः, यन्नैवं तन्नैवम् आदेशानामपि लुगादिनां लोपादीनाञ्च निराशाय आह—तिब्विसर्गादय इति—ननु वर्णानामेव-वाचकत्वे वर्ण समुदाय वाच-कताऽसङ्गाता सम्भाव्येत्। अत आह—अयम्भाव इति समभिव्याहृत वर्णानां सुप् तिङ् घटितानामव्यवधानेन पूर्वापरिभावेनोपस्थितानां वाचकत्वे सिद्धे तादृशवर्णाः––पूर्वापरीभूतावयवाः तेषां यः समभिव्याहारोऽव्यवधानेनोप-स्थितिः स्यात्। तद्रूपपदस्य—पद स्फोटस्य वाचकता स्फुटति। ननु वर्णानां वाचकत्वेन समुदायस्य वाचकत्वंमन्यसे तर्हि प्रत्येकवर्णानामपि वाचकत्वं—सम्भाव्यते। अत आह–प्रतिवर्णमिति—प्रतिवर्णमथस्यस्मरण सर्वानुभव-विरुद्धं घट इत्यत्र घकारमात्रेणार्थबोधा न—जायते ऽननुभूतत्वात्। किन्तु "घट" समुदायात् अर्थबोधोऽनुभवः सिद्धः। वर्णानां वाचकत्वे दोषान्तरं दीयते प्रत्येकमिति—एवञ्च धनं वनमित्यादौ नकारस्याप्यर्थवत्वेन प्रातिपदि-कत्वात् पदत्वाच्चं न लोपः प्रातिपदिकान्तस्येतिं न लोपः स्य त् आदिना जश्त्वादीनामपि संग्रहः।

अथ पदस्फोट निरूपणम्-वर्ण स्फोट बतिरंग भूत है, जिसका निरूपण हो चुका। आकांक्षापूर्ति के लिए अन्तरङ्गभून पद स्फोट का विषय बना, पद स्फोट प्रकाशिका कारिका साधु प्रयोगों में आदेशों की वाचकता सिद्ध होने पर पद स्फोट स्पष्ट होता है इसलिए पूर्ण ग्रन्थ से वर्ण स्फोट निश्चित होने पर नैयायिक मतनिरस्त करने के पश्चात् आदेश ही में वाचकता की स्थित सम्पन्न हुई। यदि आदेश वाचक है तो आदेश घटित सुबन्ततिङन्त रूप पद स्फुट होते हैं। आदेश घटित ही पद स्फोट है इसी अभिप्राय से भूषण कार ने कहा, आदेशों की वाचकता से पद स्फोट सिद्ध हुआ यहाँ तिप् विसर्ग आदि ही आदेश शब्द से गृहीत होते हैं। भाव यह है कि—

एतच्च चरमवर्ण एव वाचकत्वशक्तिः, शक्ते व्यासज्यवृत्तित्वे मानाभावात्, पूर्वपूर्ववर्णानुभवजन्यसंस्काराश्चरमेणार्थधीजनने सहकारिण इति न तन्मात्रोच्चारणादर्थधीरिति वर्णस्फोटवादिनां मतान्तरदूषणायोक्तम् । रामोऽस्तीति वक्तव्ये रामित्यनन्तरं घटिकोत्तरमकारोच्चारणे ऽर्थबोधापत्त्या तादृशानुपूर्व्या एव शक्ततावच्छेदकत्वौचित्यादिति दिक् ॥४॥ (६४)

o

यत्र सुब्घटित समुदायस्य प्रातिपदिक संज्ञा तत्र "सुपोधातुप्रातिपदिकयो" रिति प्रवर्तेत् । यदि संख्या कर्मादीना स्वाद्युत्पत्तौ कारणता तर्हौत्सर्गिकैक वचनम् । ननु प्रकृति प्रत्ययस्यतत्समुदायरूपपदस्य वाचकत्व सिद्धये आहेतच्चेति—वर्णसमुदायस्य वाचकत्वसमर्थनश्च चरणवर्णे—अन्तिमवर्णोच्चारणपर्यन्त वाचकत्वं सुज्ञेयम् । चरमवर्ण एव वाचकत्वमित्यस्य–चरमवर्णाभिव्यङ्ग्य स्फोटे वाचकत्वं बोध्यम् ।

चरमवर्णे एव—प्रकृतेः प्रत्ययादेश्चान्तिमवर्णे बोधकता न तु वर्णे समुदाये । वर्णस्फोटवादिनां केषाञ्चिन्मतंधीषणायेदम् उक्तं—व्याकरणतत्व विदान्तु प्रकृतिप्रत्ययसमुदाय व्यङ्ग्यस्य स्फोटस्येव वर्णस्फोत्वम् ।

उपस्थित वर्ण के वाचक सिद्ध होने से ऐसे वाचक वर्ण समुदाय रुप पद की वाचकता सिद्ध होती है । समुदाय में ही बोधकता शक्ति है प्रत्येक वर्ण में अर्थ का स्मरण होना या शक्ति कल्पित होना अनुभव के विरुद्ध है । यदि प्रत्येक वर्णों को अर्थवान समझें तो प्रतिवर्ण को प्रातिपदिक संज्ञा की आपत्ति होगी । धनं वनं में भी न को प्रातिपदि कान्त लोप की आपत्ति आयेगी । प्रकृति प्रत्यय समुदाय में बोधकता शक्ति की कल्पना है; किसी प्रतिपन्न मतवालों ने कहा की पद के अन्तिम वर्ण में ही वह चाहे प्रकृति हो, या प्रत्यय उसी में अर्थ की बाचकता शक्ति है अन्तिम वर्ण में ही बोध कराने की शक्ति है, वह शक्ति व्यासज्य वृत्ति=समुदाय में रहने के लिए कोई प्रमाण नहीं है, पूर्व में उच्चरित वर्ण के अनुभव से जन्य संस्कार अन्तिम वर्ण में पर्यवसित होने से अन्तिम वर्ण वाचक है । पूर्व वर्ण सहकारी कारण हैं; इसलिए अन्तिम वर्ण मात्र के उच्चारण से अर्थ का ज्ञान नहीं होता । किन्तु सहकारी कारणों के साथ बोध होता है, वर्ण स्फोट वादी के इस मत को दूषित करने के लिए कि अवयव अवाचक हैं, इसलिए सयुदाय भी अवाचक होता है, यह ग्रन्थकार के मत से भिन्न मत को दूषित करने के लिये समुदाय में शक्ति स्वीकार किया । यदि अन्तिम वर्ण में शक्ति होती "रामो अस्ति" यहाँ पर राम इसके पश्चात् घन्टे के बाद ओकार उच्चारण होने पर अन्तिम वर्ण होने से अर्थ बोंध की आपत्ति होगी इसलिए आनुपूर्वी=आद्यन्त घटित समुदाय में ही शक्ति माननी चाहिए उसी में शब्द निष्ठ भेदक धर्म का होना उचित है ।

यदि चरमवर्णं एव वाचकत्वमित्यस्यान्तिम वर्ण व्यङ्ग्यस्फोटे बोधकता शक्तिः पूर्वपूर्ववर्णानुभवजन्यसंस्काराणां सत्वात्। विनिगमनाविरहेण बोधकता शक्तिः सिद्धयति। पदान्ते श्रूयमाण वर्णे बोधकताशक्तिसिद्धयर्थमाह—वाचकत्व शक्तिरिति—अन्तिम वर्ण श्रवणं विना बोधो न जायते तत्सत्वेऽन्वयः तदभावे व्यतिरेकि इति न्यायेन तत्रैव शक्तिः कल्प्यते। ननु वर्णानामाविर्भावतिरोभावस्वभाव सत्वान्नसमुदाये शक्तिः। उपस्थितानां वर्णानां सम्बन्धस्यानुभव सिद्धत्वात् द्विष्ठत्वाच्च। तस्माच्चरमवर्ण एव शक्तिः। तदाह—शक्तेर्व्यासज्येति—समुदाय वृत्तिधर्मः स्वाश्रयनिष्ठ भेद प्रतियोगिताऽवच्छेदक धर्मत्वरूपम्। तत्र शक्ति कल्पने गौरवं प्रमाणाभावश्च। यस्य व्यासज्यवृत्तित्वं चिकीर्षितं चरमवर्णे शक्ति कल्पने लाघवम्। ध्वनि व्यंग्ये स्फोटे वाचकताशक्ति र्ज्ञेया। अन्तिमवर्णस्योच्चारणानन्तरमेव बोधो जायते। तत्रैव बोधकता शक्तिः। नन्वन्तिमवर्णस्य वाचकत्वे तन्मात्रश्रवणात् कथन्नार्थ बोधो जायते ऽत आह—पूर्व इति—पूर्वं पूर्वोच्चारितानुभवजन्य (लोक व्यवहारोत्पन्नो यः संस्कारः) तस्य चरमेण अन्तिमेन वर्णेन सहार्थबोधोत्पादने ते पूर्वपूर्व वर्णाः सहकारिणो भवन्ति। पूर्वपूर्व वर्णस्मृति जनकः संस्कारः तस्य साहाय्येन अन्तिमवर्णे शक्तिग्रहो जायते। ध्वनिविषयकोपस्थितिश्च जायते। केवलमन्तिम वर्णपर्यन्तोच्चारितमर्थ विषयक शाब्दबोधो भवति। अतएव पूर्वपूर्व वर्णाः निरर्थकाः न भवन्ति, तन्मात्रोच्चारणात्—चरमवर्णमात्र ज्ञानान्न अर्थ धीः। किन्तु सहकारिकारणभूतैः पूर्वपूर्ववर्णैः सहान्तिमो वर्णो बोधकः। इयमुक्तिः—मतान्तरस्य = उपस्थित वर्णानाम् वाचकत्वे वर्ण समुदाय रूपपदस्यावाचकत्वमिति यन्मतान्तर तत्खण्डनाय। केषाञ्चित वर्णस्फोटवादिनां मतदूषणाय समुदायस्य वाचकत्वमुक्तम्। अन्तिमवर्णमात्रस्य—बोधे दूषणान्तरं दीयते।

रामोऽस्तीत्यत्र राम इत्युच्चारणान्तरं समुदायघटकादि वर्णो "रा" इति ततो 'म' इति। तदनन्तरं—घटिकाऽनन्तरमोकारोच्चारणं तस्मादपि बोधापत्तिः दोषो जायते। एष दोषश्चरमवर्णश्रवण कालोद्‌बोधक सामग्रीणां स्मरणे सत्येव। अतः रामोऽस्तीति वक्तव्ये सम्पूर्ण वाक्यघटकानुपूर्वी वर्ण समुदाये शक्तताऽवच्छेकत्वं कल्प्यते। तादृशानुपूर्व्या एव यथा। रा म् ओ स् त् इ इत्यानुपूर्वी तस्मिन्ससुदाये शक्तताऽवच्छेदकं तिष्ठति। तथा शक्तरामस्तत्रस्थितो धर्मः रामत्वम्। "र् आ म् अ', तदुत्तराकारः तद् वृत्तिरत्वमेव शक्ततावच्छेदको धर्मः। तस्यौचित्यं प्रामाणिकमेव। पदेन चरमवर्णवाचकत्वं ग्राह्यं दाढर्य द्योतकश्च। दिगिति—पदकार्येषु वर्णं एव कारण-

"सुप्तिङन्तं पदम्" इति परिभाषितपदस्य वाचकत्वस्वीकर्तृणां मतमाह—

घटेनेत्यादिषु न हि प्रकृत्यादिभिदास्थिता।
वस्नसादाविवेहापि संप्रमोहो हि दृश्यते ॥५॥ (६५)

घटेनेत्यादौ 'घटे' इति प्रकृतिः, 'न' इति प्रत्ययः, 'घट्' इति प्रकृतिः, 'एन' इति प्रत्यय इति विभागस्य "सर्वे सर्वपदादेशाः" इति स्वीकारे विशिष्य प्रकृतिप्रत्यययोर्ज्ञानासंभवान्न वाचकत्वमित्यर्थः। वैयाकरणैर्विभागः सुज्ञेय इत्यतो दृष्टान्तव्याजेनाऽऽह—वस्नसादाविति। "बहुवचनस्य वस्नसौ" इति समुदायस्याऽऽदेशविधानान्नात्र तद्विभागः संभवतीत्यर्थः ॥५॥(६५)

o

रूपेण दृश्यन्ते। एवं वर्ण स्फोटो सिद्धयति, न तु पदस्फोटस्तत् दिक्छब्देन समर्थ्यते, यत् वर्ण समुदायः पदमुच्यते न तु वर्णः पदम्। अत एव पदे वर्ण इति व्यवहारोऽपि स्वरसतः सङ्गच्छते ॥६४॥

यदि समुदायो न वाचकस्तर्हि तस्यार्थवत्वाभावात् प्रातिपदिक संज्ञा न सिद्धयति।

यदि पूर्वं पूर्वं वर्ण स्मरणसहकारसंस्कारेण समुदायस्य अर्थवत्वात् प्रातिपदिक संज्ञेत्युच्यते तर्हि चरम वर्णेऽप्यर्थवत्वात् संज्ञा दुर्वारा। वस्तुतः समुदायस्यैव वाचकत्वं तं विना पद विभागाऽनुपपत्ति स्यात्। अखण्ड पद-स्फोटमुपक्रमितुमाह—सुप्तिङन्तमिति परिनिष्ठित सुबन्ते तिङन्ते च पदे वाचकताशक्तिः। तत्पदं पारिभाषिकम्। इदं पदमेतदर्थं वोधजनकं भवति। अस्मात् शब्दादयमर्थवोधो जायतामित्यर्थविशेषिका प्राणिनामिच्छा परि-भाषा। तस्येदं विषयभूतं पदं पारिभाषिकं पाणिन्यादिना "सुप्तिङन्तं

पद स्फोट के प्रसङ्ग में पारिभाषिक पद जो सुप्तिङन्तं से निर्दिष्ट है पद में वाचकता स्वीकार करने वाले आचार्यों के मत को स्पष्ट करते हैं घटेन इत्यादि स्थल में अखण्ड पद स्फोट है। क्योंकि प्रकृति प्रत्यय की विलग स्थिति स्पष्ट नहीं है। जैसे वस् नस् आदेश होने पर वः नः मे प्रकृति प्रत्यय विभाग और स्थानी युष्माकं अस्माकं की प्रतीति नहीं होती। सम्मोह, अखण्डता, एकीभाव देखा जाता है। यदि घटेन इत्यादि स्थल में कल्पना करें कि घटे यह प्रकृति है न प्रत्यय है। अथवा घट, यह प्रकृति है एन वह प्रत्यय है ऐसा विभाग करने पर सभी को आदेश हो जायेंगे, ऐसा स्वीकार करने पर विशेषण विशेष्य भाव पुरस्सर प्रकृति और प्रत्ययों के ज्ञान असम्भव होने से उसमें वाचकता नहीं हो सकती। यद्यपि यह विभाग वैयाकरणों से ठीक जाना जा सकता है इसलिये दृष्टान्त के बहाने अखण्ड स्फोट को स्पष्ट किया बहुवचन के स्थान में वसनस आदेश हो जाने पर समुदाय में विभाग सम्भव नहीं होगा, इसलिये अखण्ड पद स्फोट स्वीकार करना चाहिए ॥ ६५ ॥

पदम्" इत्यादौ संकेतिकम्। अत्र पदं सुबन्त तिङन्ताद्यर्थविषयकबोधजनकं भवति। तेन तत्र पारिभाषिकत्वं सिद्ध्यति यस्य वाचकत्व स्वीकर्तृणां मते न प्रकृति र्वाचिकाः, न च प्रत्ययः, किन्तु तादृश समुदाय एव वाचकः तेन तत्राखण्ड स्फोटः। तन्मतं समर्थयितुमाह—घटेनेति—घटेनेत्यादि प्रयोगेषु प्रकृत्यादिभिदा प्रकृति प्रत्ययादि भेदो नहि स्थिता। यथा वस्नसादौ न प्रकृति भेदौ न च प्रत्यय भेदोऽनुगम्यते। तत्र सम्प्रमोहः भेदविषयक संशयो दृश्यते। घटेन इत्यादौ कः प्रकृतिः कः प्रत्ययः इति कल्पना नानुभूयते प्रत्यक्षे घट इति प्रकृति नेति प्रत्ययोऽस्ति। अथवा घट इति प्रकृति एन इति प्रप्ययः। कः विभागः, तत्र सम्मोहोऽज्ञानं स्फुटं जायते यतोऽहि सर्वे सर्व पदादेशा इति पक्षे न्यायमाधारीकृत्य घट्+आ इति स्थाने घटेनेत्यादेशः। अस्यां स्थितौ पूर्वोक्ता कल्पनाऽयुक्ता। सर्वं आदेशाः सर्व पदादेशाः भवन्ति। अर्थवतः समुदायस्य स्थाने जायन्त इति स्वीकारे विशिष्य—प्रकृति प्रत्ययानुपूर्वेण कः भागः प्रकृतिः, कश्च प्रत्यय इत्येवं रूपेण प्रकृतिप्रत्यययोः ज्ञानासम्भवात् विशेष्यविशेषणभावेन बोधस्यासंभवान्न वाचकत्वं—प्रकृति प्रत्ययोर्पार्थक्येनार्थनिरूपितो बोधो न ज्ञायते। किन्तु नान्तरीयकतया समुदायस्यैव वाचकत्वं, तयोर्विभागोऽपि केवलवैयाकरणैरेव सुखेन बोद्धुं शक्यते। एतत्सर्वं दृष्टान्त व्याजेन—दृष्टान्त प्रदर्शनेन दाष्ट्रान्तर्गत धर्मस्य बोधनं व्याजः। सर्वे सर्व पदादेशा इत्युक्त्यनुसारेण वस्नस इति दृष्टान्तः संगच्छते। तत्र बहुवचनस्य वस्नसाविति सूत्रेण समुदायस्य पदात् परयोरपदादौ स्थितयोः युस्मदस्मदोः स्थाने वस्नसौ—स्याताम्। इत्यादौ समुदायस्य स्थाने वस्नसादेश विधानेन विभाग कल्पना न सम्भवति। अत्र—वः नः इत्यत्र तद्विभागः—प्रकृति प्रत्ययोर्पार्थक्येन निर्णयौ भवितुं नार्हति। पूर्वोक्तरीत्या प्रकृतिप्रत्ययोर्भेद कल्पना दुर्ज्ञेया। तस्मात् अखण्ड पदस्फोटः स्वीकर्त्तव्यः। अजर्घा, अचकात् इत्यादावगत्या यः शिष्यते सलुप्यमानार्थाभिधायी भवति। तत्र प्रकृतेरेव वाचकताऽथवा प्रकृतेः स्वार्थविशिष्टप्रत्ययार्थे लक्षणा ॥६५॥

जैसे वर्ण समुदाय पद है वैसे ही सुबन्त तिङन्त रूप पद का समुदाय वाक्य होता है। वही अर्थों की परिपूर्णता में समर्थ है इसलिये वाक्य स्फोट बोले 'हरेऽव हे हरि मेरी रक्षा करो' इत्यादि वाक्य को देखकर सुबन्त-हरे तिङन्त-अब दोनों के समुदाय से वाक्य स्फोट निश्चित होता है।

अर्थ में विशेष्य विशेषण सम्बन्ध पुरस्सर का ग्रहण नहीं है तो पद में भी विशेषण विशेष्य पुरस्सर ज्ञान नहीं होगा। यदि लक्षणा से सम्बन्ध का ग्रहण करें तो पद और

सुप्तिङन्तचयरूपवाक्यस्यापि तदाह—

हरेऽवेत्यादि दृष्ट्वा च वाक्यस्फोटं विनिश्चिनु।
अर्थे विशिष्य सम्बन्धाग्रहणं चेत्समं पदे ॥६॥ (६६)
लक्षणादधुना चेत्तत्पदेऽर्थेऽप्यस्तु तत्तथा।

हरेऽव विष्णोऽवेत्यादौ पदयोः "एङ पदान्तादति" इत्येकादेशे सति न तद्विभागः सुज्ञानः तथा च प्रत्येक पदाज्ञानेऽपि समुदायशक्तिज्ञानाच्छाब्द-बोधात्समुदायेऽप्यावश्यिका शक्तिः एवं प्रकृतिप्रत्ययेषु विशिष्याज्ञाय माने-ष्वपि समुदायव्युत्पत्त्या बोधात्तत्राप्यावश्यिकैव शक्तिरिति भावः।

०

## अथ वाक्य स्फोटः

पूर्वोक्त प्रकारेण पदस्फोटसाधक युक्तिभिः पदपदार्थ बोधे जाते सति वाक्यसंस्कारपक्षे दध्यत्र, मध्वत्र, श्रीशः इत्यादि सन्धिना विकृतैः पद समुहैरपि बोध दर्शनात् वृद्ध व्यवहारेण वाक्य एव प्रथमं शक्ति ग्रहाच्च। क्रम प्राप्त वाक्यस्फोटं विवृणोत्याचार्यः। सुप्तिङन्तः चेति—तत्र साकाङ्क्ष पद समूहो वाक्यमर्थ समाप्तौ समर्थम्। वैयाकरणैः साकाङ्क्षपदसमूहरूप वाक्यलक्षणं स्वीक्रियते दशदाडिमानि षडपूपा इत्यादावाकाङ्क्षाया अभावात्—न तद्वाक्यम्।

वाक्य लक्षण प्रदर्शन प्रसङ्गे एकतिङ्वाक्यमित्युक्तम्। यदि—एक तिङन्त पदात्मकं वाक्यमित्यर्थः स्यात्तदा पश्य मृगो धावति, पचति भवती-त्यादि वाक्येषु तिङन्त द्वय सत्वेन वाक्यस्य लक्षणं तत्र न संघटेत। अत एवाव्याप्तिः। अत्र एक तिङन्तार्थमुख्यविशेष्यक बोधजनकं वाक्यम् इति वार्तिकोक्त लक्षणस्य तात्पर्येण तिङन्त द्वयघटितवाक्येष्वपि न दोषः। मृगस्य कर्तृत्व सम्बन्धेन धावन् क्रियायामन्वयः, धावन् क्रियायाः कर्मत्व सम्बन्धेन दृशि क्रियायामन्वयः, तथा च मृगकर्तृकं धावन् कर्मकं त्वत्कर्तृकं

अर्थ में भी लक्षणा से सम्बन्ध ग्राह्य हो सकता है। इस प्रकार हरेऽव, विष्णोऽव इत्यादि स्थल में भी एक तिङन्त के अर्थ को प्रधान मानकर बोध होने से अन्य वाक्य भी समझना चाहिये। इससे वाक्य स्फोट निश्चित होता है। (एङ पदान्तादति) सूत्र से एकादश होने पर भेदों का विभाग ठीक से ज्ञात नहीं होता इससे अखण्ड वाक्य स्फोट सुस्पष्ट होता है। अखण्ड में प्रत्येक पदों का ज्ञान न होने पर भी समुदाय शक्ति का ज्ञान होता ही है। उसी से शाब्द बोध निश्चित है। इसलिये समुदाय में शक्ति आवश्यक है इसी प्रकार प्रकृति प्रत्ययों में विशेषण भाव का ज्ञान न होने पर भी समुदाय शक्ति आवश्यक है—

मत्प्रेरणाविषयीभूतं दर्शनम्। अत्र दर्शनक्रियामुख्यविशेष्यक बोधेनैक-तिङन्तार्थं मुख्यविशेष्यक वोध जनकत्व रूप वाक्यस्य लक्षणं समुपपन्नम् एवं पचति भवतीत्यत्रापि तथा।

सुप् च तिङन्तश्च सुप्तिङन्ते सुब्विशिष्टं तिङन्तं सुप्तिङन्तं तेषाञ्चयः सुप्तिङन्तचयः वाक्यम्। सुबन्त चयः विद्यार्थिना पठितव्यं, तिङन्त चयः पचति भवति, सुबन्त तिङन्त चयः अध्यापकः पाठयति—इत्यादिनाऽर्थो स्फुट्यते। शाब्द वोधश्च दृश्यते तन्निरूपयितुमाह—हेरऽवं इति।

तदाह—वाचकत्वमाह हरेऽवेति वाक्थं दृष्टवा वाक्यस्फोटो निश्चीयते। वाक्यादर्थः स्फुटति विकसतीति वाक्यस्फोटस्तथा च सम्वन्धावगाहि ज्ञानं वाक्यार्थः। अर्थे=वाक्यार्थे विशिष्य=विशेष्य विशेषण भाव सम्वन्धस्या-ग्रहणं—सम्बन्धावगाहि ज्ञानस्य ग्रहणं न चेत्तर्हि पदेऽपि समं—पदेऽपि सम्वन्धावगाहि ज्ञानं न सम्भवति। यतोऽहि वर्णसमुदायः पदं वर्णे च शक्तिः स्वीक्रियते तर्हि पदेऽपि सम्बन्धज्ञामं विना शक्तिः न तिष्ठति। तथापि पदे शक्तिः मन्यसे, एव वाक्येऽपि सा मन्यस्व। ननु लोक व्यवहारे मनसा पदार्थस्य ग्रहणमिव वाक्यार्थेऽप्यस्तु चेत् पदवाक्ययोः स्फोटत्वे युल्यं तदाह—लक्षणादधुना चेत्तत्पदेऽर्थेप्यस्तु तत्तथा। अत्र लक्ष्यते तर्क्यतेऽनेनेति लक्षणं मनस्तस्मात्। यदि वाक्यार्थं भूतस्य सम्बन्धस्य मानसिकी बोध एवं पदे मानसिकः सम्बन्धः शक्तिश्च, मनसोऽनुभवाधीनम्। एवं वाक्येऽपि मानसिको वोधो मन्यताम् एवमर्थं निरूपिता शक्तिः मानसिको बोधश्च पदे नास्ति तर्हि वाक्येऽपि नास्ति यदि पदेऽप्यस्ति तर्हि वाक्येऽप्यास्तांनाम। एवं सम्बन्ध विशिष्टेप्यर्थ—वोधकता शक्तिः प्रथमं व्यवहारे गृह्यते।

कारिकायां विष्णोऽव, पतञ्जलिः, मनीषा, स्वैरिणीत्यादि स्थले पदयो रेकादेशे—मनस्+ईशा इति स्थाने—आनुमानिकैकादेशे सति एङः पदान्ता-दतीत्यादिना सूत्रेण द्वयोः पदयोः विभागः, इदं पूर्वपदमिदं पर पदमिति। विभागो न सुज्ञानः—सुखेन ज्ञातुं न शक्यते तथा चं—विभागस्य ज्ञानाभावे च प्रत्येकम्=एकैकं पदस्य अज्ञानेऽपि=अबोधेऽपि समुदाय शक्तिज्ञानात् समुदाये हरेऽव, विष्णोऽवेत्यादि पद समुदाये या शक्तिः=वोधसामर्थ्यं तस्या-ज्ञानात्—अप्रतीयमानाच्छाब्दवोधाच्छब्दजन्य ज्ञानासम्भवात्। हरिनिष्ठ सन्मुखी भवन रूपो यो व्यापारः तज्जनिकायाः=इच्छायाः विषयः मत्कर्मकं त्वदभिन्न कर्तृकं त्वद्वृत्तिप्रवर्तनाविषयस्यरक्षणमेतदर्थं निरूपिता शक्तिः समुदायेऽपि वर्त्तते। तस्मादावश्यकी वाक्य निष्ठा शक्तिः एवं सुबन्त तिङन्त रूप वाक्ये सा।

एवञ्च—वाक्ये शक्तिस्वीकारे यत्र प्रकृति प्रत्ययेषु पदेषु च विशिष्य—सूत्रोपात्तरूपेण विशेषणविशेष्यसम्बन्धेन वा अज्ञायमानेष्वपि—पदयोः पदनां वा प्रकृति प्रत्ययोर्वा यस्मिन्वाक्ये सम्यक् ज्ञानं न भवति यथा—धुक्-धुग्—दुहौ दुहः इत्यादौ ज्ञायमानेष्वपि प्रकृति प्रत्ययेषु गुरुं सेवत इत्यादि वाक्येष्वपि समुदायव्युत्पत्या—समुदायात् जाता या व्युत्पत्तिः तया बोधात्—प्रकृत्यर्थं विशिष्टप्रत्ययार्थ बोधात्। तत्रापि सुप्तिङन्त रूपे पदेऽपि शक्ति कल्पना निश्चयेनावश्यकी यथा पंक्तिविंशतीति—सूत्रे निपातेन सिद्धानां समुदाये शक्तिः कल्प्यते, पञ्च परिमाणस्येति पङ्क्तिः, पञ्चन् शब्दात् क्ति प्रत्यये टेर्लोपश्च निपात्यये तस्य समुदाये शक्तिः न त्ववयवे पङ्क्त शब्दो नानार्थकोऽपि, यथा ब्राह्मण पंक्तिस्तत्रापि समुदाये शक्तिः। दश संख्यायामपि पङ्क्ति शब्दो वर्तते। पञ्चपादाः परिमाणस्याः सापङ्क्ति श्छन्दः पाणिनिशास्त्र उच्चारित समुदायस्य, यत्रावयवा अनुभीयन्ते तन्निपातनं यथा द्वौ दशतौ परिमाणस्याः विंशतिः। दशद्वयरूप समुदायशक्तिः। दशत् वाचिद्विशब्दात् शतिच् प्रत्यये। विम् भावे च द्वाविंशतिः साधु। एवं त्रयोदशतः परिणामस्येति त्रिंशत् चत्वारो दशतः परिमाणस्य चत्वारिंशत। एवं पञ्चाशत् षष्ठिः सप्तप्तिः अशीतिः नवतिः एतेः शब्दाः वोध्या एवं शतं सहस्रमपि वोध्यम्॥

ननु यत्र पदानां ज्ञानं साधु न सम्भवति, तत्र वाक्यमस्तु वाचकम्। परन्तु विभागज्ञानसम्भवे सति वाक्ये वाचकत्वं न स्यात्। तदा—पदस्फोट इव वाक्यस्फोटस्यापि व्यवस्था न सङ्गच्छते। सिद्धे पदस्फोटेऽपि पदार्थयोः सम्बन्धस्याप्रसिद्धया वाक्य साधन प्रयासो व्यर्थं इति सन्दिह्य वाक्यस्फोटं—साधयितुं पदस्फोटदृष्टान्तं संयोजयन्नाह—वस्तुस्त्विति—पदैः प्रातिपदिक-शक्ति सम्पन्नैः पदैः सुबन्तैः वा यथा घटपदेन कम्बुग्रीवादि रूपोऽर्थः—प्रत्याय्यते, पदार्थबोधवत्—यथा पदैः पदार्थस्य बोधो जायत एवं वाक्येन—पुस्तकमानयेत्यादिना संसर्गरूपः पुस्तककर्मकमानयनमित्यर्थः सम्बोध्यते तेन वाक्यार्थस्य बोधे सति वाक्यस्य वाचकत्वं सिद्ध्यति। वाक्ये पदार्थस्य प्रतीति सम्भवेऽपि सम्बन्ध एव वाक्यशक्तिः सम्पूर्यते। यथा पदेषु = घटादि पदेषु पदार्थस्यशक्तिः स्वीक्रियत एवं वाक्येऽपि वाक्यार्थस्य शक्तिः अभ्युपेयते। भाष्ये तेषां पदानां सामान्ये वर्तमानानां यद्विशेष्ये—पदार्थसम्बन्धे-रूपेऽवस्थानं स वाक्यार्थः। पीताम्बर इत्यादौ विशेषणविशेष्यभावरूप सम्बन्धाधिक्यं सोऽपि वाक्यार्थः। एवं पदस्फोटवाक्यस्फोटौ व्यवस्थितौ—हरेऽवेत्यादौ पदविभाग-विमोहस्थले वाक्यशक्तिर्ज्ञेया। तथा च यत्र—

**वस्तुतः पदैः पदार्थबोधवद्वाक्येन वाक्यार्थबोध इति पदार्थशक्तिः पदेष्विव वाक्यार्थ शक्तिर्वाक्येऽभ्युपेयेति पदस्फोटवाक्यस्फोटौ व्यवस्थितौ। अन्यथा घटःकर्मत्वमानयनं कृतिरित्यादौ तादृशव्युत्पत्तिरहितस्यापि बोधप्रसङ्गः।**

o

सम्मोहो विभागो नास्ति तत्रापि वाक्यशक्तिः स्वीकार्या इत्येवव्यवस्था। तथा च यथा पदेषु पदार्थ बोधे सति पदार्थनिरूपिताशक्तिः स्वीक्रियते। एवं-वाक्येऽपि सम्बन्धावगाहिज्ञानोत्पत्यर्थं शक्तिः स्वीकार्या अन्यथा—यदि वाक्ये शक्तिऽर्नाङ्गाक्रियसे तर्हि पद विभागस्यासम्मोह ( स्पष्टन ज्ञान ) स्थले पदज्ञानद्वारा तदा दोषमुद्भावयति कोण्ड भट्टः। घटः कर्मत्वं, आनयनं कृतिरिति वाक्यम्। तत्र तादृश व्युत्पत्तिरहितस्य घटकर्मकानयनजनकयत्न विषयकबोधजनकतावदिति वाक्यविशेष्यक बोधजनकत्वविशेषणक शक्ति ज्ञानरहितस्यापि बोधप्रसङ्गः। वाक्ये शक्तिज्ञानं विनाऽपि बोधप्रसङ्गः। घटकर्मकानयन् जनक कृतिविषयक बोधापत्तिः।

यथा टमानयेति वाक्ये शक्तिमस्वीकुर्वन्तो नैयायिकादयः पद शक्ति ज्ञानमात्रेण पदार्थानामुपस्थितौ बोधस्तथैत्र घटः कर्मत्वमानयनं कृतिरित्यादावपि तथैव बोधः। यद्यपि शाब्द बोधे उच्चारयितुस्तात्पर्यं ज्ञानं कारणम्। यथा घटः कर्मत्वमिति वाक्यं, घट कर्मकानयन् विषयक बोध् जनकं भवतु। इति वक्तुस्तात्पर्यं तद्विना बोधो न सम्भवेत्। तदाह सत्यमिति—श्रोतुः वक्तृस्तात्पर्यज्ञान संभवेऽपि तत्र बोधे तात्पर्य ज्ञानं कारणं, न तु शब्दज्ज्ञानं कारणं, तस्मात् वाक्ये शक्तिः स्वीकार्याः। तदाह् बोधाभावाच्चेति—घट कर्मकानयनविषयक बोधाभावादिति। तथा च यदभावे कार्याभावः

**वास्तविकता यह है कि जैसे पदों से पदार्थ का बोध होता है वैसे वाक्य से वाक्यार्थ बोध समझें। पदार्थ की शक्ति जैसे पद में है, वैसे वाक्यार्थ की शक्ति वाक्य में होने से पद स्फोट और वाक्य स्फोट दोनों व्यवस्थित होते हैं, ऐसा न मानने पर घट कर्मत्वं-आनयनं कृति इत्यादि स्थल में घट पद से कर्मत्व अर्थ की उपस्थिति नहीं हो रही है, न पूरे वाक्य से वाक्यार्थ की ही उपस्थिति हो रही है; ऐसी उक्त व्युत्पत्ति से रहित ऐसे स्थल में शाब्द बोध की सम्भावना हो जायेगी, जैसे घट मानय यहाँ पर पदार्थों को उपस्थिति रहने पर भी तात्पर्य ज्ञान होने पर भी बोध नहीं होगा, इसलिए वाक्य में वाक्यार्थ की उपस्थिति और शक्ति स्वीकार करनी चाहिए। उसी वाक्य में घट कर्मक आनयन् ऐसा शाब्द बोध होने पर घट का प्रातिपदिक के उत्तर भाग में कर्म की बोधिका विभक्ति हो तब धातु हो तदनन्तर तिङ की उपस्थिति कारण है।**

घट का मूल अर्थ

**घटमानयेत्यत्रै व पदार्थानामुपस्थितौ सत्यपि तात्पर्यज्ञाने बोधाभावाच्च तत्रैव घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तरं कर्मत्ववाचकविभक्तेस्ततो धातोस्तत आख्यातस्य समभिव्याहारः कारणमिति कार्यकारणभावज्ञानवतो बोधात्तज्ज्ञानमपि हेतुरिति चेत्तर्हि सिद्धो वाक्यस्फोटः,**

इकट्ठा होना

इनका आपस में इकट्ठा होना ही कारण है

यत्सत्वे कार्यं सत्ता तत्र वाक्य शक्तिरावश्यकी। तादृशबोधे तात्पर्यज्ञानमिव कारणान्तरमप्यपेक्षते। तद्दर्शयति तत्रैवेति—घटमानयेत्यत्रैव घटकर्मकमानयनमिति शाब्दबोधे प्रकृति प्रत्यय प्रातिपादिक विभक्ति धातु प्रत्ययादीनामन्वय बोध पुरस्सरं ज्ञानं कारणम्। यद्यपि वाक्ये शक्तिज्ञानं विनाऽपि पदार्थानामुपस्थित्या बोधः, एवं घटः कर्मत्वमानयनं कृतिरित्यत्रापि तथास्तु। किन्तु घटः प्रातिपदिकम् "अम्" विभक्ति नी धातुः, ल्युट प्रत्यय, एतेषां व्यवधानं विना सम्बन्धावगाहि ज्ञानं वाक्यार्थ बोधे कारणम्। घट प्रातिपदिकोत्तरं—घटेति प्रातिपदिकं तदुत्तरं कर्म वाचिका विभक्तिः 'अम् औ, शसिति' ततो—धातुस्तत आख्यातं तिङ्—एतेषां यः समभिव्याहारः= पौर्वापरिभावः तत्कारणम्। अनेन प्रकारेण कार्यकारण भावज्ञानं वाक्यार्थबोधे धातु प्रत्यय प्रत्ययार्थ सम्बन्धयोः ज्ञानं कारणम्। य एतादृश ज्ञानवान् तस्य बोधो जायते। अतस्तज्ज्ञानं—समभिव्याहार ज्ञानमपि हेतुरिति चेत्—तर्हि सिद्धो वाक्यस्फोटः।

एवं वाक्ये शक्ति सिद्धे सति वाक्य व्यङ्ग्यस्य वाक्य स्फोटोऽपि सिद्धयति। ननु पदार्थ ज्ञानं शाब्द बोधे कारणं, पदार्थ बोधं प्रति पदनिष्ठ शक्तिज्ञानं कारणं, शक्तिश्च पदे तिष्ठति न तु वाक्ये। अतएव कोषादौ पदशक्तेरेव प्रदर्शनं, वाक्य शक्तिस्तु पदार्थं नोपस्थापयति। किन्तु संसर्ग मात्रज्ञानं कारयति। अत आह—घटादि पदार्थ बोध इति—यथा घट पदार्थस्य बोधं प्रति घटपदनिष्ठघटत्वादिविशिष्टशक्तिज्ञानं कारणम्। तथा च बोधकतारूपा पदनिष्ठा शक्तिः पदार्थबोधे शक्तिः कार्यकारण भावस्येव पदनिष्ठा या शक्तिः तद्विषयकं यज्ज्ञानं तत् कारणं, शाब्दबोधस्तु कार्यम्। एवं शक्तिनिष्ठा कारणता बोधे कार्यता च सिद्धयति। तद्वत् विशिष्ट वाक्यार्थबोधे—विशिष्टं विशेष्यविशेषणभावमापन्नं यद्वाक्यं तस्य बोधे वाक्यशक्तिज्ञानस्य कारणतावश्यकी। पदसमभिव्याहार इति—समभिव्याहृयन्ते पूर्वं पर विशिष्टभावेनार्थाः प्रत्याय्यन्ते पदान्यस्मिन्निति स समभिव्याहारः पदसमुदाय इति। पदानां यः समभिव्याहारः—समुदायस्तद्रूपं= पदसमुदाय रूपं यद्वाक्यं तन्निष्ठा या बोधजनकता रूपा वाक्य शक्तिस्तज्ज्ञानं

घटादिपदार्थबोधे बोधकतारूपपदशक्तिज्ञानकार्यकारणभावस्येव विशिष्टवाक्यार्थबोधे पदसमभिव्याहाररूपवाक्यनिष्ठबोधकतारूपवाक्यशक्तिज्ञानस्यापि हेतुत्वकल्पनात् अर्थोपस्थापकज्ञानविषयशब्दवृत्तिज्ञान कारणत्वस्यैव शक्तित्वात्। युक्तं चैतत् विषयतासंबन्धेन शाब्दबोधमात्रे वृत्तिज्ञानस्य लाघवेन हेतुत्वसिद्धेः। विवेचितं चैतद् भूषणे।

o

(अपिना पद शक्ति ज्ञानस्य संग्रहः) हेतुत्व कल्पनात्—उक्त कार्यकारण भावः वाक्यार्थबोधे हेतुत्वानुभवात् एवं वाक्यार्थं बोधे वाक्यनिष्ठ शक्ति ज्ञानं कारणम्।

ननु वाक्येऽस्तुनाम बोध जनकतेति—परन्तु तत्र शक्तिः कल्पयितुन्नशक्यते। यतः शाब्द बोधे कारणीभूता पदार्थोपस्थितिरिति तत्रैव शक्तिः, सा पद एव न वाक्येऽत आह—अर्थोपस्थापक इति—अर्थस्य वाक्यस्य कारणीभूतसंसर्गस्य पदार्थस्यैवोपस्थापकं यज्ज्ञानं तस्य विषयः विषयतया भासमानो यः शब्दः तज्जन्यबोधे वृत्ति ज्ञानस्य पदपदार्थवाक्य वाक्यार्थ निष्ठशक्तिज्ञानस्य यत्कारणं तस्यैव शक्तित्वात् शाब्दबोध स्थले द्विविधं वृत्ति ज्ञानं पदविशेष्यकं वाक्यविशेष्यकञ्चैतेन पदरूपः शब्दः वाक्य रूपः शब्दश्चोभयत्र वोधजनकता शक्तिः। यथार्थोपस्थापकघटकर्मकानयनरूपार्थं विषयक वोध जनकं ज्ञानं प्रति विषयः कारणं तच्च पद इव वाक्येऽपि तिष्ठति।

ननु वाक्य निष्ठा या वोधकता तस्याः शक्तित्वं सप्रमाणं स्यात् तदा पूर्वोक्तं सर्वंसफलम्। परन्तु तदेव न सिद्ध्यति अत आह युक्तञ्चैतत्= वाक्ये वोधजनकतारूप शक्तिकल्पना युक्ता। यतोहि विषयता सम्वन्धेन सम्पूर्ण शाब्द बोधे=शाब्द वोध मात्रेऽत्र मात्र पदं शाकल्य वाचकं, पद

इस प्रकार का कार्य कारण भाव जानने वालों की बोध होने से उनका ज्ञान भी कारण हैं यदि ऐसा है तो वाक्य स्फोट सिद्ध है जैसे घट आदि पदार्थों के बोध में बोधकता रुप पद निष्ठ शक्ति ज्ञान कारण है इस प्रकार के कार्य कारण भाव की तरह पद विशिष्ट वाक्यार्थ बोध में पद समुदाय रुप वाक्य में स्थित बोधकता रुप बाक्य की शक्ति का ज्ञान कारण है, इस कल्पना से यह सिद्ध होता है, कि अर्थ की उपस्थित करने वाले ज्ञान का विषय हो उसमें उन शब्दों में रहने वाली वृत्ति का ज्ञान कारण मानने में शक्ति कल्पना समझनी चाहिये। शक्ति वहीं है जहाँ वृत्ति का ज्ञान कारण है और उचित भी हैं। शाब्द बोध मात्र ने निष्ठता सम्वन्ध से वृत्ति का ज्ञान कारण है लघु भूत हेतुता उसी में सिद्ध हैं इसकी विवेचना भूषण में विस्तृत है।

जन्य बोधे वाक्य जन्य वोधे वा सम्पूर्ण शाब्दवोधं प्रति लाघवेन वृत्तिजन्य ज्ञानं कारणमुपस्थिति वृंत्तिज्ञानाधीना। घटवृत्तिज्ञानार्थोपस्थितिः घट एव विषयता तु प्रकारता विशेष्यता संसर्गतास्वन्यतमा ग्राह्या। वाक्ये तु संसर्ग निरूपिता शक्तिः कल्पनीया। वृत्ति ज्ञानं शाब्द वोधे कारणं वृत्ति वोधकत्वमर्थे वृत्तिज्ञानमप्यर्थे शाब्द वोधोऽपि तत्रैव। तेन शाब्द वोध रूप कार्यस्य वृत्तिज्ञान रूप कारणस्य च समानाधिकरणं संगच्छते। तद्विषयक वोधं प्रति तन्निरूपितं वृत्ति ज्ञानं कारणमेव नियमो व्यापकः। एतेन यत्र विपरीतवृत्तिज्ञानं तत्र विपरीतशाब्दवोधः। यद्यपि अनन्तानि पदानि अनन्ताश्च पदार्थाः तेषामानन्त्येन कार्यकारणभावोऽप्यनन्तः। तथापि वृत्ति स्तत्र प्रविशति वृत्तिज्ञानानन्तरम् उपस्थिति भंवति। पदपदार्थवोधे तन्निष्ठ वृत्ति ज्ञानं कारणम्। एक सम्बन्धि ज्ञानमपर सम्बन्धिनं स्मारयति। घट पदं स्वाश्रय माकाशस्मारकं स्वजनकत्वेनो पस्थितस्य कुम्भकारस्य स्मारकं भविष्यति। शाब्दवोधविषयौ तौ अपि स्याताम्। अतोऽनिष्टशाब्दवोध वारणाय तत्पद निष्ठ शक्तिज्ञानं कारणम्। यद्यपि संसर्गस्यापि शाब्दवोधे-भानं भवति। एवं वाक्येऽपि सम्बन्धज्ञानाय तत्र वृत्ति (शक्ति) ज्ञानं कारणं अवश्यं मन्तव्यम्। अनयारीत्या पदेन पदार्थस्य वाक्येन वाक्यार्थस्य ज्ञानं जायते। एतेन विशेषणविशेष्यभाव व्यत्यासे न तादृश वोधः किन्तु वोध वैपरीत्यम्। एवं पदद्वयनिष्ठ वृत्तिज्ञानेनो पस्थितस्य पदार्थ द्वयस्य संसर्ग विधया वाक्येऽपि मन्यते। सः सम्बन्धो अभिधाइति न भवितुमर्हति न च व्यञ्जना इति भवितुमर्हति किन्तु सम्बन्धावगाहि ज्ञातं शाब्दवोधरूप कार्यं प्रति वाक्य निष्ठ तात्पर्याख्यवृत्तिज्ञानं कारणम् वैम्मते एक पदार्थे ऽपर पदार्थस्य संसर्गः संसर्गययदया भाषते।

ननु सामयिकः शब्दार्थ प्रत्यय इति कणादोक्त वचनेन वाक्ये शक्ति ग्राहकानुशासनादेव वाक्येशक्तिज्ञानमप्रामाणिकम् अथवा वाक्यस्य—पद समुदायात्मकस्य शाब्दबोधात् पूर्वं शक्तिज्ञानं नानुभूयते संसर्ग रूप वाक्यार्थस्यापूर्व त्वाच्छाब्द वोधात् प्रागनुपस्थितत्वात्। कथं वाक्ये शक्ति-ग्रहं इत्याशङ्क्याह—

"अर्थे विशिष्य सम्बन्धाग्रहणं चेत् समं पदे"

अर्थे—वाक्यार्थे वाक्यस्य संसर्गरूप वाक्यार्थे-विशिष्य—विशेषण विशेष्य भाव सम्बन्धेन शक्तेः वाक्यार्थं निरूपित शक्ति सम्बन्धस्याग्रहणं—ज्ञानाभावः। वाक्ये उक्तरूपेण=शक्तिग्रहाभाव रूपेण ज्ञातं नास्तीति चेत् पदेऽपि सम—पदपदार्थ बोध तुल्यम्। येषाम्मते सम्बन्धरूपो वाक्यार्थः तद्

ननु वाक्यार्थस्यापूर्वत्वात्कथं तत्र शक्तिग्रह इत्याशङ्क्याऽऽह—अर्थ इति । वाक्यस्येति शेषः । वाक्यस्य वाक्यार्थे विशिष्य शक्त्यग्रहणं चेत्तर्हि पदेऽपि समम् । पद एवान्वयांशे शक्तिरिति पक्षेऽपि तद्ग्रहासम्भवस्तुल्य इत्यर्थः । यदि च पदशक्तिः पदार्थांशे ज्ञाता अन्वयांशे चाज्ञातोपयुज्यते इति कुब्जशक्तिवादस्तदा ममापि वाक्यशक्तिरज्ञातैवोपयुज्यत इति वादाभ्युपगमस्तुल्य इति भावः ।

o

वोधिका वृत्तिस्तन्मतेऽपि वाक्यार्थ वोधात् पूर्वं संसर्गज्ञानं नोपतिष्ठते । एवं पदेऽपि पदार्थ बोधात् पूर्वं शक्तिज्ञानं न जायते, तेन "यश्चोभयोः समोदोषः परिहारस्तयोः समः" इति तुल्य न्यायः । अत आह पदे समसिति—पदे एवान्वयांशे शक्तिः—मीमांसक मतेऽन्विताभिधानवादे पदे शक्तिमस्वी कुर्वन्—अन्वयांशे शक्ति स्वीकुर्वन्ति । "घटमानय" इति वाक्ये घट पदार्थस्य च सम्बन्धः सविशेष्यस्तस्य तत्तत् पदस्थितस्य तात्पर्यवृत्या पदार्थान्वय ज्ञानं जायते । तज्ज्ञानमुपस्थित शब्देनाद्रियते । उपस्थितयोः—पदार्थयोः वस्तुस्तात्पर्यमाकलय्य तद्विशिष्टज्ञानं जायते, तदेव शाब्दवोध इति व्यवह्रियते । अन्विताभिधानवादेऽन्वितो घटः घटपदशक्यः, तन्मतेपदे न शक्तिः । किन्त्वन्वयांशेऽऽनयनपदस्य संहितायां घटपदं घटकर्मकानयन रूपार्थविषयक वोध जनकं भवतु । आनयन पदं तात्पर्य ग्राहकमेतन्मते—सम्बन्धो वृत्ति भाष्यः माध्वाचार्य मतेऽन्विते एव घटे पदस्य शक्तिः, तत्तत् पदानां स्ववोध्यार्थसम्बन्धे लक्षणा, वैयाकरण मते समासे विशिष्टवृत्या संसृष्टः पदार्थः बोधविषयीक्रियते । वैयाकरणैः वाक्ये शक्तिराख्यायते, तन्मते घट प्रकारक कर्म विशेष्यक शाब्द बोधे घट पदोत्तर—द्वितीया विभक्ति ज्ञानं कारणम् । यत्र यत्र वाक्ययो योऽर्थः प्रधानान्येन विवक्षितः, तत्र पदानि स्वार्थं प्रतिपादयन्ति । सम्बन्धरूपेण लक्षयन्ति, पक्षद्वयेऽपि यथा शाब्दबोधात्प्राक् सम्बन्धार्थेन बोधितं शक्तिज्ञानं लक्षणा ज्ञानं वा सम्भवेत् तथैव वाक्येऽपि । ननु वृद्धानां प्रेरकानाभाज्ञापकानां प्रवृतिजनकानां वा व्यवहारं—शब्दः

वाक्यार्थ के पूर्व में अज्ञात होने से शक्ति का निर्णय कैसे होगा ? इस शंका पर बोले अर्थे विशेषण विशेष्य भाव पुरस्सर शक्ति का अग्रहण = ज्ञान न हो तो पद में भी अर्थ के साथ तुल्यन्यायेन ज्ञान समझना चाहिए । पद के अन्वय अश में शक्ति है इसके पक्ष पाती को भी विशिष्ट का ग्रहण असम्भव न होना तुल्य है यदि पद की शक्ति पदार्थ के अंश में ज्ञात हो अन्वयांश में अज्ञात हो तो वहाँ कुब्ज शक्ति वाद होगा । कुबड़ा व्यक्ति किसी अंश में सुडौल किसी अंश में वक्र होता है ऐसे ही मेरे

शब्दप्रयोगरूपमाचरणं पश्यतः=दर्शनशीलस्य श्रवणपूर्वकस्त मानसिको बोधः एवं वाक्यार्थे=संसर्गरूप वाक्यार्थे तद् ग्रहः—शक्तिग्रहः इति चेत् तुल्यं—तुल्यता तु यथा पदे मानसिक शक्तिग्रह एवं वाक्येऽपि। तदाह—लक्षणादधुना चेतः तत् पदेऽर्थेऽप्यस्तु तत्तथेति, कारिकायां लक्षण शब्द-श्चिह्नादौ योगरूढ़स्तथापि प्रसंगानुरोधेन मनः पर एव गृह्यते, तदैव व्युत्पाद्यते च। लक्ष्यते तर्क्यतेऽनेनेति लक्षणं मनस्तस्मादपि पदमिव वाक्यार्थस्यापि बोधकम्। बोद्धा बालकः प्रथमं वाक्य एव शक्ति मनसा गृह्णाति। पदैः पदार्थोपस्थितौ मनसा पदानां शक्ति गृह्णाति। तदाह पदेऽपीति—लक्षणान् मनसस्तद् ग्रहः पदे वाक्ये अन्वयांशे शक्ति ज्ञानं तुल्यम्।

ननु शाब्द वोधे शब्दनिष्ठ शक्ति निर्णयस्य कारणता सुनिश्चिता, परन्तु शाब्द बोधात्पूर्वं शक्ति ज्ञानं न सम्भवत्येवं शाब्द वोधहेतुत्वं न घटते। तदाह वस्तुतस्त्विति=समुदितार्थे तत्तत् वर्णपद संहितार्थे विशिष्ट वाक्यस्येव वर्णं पद विशिष्ट वाक्यस्य प्रथमं प्रयोगे वृद्ध व्यवहारेण दर्शनेन तद्ग्रहः—विशिष्टार्थं वाक्ये शक्ति ज्ञानं, शक्ति ग्राहक शिरोमणिना व्यवहारेण पूर्वं वाक्यस्य शक्ति गृह्णाति। कोषादिना वाक्येशक्तिज्ञानात् पूर्वं शक्ति ग्रहोऽपि सम्भवति। एवं वाक्ये—पदानामन्वयशक्तिकल्पनमनुचितम्। विशेष्य विशेषण भावापन्न वाक्यार्थं शक्ति ज्ञानञ्च। नन्वेनं पदस्फोटस्य निरालम्ब-नतापत्तिः स्यात् अत आह—अवापोद्वापाभ्यामिति—संयोग वियोगाभ्यां वन्धन विमोचनाभ्यां योजनवियोजनाभ्यां वाऽनयनापसारणाभ्यां परं केवलं प्रत्येकं=प्रतिपदे पदार्थं बोधिका शक्ति गृह्यते। एवं च प्रतिपदे शक्तिज्ञान सहकारेण आकांक्षा, योग्तता, सन्निधि, तात्पर्यवशात्, यदा वाक्यार्थं वोधः तदा पदस्फोट इत्युच्यते। यथा वः नः इत्यादौ प्रकृति-प्रत्ययज्ञानंविनाऽपि पदस्फोटो निश्चीयते, यदा प्रत्येक पदशक्ति मनपेक्ष्य वाक्यं शक्तिज्ञानंबोधमुत्पादयति तदा वाक्यस्फोटो निश्चेयः। केचित्तु उप-स्थिताः पदार्थाः शाब्दवोधे हेतवः, न तु पद ज्ञानं वाक्य ज्ञानं वा कारणम्। तद् विनाऽपि शाब्द बोधोदयेन उक्तश्च पश्यतः श्वेतिमा रूपं ह्रेषा शब्दञ्च शृण्वतः। खुरविक्षेपशब्दश्च श्वेतोऽश्वो धावतीति धीः। अत्र केवलं पदार्थं ज्ञानं वर्तते नत पदज्ञानं तथापि बोधो भवति। चाक्षुष प्रत्यक्षस्थले शब्द श्रवणजन्योपस्थित्यभावात्।

तत्र शब्दं विना जायमानस्य घटादिचाक्षुषप्रत्यक्षस्यापि शाब्दबोधापत्तेः। न च चक्षुरादिना पदार्थोपस्थित विष्टापत्तिरेव, तदपि न अनुभव विरोधात्। तत्र 'पश्या'मीत्येव ज्ञानं जायते। शाब्दयामीत्यनु व्यवसायो न जायते। अत्र

वृद्धव्यवहार से पद के समान ही वाक्यार्थ हो जायेगा

ननु वृद्धव्यवहारं पश्यतो मनसा पदार्थवद्वाक्यार्थेऽपि तद्ग्रह इति चेत्तुल्यमित्याह—लक्षणादिति। लक्ष्यते तर्क्यतेऽनेनेति लक्षणं मनस्तस्मात्। अपि पदं पदपदोत्तरं बोध्यम्. पदेऽपि लक्षणात्तद्ग्रहश्चेत्ताहृंस्तु वाक्येऽपीति शेषः वस्तुतः स समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं तद्ग्रहः। आवापोद्वापाभ्यां परं प्रत्येकं तद्ग्रह इति बोध्यम् ॥६६½॥ (६६½)

अगर हम पद में अपनी बुद्धि से अन्वयबोध कर लेते हैं तो वाक्य में भी इसी प्रकार अन्वयबोध वृद्धव्यवहार से हो जायेगा।

केवलं पदार्थज्ञानं वर्तते न तु पदज्ञानं तथापि बोधो भवति। चाक्षुष प्रत्यक्षस्थले शब्दश्रवणजन्योपस्थित्यभावात्। तदा शाब्दवोधोऽपि न भवति। यथा श्वेतोऽश्वो धावतीति ज्ञानमनुमानेनैवोत्पद्यते चाक्षुष प्रत्यक्षत्वाच्छब्दवत् ज्ञानाभावाच्च ॥६६॥

इवमेव—वाक्यस्फोट स्वीकाररूपा गतिरेव मीमांसकानां वेदान्तैकदेशिनाञ्च उपायस्तन्मते वाक्यस्फोट संसिद्धयर्थमाह—सर्वत्रैवेति—सर्वत्र-सर्व प्रकारकवाक्यजन्य वो ग्रस्थलेहि निश्चयेन बाक्यार्थः—संसर्गाविगाहि ज्ञान रूपोऽर्थो लक्ष्य एव=लक्षणया बोध विषय इति निश्चयः। इत्थं ये विद्वांसः विदुः ज्ञातवन्तस्ते भाट्टाः, कुमारिल भट्टादयः, तदनुयायिनः वाचस्पतिकल्पतरुः प्रभृतयः, तेऽपीत्थं वाक्यस्फोटस्वीकाररूपां युक्तिमेवाहुः—प्रोक्तवन्तः॥ लक्षणायाः—पद समुदाय रूपस्य वाक्यस्य स्वार्थे शक्त्यभावात् वाक्यार्थ बोधोपपत्तये लक्षणाङ्गीक्रियते=लक्षणा स्वीक्रियते। तस्याः ग्रहे=ज्ञाने गति वैयाकरणैः स्वीकृतमुपायं ज्ञातवन्तः। उपलक्षणमिति—आकाङ्क्षादि वशात् पदांशे लक्षणया वाक्यार्थो बुध्यते। जातिपक्षे गोपदं आनीयमानां व्यक्ति लक्ष्ययि। गो कर्मकमानयनमिति लक्षणया वोधयति। एवं यत्र-यत्र वाक्ये यो योऽर्थः प्राधान्येन विवक्षितः तं तमर्थं इतराणि पदानि स्वार्थवोधनद्वारा तत् सम्बन्धिनं लक्षयन्ति। अथ लक्षणा, तात्पर्य पुरःसर वोध्या।

मत में भी वाक्य की शक्ति वाक्यार्थ में ज्ञात होकर अन्वयांश में अज्ञात होना भी ठीक है। दोनों का विवाद सम है। जैसे वृद्ध व्यवहार को देखता हुआ व्यक्ति मन से पदार्थ का ज्ञान, वैसे ही वाक्यार्थ में भी शक्ति का ज्ञान हो जायेगा। यदि ऐसा है तो दोनों समान हैं। अतः बोले "लक्षणात्"=जिससे लक्षित-तर्कित अर्थ बोध हो उसे लक्षण-मन उससे बोध यदि होता है। पद में भी मन से शक्तिग्रह नहीं है तो वाक्य में भी शक्ति ग्रह नहीं होना चाहिए। वस्तुतः समुदित अर्थ में विशिष्ट वाक्य की प्रथम शक्ति का ज्ञान होता है। अवाप-संग्रह उद्व वाप पृथग करण से प्रत्येक की शक्ति का ज्ञान हो जाता है॥ ६६॥

इवमेव मीमांसकानां वेदनौक देशिनाञ्च गतिरित्याह—

सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः ॥६॥ (६७)
भट्टास्तेऽपीत्थमेवाऽऽहुर्लक्षणाया ग्रहे गतिम् ।

भाट्टा इति तदनुयायिनां वाचस्पतिकल्पतरुप्रभृतीनामुपलक्षणम् ।

ननूक्तपक्षद्वयमनुपपन्नम्, उत्पत्तेरभिव्यक्तेर्वैकदाऽसंभवेत वर्णसमूहरूपपदज्ञानासंभवात् । तथा च सुतरां तत्समूहरूपवाक्यज्ञानासंभव इति चेन्न, उत्तरवर्णप्रत्यक्षसमयेऽव्यवहितोत्तरत्वसंबन्धेनोपस्थितपूर्ववर्णत्वं, तथा तदुत्तरप्रत्यक्षकाले उपस्थितविशिष्टतद्वर्णवत्त्वं तस्मिन्सुग्रहमिति तादृशानुपूर्वीघटितपदत्वस्येव वाक्यत्वस्यापि सुग्रहत्वात् ॥७½॥ (६७½)

o

ननु पक्षद्वयं पदस्फोटः वाक्यस्फोटश्चेति व्यवस्थितं—किन्तु स्फोटद्वयमनुपपन्नम् । द्वयोरूपपर्त्तिर्न सम्भवति यतः वर्णा उत्पत्तिविनाशशालिनो भवन्ति–अत आह—उत्तपतेरिति—यः पूर्वं न तिष्ठति पश्चात् जन्यते तादृशमुप यमुपपत्तिरित्युच्यतेऽनित्याः वर्णास्ते प्रथम क्षण उत्पद्यन्ते द्वितीय क्षणे तिष्टन्ति तृतीय क्षणे नश्यन्ति च । तेन प्रत्यक्ष योग्याः न भवन्ति । अत्र प्रमाणं "पर- सन्निकर्षः संहिता" इति सूत्रस्थं भाष्यम् । तत्र गौ ति शब्दे यावद्कारे वाग्वर्त्तते न तावदौकार इत्क्त्वा येनैव यत्नेनैको वर्ण उच्चार्यते तेन यत्नेन सहैव विनष्टे तस्मिम् वर्णे वर्णान्तरमुत्पद्यते । एवं नित्याः वर्णा इति पक्षेऽपि—अभिव्यक्तेः (प्रत्यक्षज्ञानविषयी भूतायाः) सत्तायाः प्रादुर्भूते सत्येकदा—एकस्मिन्काल एकत्रासम्भवेन वर्ण समुदायस्य ज्ञानमपि न सम्भवति । वर्णोत्पित्ति पक्षे वायुसंयोग जन्यकण्ठताल्वाद्यभिधातजन्यवर्णनाशात्—एवमभिव्यक्तेरपि प्रत्यक्ष योग्याकाश गुणवतां वर्णानामपि नाशात् एकदावर्णसमुदायो न भवितुमर्हति । तथा च विषयता सम्बन्धेन ज्ञानं प्रति तादात्म्येन विषयः वाक्यरूप विषयो वा न तिष्ठति, तावत् सम्बन्ध ज्ञानमपि न सम्भवति । उत्पन्नानां वर्णानामनित्यतया योग्यविभु विशेषगुणत्वेनैकदाऽवस्थानं न सम्भवति । अभिव्यक्तानां वर्णानां 'वर्णाः नित्या' इति पक्षेऽभिव्यक्तिरेवानित्या, तेन वर्णस्याप्यनित्यत्वात् वर्णसमूहरूपपदज्ञानस्यासम्भवात् । यदि वर्ण समुदायो न भवति, तर्हि वर्णसमूहः पदं, पद समुदायो वाक्यमपि न सम्भवति । तदा शक्तिरशक्येव अवयवाभावेऽवयविनोऽप्यसम्भवादिति चेन्न, वर्णानां नित्यत्व पक्षे, पद वाक्ययोः वर्णाः प्रत्यक्षाः भवन्ति । उत्तरवर्ण प्रत्यक्ष समये—येषां वर्णानां क्रमेणोत्पत्तिर्भवति, तत्र पूर्वोत्तरभावो वक्तुं शक्यते, तस्मिन्—उत्तर वर्णे श्रुते सत्य व्यवहितोत्तरत्व

सम्बन्धेन—विशेष्यविशेषण भावेन पूर्वोत्तर भावेनोपस्थिताः पूर्वपूर्ववर्णाः तेषां भावः तत्त्वम्। येन तत्र शक्तिः कल्पयितुं शक्यते। तथा च तदुत्तर प्रत्यक्ष काले वर्णसत्तापक्षे वर्णानामेकदाऽसम्भवेऽपि तत्र पूर्वापरभावमारोप्य क्रमेण परम्परया वा शक्तिः बुध्यते। अभिव्यक्ताः, उच्चारिताः वावर्णा, व्यवहारः योग्याः वाक्य उपस्थितिविशिष्टवर्णवत्वं—वर्णानां यत् प्रत्यक्षं तद् विशिष्ट वर्णवत्वं वाक्ये तत्र वाक्यस्फोटः सुग्रहः। तादृशानुपूर्वी—पूर्वापर-भाव—सम्बन्धेन यो वर्ण समुदायः तत्र पद त्वं तिष्ठति तद्वत् पदसमुदाये वाक्यत्वस्यापि=वाक्यस्फोटस्यापि सुग्रहत्वात्=सुखेन बोद्धुं शयक्त्वात्। इति सखण्ड स्फोटः ॥६७॥

खण्डेना वयवार्थेन सहितः सखण्ड, इति व्युत्पत्याखण्डेनावयावार्थेन रहितोपि स्फोटो भवतीति स्वाभाविकी शिष्यजिज्ञासा जागर्ति। तदुप-शमयितुमाह—इदानीमखण्ड पक्ष इति—इदानीं सखण्ड स्फोटनिरूपणा-नन्तरमखण्ड पक्षमाह—अखण्डत्वञ्च=पद वाक्ययोरवयवार्थ शून्यत्वं तत् पक्षं सिसाधयितुमाह पद इति। पदे–वर्णसमुदाये वर्णाः न सन्ति। वर्णेषु–प्रकृति प्रत्ययादिष्वयवाः भागाः न सन्ति। एतेनाखण्ड वर्णस्फोटोऽपि गम्यते। एवं 'वाक्यात् पद समुदायात्' इति यदुक्तं तत्र पदानां वाक्यावय-

मीमांसकों और वेदान्त के एकदेशीय विद्वानों को स्फोटस्वीकार करना ही गति= उपाय है। इसलिए बोले कि सब प्रकार के वाक्य जन्य बोधस्थल में सम्बन्ध रुप वाक्यार्थ लक्षणा से ही बोध है, ऐसा जो कुमारिल भट्ट के अनुयायी भी मासक विद्वान हैं वे भी उक्त प्रकार से लक्षणा से ज्ञान में सामर्थ्य समझते हैं। कुमारिल भट्ट उनके अनुयायी वाचस्पति, कल्पतरु, आदि को भी समझें। ये लोग वैयाकरण की तरह स्फोट की रीति से ही उपाय समझते हैं। यद्यपि पदस्फोट वाक्य स्फोट अथवा लक्षणा स्फोट पक्ष दोनों असिद्ध जान पड़ते है, क्योंकि उत्पत्ति जो पहले नहीं थी अब हो गयी और आम व्यक्ति जोथी सो प्रकट होना दोनों दशां में पद वाक्य असम्भव होंगे। उत्पन्न हों या अभिव्यक्त हो पूर्व-पूर्व वर्ण के विनाशी होने से वर्ण समुदाय रुप पद का ज्ञान असम्भव है। जब वर्ण ही नहीं ठहरेगा तो पद की स्थिति भी नहीं होगी। पद के बिना पद समूह रुप वाक्य का ज्ञान भी असम्भव होगा। न स्फोटार्थ बनेगा, न लक्ष्यार्थ तत्र,—अन्तिम वर्ग के प्रत्यक्ष काल में पूर्व वर्ण का उत्तर वण के साथ अव्यहित्तर सम्बन्ध से उपस्थित अन्तिम वर्ण पूर्व पूर्व वर्ण वाला लेगा, उसके पश्चात् अन्तिम वर्ण के प्रत्यक्ष काल में उपस्थित विशिष्ट वर्णवत्ता सुग्रहीत होगी। तब अनु-पूर्वी वर्ण घटित ससुदाय पद बनेगा इसी प्रकार पद घटित समुदाय का स्पष्ट ज्ञान होगा तो कोई अनुपपत्ति नहीं होगी॥ ६७॥

इदानीम खण्डपक्षमाह––

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ॥८॥ (६८)
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ।

पदे पचतीत्यादौ न वर्णाः । नातो वर्णसमूहः पदमिति शेषः । दृष्टान्त-व्याजेनाऽऽह––वर्णेष्विति । एकारौकारलृकारऋकारादिवर्णेष्ववयवाः प्रतीयमाना अपि यथा नेत्यर्थः । क्वचिद् 'इव' इत्येव पाठः । एवं वाक्ये-ऽप्याह––वाक्यादिति । पदानामपि वाक्याद्विवेको भेदो नास्तीत्यर्थः । अयं भावः––वाक्यं पदं चाऽखण्डमेव; न तु वर्णसमूहः, अनन्तवर्णकल्पने माना-भावात् । तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगनिष्ठं तत्तद्वर्णजनकतायाः व्यञ्जकताया वाऽवच्छेदकं वैजात्यमादायैव ककारो गकार इत्यादि-प्रतीतिवैलक्षण्यसंभवात् । स्पष्टं हि भामत्याम्––"तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यते" इत्युक्तं देवताधिकरणे ।

o

वानाम् अत्यन्तं सर्वथा प्रविवेको भेदो नास्तीति । पचतीत्यादौ पदे न वर्णाः हरेऽव विष्णोऽवेत्यादौ–वाक्ये न पदम् । न च वर्णेष्ववयवाः इति प्रसंगे-अनुपयुक्तमतआह—दृष्टान्त इति । दृष्टः—प्रत्यक्षी कृतोऽन्तो निश्चयः— वादिप्रतिवादिनो बुद्धिसादृश्यसम्मर्तिर्यत्र—अथवा निश्चित साध्यको दृष्टान्तः सः वर्णेष्ववयवा उपयोगिनो—न भवन्ति । यथा—"एकारे" "अकार" "इकारौ" औकारे आकार उकारौ ऋकारे रेफादयः प्रतीयमाना अपि न गृह्यन्ते । तथैव पदे वर्णाः वाक्ये पदानि च प्रतीयमानान्यपि न गृह्यन्ते । अनया रीत्या वर्णेष्वयवाः नोपयुज्यन्त इति । सूचयितुं व्याजपदं दत्तम् । अन्यस्य सिद्धचर्थं मन्यप्रमाणदानं" व्याजः ।

अब अखण्ड स्फोट पक्ष को प्रस्तुत करने के लिए बोले सखण्ड स्फोट वर्णन हो चुका अखण्ड के लिये कारिका पद स्फोट, अखण्ड=विभाग शून्य, उसमें वर्ण है ही नहीं वर्णों में अवयव अप्रतीत है ऐसे ही वाक्य अखण्ड है उसमें पदों का विभाग भेद नहीं है पचति आदि अखण्ड रूप से स्थित है उसमें न वर्ण=प्रकृति प्रत्यय न हो वर्ण का समुदाय ही पद है यहां दृष्टान्त देते हैं कि जैसे एकार औकार ऋकार आदि वर्णों में अवयव की प्रतीति होने पर भी एक है अखण्ड है, ऐसे ही वाक्य में भी पदों की प्रतीति होने पर भी वह एक है अखण्ड है, भेदभ्रम मात्र है भाव यह है वाक्य और पद भेद शून्य हैं अनेक वर्णों की कल्पना में कोई प्रमाण नहीं अतः वर्ण समुदाय पद नहीं कह सकते । यद्यपि एक-एक वर्णों की उत्पादकता शक्ति के लिए सर्व सम्मत तालु

दृष्टान्तं साधयितुमाह दृष्टान्त इति—वर्णेष्ववयवा नवेति क्वचित् पाठ उपलभ्यते। एवं वाक्येऽप्यवयवाः प्रतीयमानाः न भवन्ति। पदानां वाक्ये स्थितानां, वाक्यात्—अत्यन्तं प्रविवेको—भेदो कश्चन न वर्तते। पृथक् भावार्थक "विच्" धातोः भावे घञि पृथग्भाव इति तस्यार्थः। यद्यपि "प्र" शब्द बलेन आत्यन्तिकभेदो भावोऽर्थों गम्यते तथाऽपि पदरूपेण वाक्य-स्वरूपेण भेद सत्त्वेऽपि अखण्डरूपेण भेदो नास्तीति सूचयितुम् "अत्यन्त" पदं दत्तम्। ननु पदे वाक्ये वा वर्णाः—श्रूयमाणाः भवन्ति। तेषामसत्ता न संसिद्धयति तदाह अयम्भाव इति—उच्चारण व्यङ्ग्यं वाक्यं पदञ्च अखण्ड-मेव—अवयवराहित्यमेव न तु वर्णसमुहः—वर्णसाहित्यम्। अनन्तवर्ण कल्पने—अनेक वर्णघटिते प्रमाणाभावात्। यतः चरमावयववर्णव्यङ्ग्यो स्फोटस्तेनानेक वर्ण समुदाये—बोधस्य प्रमाणं नास्ति। न च पठति गच्छती-त्यादौ वर्णानां विलक्षणप्रतीतिरेव प्रमाणमत आह—तत्तत् वर्ण-इति-वर्णेऽऽ-रोपितत्त्व सिद्धयर्थं ब्रूते, तेषां तेषां वर्णानामुत्पादकत्वेन—जनकत्वेनाभि-मतं = स्वीकृतम्। वर्णे निष्ठा या जन्यता तन्निरूपितजनकत्वप्रकारक बोध-विषयी भूतो यो वायुसंयोगः = कण्ठ—ताल्वादिषु वायोरभिघातरूपः तन्निष्ठं वैजात्यं तथा च तेषां-तेषां-वर्णानां जनकतायाः = नैयायिकमते जनकता वर्णानां वायुनिष्ठा वै०मते व्यञ्जकता मीमामते उत्पादकता वायुसंयोगनिष्ठा उत्पादकतायाः अथवा वर्णानां व्यञ्जकताया = द्योतकतायाः अवच्छेदकं = व्यावर्त्तकं, वर्णानां भेदकं वा वैजात्यमेव। विभिन्ना जातिः धर्मोयस्य स वि-

आदि स्थानों में टकराने वाला वायु संयोग में स्थित वर्णों की उत्पादकता या व्यंजकता का भेदक विजातीय धर्म को लेकर करोति गच्छति आदि में ककार गकार इत्यादि का ज्ञानबल क्षमता से सम्भव हो जायेगा अतः वायु संयोग में वाचकता शक्ति स्वीकार करना चाहिए भामती का प्रमाण भी स्पष्ट है कि तारत्व = ह्रस्व दीर्घ प्लुत उदात्तानुदात्तस्वरित ये वायु निष्ठ शक्ति से वाच्य है वर्णों में आरोपित हैं यह देवताधिकरण में कहा गया है। न कहिये कि वायुसंयोग की ही वाचक माना जाय वर्ण को नही तन्न जो प्रत्यक्ष उपलभ्यमान है। वही वाचक होता है। ककारादि प्रत्यक्ष है वाचक है अनुभव सिद्ध हैं। वाचकत्व के अपरिवर्तनीय होने से प्रत्यक्ष की ही उपलब्धि होती हैं। इसलिए वह वहीपद है वह वही वाक्य है यह वही काकार है ऐसी प्रतीति से स्फोट यह अखण्ड सिद्ध होता है। इस तर्क से गो यहाँ पर ग्, औ: विसर्ग, आदि से अतिरिक्त स्फोट शब्द का अनुभव न होने से श्रूयमाण वर्णो में ही वाचकता है ऐसा कहने वाले अपास्त हो गये। क्योंकि वे वर्ण स्फोट से अतिरिक्त नहीं हैं। स्फोट में अन्तर्भूत हैं।

न चैवं वायुसंयोग एव वाचकोऽपि किं न स्यादिति वाच्यम्, प्रत्यक्षोपलभ्यमान ककारादेरेव वाचकत्वस्यानुभवसिद्धत्वात् । यथा च वाचकत्वान्यथानुपपत्त्या तदेवेदं पदं तदेवेदं वाक्यं सोऽयं गकार इति प्रतीत्या च स्फोटोऽखण्डः सिध्यति । एतेन गौरित्यादौ गकारौकारविसर्गादव्यतिरेकेण स्फोटाननुभवाच्छ्रूयमाणवर्णानामेव वाचकत्वमस्त्वित्यपास्तम्, तेषां स्फोटातिरिक्तत्वाभावात् ।

o

जातिः पदार्थः । तस्य भावो वैजात्यं, पदार्थानामसाधारणोधर्मः । अत्व गत्व कत्वादि रूपः । तदेव समवाय सम्बन्धेन स्फोटेऽऽरोप्य ककारो गकार इत्यादयः प्रतीयन्ते । तत्र वैलक्षण्यसम्भवात् वैलक्षण्यं तु ध्वनिकाले स्फोट एव ते प्रतीतिमात्रविषया भवन्ति । एतेन वर्णानां प्रतीतिरारोपिता न तु वास्तविकी । एतेन अखण्ड स्फोटो साधित । एतत् स्पष्टयितुं—"वाचस्पति मिश्र' कृतायाः भामत्या एकं वचनं दीयते । तच्च तारत्वादीति, ताल्वादिष्वभिधातेन वर्णव्यञ्जकं वायुनिष्ठं तारत्वादि = ह्रस्वदीर्घोच्चारणादिः वर्णेषु, कत्व, गत्वादयआरोप्यन्ते इति देवताऽधिकरणे—उक्तम्—

विषयोविषयश्चैव पूर्वपक्षस्तथोत्तरम् । निर्णयश्चेति पञ्चाङ्गशास्त्रेऽधिकरणं स्मृतम् । एतेन वायुसंयोगजन्य वर्णवाचकताऽऽरोपिता । न चारोपितेषु वर्णेषु वाचकत्वं माऽस्तु, किन्तु वायुसंयोगनिष्ठस्य वाचकत्वकल्पने वायुसंयोग एव वाचकोऽस्तु, पदं वाक्यं वा श्रृणोमि । इत्यनुभवात् तन्न, यः प्रत्यक्षः स वाचकः प्रत्यक्षरूपेणोपलभ्यमानस्य ककारदिषु वर्णेष्वैव वर्त्तते । तत्रैवं वाचकत्वस्य = बोधकत्वस्य प्रत्यक्षमनुभवसिद्धत्वात् । वायुसंयोगस्त्वतीन्द्रियतया न प्रत्यक्षी भवती । अतो न वाचकः ।

समवाय सम्बन्धेन स्फोटे आरोपिताः भासमानाः वर्णाः अवास्तविकाः कत्वादिषु स्फोटत्वमारोपितम् वर्णरूपेण प्रतीतिविषयः ननु स्फोटो वर्णान्तर इति । न च गच्छति, करोतीत्यादौ उत्पन्नो ककारादिरिति प्रतीतिः सर्वानुभवसिद्धः । तथाच कत्वादिना प्रतीयमानस्फोटोऽनित्यस्तन्न, 'सोऽयं' ककारः' इति प्रत्यभिज्ञाबलेन उत्पत्तौ प्रतीतौ च भ्रमत्वकल्पनम् । यद्वा वर्णाभिव्यञ्जको वायुसंयोगः तन्निष्ठा या उत्पत्तिः विनाशश्च तदेवारोप्य उत्पन्नो ककारो गकारश्चेति प्रतीतिविषयता । न च घटादयोऽपि कपाल संयोगविशिष्टः स्फोटरूपेण नित्या भविष्यन्ति । सत्कार्यवादे घटादयोऽपि नित्या सन्ति, यः कारणे तिष्ठति स कार्यरूपेणाविर्भवति । भेदस्तु—कारणे लीयमाने

घटे जलाहरणादिर्न सम्भवति कार्यंतु सम्भवति । तेन नित्य, इष्टश्च । अपि च–यथा–मृद् ब्रह्म इति अविद्यया कल्पितस्य मृदोऽवस्था विशेषो घट इति । एवमाविद्यको जलाहरणादिको घटः–पारमार्थिक दृष्टचा नित्यः । व्यावहारिक दृष्टचाऽनित्यः । प्रकृतमनुसरामः—यदि तारत्वादिः = ह्रस्वदीर्घप्लुतादयो वर्णाः वायुसंयोगनिष्ठजनकतानिरूपितजन्यतावन्तः । तत्र पदे च वाचकत्वं मन्यसे तर्हि वायुसंयोग एव ( स्फोटस्य ) कथं न वाचकः स्यात् । तज्जन्यवर्णेषु वाचकता कथमारोप्यसे । तन्न, प्रत्यक्षोपलभ्यमानं = श्रावण प्रत्यक्ष विषयीभूताः ककारादयः तषामेव प्रत्यक्षानां वर्णानां वाचकत्वस्य लोके सर्वानुभवानुकूलत्वात् । तथाच = वर्णानामवाचकत्वे वायुसंयोगानामिव वाचकत्वे वाचकत्वस्य अन्यथानुपपत्या = वायुसंयोगद्वाराप्रतीत्या वर्ण-पद-वाक्यादिषु वाचकत्वप्रत्यभिज्ञा न स्यात् । तथा च अखण्डस्फोटरूपस्य 'तदेवेदं पदं' वाक्य तदेवेदमौषधम्, शाकटम् इत्यादि बोधो न स्यात् । सोयं गकारः, तदेवेदं, वाक्यमिति व्यवहारदर्शनात् अखण्डस्फोटः सिद्धचति । यथा ब्रह्म नित्यं, माया अनित्या, किं जासु सत्यता ते जड़माया भास सत्यइवमोह सहाया । अनित्या मायाऽपि नित्या इव भासते एवं यथा स्फटिको नीलपीतादिरागरञ्जितः सन् नीलायते पीतायते च एवं स्फोटोऽपि वर्णपदाद्युपाधिरञ्जितः सन् वर्णस्फोट–पदस्फोटादि रूपेण विवर्तते । एतेन स्फोटो नित्यः । तत्रोपरक्ताः अनित्याः वर्णादयोऽपि नित्याइव प्रतीयन्ते । अतः तदेवेदं पदं, सोऽयं गकार, इत्याद्यखण्डप्रत्यभिज्ञाजायते । एतेन = उक्तयुक्तिः प्रत्यभिज्ञायाः अनुपपत्तिः, अनन्त वर्णकल्पनम्, ऐतदयेक्षया लाघवेन नित्यत्वेन च सिद्धस्य स्फोटस्य वाचकत्वव्यवस्था स्वीकार्या । तेन 'गौः' पदे अन्यत्र च गकार, औकार, विसर्गव्यतिरेकेण = भिन्नत्वेन स्फोटस्य अननुभवात् = अनुभवो न दृश्यते । तस्मात् ये श्रूयमाणवर्णेषु वाचकतां दृढं भन्यन्ते ते परास्ताः । तेषां = गकारादि वर्णानां स्फोटातिरिक्तत्वं नास्ति । वर्णरूपैस्फोटः परम्परया पतीयमाने वायुसंयोगे वर्णानारोप्य वत्वप्रकारक स्फोटविषयत्वं तैः स्वीक्रियते । स्वतन्त्ररूपेण वर्णस्फोट प्रतीतौ न किमपिप्रमाणम्

किसि के मन में वर्णो का प्रत्येक व्यक्ति वाचक होगा, तो प्रत्येक वर्ण से अर्थ का बोध होने लगेगा और समुदाय का ज्ञान क्रमशील होने से शीघ्र उत्पन्न या क्रम से अभिव्यक्त वर्णों का ज्ञान भी असम्भव तो है । पूर्व-पूर्व वर्णो के अनुभव से जनित संस्कार के सहयोग से एक समय में समूहालम्बन अनेक वर्ण योगरूप ज्ञान सम्भव भी होगा । कदाचित् रस के स्थान में सरका राज के स्थान में जरा नदी के स्थान में दीन आदि साधारण ज्ञान का प्रसंग से उल्लँघित अर्थ का बोध होगा । इसलिए स्फोट ही वाचक हैं, अखण्ड है, ध्वनि से व्यंग है, इस कैयट मत को ग्रन्थकार ने तुच्छ कहा कि जब पद का ज्ञान ही असम्भव है तो समूहालम्बन का ज्ञान कैसे होगा । वर्ण एक-एक व्यञ्जक हैं या समुदित होकर व्यञ्जक हैं इत्यादि विकल्प संशय आरुढ़ हो जाते हैं ।

यत्तु वर्णानां प्रत्येकं वाचकत्वे प्रत्येकादर्थबोधापत्तिः। समुदायस्य तु क्रमवतामाशुतरोत्पन्नानां तथैवाभिव्यक्तानां वा ज्ञानमसंभाव्यमेव। पूर्वपूर्व-वर्णानुभवसंस्कारेणैकदा समूहालम्बनरूपसकलज्ञानसंभवस्तु सरोरसोजरा-राजनदीदीनादिसाधारण इत्यतिप्रसङ्ग इति स्फोट एवाखण्डो नादाभि-व्यङ्ग्यो वाचक इति कैयटः, तत्तुच्छम्, पदज्ञानसंभवस्योपपादितत्वाद्वर्णानां प्रत्येकं व्यञ्जकत्वं समुदितानां वेत्यादिविकल्पग्रासाच्च।

०

कैयटोक्तं स्फोटसाधनप्रकारं दूषयति यत्तु = वर्णाः वाचकाः वर्णसमुदायो वा वाचकः। यदि प्रत्येकवर्णानां वाचकत्वमङ्गीक्रियसे तर्हि एकैकशः वर्णात् अर्थबोध आपद्यते। यदि समुदाये वाचकता मन्यसे तर्हि, समुदायो न सम्भवति तत्र हेतुमाह—क्रमवतां = पौर्वापर्यवताम् उत्पपत्तिमताम् आविर्भव-ताम्वा वर्णानां क्रमशीलानां ज्ञानमसम्भवम्। न च जेष्ठमध्यकनिष्ठपुत्रा-दीनामिव वर्णानां क्रमिकत्वं वर्तते। तथापि आशुतरोत्पन्नानां = प्रथमक्षणे उत्पद्यते द्वितीयक्षणे तिष्ठति तृतीयाक्षणे स्वजातीयानुत्पाद्य नश्यति पूर्वपूर्व-वर्णस्य नाशात् क्रमेणोत्पन्नानां सहोत्पन्नानांम्वा स्थायित्वं न सम्भवति समुदायो न प्रत्यक्षीभवति, अर्थोऽपि न स्फुटति। यतः विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्यसम्बन्धेन ( तद्रूपसम्बन्धेन शब्दार्थयोः ) विषयस्यज्ञानं कारणम्। वर्णसमुदायरूपविषयस्यैवासम्भवे प्रत्यक्षाभावान्नबोधः।

न च पूर्वपूर्वोच्चारितवर्णेषु उच्चारणजन्यसंस्कारसहकारेण समुदाये स्फोटत्वमस्तीतिवाच्यम्। पूर्णपूर्णमुच्चारिताः ये वर्णाः तेषामुच्चारण जन्यो योऽनुभवः तद्रूपः संस्कारः तत्साहाय्येन एकस्मिन्काले समूहालम्बन-रूप (गौरितिगकार, औकार, विसर्गाणां समूहरूपः) आलम्बनं यस्य ज्ञानस्य तत्समूहालम्बनम्। तादृशं सर्वज्ञानं सम्भवति। तेन समूहेऽपि स्फोटत्वं सिद्ध्यति तत्र, सरो रसः, अत्र सकार रकार अकार विसर्गाणां समूहा-लम्बनम्। उभयत्रापि समानार्थकतापत्तिः एवं जरा ( वृद्धावस्था ) राज नदी दीन। इत्यादौ अक्षराणां समुदायात्मकता तिष्ठत्येव समानार्थ बोधस्य अतिप्रसङ्गदोषो जायते। पर्यायतापत्तिश्च स्यात् पूर्णपूर्णवर्णसंस्कारोऽपि न तिष्ठति। यतः अनित्यत्वपक्षे वर्णानां श्रावण प्रत्यक्षात्ताभावात्। अनुभव-

जन्यसंस्कारस्याप्यभावो बोध्यः सम्बद्धं वर्तमानञ्च दृश्यते 'चक्षुरादीना' तेन समुदायो न प्रत्यक्षः ततो न बोधः। इति=पर्यायितापत्तिरूपहेतोः स्फोट एव=अर्थविकाशक एव अखण्डः=अवयवशून्यः नादाभिव्यङ्ग्यः=नादो-ध्वनिः तत्र प्रतीयमानैः वर्णैः द्योत्यः वाचकश्च। इयंयुक्तिः अखण्डस्फोट-समर्थने कैयटेनोपास्थापिताम्। तस्याः खण्डनं मूलकारेणक्रियते। तत्तुच्छ-मिति—तुच्छता च यदि वर्णानां पूर्वपरभावो न स्यात् तदोक्तदोषः। स्फोट साधनमुक्तरीत्या च सम्भवेत् परन्तु रसः इत्यत्र पूर्वपरभावेन पूर्वं रकारः पश्चात् सकारः इति ज्ञानं सुस्पष्टं वर्तते। तत्र सरः इत्यस्य पर्यायिता न स्यात्। तत्र अतिप्रसङ्गदोषदानमेव तुच्छता कैयटेन स्फोटसाधनप्रसङ्गे स्फोटे पदज्ञानमपि भासते इत्यस्य उत्पादितत्वात् चरमवर्णबोध्यः सच् पद एव भवितुमर्हति। स्वाव्यवहितोत्तरत्वसम्बन्धेन येन क्रमेण वर्णा उत्पद्यन्ते तेन क्रमेण उपस्थितिरपि भवति। तेन क्रिमिकं समूहालम्वनं गृह्यते नतु स्वेच्छात्मकम्।

कैयटेन यदुक्तं नादाभिव्यङ्ग्यो वाचकः। ध्वनिषु प्रतीयमानैः वर्णैः प्रकाश्यः स्फोटो वाचकः। अत्र विकल्पदोषो दीयते वर्णानामिति—यदि सर्वे वर्णाः वाचकाः स्युः तर्हि प्रथमवर्णोच्चारणेन व्यङ्ग्य स्फोटेनं अर्थबोधे सिद्धे इतरवर्णानामभिव्यक्तेः वैयर्थ्यं स्पष्टमेव सिद्धयति। प्रतिवर्णेषु व्यञ्जकता न तिष्ठति। एवं समुदायेऽपि व्यञ्जकता न तिष्ठति तस्याभावात् वर्णस्य नित्यानित्ययोरुभयोः पक्षयोः समुदायो न सम्भवतीति प्रथमं प्रतिपादि-तत्वात् ग्रन्थ कर्तुराशयः।

अन्येतु=कैयटमत समर्थकास्तु। प्रथमं पदज्ञानमेव न सम्भवति। वर्णानां नित्यानित्योभयपक्षे समुदायोऽसम्भवः। पूर्वं वर्णाः प्रथमक्षणे तिष्ठन्ति न न द्वितीयक्षणे। यदि द्वितीयक्षणेऽपि तिष्ठेयुस्तर्हि तथा सम्भवेत्। परन्तु तदेव न सम्भवति। यदि पदन्नस्यात्तदा वाक्यमपि न सिद्धयति। शब्दा-नित्यत्वपक्षेऽपि पूर्ववर्णनाशानन्तरं द्वितीयवर्णोपस्थितिरावश्यकी। उच्चा-रणभेदात् भिन्नानां पदानामानन्त्यात् व्यक्तिपक्ष इव शक्तिग्रहासम्भवः। ग्रहीतशक्ति कस्यैव बोधकत्वनियमः। अतोऽखण्डस्फोटः स्वीकार्यः तदेवेदं पदंमित्याद्यनुरोधात्। वर्णसमुदायस्यासम्भवात् वर्णेषु शक्त्यस्वीकारे लाघवाच्च अखण्डस्फोटस्य वाचकत्वे बीजम्। भूषणकारमते स्फोटस्वरूपम्-सम्पूर्णं शव्दात्मकमर्थात्मकं प्रपञ्चात्मकं जगत्। तत्र विवर्तकारणीभूतं ब्रह्मैव शब्दब्रह्मपदेनोच्यते। रज्जौ सर्पं इव शुक्तौ रजत इव सद्रूप ब्रह्मैव स्फोट इति विवर्तवादे परिज्ञायते। श्रीनागेशस्तु परिणामवादी—तन्मते

शब्द एव परा पश्यन्ती, मध्यमा वैखरीति चतुर्विधवाङ्मये या मध्यमावाक् तस्या यो नादांशः तद्रूपस्फोटः। तदेव वाचकत्वेन स्थितः। तदाह मञ्जूषायां—तत्र मध्यमायां यो नादांशस्तस्यैव स्फोटात्मनो वाचकत्वेन ग्राह्यः। कण्ठताल्वाद्यभिघातेन जन्यो वर्णपदादिः मध्यमावस्थो ज्ञानविषयीभूतोऽर्थः स्फोट उच्यते। स्फोटरूप (परिणामरूपो) यो नादांशस्तस्य जन्यत्वेऽपि तत्र नित्यत्वं पारिभाषिकम्। तच्च सृष्टि कालादारभ्य प्रलयकालं यावन्नित्यत्वं बोध्यम्।

वस्तुतस्तु भूषणकारमतमेव प्रामाणिकम्। तन्मते अखण्डो, नित्यः कूटस्थोऽविचाली स्फोटः सर्वसम्मतः। पारिभाषिकनित्यता स्फोटता च भाष्यकारैरसम्मता हृथादिभिरनुक्ताच। अनादि निधनं ब्रह्म शब्दतत्वं यदक्षरं विवर्ततेऽर्थभावेन प्रक्रया जगतो यतः। भूषणकार सम्मत विवर्तवाद एव समर्थितः नतु परिणामवादः। परः सन्निकर्षः संहिता इतिसूत्रे भाष्ये—नहिवर्णनां पौर्वापर्यमस्ति। किं कारणम् वाचः, एकवर्णवर्तित्वात् उच्चारित प्रध्वंसित्वाच्च। यद्यपि उच्चारितप्रध्वंसिनीवर्णास्तथापि—"बुद्धौ कृत्वासर्वाश्चेष्टाकर्ताधीरस्तत्वन्नीतिः। शब्देनार्थान् वाच्यान् कृत्वा बुद्धौ कुर्यात् पौर्वापर्यम्।" स्फोटश्च नित्योऽनित्यश्च। स्फोटरूपेण नित्यः ध्वनिरुपेणा नित्यः। येनोच्चारि तेन सास्नालांङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः इत्यनेन स्फोटात्मकंशब्दंनित्यमुक्त्वा प्रतीतपदार्थको लोके ध्वनिः शब्द उच्यत। शब्दं कुरू, शब्दं माकार्षीः इत्यादिना व्यवहार व्यवहर्तृषु अर्थबोधकत्वेन प्रसिद्धशब्दः श्रोत्रेन्द्रियग्राह्यः वर्णरूपो ध्वनिसमूहः स्फोटो व्यावहारिकः। तस्य आपातरमणीयार्थबोधकता लोके प्रसिद्धा। वर्णात्मक पदात्मक वाक्यात्मकध्वनेरेव शास्त्रेण व्याख्यानात्। अन्यथा नित्याश्च शब्दाः। नित्येषु शब्देषु कूटस्थैर विचालिभिः वर्णैः भवितव्यमिति नित्योक्तिरसंङ्गता स्यात्। ध्वनिगत वर्णाद्यारोपेण तेषां नित्यता अखण्डता च समजनि। धीरस्तत्वज्ञः धियं=बुद्धिं, ज्ञानम्बा राति=ददाति इतिधीरः शब्दतत्वज्ञः। तत्वन्नीतिः=तननं तत्=व्याप्तिः तद्वतीनीतिः=नीयते=ज्ञायतेऽनया इति नीतिः=अन्तःकरणविशेषा बुद्धिः वृत्तिविशेषः, सकलप्रमेय विषयव्यापिनी बुद्धिर्यस्य सः तत्वन्नीतिः। कर्ता=उच्चारयिता सर्वाश्चेष्टाः कण्ठताल्वाद्यभिघात व्यापार जन्यशब्दान् बुद्धौ=अन्तः—करणे प्रतिबिम्बितान् कृत्वा शब्देन सहैव वाच्यान् अर्थात् बुद्धिदेशे दृष्ट्वा तत्रैव=पौर्वापर्यं कुर्यात्। बुद्धिविषये शब्दानां पौर्वापर्यम्। यथा मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति अस्मिन्नर्थेऽयं वर्णः ततोऽयमिति। एवं शब्द विशेषज्ञः स्फोटमनुभूयात्।

ननु त्वन्मतेऽप्येष दोषः। तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगानां प्रत्येकं व्यञ्जकत्वं समुदितानां वेति विकल्पस्य संभवादितिचेत्? उच्यते–प्रत्येकमेव संयोगाअभिव्यञ्जकाः, परं तु केचिद्गत्वेन केचिदौत्वेन केचिद्विसर्गत्वेनेत्यनेकैः प्रकारैः। अत एव वर्णानां तदतिरेकास्वीकारोऽप्युपपद्यते। एवं चाव्यवहितोत्तरत्वसम्बन्धेन घवत्त्वं टकारे गृह्यते, एतादृशपदज्ञानकारण-

तत्काल, पश्चात्

०

वर्णस्फोट, पदस्फोटवादिनश्च अखण्डस्फोटवादिनं पृच्छति त्वन्मतेऽपि, एष दोषः=विकल्पात्मको दोषो वर्तते यथा—तेषां=वर्णनाभिति तत्तद्-वर्णानां उत्पादकत्वेन= अभिव्यञ्जकत्वेन अभिमतानां=स्वीकृतानां वायु-संयोगानां=नाभिप्रदेशादूर्ध्वंप्रेरितानां अनेकवायुसंयोगानाम् सद्भावे किं प्रत्येकसंयोगः स्फोटस्य वर्णव्यञ्जकः अथवा समुदिताः संयोगाः व्यञ्जकाः इति विकल्पस्य=संशयस्य सद्भावात्=उपस्थितत्वात् तवमतेऽपि दोषः। न दोषः?। प्रत्येकं संयोगाः अभिव्यञ्जकाः=अर्थ प्रकाशकाः सन्ति। समु-दिता इति असम्भवात् संयोगस्य प्रत्येकं प्रकाशकत्वेऽपि गौरित्यत्र कैश्चित् संयोगः गत्वेन कश्चिदौकाररुपेण विसर्गाद्यानेक प्रकारैः स्फोटं प्रकाशयति संयोगः। सामस्त्येन तदभिव्यक्तिः सर्वान्ते मणिमन्त्रवत्, यथा रत्न परीक्षका मुहुर्मुहुः परीक्षाणानन्तरं परिज्ञायन्ते एवं स्फोटोऽपि वायुसंयोगानां वारम्बारं अनुभवेन परिज्ञायते नतु झटिति। एवं विलक्षणो वायुसंयोगः स्फोटस्याभिव्यञ्जकस्ततो न दोषः। अतएव=विलक्षणवायुसंयोगस्य बर्णपदवाक्यरुपेण प्रकाशकत्वादेव वर्णानां—स्फोटस्य तात्पर्यग्राहकानां

न कहिये तुम्हारे मत में भी उक्त संशय दोष है। क्योंकि एक-एक वर्णो के के उत्पादक रूप में सम्मत वायु संयोगों का एक-एक के साथ व्यञ्जकता है या समुदाय के साथ व्यञ्जकता है ऐसा विकल्प संशय उपस्थित है तब बोले कि प्रत्येक वर्णो में संयोग ही द्यो क हैं किन्तु गोः में गत्व, औत्व, विसर्गत्वादि अनेक प्रकार से अर्थ के प्रकाशक है। इसीलिए वर्णो का उनके बिना भी बोध की सिद्धि समुदाय मा वायु संयोग के रूप में मानी गयी है। इस प्रकार घट पद में घ के अव्यवहित उत्तर भाग में स्थित टकार घवान् होता है। घट समुदाय से बोध स्पष्ट हुआ।

इस प्रकार के पद ज्ञान की कारणता निर्विवादशून्य है। परन्तु अव्यवहित उत्तर धर्म और पदज्ञान का अधिकरणभूत–क्षण–काल उत्पत्ति के ज्ञान के विषय को वाच्य मानना चाहिये। इसलिये "घ" ज्ञान के बाद "ट" ज्ञान का विषय आनुपूर्वी "घट"

ताया अविवादात् । परं त्वव्यवहितोत्तरत्वं स्वज्ञानाधिकरणक्षणोत्पत्तिकज्ञानविषयत्वं वाच्यम् । अत एव घज्ञानानन्तरटज्ञानविषयत्वरूपानुपूर्वीत्यादिनैयायिकवृद्धानां व्यवहारः । एवं च न कश्चिद् दोषः । एतेन पर्यायस्थलेष्वेक एव स्फोटः, नाना वा ? । नाऽऽद्यः, घटपदे गृहतशक्तिकस्य कलशपदाद्बोधप्रसङ्गात् । न च, तत्पर्यायाभिव्यक्ते शक्तिग्रहस्तत्पर्यायाश्रवणेऽर्थधीहेतुरितिवाच्यम् ।

o

संयोगनां ध्वनीनाम्बा तदतिरेकस्य = तस्मात् वर्णपदादिना अभिव्यक्तात् स्फोटादभिन्नस्य, अतिरिक्तस्य अस्वीकारोऽपि = अतिरिक्ताः वर्णाः सन्तीति कल्पने मानाभावः । वर्णविशिष्टसंयोगस्य ध्वनेर्वाऽभेदः । उपपद्यते = सिद्धयति । ननु रसः रसः इत्यादावतिप्रसंङ्गस्तदवस्थ एव तदाह एवञ्चेति-वायुसंयोगस्याभिव्यञ्जकत्वस्वीकारेऽपि अव्यवहितोत्तरत्वसम्बन्धेन = येन क्रमेण वर्णाः व्यवहृताः तेन क्रमेणतेषां सम्बन्धोऽपि बोध्यः तेन उपाधिभेदात् घ-ट इत्यादिभेदात् स्फोटभेदः कल्प्यः तथाच धवत्वं टलारे कल्प्यते । एवं सर इत्यत्रापि सवत्वं रेफे कल्प्यते रसहित सवत्वं विसर्गे एवं न कश्चन दोषः । भिन्नार्थं प्रतीतिश्च सुगमः । एतादृशं यत्पदज्ञानं तस्यकारणतायां अविवादात्नास्ति काचन विप्रति पत्तिः ।

ननु तव मते गकारादिवर्णः नित्यस्फोटरूपः । सः ध्वंसाधिकरण क्षणादनुत्पद्यते तर्हि अव्यवहितोतरत्वं न सम्भवत्यत आह परमिति—अतः उपाधिभेदात् अव्यवहितोतरत्वं समानाधिकरणं = स्वं धकारादिना भासमानः स्फोटः तदधिकरणक्षणः प्रथमक्षणे ज्ञानमुत्पद्यते द्वितीयक्षणे तिष्ठतिः होता है, यह अनुभवी नैयायिकों का मत है । इस प्रकार पदज्ञान का असम्भव दोष नहीं होता इन तर्कों से जो लोग संदेह करते थे कि पर्याय स्थल में जहाँ अनेक पर्यायवाची शब्द हैं वहाँ एक ही स्फोट है या अनेक स्फोट माने जायेंगे । "नाद्यः"—इसमें अनेक एक ही स्फोट नहीं कह सकते क्योंकि घट पद में शक्ति का ज्ञान गृहीत होने से कलश का भी बोध हो जायेगा । यद्यपि जिस पर्याय के उच्चारण से शक्ति का ज्ञान होता है उसी पर्याय के श्रवण से अर्थ का ज्ञान कारण होता है तथापि प्रत्येक पर्याय वाची शब्दों में शक्ति का ज्ञान अवश्य होना है तो उन पर्यायों में रहने वाली शक्ति का ज्ञान उनके बोध में कारण मानना उचित है । वैसा होने पर शक्ति ग्रहत्व धर्म की हेतुता में लाघव होगा । ऐसा अस्वीकार करने पर पर्यायों से उद्भूत शक्ति ग्रह स्वीकृति में गौरव होगा न द्वितीयः !

एवं सति प्रतिपर्यायं शक्तिग्रहावश्यंभावेन तत्तत्पर्यायगतशक्तिग्रहहेतुताया उचितत्वात् । तथा सति शक्तिग्रहत्वेनैव हेतुत्वे लाघवाच्च । अन्यथा-तत्पर्य्यायाभिव्यक्तगतशक्तिग्रहत्वेन तत्त्वे गौरवात् । न द्वितीयः, अनन्त-पदानां तेषां शक्त्यपेक्ष्य क्लृप्तवर्णेष्वेव शक्तिकल्पनस्य लघुत्वादिति परिमलोक्तमपास्तम्, पर्यायेष्वनेकशक्तिस्वीकारस्य सर्वसिद्धत्वात्तदवच्छेदकानुपूर्व्याः प्रागुपपादनादिति दिक ।

o

तृतीयक्षणे नाङ्क्ष्यति इत्थं क्रममादाय घविषयकं यद् ज्ञानाधिकरणं तस्मिन् क्षण उत्पत्तेः ज्ञान विषयत्वं टकारे जायते तदा अव्यवहितोतरत्वं ज्ञेयम् । एतश्च पद ज्ञानमपि सुलमंम् अत एव=एतादृश अव्यवहितोतरत्वस्यानुपूर्वीरूपेण—स्वीकारादेवधकारज्ञानान्तरम् अव्यवहितोतरत्वं "टकार" ज्ञान विषय रूपं "घ" ज्ञानकाले तस्मिन्नेव क्षणे "ट" ज्ञानविषयत्व प्रतीतौ घट इत्यानुपूर्वी ज्ञानमादाय नैयायिक वृद्धानां व्यवहारः सम्पद्यते । एवञ्च= अभिव्यक्तेः ज्ञान घटितोतरत्व निवेशेन न कश्चन दोषः । यथा विकल्पादि दोषः पदस्याज्ञानरूपदोषो न जायते । उच्चारणभेदसत्वेऽपि शतपत्रपलाश-च्छेदनवत् अभेद इव प्रतीतिः । एतेन ध ज्ञान पूर्वक टकार ज्ञानविषयत्वेन वर्णात्मकस्फोटस्य वाचकत्वव्यवस्थापनेन सन्देहो जायते । पर्याय-स्थलेष्वेक एव स्फोटः=वाचकत्वेन स्वीकृतोऽखण्डो नित्यस्फोटः अथवा नाना स्फोटः नाद्यः=एक एवपदजन्यः स्फोटोः नेत्यर्थः । यदि एकैव स्फोटः स्यात् तर्हि घटपदे घकारादि टान्तसमुदाये गृहीता शक्तिर्यस्य गृहीत—शक्तिकः तस्य=पुरुषस्य कलशादेरपि ककारादि लान्तसमुदायानुपूर्वीकस्य स्फोटात्मककलशादेः बोधप्रसंगात् । अत आनुपूर्वीभेदेन स्फोटस्यापि भेदो भाव्यम् । तेन घटपदेन कलशस्य बोधवारणाय नाना शक्तिः स्फोटश्च कल्पनीयः तेन घटे स्फोट शक्तिः भिन्ना कलशेच भिन्ना किन्तु वास्तविकी शक्तिरेकैव । यथा महाकाशोऽखण्डः सन्नपि उपाधिभेदेन घटाकाश मठाकाशादिरूपेण भिद्यते । एवं घटावच्छिन्नस्फोटः पटावच्छिन्न स्फोटो भिन्नः कल्पितश्च । यथा उपाधीनां विनाशे एक एव महाकाशः । एवं घट पटादि रूपोपाधिविनाशेऽखण्ड स्फोट एव शिष्यते ।

न च ततत् पर्यायाणामभिव्यक्तेः=बोधस्य शक्तिग्रहः=सामर्थ्यं ज्ञानं तेषांपर्यायश्रवणेऽर्थ ज्ञानं कारणम् । घट पर्यायभूतकलशस्य अभिव्यञ्जनायां शक्तिज्ञानं पर्यायश्रवणान्तरम् अर्थविषयकं ज्ञानं शाब्दबोधे हेतुः । कलश-पदेन कलशाभिव्यक्तस्फोटः, कलशजन्यशाब्दबोधंप्रति कारणम् न तु

घटजन्यबोधंप्रति । एवं सति प्रतिपर्यायमेकैकसमानार्थकशब्दं प्रति शक्ति ज्ञान स्याव ·यकत्वेन तत्तत्पर्यायेषु = तत्तत्समानार्थकशब्देषु गतः = निष्ठः शक्तिग्रहः = सामर्थ्यं ज्ञानं तस्य हेतुतायाः कारणतायाः उचितत्वात् । विभिन्न पर्यायेषु विभिन्नशक्तिज्ञानस्यावश्यकत्वेन गौरवात् । तथा सति विभिन्न-शक्तिस्वीकारेमति गौरवमपाकर्तुं शक्तिग्रहत्वेन सामान्येन पर्यायेषुशक्ति-ज्ञानं स्फोटे स्वीकार्यम् । न तु घटकलश इत्युपाधिभेदे शक्तिग्रहत्वस्य हेतुत्वे लाघवमेव कारणम् । अन्यथा = शक्तिग्रहत्वस्य अस्वीकारे तत्तत् पर्याये स्फोटगतशक्ति ज्ञानकारणमिति, स्वीकारे तत्पर्यायाभिव्यक्त = तत्तत् पर्यायेषु प्रकाशमाना या शक्तिः तज्ज्ञानस्य कारणत्वे गौरवात् । अत एकं शक्तिज्ञानम् । न द्वितीयः = नाना स्फोटोऽपि न । पर्यायभेदैन स्फोट-भेद इति पक्षोऽपि न वक्तुं शक्यते । अनन्त पदानां = प्रति पर्यायेषु उच्चरितपदानां तेषां स्फोटानां·शक्ति कल्पनापेक्षया लाघवात् क्लृप्तवर्णेषु उच्चरितघकारादिष्वेव निश्चयेन शक्तिकल्पने लाघव मनुभूयते । इत्थ वदतः परिमलाचार्यस्योक्तं = प्रतिपादितं वचनमपास्तम् । पर्यायस्थलेऽपि एकधर्मावच्छिन्नार्थ वाचकेषु शक्तत्वभेदेन शक्तिभेदस्य न्याय्यत्वात् । अतोऽनेक शक्तिस्वीकारस्य = पर्यायभेदेन भिन्न-भिन्न शक्तिग्रहणस्य सर्वसिद्धत्वात् ।

ननु स्फोदस्य नानात्वस्वीकारे नानावर्णैरेव वाचकत्वनिर्वाहे स्फोटस्य वैयर्थ्यं सुस्पष्टमेव । एक स्फोटशक्तिस्वीकारेतु पर्यायस्थले उक्तदोषस्ताद-वस्थः । तदाह = तदवच्छेदकानुपूर्व्याः = तस्य = स्फोटस्य अवच्छेदिका = भेदिका, (शक्ततावच्छेदको धर्मः) या आनुपूर्वी तस्या उच्चारितक्रम एव स्फोटं भिनत्ति । कलशशब्दावच्छेदेन कलशस्य घटशब्दावच्छेदेन घटस्य वोधेऽपि द्वयोः वोध्याकारे भेदस्याभावेन पर्यायता सिद्धयति । पीलुशब्दादौ

पर्यायस्थल में नाना स्फोट भी नहीं है क्योंकि पद अनन्त हैं उनकी अनन्त शक्तियों को अनुभव करके कल्पित वर्णो में शक्ति की कल्पना लघु होगी यह परिमल आचार्य जी की उक्ति पूर्वोक्त तर्को से अपास्त हो जाते हैं । पर्याय स्थलों में अनेक शक्तियाँ हैं, ऐसी स्वीकृति सर्व सम्मत है । परिमलाचार्य स्फोट नहीं मानते उन्होंने स्फोट के एकत्व और अनेकत्व को विकल्प मानकर समक्षा परन्तु एक में भी दोष है नाना में भी दोष है भूषणकार के सिद्धान्त में स्फोट एक है उपाधि भेद से अनेक हैं । जैसे आकाश एक है अखण्ड है । घटाकाश, पटाकाश, मठाकाशादि भेद उपाधिज हैं । ऐसे ही स्फोट एक है ध्वनि भेद से भिन्न होता है पर्याय शब्दों में अनेक शक्ति की स्वीकृति सर्वसम्मत है क्योंकि वर्णों की आनुपूर्वी सामुदायिक स्थिति में शक्ति रहती है । यह पूर्व में ही कहा जा चुका है । इसलिये प्रत्येक पर्यायों की शक्ति में भेद है । इससे वर्णस्फोट स्पष्ट होता है ।

शक्ति भेदवत् स्फोटस्यैक्येऽपि शक्ततानुपूर्वीभेदात् शक्तिभेदे न दोष। यदि स्फोटाः नित्याः तदभिन्नाः वार्णा अपिनित्याः तेषामुत्पत्तिध्वंस सहिताव्यव-हितोत्तरभावो वक्तुं नशक्यते। तदाह—प्रागुपपादितत्वादिति=पूर्वं स्फोट विषयिणी या अभिव्यञ्जना तस्या अधिकरणं यत् क्षणं तत्समकालमेव अर्थप्रकाश्य विषयत्वसम्बन्धेन विशिष्टानुपूर्व्याः वाचकत्वोपपादनात्। वर्ण विशिष्टानां पदत्वं वाक्यत्वञ्चास्ति। यद्येवं तर्हि किंस्फोटेन यतः नित्यत्व-वादे "सोऽयं ककात्: तदेवेद पदं वाक्ययित्येव" प्रत्यभिज्ञा स्यात्। तदाहदि गितिदिगर्थस्तु यदि वर्णाः अनारोपितास्तदा तेषां बहुत्वाद् गौरवम्? यदि इति शब्दभात्रेभेदः। तथापि स्फोट पक्ष एव सिद्धयति। स्फोट सत्वे वृत्ति भेदेन ध्वनिभेदेऽपि स्फोटस्यैक्यात्।

यदि कककारादिपुकत्वादि धर्मोऽनारोपितं तर्हि वर्णेषु बहुत्वात्गौरवम्। यदि आरोपितः कत्वादिधर्मः तर्हि एक एव वर्णः स्फोट रूपः। एवमपि स्फोटस्यैव सिद्धिर्भवति। यदि वर्णाः न नित्या नापि स्फोटो नित्यः किन्त्व-नित्याः ध्वनयः सन्तीति तदा ध्वनिपु द्रुता, मध्यमा, विलम्बिता तिस्रो वृत्तयस्तिष्ठन्ति। द्रुता=ह्रस्वा (एकमात्रिका) एक मात्रिक कालावच्छिना, मध्यमा=दीर्घा द्विमात्रिकां (द्विमात्राकालावच्छिन्ना) विलम्बिता=प्लुत-स्वरूपा (त्रिमात्राकालावच्छिन्ना वृत्तिविशिष्टाच) यदि वर्णाः सन्ति अनि-त्याश्च ध्वनयस्यदा क च ट त प घटपट मठादि ध्वन्योऽनित्या भवन्ति, तदा ध्वनिषु वृत्ति भेदाः स्फुरन्ति। ह्रस्व दीर्घ प्लुत स्वरूपाषु तिसृषु वृत्तिषु ध्वनिरेकैव अकाशादिपु भेदकं तपरकरणम्। यथा "अतोभिस ऐस" इति-सूत्रे तपर करणं द्रुतायाः वृत्त्याः परिचायकं द्रुतवृत्तिमान् तपरः एक मात्रिका इतिपरिचयः। आतोलोप इटि च" इति सूत्रे तपर करणं मध्यमा वृत्ते परिचायकं तत्र मध्यमा वृत्तिमान् द्विमात्रिकस्तपरः। अतएव विल-म्बित वृत्तिमान् य आकारस्तत्र ऐसादयो न भवन्ति, स्फोट स्वीकारे तु, वृत्तिभेदेन ध्वनि भेदे सत्यपि वायुसंयोगगत एकमात्रिकत्व विशिष्ट अत्वेन रूपेण प्रतीयमानः स्फोट एक एव तन्त्रैव तपर करणात् तिसृषु वृत्तिषु स्फोटस्यैक्यात् आदेशाः भवन्ति। तदुक्तम् भाष्ये—तपर सूत्रे सिद्धयन्तु अवस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते। वर्णा एका-कारेण तिष्ठन्ति तेषां वृत्यो भिन्ना-भिन्ना द्रुतायां वृत्तौ ये वर्णास्ते त्रिभागेषु-स्थिता। उदात्तानुदात्तस्वरिताधिकाः।

भट्टोजिदीक्षितमतमाह कौस्तुभ इति—कौस्तुभ इव कौस्तुभो ग्रन्थः शब्दानां प्रकाशकत्वेन सर्व श्रेष्ठत्वेन अतिप्रियः। तस्मिन ग्रन्थे वर्ण मालायां =वर्ण परम्परारूप समुदाये आधाराधेयभावेन प्रतीतेः वर्णपदयोः भेद—

**शब्दकौस्तुभे तु वर्णमालायां पदमिति प्रतीतेर्वर्णातिरिक्त एव स्फोटः अन्यथा कपालातिरिक्तघटाद्यसिद्धिप्रसङ्गश्चेति प्रतिपादितम् ॥ ८½ ॥ ( ६८½ )**

o

सम्बन्धेन ज्ञाने सति सिध्यति यत् वर्णातिरिक्तः स्फोटः भेदे प्रत्येक वर्ण स्फोटयोराधाराधेय भावः। तथाऽपि वर्णो न स्फोटः। अन्यथा=प्रतीति पदार्थसाधकत्वे नैयायिकमते कपालातिरिक्तः घटाद्यसिद्धिः स्यात् : कपाले घट इत्याधाराधेय भाव प्रतीतौ सत्यपि कपालो न घटः कपाल भिन्नघट-सत्वे घटेन यानि यानि कार्याणि भवन्ति तानि कपालेन न भवन्ति स्फोटस्य वर्ण समूहाभेदेऽपि वर्ण मालायां पदमित्यपि युक्तम्। अत आह शब्द कौस्तुभेत्विति—पद शब्देनानुपूर्व्याः ग्रहणेन आधाराधेय भावेऽपि न बाधकं घट कपालयोः वैजात्येन (विभिन्न जातिसत्वेन) कपाले घट इति प्रतीतावपि न दोषः कार्य कारणयो र्भेदः सर्व सम्मतः।

नन्वेवं=अखण्डऽस्फोटस्यैव वाचकत्वस्वीकारे शास्त्रस्य=व्याकरण-शास्त्रस्य अप्रामाण्यप्रसंगः। प्रकृतिप्रत्ययार्थबोधनद्वारा शब्दव्युत्पत्ति प्रतिपादनपरस्य वैयर्थ्यसम्भवात् ततः पदस्य=वर्णसमुदायस्य उप-लक्षणतया वाक्यस्य=पदसमूहस्य अखण्डत्वात्—निरवयवत्वात् प्रकृति-प्रत्यय विभागशून्यत्वात् अखण्डस्य वाचकतायाः भवद्भिः प्रतिपादितत्वात्। शास्त्रस्य=शब्दानुशासनस्य प्रकृतिप्रत्ययतत्तदर्थबोधनद्वारा पदस्य-व्युत्पादनं=शब्दार्थसम्बन्धफलानां प्रकाशनं शक्तिबोधनञ्च मात्रं=प्रकृति-प्रत्ययार्थ—परस्पर सम्बन्धविषयकं यज्ज्ञानं तन्मात्रमर्थः=फलम्। पद-पदार्थवाक्यवाक्यार्थबोधने प्रकृतिप्रत्ययार्थज्ञानं कारणम् वाक्यार्थबोधे-पदार्थज्ञानं कारणम्। पदवाक्ययोरखण्डत्वे शास्त्रस्योपयोगित्वमेव नास्ति। उक्तञ्च "पदे न वर्णा विद्यन्ते वर्णेष्वयवा न च। वाक्यात्पदानामात्यन्तं

शब्द कौस्तुभ नामक ग्रन्थ में वर्णमाला प्रकरण में वर्णमाला पद का व्यवहार है। ऐसी प्रतीति से सिद्ध होता है कि वर्ण से अतिरिक्त स्फोट है अन्यथा—वर्ण से अति-रिक्त स्फोट अस्वीकार करने पर दो कपालों के संयोग से घट बनता है परन्तु घट कपाल रूप नहीं कहाता उसके अतिरिक्त असिद्धि का प्रसंग हो जायेगा इसलिए स्फोट को वर्ण से अतिरिक्त मानो ॥ ६८ ॥

यदि पदस्फोट को अखण्ड मानते हैं जिसका प्रकृति प्रत्यय विभाग शून्य अर्थ है तो शास्त्र की अप्रामाणिकता प्रसिद्ध हो जायेगी। क्योंकि पद अखण्ड अविभक्त है और शास्त्र "लः कर्मणि" "कर्त्तरिकृत" इत्यादि व्यर्थ हो जायेंगे। क्योंकि ये प्रकृति त्ययप्र

नन्वेवं शास्त्रस्याप्रामाण्यप्रसङ्गः पदस्याखण्डत्वात्, शास्त्रस्य च प्रकृतिप्रत्ययाभ्यां पदव्युत्पादनमात्रार्थत्वादित्याशङ्कां समाधत्ते—

पञ्चकोशादिवत्तस्मात्कल्पनैषा समाश्रिता ॥९॥(६९)
अन्तिम साध्य उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ।
उसके बोध के लिए उपाय हैं ०

प्रविवेको न कश्चन् ।।" इति अखण्डस्फोटस्य शास्त्रेण निरुपयितुंशक्यत्वात् कथं शास्त्राध्ययनम् । तत्समाधाने आह—पञ्चकोशादिवदिति । यथा ब्रह्मज्ञाने कल्पिताः पञ्चकोशाः शरणीकृता समाश्रिताः = ब्रह्म समर्थने कल्पिता तत्र तस्मात् = स्फोटस्याखण्डत्वात् एषा कल्पना = प्रकृतिप्रत्ययपदादिविभागशून्येऽपि प्रकृतिप्रत्ययादिकल्पना, पञ्चकोशकल्पना इव उपेयस्य = बोधनीयस्य, प्राप्तुं योग्यार्थस्य, प्रमेयस्य, अखण्डस्फोटस्य, ब्रह्म इवो पपत्तिः = प्राप्तिः, ज्ञानम्वा; तदेव अर्थः = प्रयोजनं फलम्बा येषान्ते उपायाः = प्रकृतिप्रत्ययपदतत्तदर्थज्ञानानि, अव्यवस्थिताः = कल्पिताः लिपिरिव । यतोऽव्यवास्थिता अतो पञ्चकोषादिवदेषा कल्पना समाश्रिता = पाणिनिमुनि कल्पितस्य शरणं गृहीताः ।

कारिकायाः भावं दर्शयति दृष्टान्तेन अयमिति—भृगुवल्यां = तैत्तिरीयोपनिषदि भृगुप्रश्नसङ्कलिपता भृगुबल्लीति । वारुणिः = वरुणस्यापत्यं वारुणिः = भृगुः वरुणं = स्वपितरं ब्रह्म = ब्रह्मविषयकं ज्ञानं स्वरुपञ्च पृष्टवान् । सः = वरुण उवाच तस्मै = अन्नं प्राणं, चक्षुः, श्रोत्रं मनो वाच-

विभाग द्वारा पदमात्र का व्युत्पादन शब्द, अर्थ, सम्बन्ध जनित ज्ञान कराते हैं । इस शंका पर शास्त्र समर्थक समाधान बोलते हें । एषा—शास्त्रीय कल्पना पञ्चकोश की तरह उपयोगी हैं । जैसे—पञ्चकीश का ज्ञान अखण्ड ब्रह्म प्रनिपादन के लिये है ऐसे ही शास्त्रीय कल्पना अखण्ड स्फोट प्रतिपादन के लिये है । जितने उपाय (साधन) हैं वे उपेय (साध्य) की सिद्धि के लिए है और वे अव्यवस्थित हैं । व्याख्या इस प्रकार है जैसे—भृगुवल्ली ग्रन्थ में भृगुऋषि ने जो वरूण पुत्र हैं) पिता से पूछे—कि ब्रह्म क्या है ? उत्तर मिला अन्न ही ब्रह्म है । परन्तु अन्न को उत्पन्न विनाशशील समझ कर पुनः पूछा—उत्तर मिला प्राण ही ब्रह्म है । यहाँ प्राण शब्द से लक्षणा द्वारा श्वसन क्रिया समझा । वह क्रिया शक्तिविशिष्ट हिरण्य गर्भ होता है, उसकी भी उत्पत्ति प्रलय समझ कर पुनः पूछा—ब्रह्म क्या है ? उत्तर में मन को ब्रह्म कहा । परन्तु मन भी संकल्प-विकल्प शक्ति विशिष्ट चेतन ही निश्चित होता है । उसमें भी उत्पत्ति विनाश समझ कर पुनः पूछा—उत्तर में विज्ञान को ब्रह्म कहा । परन्तु विज्ञान भी लोपयुक्त है ।

उपेयप्रतिपत्त्यर्था इत्यन्तेनान्वयः। अयं भावः—यथा भृगुवल्ल्यां "भृगुर्वै वारुणिर्वरुणं ब्रह्म पृष्टवान्। स उवाचान्नम्" इति तस्योत्पत्त्यादिकं बुध्वा पृष्टे प्राणमनोविज्ञानाऽऽनन्दात्मकपञ्चकोशोपदेशोत्तरं "ब्रह्म पुच्छं प्रतिष्ठा" इति ज्ञेयं ब्रह्म प्रतिपादितम्। तत्र कोशपञ्चकव्युत्पादनं शुद्ध-ब्रह्मबोधनाय। यथा वाऽऽनन्दवल्लीस्थपञ्चकोशव्युत्पादनं वास्तवशुद्धब्रह्म-बोधनाय। एवं प्रकृतिप्रत्ययादिव्युत्पादनं वास्तवस्फोटव्युत्पादनायैवेति। मिति अपवर्गस्य ब्रह्मोपलब्धौ द्वाराणि सन्ति। तत्र ब्रह्मलक्षण मुक्तवान्। यत् यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रीणन्ति, अभिसम्विशन्ति, तद्विजिज्ञासासत्वं तद्ब्रह्मेति। स भृगुः ब्रह्मोपलब्धये पथः ब्रह्मलक्षणञ्च श्रुत्वा तपसि प्रावर्तत। किमर्थं तपोऽतप्यत ? तत्रेदं कारणं यत् पिता स्वयमेव ब्रह्मोपदेशं न कृतवान् किन्तु द्वारमात्रं प्रदर्शितवान्। अतो नूनं ब्रह्मप्रापकं साधनान्तरमपेक्ष्यते। सर्वेषां साधनानां साधकतमसाधनं तप एव ततो तपश्चचार। तपश्चान्तः करणसमाधिः ऐक्यात् ब्रह्मोपलब्धि। उक्तञ्च—मनसश्चैन्द्रियाणाञ्चैकाग्र्य परमं तपः।

तज्जातयः सर्व धमभ्यो स धर्मं पर उच्यते ॥

तपश्चरणं कृत्वाऽनुभूतं यत् अन्नं ब्रह्म ईति। यतोऽ(प्राणिनः)न्नाद् जायन्ते। तेन (अनेन) जीवन्ति। तत्र (अन्नब्रह्मणि) अभिसम्विशन्ति= सन्तिष्ठन्ते। इति ब्रह्म लक्षणदर्शनात् समालोचितम्।यत्—अद्यते=भुज्यते= प्राप्यते=उत्पद्यते सर्वैरिति अन्नम् सर्वप्राणिप्राप्यसाधारणं स्थुलदेहकारणं पञ्चभूतात्मकं विराट्नामाख्यमन्नशब्देन व्यवहृयते। अन्न शब्दवाच्य भूत-प्रपञ्चस्य विराट् इत्युत्पत्तिदर्शनात् अनित्यंमत्वा पुनश्तपश्चचार ततः 'प्राणो ब्रह्म' इत्यनुभूतवान् अत्र प्राणशब्देन लक्षणया प्राणकरणं क्रियाशीलो हिरण्यगर्भ समजनि, तस्यापि उत्पत्तिशीलत्वादनित्यमित्यनुभूतम्। पुनस्त पश्चचार ततो मनोब्रह्म इति व्यजानात्। परन्तु संकल्पविकल्पशक्ति-

पश्चात् आनन्द को ब्रह्म समझा इन पाँचों को पञ्चकोश कहा—तलवार का आच्छा-दक कोश प्रसिद्ध है। वैसे ही अन्न, प्राण, मन, विज्ञान, आनन्दादि ब्रह्म के आच्छादक हैं। ये आनन्दमय कोश कहलाते हैं। पञ्चकोश के अनन्तर "ब्रह्म पुच्छं प्रतिष्ठा" कहा। यहाँ पुच्छ का अन्तिम आधार अर्थ है जो ब्रह्म ही है। सारे जगत् का आधार है। वह प्रलयकाल में भी प्रतिष्ठित रहता है। इसलिए उसे प्रतिष्ठा कहते हैं। यहाँ पञ्चकोश का व्याख्यान विशुद्ध ब्रह्मज्ञान के लिए ही है। जैसे—आनन्दवल्ली ग्रन्थ में पञ्चकोश का व्याख्यान वास्तविक विशुद्ध ब्रह्म बोध के लिए है। ऐसे ही शास्त्र के द्वारा प्रकृति प्रत्यय धातु, निपात, आगमादि का विवरण वास्तविक स्फोट ब्रह्म बोधन के लिए है।

विशिष्टं अशितमन्नं त्रैधाभवति यतस्थूलंपुरीषं तन्मध्यम तन्मांस च यदणीय स्तन्मनः इत्यनित्यत्वं निश्चिन्त्य मनस् चैतन्यमिति ज्ञातवान् तद् व्युत्पत्ति-शील: । तत तपसा 'विज्ञानं' ब्रह्म इत्ति बुद्धम् तस्यापि वृत्युपहितं ब्रह्मलक्षणा-न्तक्रान्तं मत्वा आनन्दो ब्रह्मेति सम्यक् समधिगम्य, इति विशुद्धात्मा तपसा ब्रह्मलक्षणमपश्यत् । ततो आनन्दं ब्रह्म इति विज्ञानवान् । इत्थं अन्नप्राणमनो विज्ञानानन्दात्मकंपञ्चकोशोत्तरं = असिकोशवत् आत्माच्छादात्मकत्वं कोशत्वम् । पञ्चीकृत स्थूलदेहोऽन्नमयः कोशः यथा स्यात्पञ्जीकृतभूतेभ्यो देहःस्थूलसंज्ञकः । २-पंचकर्मेन्द्रियविशिष्टो वायुपंचकरूपः प्राणमयः कोशः यथा-लिङ्गे राजसैः प्राणैः प्राणः कर्मेन्द्रियैः सह ।३-तथाचज्ञानेन्द्रियावच्छिन्न मनो रूपो मनोमयः कोशः । यथा—सात्विकैः धीन्द्रियैः साकं विमर्शात्मा (संशयात्मा) मनोमयः । ४—पञ्चज्ञानेन्द्रियविशिष्टाबुद्धिः विज्ञानमयः कोशः यथा—तैरेव साकं विज्ञानमयो धीर्निश्चयात्मिका । ५—'करणे सत्वमा-नन्दमयो भेदादि वृत्तिभिः । कारणभूता या अविद्या तस्यां यण्मलिनसत्वं तदेव मोदप्रमोद प्रियेष्टदर्शनलाभ भोग सुखदुःखवासनात्मिकाभिः' अन्तः-करणवृत्तिभिः सह आनन्दमयः कोश इत्युच्यते । तथैव व्याकरणशास्त्रे अखण्डस्फोटब्रह्मज्ञानाय अनित्याखण्डपदवाक्यबोधाय प्रकृतिप्रत्यादय पाणिनिना उपदिष्टाः । ततो बरुण उवाच ब्रह्मपुच्छं प्रतिष्ठा इतिज्ञेयं ब्रह्मप्रतिपादितम् । सर्वस्य अविद्यया कल्पितस्य प्रपञ्चात्मकद्वैतस्य अव-सानं = समाप्तिः यस्मिन् यद्वा आधारभूतंपुच्छं तदेव ब्रह्म प्रतिष्ठा = प्रतिष्ठते = सन्तिष्ठते जगत यस्मिन् इत्यद्वैतं प्रह्म उपदिष्टम् । एतत् सर्वं तत्र = भृगुवल्यां पञ्चकोशस्य व्युत्पादनं = शक्तिबोधनं शुद्धपरब्रह्मज्ञानाय । यद्वावा—पूर्वोक्तम् अंशतः भृगुवल्यांवर्तते । पूर्णतस्तु आनन्दवल्यां विज्ञेयम् तत्र हि—पञ्चापि कोशाः उपायभूताः । तत्र पञ्चकोशस्य शक्तिबोधनं वास्तवब्रह्मज्ञानाय अन्नाद्वैप्रजायन्ते इत्याद्युक्त्वा । एतस्माद्वा अन्नप्राणमनो-विज्ञानादन्योऽन्तरात्मा आनन्दमय इति । ततोऽविद्याकल्पितस्य सर्वसंहारा-श्रयस्य सर्वाधारस्य पुच्छस्य ब्रह्मणः प्रतिष्ठा = इत्युक्त्वा वास्तवब्रह्मोप दिष्टम् । अत्र श्रूयमाणं ब्रह मुख्यब्रह्मरूपः । यदि लाङ्गूलात्मकं पुच्छं यदा लाक्षणिकम् । उक्तञ्च—

अन्वय व्यतिरेकाभ्यां पञ्चकोश विवेकतः ।
स्वात्मानं तत उद्धृत्य परं ब्रह्म प्रतिपद्यते ॥

एवं यथा कोशा मुख्यब्रह्मप्रतिपादनाय उपायभूताः न तु ते वास्ति-विकाः एवं प्रसङ्गेऽपि असत्यः प्रकृतिप्रत्ययो वाचकत्व शक्तिबोधनं वास्तविक

ननु प्रत्यक्षस्य स्फोटस्य श्रवणादितोऽपि बोधसंभवान्न शास्त्रं तदुपाय इत्यत आह– उपाया इति। उपायस्योपायान्तरादूषकत्वात्। तथा च व्याकरणाभ्यासजन्यज्ञाने वैजात्यं कल्प्यते मन्त्रजन्यमिवार्थस्मरणे, वेदान्तजन्यमिव ब्रह्मज्ञाने। तस्य च ज्ञानस्य यज्ञादीनामन्तःकरणशुद्धाविव शरीरादिशुद्धावुपयोगः साक्षात्परम्परया वा स्वर्गमोक्षादिहेतुत्वं च।

तदुक्तं वाक्यपदीये—

तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते॥

o

स्फोटब्रह्मणः शक्तिबोधनायेति निर्गलितोऽर्थः। अत आह एवं=पूर्वोक्त दृष्टान्तेन प्रकृतिप्रत्ययादि व्युत्पादनं अखण्डस्फोट शक्तिज्ञापनाय इति।

ननु प्रत्यक्षस्य=श्रवणेन्द्रिय गोचरस्य व्यञ्जकस्य स्फोटस्य=शब्द ब्रह्मणः श्रवणादितोऽपि=श्रवणमनननिदध्यासनादितोऽपि बोध सम्भवात्= साधनेन ज्ञानस्योपस्थितत्वात् न व्याकरणशास्त्रं स्फोटज्ञानस्योपायः। स्फोटज्ञाने श्रवणञ्च न कर्णेन्द्रियजन्यज्ञानजनकं प्रत्यक्षस्य=इन्द्रियजन्य ग्यानस्योक्तत्वात्। किन्तु, प्रमाणादिभिः वाक्यानामद्वितीये स्फोटरूपे ब्रह्मणि तात्पर्य—निश्चायकं श्रवणम्। अद्वैतिनाऽपि तात्पर्यनिर्णायकमुप क्रमादित्युक्त्या श्रवणञ्च वाक्यानां तात्पर्यजिग्यासायां तदनुकूलो व्यापारः। मननञ्च श्रुतस्यार्थस्य साधकयुक्त्या चिन्तनम्। अद्वैतिनस्तु वस्तुतत्वस्य असत्यशंकानिवर्तकमनुसंधानम्। शब्देन निश्चितेऽर्थे प्रमाणान्तरेण विरोध शंकायां तन्निराकरणाय युक्त्या ज्ञानजनको व्यापारः साधक बाधक प्रमाणैः वाक्यार्थानुचिन्तनम्।

निदध्यासनम्,—निपूर्वक ध्या धातोः प्रत्यक्षनिश्चायकत्वमर्थः विरुद्ध धर्म बोधखण्डनपुरःसरम् अनुकूलधर्मज्ञान प्रवाही करणमिति वेदान्तिनः। गुरु मुखात् श्रुतस्यार्थस्य यतो वा इमानि भूतानि जायन्त इत्यादि वाक्यार्थस्य निरन्तरं दीर्घं कालम् अनुसन्धानं शास्त्रम्। अयं भावः' व्याकरण शास्त्र ज्ञानं विनाऽपि श्रवणमनननिदध्यासनैः सुगमसाधनैः स्फोटस्य बोध संभवेन व्याकरण शास्त्रं न स्फोट ज्ञानंसाधनम्। अत आह-उपाया इति :- उपायाः स्फोट ज्ञानसाधनानि, अव्यवस्थितानि सन्ति, तथापि श्रवणादिना सुखेन साध्यं स्फोट ज्ञानं बहुप्रयास साध्यं व्याकरणज्ञानमतएव तेन दुःखेन साध्यं स्फोट ज्ञानम्। तथापिउपायस्य स्फोट ज्ञानसाधनीभूतस्य शास्त्रस्य

उपायान्तरं श्रवणमननादिकमदूषकं=न दोषाधायकमित्यर्थः अपितु द्विवद्ध सुबद्ध न्यायेन शोभनमेव। तथा च श्रवणादिना सिद्धस्फोटज्ञानार्थं व्याकरणारम्भे च व्याकरण शास्त्रस्य=शब्दानु शासनस्य अभ्यासेन=पुनः पुनः मननेन जन्यं=उत्पन्नं यज्ज्ञानं तस्मिन् वैजात्यं=पुण्यं, विशिष्टा जातिः धर्मः विजातिः तस्य भावः वैजात्यं पुण्यं कल्प्यते। न केवल ज्ञान मात्रमपितु अदृष्ट लाभोऽपि तथापि फलमुखगौरवं न दोषावहम्। वस्तुतस्तु श्रवणादि कमनेकजन्मायासेन फलदायकं, तेन दुष्करत्वात् स्फोटज्ञाने लाघवेन व्याकरणस्योपयोगः। पुण्यजनकतावच्छेदके फले प्रमाणन्तु व्याकरण शास्त्रारम्भ एव। व्याकरणशास्त्रप्रक्रियास्मरणपूर्वकप्रयोगे धर्मः वैजात्यम्। शास्त्रजन्य पुण्ये प्रमाणं प्रस्तूयते मन्त्र जन्यमिव।

मन्त्रार्थस्मरणपूर्वकज्ञाने पुण्यं यद्यपि हविर्दाने मन्त्राणां प्रयोगः तत्र मन्त्रं विनाऽपि शाकल्य दानं कर्तुं शक्यम्। मन्त्रस्य किं प्रयोजनमिति संशये मन्त्राः अर्थस्मरणार्थाः तत्र मन्त्रोच्चारण जन्येऽर्थ स्मरणे पुण्यं कल्प्यते। एवं ब्रह्म ज्ञाने वेदान्तजन्य ज्ञानं पुण्यजनकं, यद्यपि भाषाग्रन्थैरपि ब्रह्म ज्ञानं जायते इति व्यभिचारेण वेदान्तवाक्यानां ब्रह्मज्ञानं प्रति पुण्यं कल्प्यते। एवं व्याकरणजन्यस्फोटज्ञाने पुण्यं कल्प्यते।

न च ज्ञानं साधनेषु पुरूषार्थचतुष्टयेषु फलतया व्याकरणज्ञानं न साधनम्। पुरुषार्थ चतुष्टयस्य प्राप्तिः व्याकरणाध्ययेन न जायतें, तदाह तस्य चेति—शब्दानुशासनाभ्यासजन्यस्फोटज्ञानस्य यज्ञादीनामिव= फलमनुदिश्य निष्कामनया फलमीश्वरार्पण बुद्धया कृतानां यज्ञादीनां प्रयोजनमन्तःकरणशुद्धिः। ध्यानात्कर्मफलत्यागस्त्यागाच्छन्तिरनन्तरमिति यज्ञ दानं तपः कर्म पावनानि मनीषिणाम्। तथा च श्रुतिः तमेतं वेदान्तानु

यदि स्फोट ध्वनि से व्यङ्ग्य है। ध्वनि प्रत्यक्ष का विषय है, तो श्रवण, मनन, निदिध्यासम से भी स्फोट का ज्ञान सम्भव है। इसलिए शास्त्र स्फोट ज्ञान के उपाय नहीं हो सकते। इसलिए बोले—उपाया इति। श्रवणादि उपाय हैं शास्त्र उपायान्तर है इसलिए साध्य की सिद्धि में उपाय उपयोगी है उपायान्तर भी और भी व्याकरण के अभ्यास से जो ज्ञान होता है। उसमें एक विलक्षण ज्ञान की कल्पना स्फोट में होती है। जिसमें विविध जाति विविध व्युत्पत्ति खिलती है जैसे—अर्थ स्मरण में मन्त्रजन्य ज्ञान कारण है और मंत्रजन्य स्मरण में विशिष्ट अर्थ ज्ञान कारण है जैसे ब्रह्म ज्ञान में वेदान्त जन्य ज्ञान कारण है अन्तःकरण की शुद्धि में उस ज्ञान का उपयोग और यज्ञादि भी चित्त शुद्धि और शरीर शुद्धि में उपयोगी है। वह साक्षात् हो या परम्परया। स्वर्ग और मोक्षादि फलों में कारण भी है। ऐसे ही व्याकरण शास्त्र भी

वचनेन ब्राह्मणाः विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेनैतमेव विदित्वा मुनि र्भवति। वेदाध्यनेन अनाशकेन कामत्यागेन व्रतोपवासादिना यज्ञादीनां परम्परया मोक्ष साधनत्वं यथा तथा शास्त्रजन्यस्फोटज्ञानं मोक्ष साधनमिति ध्वन्यते।

यथा साक्षात् अन्तःकरण शुद्धिः शरीरादिशुद्धिश्च एवं स्फोट ज्ञानस्यापि शरीरेन्द्रियादिशुद्धावुपयोगः एतेन शास्त्रस्य सार्थक्यं ध्वन्यते। साक्षात् स्वर्गहेतुत्वं परम्परया च मोक्षहेतुत्वम् अतएव भाष्ये एकः शब्दः सम्यक् ज्ञातः सुष्टु (प्रक्रियास्मरण पूर्वक) प्रयुक्तः स्वर्गे लोके च कामधुग्भवति। कामाल्लौकिकानलौकि कान्वा मनोरथान् दोग्धि तत्र सम्यग्ज्ञानवान् स्वर्गे, प्रक्रियास्मरणपूर्वकप्रयोगवान् लोके कामधुग्भवति। व्याकरणं मोक्षसाधनमित्यत्र भाष्यं प्रमाणम्। चत्वारि शृंगाः त्रयोऽस्य पादाः द्वे शीर्षे सप्त हस्तासोऽस्य बद्धा वृषभो रोरवीति महोदेवो मर्त्यामाविवेशः इति श्रुत्या भाष्यकृता प्रदर्शितंयत् महोदेवः=व्यापकं शब्द ब्रह्म यस्य चत्वारि परापश्यन्ती मध्यमा वैखरी इति शृंगाः स्वरूपाणि=शब्द ब्रह्म परिचायक चिह्नानि, अस्यः त्रयो पादाः भूत भविष्यत् वर्त्तमानास्त्रय कालाः सप्त विभक्तय एव सप्त हस्तासः=करा इत्यर्थः। द्वे शीर्षे=शब्दार्थौ, अथवा शब्दो नित्यः कार्यश्च यथा परब्रह्म नित्यः विराट् रूपेण कार्यश्च, सः शब्द ब्रह्म त्रिधा बद्ध उरसि कण्ठे शिरसि। एवं भूतः वृषभः वर्षणात=ज्ञान बर्धनात् अथवा वृषान्=लोकान् भाति=प्रकाशयतीति वृषभः। प्रकाशमानः व्यापकः स्फोटः तदेव वृषभः महोदेवश्च। सः मर्त्यं लोकमाविवेश महता देवेनास्माकं साम्यं स्यात् इत्यध्येयं व्याकरणम्। द्वे ब्रह्मणि वेदितव्य इति स्मृत्या महता परब्रह्मणा न तु कार्यब्रह्मणा। चतुर्षु वाक्षु त्रीणि गुहायाम्=अन्तःकरणे तिष्ठन्ति। तुरीय (वैखरी) एतेन स्वर्गे मोक्षे वा व्याकरणस्य साक्षाद्धे तुता व्याकरणं परम्परयाऽपि स्वर्ग मोक्षादि हेतुकम्। शरीरशुद्धि; अन्तःकरणशुद्धिश्च शरीरशुद्धौ प्रमाणम् यथा यज्ञे अपभाषणं न कर्त्तव्यम्। यद्यपभाषणं स्यात् तर्हि आहिताग्निः अपशब्दं प्रयुज्य प्रायश्चित्तीयां=शरीर शुद्धिकरीं सारस्वतीष्टि=यज्ञं निर्वपेत संसाधयेत्। परम्परा च आत्मज्ञानद्वारा अभीष्ट साधकं तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाविद्यत अयनाय मोक्षमात्म ज्ञान माध्यं व्याकरणद्वारा मोक्षसाधकत्वं हरिः प्रमाणयति तदुक्तं वाक्य पदीये—तद्द्वारमिति—तत्व्याकरणशास्त्रम् अपवर्गस्य आत्यन्तिकमोक्षस्य कैवल्यस्यत्रा द्वारम्=उपायः साधनम्। वाङ्मलानां चिकित्सितं वाचां=स्फोटानां मलाः=ग्रस्तं मिरस्तमविलम्बितमित्यादि। अपभ्रंशाः वर्ण पद

वाक्येष्वशुद्ध मनर्थकरीमशुद्धि अथवा शब्दब्रह्मणि भेदरूपा: मला: तेषां—चिकित्सितं चिकित्स्यते=दोषा-दूरी क्रियतेऽनेनेति चिकित्सितमतो वाङ्मल कर्मकापनयनसाधनं व्याकरणं मोक्ष द्वारम्। मोक्षोपयोगी च उक्तश्च भाष्ये :—

सक्तुमिव तितउना पुनन्तो यत्र धीरा: मनसा वाचमक्रत् अत्रासखाय: सख्यानि जानते भद्रैषां लक्ष्मी निहताधिवाचि यथा तितउना=चालनि सक्तोस्तुषानिदूरी क्रियते तथैव व्याकरणव्युत्पत्या=शब्दार्थ सम्बन्ध फलानां सम्यग्ज्ञानेन वाचोऽशुद्धा असंस्कृता: शब्दा: अपसार्यन्ते। यत्र धीरा: व्याकरण व्युत्पत्ति ज्ञानवन्तो वैयाकरणा: मनसा=प्रकर्षज्ञानेन निर्विकल्पक बोधेन वाचमक्रत। असाधूभ्य: साधु शब्दं पृथक्कृतवन्त: तेन शुद्धचित्ता: पवित्रान्त: करणा: ब्रह्म बोधकशब्दे सखाय: शब्दार्थयोर्विषये समान ज्ञानवन्त: ब्रह्मैकत्वं प्राप्नुवन्त: सख्यानि सायुज्यानि ब्रह्मैकत्वं जानते स्वरूपं प्राप्नुवन्ति। यत: येषां वैयाकरणाना वाचि भद्रा अशुद्धयादि दोष रहिता लक्ष्मी=स्वयं प्रकाशमानाधिकं निहिता स्थिता भवति। सा सर्वजगत्प्रकाशकस्वरूपा: ध्वनिरूपाया: वैखरीवाण्या: प्रकाश्य स्फोटस्य वाचकता स्वीकारे अत्यन्तनिष्कर्ष निर्णये ब्रह्म विहाय नान्यस्यो पलम्भेन असत्योपाधि भिन्नचेतनस्य बोधकतया जगत: सर्वपदार्थेषु ब्रह्म

स्फोटार्थ ज्ञान में कारण है। मन, शरीर, चित्त की शुद्धि में उपयोगी है। स्वर्ग, लोक, मोक्ष में हेतु है। "सम्यक् ज्ञात: सुप्रयुक्त: स्वर्गे लोके च महीयते।" वाक्यपदीय में कहा गया है कि—व्याकरण शास्त्र मोक्ष का द्वार है और वह वाणी में जितने मल (अशुद्धि, असंस्कार) आदि दोष हैं उनका चिकित्सक, उपचारकर्त्ता है। सभी चतुर्दश विधाओं में यह पवित्र है। श्रुति कहती है कि—पृथ्वी से जल पवित्र है जल से भी मन्त्र पवित्र हैं, मन्त्रों से भी पवित्र व्याकरण शास्त्र है इसको प्रकाशित करते हैं। सिद्धि के लिए ज्ञान द्वारा ब्रह्म की प्राप्ति या स्वर्ग, अपवर्ग, लोक, अन्त:करण की शुद्धि आदि के लिए जितनी सीढ़ियों का पार्थक्य है उनमें यह पहली सीढ़ी है। मोक्ष (शब्द ब्रह्म में आत्मसात्) चाहने वालों के लिए यह बहुत सीधा-सादा-स्वच्छ राजमार्ग है इस शास्त्र में प्रवेश हो जाने से सभी विपर्यास अर्थात् (भ्रम अज्ञान, अविद्या, अशुद्धि, असंस्कार) ये सब अतीत (विनष्ट) हो जाते हैं। केवल शब्द ब्रह्म का साक्षात्कार होता है। न कहिये प्रकृति प्रत्ययादि की कल्पना मिथ्या है उससे वास्तविक स्फोट का ज्ञान कैसे सम्भव हैं। परन्तु उनका अलीकत्व ( मिथ्या होना ) असिद्ध है। इसका प्रमाण आगे कहेंगे। यथा चित्रित गाय वास्तविक गाय का परिचायक है। वैसे अलीक कल्पना भी वास्तविक स्फोट का परिचायक है।

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।।
अत्रातीतविपर्यासः केवलामनुपश्यति ।।इति।।

o

बुद्धिर्जायते तेनैव दृष्टान्तेन। ब्रह्मज्ञाने वेदान्तजन्यं ज्ञानं कारणम्, अर्थं स्मरणे मन्त्र जन्यं ज्ञानं कारणमित्यादिना सर्वपदार्थेषु ब्रह्म बुद्धिं कुर्वन्ति वैयाकरणाः।

पवित्रं सर्वविद्यानां=व्याकरणशास्त्रं=शब्दब्रह्मणःस्वरूप प्रकाशकम्। अतएव सर्वाषु विद्यासु चतुर्देशेसु उपनिषदादिषु पवित्रम्=सर्वाधिकं पुण्य जनकम् उक्तश्च-आपः पवित्रं परमम्पृथिव्याः अद्भ्यः पवित्रं परमं हिमन्त्राः तेषाञ्च सामर्ग्यजुषाम्पवित्रंमहर्षयों व्याकरणं निराहुः ।। अन्यापेक्षेया व्याकरणस्य सकलप्रपञ्चकारणीभूतपरावाक्स्वरूप स्फोटरूप ब्रह्मणः प्रकाशकत्वेन पवित्रतमत्वमुक्तम्। मनः शुद्धौ यज्ञादीवामिव वाक्शुद्धौ व्याकरणस्योपयोगात्। एतेन जलापेक्ष या मन्त्राणां मन्त्रापेक्षया शब्दानु शासनस्य सर्वविद्यानाम्मध्ये अतिशयोपकारकत्वेन सर्वाधिकपुण्यजनकत्व मुक्तम्।

इदमाद्य पदस्थान—इदं=स्फोट प्रतिपादकं शास्त्रं सिद्धिसोपानपर्वणां=सिद्धिः—निर्मलं ज्ञानं मोक्षश्च तस्य साधनानि=उपायभूतानि सोपानानि=उपरिगमनश्रेणयः। उपानं=प्राणवायुग्रहणम् ऊर्ध्वगमनम्बा तेन सह सन्तीति सोपानानि तेषां पर्वाणि=ग्रन्थयः, क्रमस्थानं, पादविक्षेपाधिकरणम्, आद्यं=मोक्षमार्गानुसरणे यावन्तो पादविक्षेपाः श्रेणयः सन्ति तेषु प्रथमं पदस्थानं=पदे चरणौ स्थीयते अस्मिन्निति स्थानं चरणस्थित्याधारः। इयं राजपद्धतिः मोक्षमाणानां कृतेऽजिह्मा। इयमिति विधेयस्थ राज पद्धतेर्विशेषणं। विधेयस्थ प्राधान्यात् अतः इदं=व्याकरणं शास्त्रमेव मुमुक्षूणां कृते अवक्रा (अकुटिलाचं राजमार्गोऽस्ति। उद्देश्यविधेयभावयो रैक्यमादाय सर्वनामानः, पर्य्याय तत्तल्लिङ्ग भाजो भवन्ति। अत्र=अस्मिन् व्याकरण प्रतिपाद्ये ऋजुभार्गे स्फोटरूपे योऽतीतो=अपास्तो, निरस्तो विपर्यासः=विपरीतं ज्ञानं=भ्रमो वा यस्य शाब्दिकस्य भ्रमशून्यः सः केवलां=परावाचमनुपश्यति=योगाभ्यास साहाय्येन पश्यतीत्यर्थं। योगजतत्व ज्ञाने नास्ति कश्चन प्रतिवन्धकः। तदुक्तं भागवते—

समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः।
हृद्याकाशादभून्नादो वृत्तिरोधाद्विभाव्यते ।।

न चालीकया प्रकृतिप्रत्ययकल्पनया कथं वास्तवस्फोटबोधः, तस्यालीकत्वासिद्धेर्वक्ष्यमाणत्वात् । एवं रेखागवयन्याय आदिना गृहते ॥

०

समाहितं=एकाग्रीभूतं ध्यानावस्थमात्मा=मनो यस्यासौ तस्य ब्रह्मणः=आदि सृष्टिकर्तुः परमे=ब्रह्मणि तिष्ठति=तन्मयो भवति तस्य परमेष्ठिनः चतुर्मुखस्य हृदि+अन्तः करणे य आकाशः तत्र नादो+व्यञ्जको ध्वनिरभूत् । स कीदृशः ? तर्हि कर्णच्छिद्रपिधाने सति श्रोत्रस्य या वृत्तिः—क्रिया व्यवहारः तस्य निरोधात्—श्रवणक्रियावरोधात् विभाव्यते—अस्माष्वपि अनुभूयते ।

यदुपासनया ब्रह्मन् योगिनो मलभात्मनः ।
द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवन् ॥

पूर्वोक्तस्य स्फोट प्रकाशकस्य नादस्य परां, पश्यन्तीं वा वाचं समुपास्य मलं द्रव्य मधिभूतं, क्रिया—अध्यात्मं कारकम्—अधिदैवं इत्यादिकं मलं दैहिक दैविक भौतिकतायाः पापं धूत्वा—प्रक्षाल्य, अपोह्य योगिन—एकाग्र चित्ताः अपुनर्भवं—मोक्षं स्वयं प्राप्नुवन्ति । व्याकरणज्ञानेन निर्मलान्तः करणाः कैवल्यं शब्द ब्रह्म स्वरूपं प्राप्नुवन्ति ॥ ६९ ॥

ननुनित्यस्थ स्फोटस्य ज्ञान मनित्येन मिथ्याभूतेन वर्णादिना न स्यादत आह—नचेति अलीकया—उपायभूतया अनित्यया प्रकृतिप्रत्यय कल्पनया वास्तवस्थ=स्फोटस्य=व्याकरण व्यङ्ग्यस्य ज्ञानं कथमिति प्रश्नः तस्याः=प्रकृतिप्रत्ययकल्पनायाः अलीकत्वस्य=मिथ्यात्वस्य असिद्धेः=बौद्धार्थत्वान्नसिद्धिरिति वक्ष्यमाणत्वात् । यथा शशश्रृङ्गादीनामत्यन्ता असत्ता नास्ति बौद्धार्थत्वात् । यदि व्यावहारिकी असत्ता स्वीक्रियते तर्हि प्रकृत्यादीनाम् अवास्तवत्वेऽपि अन्न-प्राण-मनो-विज्ञानादिवत् मायाजन्यत्वेऽपि प्रतिपादनकौशल्यप्रदर्शनार्थं सा बोध्या । न च दर्पणजलमृदादिषु प्रतिबिम्बितेन सूर्य किरणेन यथा अन्धकारस्य नाशो न भवति तथा असत्यया कल्पनया सत्यस्य स्फोटस्य बोधो नस्यादिति वाच्यम् । असत्येनपि मणिप्रभा प्रतिबिम्बेन यथा मणिप्राप्तिस्तथा अनित्यकल्पनयाऽपि नित्यस्य स्फोटस्योपलब्धि सम्भवात् । पञ्चकोशादिवोच्चारितेन रेखागवयन्यायस्यापि ग्रहणम् रेखया अङ्कितेन असत्येन गोः आकारेण यथा सत्यस्य गवयस्य ज्ञानं तथा अवास्तवेनापिप्रकृत्यादि वास्तविक स्फोटस्य ज्ञानम् ।

ननु वर्णानामुत्पत्तिविनाशसाक्षिकमनित्यत्वं सुस्पष्टं वर्तते तादृश्युत्पत्ति विनाशशालिनि वर्णात्मके स्फोटे स्फोटस्यापि अनित्यत्वप्रसंङ्गः । एतेन

ननु स्फोटस्य वर्णजातीनां च नित्यतया ककार उत्पन्न इति न स्यात्। वायुसंयोगनिष्ठजातेः स्फोटे भाने कादिप्रतीतीनां भ्रमत्वापत्तिश्चेत्यत आह–

o

कत्वगत्वादिकं स्फोट निष्ठमिति वक्तुं न शक्यते ककारः उत्पन्न इति न स्यात् नित्यत्ववत् यदि कत्वादिकं स्फोटव्यञ्जक ध्वनिनिष्ठमतएवानित्यः न्तदा सोऽयं ककारः इति प्रतीतिर्न स्यात्। नित्यत्वेन व्यक्तेर्भेदात्। इति शङ्का समाधान परतया मूलमवतारयति नन्विति—स्फोटस्य कत्व गत्वादि वर्ण जातीनाश्च नित्यतया ककारे उत्पत्यादिक्रिया न सम्भवति। नच जातेरपि अविद्यया जन्म जायते तस्याऽपि अन्यथा उत्पत्तिरस्तीतिः तदाह वायु-संयोग इति—व्यञ्जक वायुसंयोगः तत्र स्थिता या जातिः तस्याः स्फोटे भानेऽपि तत्र कैयटप्रभृतीनां=ककार कत्वादिवाच्येति भ्रमत्वापत्तिः= स्फोटे ककारो गकार इति बुद्धीनां भ्रान्तत्वापत्तिः यतोहि जातिः वायुसंयोग निष्ठा तत्र कत्वं गत्वंञ्च। अत एव द्वयोः भ्रमः स्फोटे। अर्थात् कत्वादि जातिः वायुसंयोगे विराजमाना तां स्फोटे भन्यसे चेत्तर्हि अन्यस्य धर्मस्य अन्यस्मिन् भानं भ्रमः वायुसंयोगनिष्ठस्य धर्मस्य कत्वादेः स्फोटे भानं भ्रम-त्वापत्तिः। यथा शुक्तौ रजतस्य रज्वामहेर्भ्रमः। तदाह कल्पितानामिति— कल्पितानां=अन्यस्य धर्मस्य (कत्वादेः) अन्यस्मिन् (स्फोटे) आरोपितानां मुपाधित्वं=धर्मः परैः=मीमांसकादिभिरपि स्वीकृतम्। अर्थात् उपाधौ= स्वरदैर्घ्याद्यपि स्वराः=उदात्तानुदात्तस्वरिताः ह्रस्वदीर्घप्लुताः हि= निश्चयेन वर्णेभ्योऽन्ये=भिन्नाः सन्तः अन्यस्य=इतरस्यापिमन्यत=बुध्यते यथा—'अ इ उ', इत्यत्र स्वरादयो विद्यमानाः अन्यत्र आ ई ऊ इत्या

यदि स्फोट और वर्ण जाति भी नित्य है तब उनमें क् ग् आदि की उत्पत्ति सिद्ध नहीं हो सकती नित्य वस्तु में अनित्य की कल्पना हास्यापद है यदि उच्चारण के योग्य कण्ठ तालु आदि स्थानों में वायु के संयोग (टकराव) में स्थित प्रगति स्फोट की (प्रतीति) मानी जाय, तब उसमें विसर्ग आदि का ज्ञान भ्रम माना जायगा। उसकी व्यावृत्ति के लिए बोले कल्पितानामिति–आरोपितों की उपाधि भेद कल्पना हमारे मत में स्वीकृत है ही परमत में भी वह स्वीकृत है। अर्थात् अन्य आचार्यों ने भी कल्पित में उपाधि को स्वीकार किया है। प्रमाणस्वरूप में स्वर, ह्रस्व, दीर्घ इत्यादि भी वर्ण के धर्म है। अन्य वर्ण को धर्म अन्य वर्ण में भी स्वीकार किया गया है— प्रसङ्ग में आदि पद से उत्पत्ति विनाश भी लिए जाते हैं। उदात्तानुदात्त स्वरित ह्रस्वादि वर्ण में रहने वाले धर्म नहीं हैं, क्योंकि वे वर्ण एक है, नित्य हैं। जैसे एक ही आकार में अठारह धर्म संक्षिप्त हैं उनका एक में होना एक आश्चर्य की बात हैं।

उपअद = अष्टादश





मीमांसकों के अनुसार

**कल्पितानामुपाधित्वं स्वीकृतं हि परैरपि ॥१०॥ (७०)**
**स्वरदैर्घ्याद्यपि ह्यन्ये वर्णेभ्योऽन्यस्य मन्वते ।**

**स्वीकारस्थलमाह--स्वरदैर्ध्याद्यपीति । आदिनोत्पत्तिविनाशादिसंग्रहः ।**

o

द्वावपि मन्यन्ते । यथा वर्णसमान्नाये तिष्ठन्ति तथा वर्णसमाम्नाय भिन्न स्थलेऽपि मन्यन्ते । कल्पितेषु गत्वादिषु उपाधेः नियामकः भ्रमोऽस्तीति केनाभिप्रायेणोच्यते ? तत्र अन्यधर्मस्य प्रतीतिरन्यस्मिन्स्यात्तर्हि भ्रम इति मन्यते । समाधानम् जातिधर्मात् भिन्नोधर्म उपाधिः । यं भवान् भ्रम इति मन्यते । तमुपाधिरूपेणान्ये आचार्या अङ्गीकृतवन्तः । अर्थात् गत्वादि धर्माः स्वाश्रयाभिव्यङ्ग्यत्वं स्वं = कत्वं तदाश्रयो वायुसंयोगः तदाभिव्यञ्जकत्वं स्फोटे बर्तत) सम्बन्धेन स्फोटे वर्तते । उपाधित्वंञ्च = स्वाश्रयाभिव्यङ्यत्व सम्बन्धेन कत्वादिविशेषणक बोधकत्वम् । जातिस्तु केवलं समवायसम्बधेन तिष्ठति । उपाधिस्तु—समवायासमवायोभयसम्बन्धेन तिष्ठति । वायुसंयोगस्थकत्वादेः श्रोत्रेन्द्रिय ग्राह्यत्वमपि वर्तते । स्वेन (श्रोत्रेन) समवेतः = समवाय सम्बन्धेन स्थितः स्फोटः तस्य प्रकाशको वायुसंयोगः तत्र समवाय (अभेद) सम्बन्धेन कत्वादय स्तिष्ठन्ति । कल्पितेषु कत्वादिषु धर्मेषु उपाधिः स्वीकृता वर्तते । स्वरूप सम्बन्धेन समवाय सम्बन्धेन जातिस्तिष्ठति अन्य सम्बन्धेनेपाधि स्तिष्ठति । कल्पितास्ति । विशेषणस्तु समवायेन तिष्ठति । आरोपितो धर्म उपाधिः तत्र भ्रमो न भवितुमर्हति । अत्र मीमां० सम्मतो दृष्टान्तः—स्वर दैर्घ्यादीति—मीमां मते अकारादयो वर्णा, नित्याः स्फोटरूपाः एकत्व (स्फोटत्व) धर्मविशिष्टाः प्रकाशक ध्वनि गताः ये उदात्तत्वादयस्तेषाभारोपात् ध्वनिगत उपाधिभेदेन भिन्नाः स्फोटा इति मन्यन्ते । उदात्तत्वादिः दीर्घादिश्च केनापि निमित्तेन जायन्ते । भवन्ति न

इससे सिद्ध होता है कि वे उच्चारण मे रहते हैं वण में नहीं वर्ण की नित्यता में प्रमाण है कि—'स एवायं' वह बण यही है ऐसी प्रत्यभिज्ञा ( पहचान ) ही प्रभाव है। न कहिये ग में रहने वाला गत्वधर्म से विशिष्ट गकार के अभाव से भिन्न ( सम्भव ) ग ही विषय होगा । यहीं प्रत्यभिज्ञा का विषय व्यक्ति में होते हुए भी पहचान बनी रहती है । गत्व जाति एक है गत्वावच्छिन्न; प्रति योगी वाला भेद उसमें नहीं है व्यक्ति अश में अभेद होने से जो ज्ञान बिना बाधक के उसका त्याग नहीं हो सकता। इसलिए ककारादि वर्ण का भ्रम स्फीट में नहीं कह सकते । न कहिये क ख आदि की उत्पत्ति जान पड़ती है, वही बाधिका बनेगी । परन्तु जो पहले न हो पश्चात्त उत्पन्न हो उस सत्ता की उत्पत्ति कहते हैं । वह वर्णो में अनुभव और व्यवहार के विरुद्ध है इसलिए 'वर्ण को उच्चारण करता है' ऐसी प्रतीति होती है वर्ण का उत्पादन करता

**उदात्तत्वादिति न वर्णनिष्ठं तस्यैकत्वान्नित्यत्वाच्च। तच्च स एवायमिति प्रत्यभिज्ञानात्। न च गत्वावच्छिन्नप्रतियोगिताकभेदाभावस्तद्विषयो व्यक्त्यंशाभेदस्यापि भासमानस्य विना बाधकं त्यागायोगात्। न चोत्पत्ति-प्रतीतिर्बाधिका, प्रागसत्त्वे सति सत्त्वरूपाया उत्पत्तेवर्णेष्वनुभवविरुद्धत्वात्।**

भवन्ति च। अत एव ते न स्वाभाविकाः किन्तु वर्णे कल्पितैव। ते उपाधयः ध्वनिषु तिष्ठन्ति। उदात्तत्वाद्रयो नित्य वर्णेष्वपि मन्यन्ते अन्य धर्मस्य अन्यस्मिन् सत्यपि नते भ्रमा इति। एवं वेदान्तिनोऽपि स्वीकुर्वन्ति। भेद-स्त्वयमेव यत् ब्रह्मातिरित्यस्थ सर्वस्यानित्यतया सृष्ट्यारभ्य प्रलयपर्यन्तं वर्णादयोऽपि नित्याः। नतु अनुत्पत्तित्वे सि ध्वंसाप्रतियोगित्व (विनाशाभावः) मी० भते वर्णेषु इदमेव नित्यत्वम्। वर्णेभ्यः=ककारादिभ्यो-ऽन्यस्य=भिन्नस्य ध्वनेः तन्निष्ठोदात्तत्वादिः नित्येषुवेर्णेषु सन्त्येव एवं एकस्मिन्ब्रह्मणि स्फोटरूपे वायुसंयोगस्थाः कत्वादय तेषामुत्पत्तिविनाशश्च प्रतीयन्ते। आदिना=उत्पत्ति विनाशस्यापि कत्वादिप्रतीतिरूपोपाधिः नतु भ्रमः। उपाधे=स्वीकारस्थलं ब्रूते स्वरदैर्घ्याद्यपीति—आदिना ह्रस्वादि॰ कमभिगृह्यते। ह्रस्वदीर्घप्लुतादयः उदात्तत्वानुदात्तत्वस्वरितत्वादयो धर्माः परस्परविरुद्धाः सन्तः एकस्मिन् अकारादौ न सम्भवन्ति। वर्णभेदेतु सम्भवा-न्त्येव ते कल्पिताः उपाधयः आरोपिताः भवन्ति। वर्णस्य एकत्वात्=स्फोट-त्वेनाभिन्नत्वात्। अतएव उदात्तत्वादिविरुद्धधर्माणां तत्र सन्निवेशाभावः। एकत्र तेषां सन्निवेशे अभेदसम्बन्धो न स्यात्। नित्यत्वाच्च=उत्पत्तिविनाश-शून्यत्वात्। तच्च=मीमांसकसम्मतवर्णानां नित्यत्वमेकत्वञ्च। तत्र अनुभवः प्रमाणम् यथा—सोऽयं गकारः सोऽयं चैत्रः तदेवेदं वाक्यमिति प्रत्यभिज्ञानात्=या व्यक्तिः पूर्वमस्ति अनुभूता वा सैवेदानी प्रत्यक्षविषयी-भूता चेत्तर्हि प्रत्यभिज्ञा पदेन व्यवह्रियते। संस्कारवशात् इन्द्रिय प्रत्यक्षं ज्ञानं प्रत्यभिज्ञानम् तस्मात्। तदेवेदं रजतमित्यादौ भ्रमश्चेत् तर्हि प्रतिज्ञामनुभवं प्रतिगता प्रत्यभिज्ञा ज्ञेया अनुभवजन्यसंस्कारसहित इन्द्रिय जन्यं ज्ञानं

**ऐसी न प्रतीति होती है न व्यवहार ही होता है उच्चारण क्या है कि तालु ओष्ठ दन्त मूर्धा कण्ठ पर वायु के संयोग से जन्य ज्ञान की अभिव्यक्ति प्रकाश उससे विशिष्ट होना। अर्थात्त ध्वनि से ज्ञान कराने वाली क्रिया नाम उच्चारण है। वर्ण नित्य हैं व्यंग्य है उनका यञ्जक प्रकाशक ध्वनि है। उसकी उत्पत्ति परम्परा से या साक्षात् कल्पित होती है। ध्वनि जो वर्ण निष्ठ है, विषय रूप से उत्पन्न नहीं कह सकते। क्योंकि वह अतिरिक्त रूप से वर्ण की साधिका नहीं हो सकती। परम्परा सम्बन्ध से वर्ण में स्थित ध्वनि की स्वीकृति से ककारादि का भ्रम नहीं हो सकता यह निश्चित है। केवल सम्बन्ध अंश में भ्रम है कि नहीं यह निर्णय शेष रह जाता है।**

मीमांसकों के अनुसार ... २ब्द · अनित्य





**अत एव वर्णमुच्चारयतीति प्रत्ययो न तूत्पादयतीति प्रत्ययो व्यवहारश्च। उच्चरित्वं च ताल्वोष्ठसंयोगादिजन्याभिव्यक्तिविशिष्टत्वम्। किं च व्यञ्जकध्वनिनिष्ठोत्पत्त्यादेः परम्परया वर्णनिष्ठत्वविषयत्वेनाप्युपपत्तेर्न साऽतिरिक्तवर्णसाधिका। परम्परया वर्णनिष्ठत्वाभ्युपगमाच्च न भ्रमत्वम्। साक्षात्संबन्धांशे भ्रम इत्यवशिष्यते।**

प्रत्यभिज्ञानम्। न च गत्वावच्छिना या प्रतियोगिता तस्या योऽभाव स्तद्विषयः=गत्वस्य भेदप्रतियोगी 'ग' इति प्रतियोगितावच्छेदकं गत्वमिति गत्वावच्छिन्ना (गत्वविशिष्टा) प्रतियोगिता यस्य सो गत्वावच्छिन्नप्रतियोगिताकः, भेदोऽन्यपदार्थः गत्वावच्छिन्नप्रतियोगिताकोभेदवत् सम्पूर्णं जगदस्ति। भेदस्य अभावो गकारे। तदेव प्रत्यभिज्ञापदबोध्यः। नन्वत्र गकारस्य अन्यगकारव्यक्तौभेदोऽस्ति। यदि प्रत्यभिज्ञायाः नियामकः गत्वावच्छिन्न प्रतियोगिताकभेदाभाव इति मन्यसे तर्हि व्यक्त्यंशाभेदस्य= भूतकालिकव्यक्तेः वर्तमानकालिकव्यक्तेः व्यक्तित्वावच्छिन्नरूपेण भेदस्य योऽभावः तस्यापि भासमानस्य=बोधविषयताकस्य वाचकं=प्रतिबन्धकं विना त्यागायोगात्=त्यागस्य=अविषयताया असम्बन्धात्। यत्र एकस्य व्यक्तेः अन्ययाव्यक्तया सह भेद याभावोऽस्ति तत्र प्रत्यभिज्ञया भाव्यम्। न च उत्पत्ति प्रत्तीतिर्बाधिका=ककार उत्पन्न, गकार उत्पन्न इति आदौ उत्पत्तेः=जननस्य या प्रतितिः=अनुभव तदेव बाधकमस्ति। तन्नं वर्णषु उत्पत्तिप्रतीतिरसम्भवःयतः यः प्रागसत्वे सति=पूर्वं न आसीत् पश्चादुत्पद्यते तभुत्पत्तिरित्युच्यते। प्रागसत्वे सति पश्चात् सत्वरूपात्वंभुत्पत्तित्वम्। तद्- वर्णेषु नानुभूयते अनुभवविरुद्धत्वात्। प्रागसत्वरूप विशेषणस्य वर्णेष्व भावेन अतएव उत्पत्तिविषयिका अनुभूतिः तिरस्करणीया। अभिव्यक्तो गकार इति वक्तुं शक्यते। उत्पन्नो गकार इति न। अतएव=अनुभवविरोधादेव। वर्णमुच्चारयतीति प्रत्ययः=ज्ञानं, प्रतीतिर्जायते। वर्णमुत्पादयति इति ज्ञानं व्यवहारश्च न जायते। न लोकेऽर्थंबोधनाय शब्दस्योच्चारणं भवति। उत्पादनं न भवति। न च उत्पत्यनुकूलो व्यापार उच्चारणं तेन जन्यत्वमेवानुभूयते। कथं नित्यत्वं तदाह उच्चरितत्वश्च—तालुदन्तोष्ठादीनां वायुजिह्वयोश्च सयोगेन जन्या या वर्णानामभिव्यक्तिः=प्राकट्यं प्रकाशकत्वं ज्ञानम्वा तद्विशिष्टत्वं=तद्विषयत्वम्। ननु उत्पन्नोवत्सः इव उत्पन्नोगकार इति वक्तुं शक्यते तत्र प्रागसत्वा पश्चात् सत्वस्वरूपा उत्पत्ति- विषयोवाच्यः। यद्वा कण्ठतालुजन्यमुच्चारणं इतु वर्णोत्पत्यनुकूलव्यापार इति विनिगमनाभावः। यदि शब्दोऽनित्यस्तदा वर्णाः उत्पद्यन्त इति व्यवहारोऽपि इष्ट एव। कथमनुभवविरोध तदाह—किन्न—स्फोस्य व्यञ्जिका=

मीमांसक

तदपि सोऽयमित्यत्र व्यक्त्यभेदांशे तव भ्रमत्ववत्तुल्यम् । परं तु ममातिरिक्तवर्णतत्प्रागभावध्वंसकल्पना नेति लाघवमतिरिच्यते । न च वर्णस्थले ध्वनिसत्त्वे मानाभावः, तदुत्पादकशङ्खाद्यभावेन तदसंभवश्चेति वाच्यम्, ककाराद्युच्चारणस्थले तत्तत्स्थानस्यजिह्वाया ईषदन्तरपाते वर्णानुत्पत्तौ ध्वन्युत्पत्तेश्च दर्शनाज्जिह्वाभिघातजवायुकण्ठसंयोगादेर्ध्वनिजनकत्वकल्प-

o

प्रकाशिका या ध्वनिः = उच्चारणां शवदस्य प्रत्यायकत्वं तन्निष्ठोत्पत्यादेः = ध्वनि = उच्चाणेनिष्ठा = विद्यमाना उत्पत्तिः = जननं । सा परम्परया स्वाश्रयाभिव्यङ्ग्यत्व = स्वयम् = उत्पत्तिः तदाश्रयो ध्वनिः तद्व्यङ्ग्यत्वं = स्फोटे तेन सम्बन्धेन उत्पत्तिः वर्णनिष्ठत्व विषयाश्रऽपिउत्पद्यत्त वर्णनिरूपो भवति । अतो उत्पत्तिंरतिरिक्तर्णं साधिका नास्ति । ननु ध्वनिनिष्पपि-उत्पत्तिः तस्या नित्येषु वर्णेषु सत्ता स्वीक्रियषे तदा भ्रमत्वापत्तिः अन्यस्य धर्मस्य अन्यस्मिन् सत्वात् तदा परम्परया इति स उत्पत्तिरूपोधर्मः ध्वनेरस्ति परम्परया वर्णस्था स्वीक्रियते तेन न भ्रमत्त्वं, यथा स्वाप्मयसयोग सम्बन्धेन जपाकुसुमगतरक्तत्वं स्फटिके अवगाहते तेन लोहितः स्फटिकः इति प्रतीति र्जायते, तत्र न भ्रमत्त्वं, रक्तस्तु सम्बन्धेन स्फटिके प्रविष्ट न तु–स्फटिकस्य वास्तविक रक्तस्वरूपं, तथैव उत्पत्तिः परम्परया नित्यवर्णमवगाहते तत्रापि न भ्रमत्त्वं यत्र सम्बन्धेन धर्मज्ञानं तत्रभ्रमो न भवति । न च साक्षात् सम्बन्धेन उत्तपत्तिः नित्यवर्णेष्व भावात् भ्रमत्त्वं तथैव तिष्ठति अत आह– साक्षात् सम्बन्धांशे भ्रम अवशिष्यते इति ।

तन्न रजतत्त्वं समवायसम्बन्धेन साक्षात् तिष्ठति तत्र न भ्रमः । तदपि नित्यवर्णवादिमते । भ्रमरूप दोषोपिअददात् तत्र सोऽयं गकारः इति अभेदावगाहिनी या प्रतीतिः—तस्या व्यक्तभेदांशे कालान्तरे उच्चरितस्य अधुना उच्चरितस्य च गकारस्य भ्रमत्ववत् तुल्यम् । यथा नैयायिकमते भ्रमत्त्वं

वह भी 'सोऽय' 'वह गकार यही है' यहाँ व्यक्ति के अभेद अंश में भ्रम जान पड़ता है । जैसे तुम्हारे मत में व्यक्ति अंश में भ्रम है, तो दोनों मत में भ्रम समान है । विशेषता यह है कि हमारे मत में न अतिरिक्त वर्ण की न प्राग भाव न ध्वंस की कल्पना करनी पड़ती है, यह विशेष लाघव है । न कहिए कि वर्ण स्थल में ध्वनि की स्थिति होने में कोई प्रमाण नहीं है क्योंकि ध्वनि के उत्पादक शंख नगाड़े भेरी आदि होते हैं । इनके बिना उच्चारण या ध्वनि असम्भव है । तब, ककार इत्यादि के उच्चारण स्थल में तालु दन्त आदि स्थानों के तथा जिह्वा के थोड़ा स्पर्स होने से वर्ण की उत्पत्ति तो नहीं होती है परन्तु सूक्ष्म ध्वनि की उत्पत्ति अनुभूत है । जिह्वा के टकराव से जन्य वायु कण्ठ संयोग आदि से ध्वनि की उत्पत्ति कल्पना होती है । इससे ध्वनि

ध्वनि भी उत्पन्न होती है।





नात्। तस्य च वर्णोत्पत्तिस्थलेऽपि सत्त्वात् तवैव प्रतिबंध्यप्रतिबन्धकभाव-कल्पना निष्प्रामाणिका स्यादिति विपरीतं गौरवम्। एवं परस्परविरोधादुदात्तत्वानुदात्तत्वह्रस्वत्वदीर्घत्वादिकमपि न वर्णनिष्ठं युक्तमिति तेषामभिप्रायः। एवं चोत्पत्त्यादिप्रतीतीनां तत्प्रमात्वस्य च निर्वाहः परेषामपि समान इति प्रतिबन्द्यैवोत्तरमिति भावः। स्वर व्यञ्जन के कारण होते हैं।

तथा साक्षात् सम्बन्धेन नित्येषु वर्णेषु उत्पत्त्यादिप्रतीतिः मीमांसक मतेऽपि तुल्यं अर्थात्—उक्त दूषणं उभयोः समानमिति फलितोऽर्थः उक्तञ्च "यस्तूभयोसमो" दोषः परिहारोपि तयोः समः।

ननु मतद्वये समानदोषे सति अनित्याः वर्णाः साक्षात् उत्तपत्त्यादिमन्तश्च इति मीमांसकाः उपेक्षिताः स्युः अत आह—परन्तु इति मम मीमांसक मते नित्यवर्णवादिनि अतिरिक्ताः, नित्यवर्णपक्षे ककारस्येव गकारोपि इति परिगणिताः। अनित्यवर्णवादे तु ककार गकारादयो अनन्ताः। तन् मते अधिक वर्णाः इत्यर्थं। अनित्य पक्षे वर्णेषु प्रागभाव प्रध्वंशाभावश्च कल्प्यते। नित्य पक्षे तु संतुलिताः परिमिताश्च वर्णाः। तत्र न प्रागभावे नापि तद्ध्वंश इति लाघवंमतिरिच्यते अधिकं लाभइत्यर्थः। ननु नित्य-वर्णस्थलेध्वनिः नित्यां स्यात्, तत्र परम्परा सम्बन्धेन उत्पत्त्यादिकमादाय-उत्तपन्नो गकारः इति स्यात्। परन्तु वर्णे ध्वनिः न सम्भवति तदाह न चेति—वर्णोच्चारणस्थले पृथक् भावेन ध्वनिरस्तीति प्रमाणाभावः। यतः तदुत्पादक=ध्वन्युत्पादक, शंखाद्यभावेन ओष्ठान्निर्गतवागसंयोगजन्य ध्वनेरभावात् तदसम्भवः ध्वन्युत्पत्तेरसम्भवः। यतः शंखाद्यभावे ध्वनेरसम्भवः अतः वर्णस्थले ध्वनेः सत्तायां प्रमाणाभावः तन्न, वर्णस्थलेऽपि ध्वनिः नियतैव अत आह—ककारादीनां उच्चारणस्थलेऽपि तत्तत् स्थानस्य कण्ठ मूर्धा दन्तौष्ठादिस्थानस्य जिह्वायाः ईषदन्तरपातेः जिह्वाभिघातजन्य

वर्णोत्पत्ति स्थल में सिद्ध माना जाता है तुम्हारे मत में प्रतिबन्धक प्रतिबन्ध्य की कल्पना में कोई प्रमाण नहीं है यह विरुद्ध गौरव स्पष्ट है। इस प्रकार परस्पर में विरोध होने से एक ही अकार वर्ण में अरोपित उदातत्व अनुदात्तत्व ह्रस्वत्व दीर्घत्व इत्यादि धर्म भी वर्ण निष्ठ नहीं हैं क्योंकि ये सभी विरोधी धर्म हैं वायु संयोग (ध्वनि) में रहने वाले धर्म है। वर्ण में आरोपित है, यह उनका आशय है। इस प्रकार मीमांसक आदि के मत में भी उत्पत्ति बिनाश की प्रतीति होती है। वह प्रमा रूप से निर्वाह किया जाता है। नित्य वर्णों की उत्पत्ति की प्रतीति और निर्वाह उत्पन्न गकार विनष्ट गका' ऐसा पथार्थं ज्ञान पर मत में भी समान होने से प्रतिबन्दी उभर दोनों पक्षों में उपस्थित शंका का समान समाधान स्पष्ट है। इसलिए स्फोट में ककारादि का भ्रम नहीं होता ॥ ७० ॥

इत्थं पञ्च व्यक्तिस्फोटाः। जातिस्फोटमाह—

शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम् ॥११॥ (७१)
औपाधिको वा भेदाऽस्तु वर्णानां तारमन्दवत् ।

०

वायुसंयोग साहाय्येन ध्वनिसत्ता स्वीक्रियते। अतः वर्णोत्पत्तिस्थलेऽपि ध्वनि सत्ता स्वीक्रियते, किञ्चित् भेदेन वर्णानुत्पत्तेः अभिव्यक्ते रित्यर्थः नित्य पक्षे वर्णाः नोत्पद्यन्ते किन्तु ध्वभ्युत्पत्तेः श्रवणेन्द्रियजन्यं ज्ञानमात्रं जायते जिह्वायाः अभिघातेन पातेन—तज्जन्य वायुकण्ठसंयोगादि तस्य कल्पनात्। तस्य=पूर्वोक्तवायुसंयोगस्य वर्णोत्पतिस्थले वर्णोच्चारणविषये सत्त्वात्= वर्णतः पार्थक्येन ध्वनिप्रतितेः एतेन वर्णस्थले ध्वनिर्नियता नास्तीति परास्ताः। तवैव वर्णस्थले ध्वनेरभाववादिनि तव मते वर्णोत्पत्तेः प्रतिबन्ध्य-प्रतिबन्धकभावस्य कल्पना निष्प्रामाणिकी स्यात् निर्गतं प्रमाणं यस्या सा इति विपरीतगौरवं लाघवं विपरीतमित्यर्थः एवं वर्णाः नित्याः एकश्च तेषु वर्णेषु परस्पर विरोधात् अन्योन्येषु घटत्वपटत्व इव विरुद्धधर्मत्वात् उदात्तत्वानुदात्तत्व स्वरितत्व इति स्वरधर्माः ह्रस्वत्व दीर्घत्व प्लुतत्व इति अच धर्माः एते परस्परविरुद्धाः सन्तः तिष्ठन्ति अतस्ते न वर्णस्थाः— किन्तु ध्वनिस्थाः एव। वर्णे तु स्वाश्रत्व सम्बन्धेन तिष्ठन्ति—तेषां मीमांस-कानांमयमभिप्रायः एवञ्च परम्परया उत्पत्त्यादीनां—वर्णवृत्तित्वञ्च प्रतीतीनां नित्यवर्णेनुभवस्य निर्वाहः। तत् प्रमात्त्वस्य वर्णानां नित्यत्वेऽपि उत्पन्नो विनिष्टो वा गकारः इति ज्ञानं जायते। परेषामपि वर्णनित्यवादिनां मीमांसकानां मतेऽपि उत्पत्त्यादिः प्रतीतिः तत् प्रमात्त्वस्प च प्रतीतिः समानाः एवञ्च अखण्ड स्फोटे न किञ्चिद् बाधकं प्रतिबन्द्यैवउत्तरं उभय पक्षीयायाः शंकायाः समानं समाधानं प्रतिबन्दी। लाघवात् नित्यमखण्डं स्फोटं स्वीकुर्वद्भिः वैयाकरणैः प्रतीतेः प्रमात्वस्य महत्त्वभाश्रयणीयैव। लाघवानुरोधेन भाष्यसम्मताखण्डस्फोटस्यग्रहणे न किञ्चिद्बाधकम्। इत्थञ्च—पूर्वोक्तप्रकारेण पञ्चधा—१. वर्णस्फोटः, २. सखण्डपदस्फोटः ३. सखण्ड-वाक्यस्फोटः, ४. अखण्डपदस्फोट, ५. अखण्डवाक्यस्फोटश्च, स्फोटश्चेति पञ्च व्यक्तिस्फोटाः वर्णस्फोटे सखण्डभेदो न भवति। वर्णावयवानां निरर्थकत्वात्, सार्थकस्यैव स्फोटत्वं सर्वैरङ्गी कृतम्।

पञ्चव्यक्तिस्फोटानन्तरं जातिस्फोटं निरुपयति जातिस्फोटवादीनां अयं—सिद्धान्तः यत् जातिः द्विविधा अर्थगता शब्दगता च। घटादि शब्देषु तदर्थ-गता जातिरेव वाच्या इति मन्तव्या लाघवात्। सकल धर्मेषु स्थिता अनुगता एका सत्ताख्या जातिः—सर्वत्र तिष्ठति अतो लाघवात् जातौ शक्तिः स्वी-

कर्तव्या। सा प्रतिघटे अनुगता एकरूपेण सर्वत्र सम्भूता अव्यभिचरिता च यदि—व्यक्तौ शक्तिश्चेद् व्यक्तेः आनन्त्येन अननुगतेन एकस्यां व्यक्तौ गृहीता शक्तिः अन्यस्यां शक्तिग्रहाभावात् व्यभिचारः अतो व्यक्तौ शक्तिं परित्यज्य जातौ शक्तिः स्वीकार्या। एवमेव जातेः वाचकः शब्दः तद्गता जातिः यथा घटेषु घटत्वादि जातिः व्यक्ति पक्ष इव अन्येषां—मानन्त्यात् एकत्र गृहीता जातिः अन्यत्र व्यभिचरिता भवति। अतश्शब्दगता जातिरेव वाचिका लाघवात् अव्यभिचाराच्च यथा—अनन्तं शरीरं तेतु आत्मा एकैव एवं शब्दस्य अनेकत्वेपि शब्दत्व जातिः सर्वत्रानुगता एका सैव वाचिका च यथा—घटशब्दगता शक्तत्व ( शब्दत्व जातिः ) एका शक्तिरस्ति अस्मिन्निति शक्तः शब्दः, तस्य भावः शक्तत्वं = शब्दत्वमित्यर्थः।

यथा—घट पदार्थस्य व्यक्तिभेदेन आनन्त्यं तत्रै काकार रूपेण प्रतीयमानाः जातिः वाच्या यथा एकस्य घटस्य उच्चारणभेदेन भेदो दृश्यते किन्तु समानरूपेण सर्वस्मिन् घटे विद्यमाना जाति रेकैव एवं शब्दस्यापि उच्चारणभेदेनानन्तभेद सत्यपि तत्र शब्दत्व जातिः एकैव एवं समस्त

जाति स्फोट वादी सिद्धान्त यह है कि जैसे सभी शब्दों में शक्यत्व इव = अर्थगत जातिवाच्यमानी जाती है। ऐसे ही शक्तत्व = शब्दत्व जाति भी समीक्षा पूर्वक वाच्य है। लाघव भी है सम्पूर्ण में रहने वाला समानात रूप से प्रतीत अनुगत धर्म एक है इसलिए जाति में ही शक्ति माननी चाहिए। वह अव्यभिचरित है व्यक्ति में शक्ति व्यभिचारित होती है। व्यक्तिवाद की तरह यह शब्द भी अनन्त होने के कारण एक शब्द में शक्ति का दूसरे शब्द में व्यभिचार नहीं है इसलिए शब्दगत जाति वास्तविक है। जैसे शरीर अनेक है आत्मा एक है ऐसी ही शब्द्र अनेक हैं शब्दत्व जाति एक है अनुगत है वाचिका है परन्तु भेदों की प्रतीति औपाधिक है, ध्वनि भेद से भिन्न होती है जैसे एक ही स्वर तेज उच्चारण मन्द उच्चारण से वर्ण में भेद देखा जाता है। कारिका का भाव यह है कि वर्ण आवश्यक है उक्त रीति से वही गकार वही हकार की प्रतीति की तरह भेद असम्भव है। न कहिये जो गकार सुना गया वही हकार है ऐसा भी ज्ञान सम्भव है क्योंकि स्फोट एक है आश्रत्व जो ग में है वही ह में भी है। यही गकार है हकार नहीं ऐसा ज्ञान नहीं होगा। और भी स्फोट में ग, घ आदि स्वीकार क्रिया जाय या नहीं। स्वीकार पक्ष में वही गकार है गत्व रूप ही ग है। जो लोग वर्ण को नित्य मामते हैं वे अतिरिक्त गत्व धर्म को स्वीकार नहीं करते हैं। पृथक स्फोट की कल्पना में भी जोख है अन्त—स्फोट में गत्वादि धर्म नहीं मानेंगे तो ज्ञान विरोध होगा यदि वायु संयोग में गत्व रहता है या ध्वनि में परन्तु वैगात्व गत्व कत्वादि विभिन्न जातियों का आरोप करके स्फोट की कल्पना करेंगे ? तो ककारादि की प्रतीति भ्रम हो सकती है। तत्व बाधक के बिना भ्रम ही नहीं सकता यदि आप वायु संयोग

अयं भावः—वर्णास्तावदावश्यकाः उक्तरीत्या च सोऽयं गकार इतिवद् योऽयं गकारः श्रुतः सोऽयं हकार इत्यपि स्यात्, स्फोटस्यैकत्वात्, गकारोऽयं न हकार इत्यनापत्तेश्च। किं च स्फोटे गत्वाद्यभ्युपेयं न वा? आद्ये तदेव गकारोऽस्तु, वर्णनित्यतावादिभिरतिरिक्तगत्वानङ्गीकारात्। तथा चातिरिक्तस्फोटकल्पने एव गौरवम्। अन्त्ये गकारादिप्रतीतिविरोधः। वायुसंयोगवृत्ति ध्वनिवृत्तिः वा वैजात्यमारोप्य यथा प्रत्यय इति चेत्? न, प्रतीतेर्विना बाधकं भ्रमत्वासंभवात्। अस्तु वा वायुसंयोग एव गकारोऽपि। शब्देषु स्वीकार्या अनन्ताः वाचकाः स्युः तस्मात् शब्दगता जातिः वाचिका जातिरूपेण बोधितबोधो वाचकः जातिरूपः—शक्तत्वरूपः। अनेक स्फोट कल्पनायां मानन्त्यं व्यभिचारश्च तस्मात् सकलशब्दगतजातिः तादात्म्यभावापन्ना सति स्फोट इति उच्चते—स्फोटे दृश्यमानाः भेदाः काल्पनिकाः वास्तविक स्वरूपस्तु अखण्डरूपएव व्यक्ति कृतो भेदो नास्ति तत्र तदा जातिः स्फोट इति शब्द गता जाति रेव सर्वसम्मता घटत्वादि जातिः सखण्डः शब्द गत जातिस्तु अखण्डः ब्रह्मवाचकश्च तदेव भूषणकारः कारिकायां ब्रूते—शक्यत्व इव सक्यौ अर्थः अर्थ गता जातिः शक्यत्वं यथा तत्र लाघवं तथा शक्तत्वे शक्तः शब्दतद्गता जातिः शक्तत्वं यथा अर्थगतजातिः स्वार्थे लाधवं तथा शब्दगत जातेः वाचकत्वे लाघवं तदेव स्फोटः। ननु जातेः स्फोटत्व स्वीकारे सर्वत्र एकस्यैवार्थस्य बोधः सम्भवः तथापि भेदस्तु= स्फोटे भेदस्तु, औपाधिक एव उपाधिः उच्चरणार्थकः शब्दः तत्र भव औपाधिक नाना जाति वर्णभेद रूपः नतु वास्तविक आनुपूर्व्यवछिन्नध्वनि व्यङ्ग्यः स्फोटः भिन्न भिन्नार्थकबोधकः यथा—मीमांसक मते नित्येषु वर्णेषु तारत्वम् प्लुतोच्चारत्त्वं मन्दत्वं ह्रस्वोच्चारणत्त्वं कल्पितं=आरोपितं वा भाषते। वर्णः न दीर्घों भवति न प्लुतो ह्रस्वो वा भवति। किन्तु एकरूपेण तिष्ठति प्रयोजन वशात उच्चारण भेदेन तारमन्दादयो भाषन्ते। एवं अखण्डे स्फोटे प्रयोजन वशात् व्यवहार भेदात् भिन्न भिन्नार्थाः भाषन्ते। यथा वर्ण स्फोटे ह्रस्व दीर्घादयो औपाधिकाः भेदाः भाषन्ते एवं स्फोटेऽपि व्यवहार भेदात् आरोपिता अर्थाः शब्दाश्च भाषन्ते अर्थात् वर्णेषु भेदाः आरोपिताः— एवं स्फोटेऽपि भेदाः आरोपिताः नतु वास्तविकाः।

ननु स्फोटो ब्रह्मस्वरूपो ऽखण्डो निर्धर्मकश्च तत्र वाचकत्व विचारः जाति शक्ति बिना काकदन्तपरीक्षा सम, आकाश पुष्पसदृशो वा तदाह अयं भाव इति स्फोटे वर्णपद जात्यादय आवश्यकाः अर्थात् वर्णाः अवश्यं— स्वीकार्याः। उक्तरीत्या स्फोटे वर्ण स्वीकाररीत्या सोयं गकारः इतिवत् सोयं हकारः योऽय गकारः इति प्रतीतिरेव वर्णा नां स्फोटेभानं प्रमाणम्।

जातिपक्ष

तस्या तीन्द्रियत्वं दोष इति चेद्--धर्मवदुपपत्तेरिति कृतं स्फोटेन। तस्मात्सन्त्येव वर्णाः, परं तु न वाचकाः, गौरवात्। आकृत्यधिकरणन्यायेन जातेरेव वाच्यत्ववद्वाचकत्वस्यापि युक्तत्वाच्च। 'इदं हरिपदम्' इत्यनुगतप्रतीत्या हर्युपस्थितित्वावच्छेदेन हरिपदज्ञानत्वेन हेतुत्वात्। तदवच्छेदक-

अन्यथा स्फोटे वर्णानां मस्वीकारे स्फोटस्यैक्यात् यथा गकारे स्फोटः तथा हकारेपि स्फोटः ततो योऽयं गकारः श्रुतः सोऽयं हकारः इति गकारहकारयो रयोरभेदः स्यात् स्फोटस्यैक्यात् अखण्डस्फोटस्य सकलरूपत्वात् अयं गकारो न हकार इत्यनापत्तेः—भेदबुद्धिः न स्यादित्यर्थः। अतः वर्णा आवश्यकाः गकारोपाधिक स्फोटोभिन्न हकारोपाधिकः स्फोटोभिन्न तेन साङ्कर्य दोषो न भवति। किञ्च—अथवा औपाधिक भेद स्वीकारे स्फोटे उपाधि विशिष्टस्य स्वीकार कर्तव्यो न वा आद्ये—स्वीकारपक्षे तदेव गकारोस्तु इति बोधोजायते परन्तु वर्णनित्यता वादिमते अतिरिक्तः कश्चन गकारादिरिति नाङ्गीक्रियते। तन्मते गत्वादीनां आरोपो न भवितुमर्हति तथा च गकरादिवर्णा अतिरीक्ता इति मत्त्वा स्फोटकल्पने गौरवं गत्वादिरेव गकारः नित्यो वर्ण तत्रातिरिक्त स्फोटेकल्पने गौरवम्। अन्ते यदि गत्वादि विशिष्टे गकारादयो नाङ्गीक्रियते तर्हि स्फोटे गकारादीनां प्रतीतिः विरुद्धा। यदि गत्वादीनां विना प्रतीति र्न सम्भवति तथा च गकारादिषु वायुसंयोगवृत्तिः गकारः अथवा ध्वनि ( उच्चारणवृत्ति गंकारः ) इति ध्वनित्व वायुसंयोगत्व रूपं वैजात्यं विरुद्ध धर्मं मारोप्य–भ्रमं मत्त्वा तथा प्रत्ययः=स्फोटे गरादिबोधः, इति चेन्न प्रतीतेः=स्फोटे गकारादि बोधस्य बाधकं प्रतिबन्धकं विना भ्रमत्त्वायोगात् यदि साक्षात्सम्बन्धेन प्रभात्वस्य=यथार्थज्ञानस्य सम्भवस्तत्र भ्रमः आरोपो वा इति वक्तुं न शक्यते यदि गकारः वायुसयोगरूपः स्वीक्रियते अर्थात् वायुसंयोग एव गकारेति निश्चये। न च गत्वं जातिः न वर्णः इति तर्हि मी० मतेन वर्णो नित्यः धर्म ( गत्व ) धर्मिणोः ( गकारयोः ) ( तकराव ) के ही गकार कहें और वायु संयोग के इन्द्रिय ग्राह्य न होने से दोष होता है। तब गत्व धर्मवान् ग मानेंगे तो वह संयोग रूप गकार अतीन्द्रिय नहीं होगा फिर स्फोट क्यों मानें ? वर्ण स्फोट का अभाव सिद्ध होना है इसलिए वर्ण तो हैं ही परन्तु वे वाचक नहीं हैं। उनको वाचकता में महान गौरव होगा। आकृति अधिकरण जाति आकृति अधिकरण न्याय से उक्त जाति वाच्य होती है वैसे ही वर्णों का वाचक होना उचित सिद्ध होता है। वाचक शब्द में भी वाचकत्व जो मानना युक्त है जैसे हरिपद में भी समान रूप से हरित्व की उपस्थिति सभी अर्थ में होती है इससे सिद्ध होता है कि किसी पद के ज्ञान में काखाता ( भेदक ) रूप से जाति विशेष ही कल्पित हैं।

अभेदेन गत्वातिरिक्तो वर्णो नास्ति। यदि अनेकवर्णकल्पनापेक्षया स्फोटे-गत्वस्य, भ्रमत्वमेवन्याय्यम् तदाह अस्तु— इति आरोपेणेव प्रतीतिनिर्वाहे स्फोटकल्पना न कार्या।

यदि वायुसंयोगरूप एव गकारोऽतो न तस्य प्रतीतिस्तदा तस्य= वायुसंयोगस्य अतीन्द्रियत्वं दोषः। अर्थात् वायुसंयोगस्य यथा साक्षात्कारः प्रत्यक्षता वा न सम्भवति तथा गकारस्य साक्षात्प्रतीतिर्नस्यात्। तदेव बाधकम्। इन्द्रियातीतपदार्थस्य तद्गत धर्मस्य गत्वादेः प्रत्यक्षबोध विषयत्वाभावः प्रतिवन्धकस्तदपिन धर्मवदुत्पत्तेः=वायुःधर्मः तद्गत स्पर्शोधर्मः रुपरहित स्फर्शवान् वायुः। एवं वायोरप्रत्यक्षत्वेऽपि वायुगत स्पर्शस्य त्वगिन्द्रियेण यथा प्रत्यक्षं भवति तथा कण्ठताल्वाद्यभिघातक वायु-संयोगस्य वर्णस्य(गस्य) श्रोत्रेन्द्रियेण प्रत्यक्षता सुष्पष्टैव। यथा अतीन्द्रिय धर्मस्य प्रत्यक्ष बोधविषयता भवता न स्वीक्रियते तथा अतीन्द्रियसंयोग विशेषस्य प्रत्यक्षता मयाऽपि, यद्वा आकाशे शब्दः शब्दगुणकत्वात् एवं वायु सयोगे गत्वम् वायुसंयोग गुणकत्वात् श्रोत्रेन्द्रिय प्रत्यक्षत्वाच्च। गत्वांशे कर्णेन्द्रियलौकिकसन्निकर्षजन्यं ज्ञानमस्तु एवं प्रत्यक्षता सिद्धयति धर्म-प्रत्यक्षे धर्मिणः प्रत्यक्षस्य हेतुत्वात् धर्मवदित्यस्य गगनधर्मवानित्यर्थः। वायुसंयोगरूपवर्णादिभिः लोकेऽर्थबोधसम्भवात्। पृथक् स्फोट कल्पना व्यर्थैव। तस्मात् पूर्वोक्तप्रकारेण वर्णानामर्थविषयकप्रत्यक्षबोधजन-कत्वात्। सन्त्येव=त्वदभिमता स्फोटातिरिक्ताः वर्णाः सन्त्येव। परन्तु= किन्तु ते न वाचकाः=बोधकाः। गौरवात् यतो अनन्ताः वर्णाः तेषां शक्त-योप्यनन्ताः अननुगताश्च अतो गौरवम्। न च एकं कृत्वोपलक्षणन्यायेन एकं पदादिगतजातिमुनसृत्य अनुगतीकृत्यवा शक्तिस्वीकारे न नानात्वनि मित्तं गौरवमत आह-आकृतीति यथा आकृत्यधिकरणे-नहि अस्याम् आकृतौ व्यक्तिभिः शब्दस्य अपौरुषेयः=शाश्वतिकस्सम्बन्धः शक्तिरूपः सिद्धयति ताषांमनित्यत्वान व्याक्तीनामानन्त्यात् व्यामिचाराच्च जतिरेव वाच्या एवं स्फोटरूप जातिबाचकत्वस्य युक्तत्वात्=औचित्यात्। आकृ-तिस्तु क्रियार्थत्वात् सूत्रे आकृतिपदार्थः स्वीकृतः प्रथमश्रेणीकं छात्रं चिन्वंन्ति तत्र चयनमाकृतिमनुसृत्यैव भवति अवयव संस्थानमाकृतिः प्रति-पिण्डं भिन्नं भिन्नं तेन आनन्त्यादि दोषो न चिन्त्यः यतः आक्रियते=बोध्यते प्रत्याय्यते व्यक्तिः अनयेति आकृति जातिरित्यर्थः। द्रव्यगुण कर्मणां सामान्य-माकृतिः। पदानामप्यानन्त्यात् पदगता जतिरेव वाचिका एवं वाक्याना-मानन्त्यात् वाक्यगता जतिरेव वाचिका।

तया च जातिविशेषस्यावश्यकल्प्यत्वात् । न च वर्णानुपूर्व्यैव प्रतीत्यवच्छेदकत्वयोर्निर्वाहः, घटघटत्वादेरपि संयोगविशेषविशिष्टमृदाकारादिभिश्चान्यथासिद्ध्यापत्तेः। तस्माज्जातिरेव वाचिका, तादात्म्येन तदवच्छेदिका चेति । ननु सरो रस इत्यादौ तयोर्जात्योः सत्त्वादर्थबोधभेदो न स्यादित्यत आह–औपाधिको वेति । वा त्वर्थे उपाधिरानुपूर्वी सैव जातिविशेषाभिव्यञ्जिकेति भेद. कारणीभूतज्ञानस्येति नातिप्रसङ्ग इति भावः । उपाधिप्रयुक्तज्ञानवैलक्षण्ये दृष्टान्तमाह–वर्णानामिति ॥११॥ (७१)

o

ननु वर्णेषु पदेषु वाक्येषु वा जाति रस्तीत्यत्र किं भानमतआह–इदमिति-इदं हरि पदम् इदं हरिपदमित्यनु गत प्रतीत्या=एकाकाररूपेण प्रतीयमान धर्मं विना उच्चारण भेदेन भिन्नेषु सकलवर्णेषु पदेषु वाक्येषु वा समानाकाररूपेण श्रावण प्रत्यक्ष विषयता धर्मः। जातिं विना न सम्भवति अत एवं समान रूपेण बोधिका जातिः सिद्धयति । ननु एकाकारप्रतीतिः जाति साधिका तर्हिं विभुत्वादेरपि जातिरूपेण प्रतीतिः स्यात् कारणतावच्छेदेन जातेः प्रतितिः। प्रसंगे कारणतावच्छेदकाभावान्न पदत्वजातिसिद्धिः अत आह हर्युपस्थितिरिति हरिशब्दस्य चतुर्दशार्थः सर्वत्र स्थले हरित्वंमुपस्थितं वर्तते शाब्दत्वस्य व्याप्यं हरि । उपस्थितित्वावच्छिन्नं (हरित्वं) कारणम् यत्र हरिपदं तत्र हरिपदजन्योपस्थितिः कारणं हरिपदज्ञानत्वेन=हरिपद ज्ञानस्य कारणत्वे ज्ञाते सति तत्र विषयित्व सम्बन्धेन विशेषणतया भासमाना पदस्य पदावच्छिन्ना कारणता (जातित्वं) सा वाच्या यदि पदनिष्ठा कारणता व्यक्तिनिष्ठा—व्यक्तित्वावच्छिन्ना तर्हि व्यक्तित्वस्य (अर्थगत जातेः) आनन्त्येन कारणतावच्छेदकत्वे आनन्त्यव्यभिचारावापततः। शब्दगत

न कहिये वर्णों को आनु पूर्वी या समुदाय ही प्रतीति और विशेषणीभूत धर्म दोनों का निपर्यास हो सकता है। परन्तु घट और घटत्व इत्यादि में भी संयोग सम्बन्ध विशेष क्रिया से विशिष्ट मिट्टी का आकार ही घट होता है। उसकी सिद्धि अन्य प्रकार से कदाचित् हो जायेगी। इसलिए वहां शक्तत्व जाति ही वाचिका होगी और अभेद सम्बन्ध से भेदिका भी वही होगी यद्यपि सर, रस दोनों में सत्व रत्व जाति सामान्य में से अर्थ भेद का बोध नहीं होगा। इसलिए कहा कि औपाधिको भेदः उपाधिक्रम से उच्चारित समुदाय में रहती है अतः रस का स्वाद अर्थ है स र का जलाशय अर्थ हो जाता है। दोनों में जाति विशेष अर्थ की बोध भेदिका कारण भूता होने से कोई दोष नहीं होगा। घटत्व जाति के ज्ञान में घटत्व का प्रसंग नहीं होगा उपाधि से ज्ञान में उसे विलक्षणता आती है उसका दृष्टान्ततार मन्दवत् देते हैं अ ह उ प्रत्येक को वट्ठारह संज्ञा का भेद होना उपाधि की। विशेषता है ॥७१॥

जातेः स्फोटत्वे कारणतावच्छेदकतावच्छेदकत्वे—(जातित्वे) विशिष्ठबुद्धौ विशेषणज्ञानस्य कारणत्वात्। जातेरैक्यात् नानन्त्यव्यभिचारौ भवतः। एवं जातिः विशेषणं विशिष्ट ज्ञाने च हेतुः हेतुत्वावच्छेदकतया–कारणधर्मरूपतया जातिविशेषस्य पदत्व जातिवाक्यत्व जातिविशेषस्य विशेषधर्मस्य अवश्यकल्प्यत्वात्। कल्पनेऽक्ष्यलाघवात्। नच पदत्वं हरिशब्देऽपि वर्तते घट शब्देऽपि उभयबोधापत्तिवारणाय वार्णानुपूर्वी एव नियामकम् तदेव वाच्यम् तत्र यदि आनुपूवी अवच्छेदिका तदा तस्याँ मानन्त्य व्यभिचारावापततः। तदाह नचेति वर्णानुपूर्व्येव प्रतीतिः–हरिपद अर्थभेदेन भेदेऽपि एकं हरिपदमित्यस्याः प्रतीतिः तत्र हरित्व रूपाया अवाच्छेदकतायां एकस्या एव ज्ञाने निर्वाहः—कार्यसिद्धिः तत्र जातिकल्पना व्यर्थैव। तस्मात्—पूर्वोक्त प्रकारेण जातेः स्वीकरणात् सा पदत्वावच्छिन्ना पदनिष्ठाकारणता वच्छेदिका जातिरेव वाचिका।

ननु जातेः शक्तत्वे (शब्दत्वे, पदगत धर्म स्वीकारे) तत्र शक्तता वच्छेदकं किं जातित्वं (शब्दत्वत्वं) भविष्यति तदा जातित्वं सम्पूर्णपद निष्ठो धर्मः, तेन विश्वस्य जगतः प्रवेशेत्वतिगौरवमत आह तदात्म्येन—तयोः शब्दार्थयोः आनपूर्वीशब्दतन्निष्ठजात्योरात्मा तदात्मा तस्य भावः तादात्म्यम्। तेन—अभेदसम्बन्धेन अवाच्छेदिका पदत्वनिष्ठा या वाचकता तस्याः भेदिका। जातिगत वाचकतायाः जातिरेव निर्णायिका।

ननु पदगतजातेः स्फोटत्व=वाचकत्वस्वीकारे सरः इत्यत्रापि पदत्वं रस इत्यत्रापिपदत्वं उभयोर्जात्योराश्रयीभूताः वर्णाः तुल्याः समानाः सन्ति सरविषयकोपस्थापिकाजातिः पदत्व जातिरेक। एव समाना एव तयोर्विरोधाभावे उभाभ्यामुभयोर्बोधापत्तिः स्यात् लोको पयोगि. स्वारस्यार्थबोधे भेदो न स्यात् तदाह कारिकायाम् औपाधिको वेति—पक्षान्तरभेद निवृत्यर्थमाह धात्वर्थं इति धात्वर्थे=अर्थेऽव धारणं निश्चेयम्। अर्थज्ञान भेदे उपाधिः प्रयोजिका सा चानुपूर्वी रूपा वर्णोच्चारण क्रमरूपा च वर्णानां समानत्वेऽपि पूर्वापरिभावरूप स्वरूप भेदेनोभयार्थ बोधेमानाभावः सैव=आनुपूर्वीरूपोपाधिरेव जातिविशेषस्य रसत्व सरस्त्व विशेष धर्मस्यअभिव्यञ्जिका=प्रकाशिका भावबोधिका च। एकत्रैकस्या एव जातेः रसोपस्थितेः कारणीभूतज्ञानस्य=हेतुभूतोच्चारणक्रम रूप ज्ञानस्य भेदः=पार्थक्यम् एकया रसरूप आनुपूर्वी भिन्नं जाति ज्ञानम् अन्यया रसरूपानुपूर्व्या भिन्नं जाति ज्ञानम्। एवं व्याप्यत प्रसंगो न भवति। उपाधिना=उच्चारण क्रमस्वरूपेण प्रयुक्तम्=अर्थ बोधायाच्चारितं यज्ज्ञानं वैलक्षण्यं=बोध भेदः तत्र दृष्टान्तमाह वर्णानामिति यथैकस्मिन्वर्णे भेदं

अनेक वर्णों से अभिव्यक्त होने वाली जाति है।

**ननु जातेः प्रत्येकं वर्णेष्वपि सत्त्वात्प्रत्येकादर्थबोधः स्यादित्यत आह—**

**अनेकव्यक्त्यभिव्यङ्ग्या जाति स्फोटः इति स्मृमा ॥१२॥(७२)**

**कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥**

विनाऽपि स्थानेषु वायु सयोगेन तारत्वस्य = उच्चैरूच्चारस्य मन्दत्वस्य शनैरूच्चारणस्य भेद ज्ञानं तेन ह्रस्व दीर्घं प्लुप्त तीव्रमन्दादि ज्ञान भेदो—जायते। स च वायु संयोग कृतो न तु वास्तविकः ॥ ७१ ॥

ननु वर्ण जातिस्फोट स्वीकारे जातिस्फोट प्रसंगे च प्रतिवर्णेषु वर्ण जातेः सत्त्वात् एकैकवर्णादर्थवोधापत्तिः = स्फोटस्य जातेरर्थं वोधनायोपस्थितत्वात्। अतआह—अनेक व्यक्तीति स्फोट रूपा जातिरनेकाभिः = विभिन्नाभिः वर्णरूप व्यक्तिभिरभिव्यंग्या भवति। अतएव नित्यमेनकानुगतं सामान्य नित्यत्वे सति अनेक व्यक्तिषु या तिष्ठति सा जातिः। प्रत्येक वर्णस्तु जाति न गृहणाति = अनेकव्यक्तिप्रकाश्यत्वाभावात् अथवा योगार्थतया बोधिकेति। स्फुटति = बोध विषयो भवत्यर्थोऽस्मादिति येन वर्णेन अर्थःस्फुटो भवति तत्र वर्णत्व जातिः स्वीकार्या। यत्र येन वर्णेनार्थस्य वोधो न जायते तत्र न जातिस्फोटः। एतेन = पदेषु वाक्येषु स्थितेषु वर्णेष्वर्थबोधाभावेन स्फोटो नित्यः सर्वदाऽर्थबोधविषयता सर्वार्थबोधता च सम्भविष्यतीति कथयद्भिरपास्तम्। अत्र तात्पर्यं ब्रूते अयम्भाव इति—उक्त दोष = प्रतिवर्णमर्थ बोधापत्तिरूपो दोषः वर्णस्फोट पक्ष एव संभवति तथाऽपि पद जतिस्फोटपक्षे वाक्य जातिस्फोट पक्षे च स दोषः = सर्वदार्थबोधरूपः प्रत्येकादर्थं बोध रूपश्च न भवति। तत्र = पदे वाक्ये च तस्याः = पदत्ववाक्यत्व जातेः व्यासंज्यवृत्तित्वस्य = पर्याप्त रूपेण समुदाये विद्यमानस्य धर्मिग्राहकमान सिद्धत्वात् धर्मवतो जातिस्तत् ग्राहकं यन्मानं पदत्वस्य वाक्यत्वस्य वा वाचकत्वेन जातेः सिद्धत्वात। विशेषेण आसङ्क्तुं योग्या अनेकधर्म = सम्मिलितधर्मवती ज्ञातिः यस्यां वृत्तो सा तस्याः भाव पदेन वाक्येन च वोधकस्य धर्मस्य उपपत्तिः सिध्यति धर्मिणं ग्रायहति तदेव भावः तत्र सिद्धा जातिः।

यदि जाति प्रत्येक वर्णों में भी स्थित मानेंगे तो प्रत्येक वर्ण से जाति रूप अर्थ का बोध होने लगेगा। देव शब्द में दे या व मात्र से देवता का बोध सम्भव होगा। इस संशय पर बोले कि अनेक व्यक्तियों से जो अभिव्यक्त हो उसे जाति स्फोट माना गया है। इसीलिए नैयायिकों ने नित्य हो अनेक में रहता हो उसे जाति कहते हैं। यह जाति व्यक्ति में रहती है जो ध्वनि के रूप में जल्पित है। ध्वनि व्यक्ति है, स्फोट जाति है। जैसे—वेदान्तमत में ब्रह्म प्रतिपाद्य है, अविद्या का वर्ण प्रतिपादक है! ऐसे ही जाति स्फोट व्यंग्य है, व्यक्तिरूप ध्वनि व्यञ्जक है ॥ ७२ ॥

अनेकाभिर्वर्णव्यक्तिभिरभिव्यक्तैव जातिः स्फोट इति स्मृता योगार्थतया बोधिकेति यावत्। एतेन स्फोटस्य नित्यत्वात्सर्वदाऽर्थबोधापत्तिरित्यपास्तम्। अयं भावः यद्यपि वर्णस्फोटपक्षे कथितदोषोऽस्ति, तथाऽपि पदवाक्यपक्षयोर्न, तत्र तस्या व्यासज्यवृत्तित्वस्य धार्मिग्राहकमानसिद्धत्वादिति कैश्चिद् व्यक्तयो ध्वनय एव ध्वनिवर्णयोर्भेदाभावादित्यभ्युपेयमिति शेषार्थः। उक्तं हि काव्यप्रकाशे—'बुधैर्वैयाकरणैः प्रधानीभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः' इति ॥

o

नन्वनेकैः वर्णैः व्यङ्ग्या जातिरित्युच्यते परन्तु जातिः व्यंग्या भवति न तु स्फोट व्यञ्जिका अप्रसिद्धत्वात्। तदा कैश्चिद। व्यक्तयो=ध्वनय एव= व्यज्यन्ते=द्योत्यते जाति गुणः अनया इति व्युत्पत्या व्यक्तिः पदार्थो वर्णः इति निराश्रयायाः जातेः आश्रये व्यक्तिरेव भवितुमर्हति सा वर्णरूप व्यञ्जिका च तेन कारणेन सा व्यक्तिः ध्वनित्वे=उच्चारणरूपेण प्रकल्पिता=व्यवहृताः। ध्वनिरूच्चारणरूपा वर्णोऽपि उच्चारणरूपः तयोर्मध्ये नास्ति कश्चन भेदः। अतएव पस्पशायां—अयं गौरित्यत्र कः शब्द? येनोच्चारणेन=ध्वनिना सास्ना=विषाणिनां सम्प्रत्ययोज्ञानं जायते स शब्दः लोकेऽर्थ वोधकत्वेन गृहीतौ वर्णोच्चारण समूहरूपः अथवा प्रतीत पदार्थको ध्वनिः शब्द इत्युक्तम्। तेन ध्वनिवर्णयोः भेदाभावः स्वीक्रियते। शेषार्थः= प्रकृतकारिकायामुत्तरार्धस्यार्थः। व्यक्तय (वर्णाः) एवध्वनय इत्यत्र काव्य प्रकाशीय प्रमाणं प्रास्तौति उक्तं हीतिविविध=प्रक्रया स्मरणपूर्वकार्थबोधपुरःसरप्रयोगकुशलैः वैयाकरणै=विविधव्युत्पर्थप्रकाशचणैः प्रधानीभूतं= मुख्यतयाबोधकं स्फोटरूपं पद व्यङ्ग्यं=प्रकाश्यं तस्य व्यञ्जकः=द्योतकः, प्रकाशकः तात्पर्यग्राहकः च शब्दः तस्य ध्वनिः=वर्णभेद पूर्वकोच्चारणमिति व्यवहारः कृतः।

अनेक वर्ण व्यक्तियों से प्रकाशित हुई जाति स्फोट रूप में स्मृत है। इसलिए प्रत्येक वर्ण से जात्यर्थ का बोध अनिवार्य नहीं है। जाति "जायन्ते जनाः यस्थां सा" इस योगार्थ से अर्थ की बोधिका होती है। नरत्व में जन्म नर जाति का देवत्व में देव जाति का, पशुत्व में पशु जाति का योगार्थ स्फुटि होता है। अथवा—स्फुटति बोधविषयो भवति-अर्थोऽस्मादिति" स्फोट पद बोधकपरक है। इस तर्क से जो लोग कहते थे कि स्फोट नित्य है, एक है, तब उससे सभी काल में सभी पदों में अर्थबोध की आपत्ति आयगी", वे धन्वा धर दिये। सारांश यह है कि सर्वदा सर्वबोध की आपत्ति वर्णस्फोट पक्ष में ही हो सकता है। तथापि पदस्फोट वाक्यस्फोट में उक्त आपत्ति नहीं

सत्य - जाति
असत्य - व्यक्ति
जातिपक्ष





ननु का सा जातिस्तत्राह—

**सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ॥१३॥**

**सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः ।**

०

नन्व नेकवर्णैरभिव्यक्ता जातिरिति कथनं न शोभतेऽप्रसिद्धत्वात् मोक्षरूपप्रकर्षार्थस्य असाधकत्वात् निष्फलं जातेर्वाचकत्वम् । साक्षात् परम्परया वा उपयोगी तस्यैव साफल्यंवरीवर्ति तदाह नन्विति—तत्र वाचकरूपेणाभिमताजातिः का इति जिज्ञासायामाह सत्या—या जातिः कालत्रयेऽपि सत्यासत्यौ भागौ, प्रतिभावं प्रतिपदार्थं व्यवस्थितौ = वोध्यमानौ स्तः तत्र सत्यासत्ययोर्मध्ये यत्सत्यं कालत्रयेऽपि वाधरहितं सा जातिः ( विधेयस्य प्राधान्यात्स्त्रीत्वम् ) प्रतिपदार्थस्य सत्योंऽशः ब्रह्मइव सा जातिः योऽसत्योऽशः = प्रादुर्भाव विनाशशीलः सा व्यक्तिः अविद्या, माया इव । तत्तत्—तासु तासु व्यक्तिषु उपलक्षिता आधेयतयोपहिता जातिः ब्रह्मैव यथा चिदचिद्विशिष्टं मविद्ययोपहितंब्रह्म, या विशेष्येऽन्वेति तद्विशेषणम् । परमार्थतया तु व्यक्तिविशिष्टं ब्रह्म नास्ति । व्यवहारदशायान्तु सा जतिः तत्तद् व्यक्ति विशिष्टा व्यवहृयते व्यक्तयोऽसत्या, उपाधिमात्रसंयोजिका च इति समर्थयितुं कैयटमतमाह उक्तञ्चेति असत्योपाध्यवच्छिन्नं = विनाश शीला या व्यक्तिरूपा उपाधिः = व्यवहारविषयता लोकेऽर्थं प्रयोगयोग्यता तथा अवच्छिन्नं—आवृत्तं विशिष्टंयद् ब्रह्मतत्वं—मायोपधिकब्रह्म इव व्यक्तिविशिष्टाजातिः द्रव्यशब्दवाच्या मी० मते शब्दो द्रव्यमस्ति । द्रव्यवाचक इव शब्दः तद्वाच्यम्—वोध्यम् अतः एव द्रव्यं नित्यमिति भाष्योक्तिः सङ्गच्छते ।

ब्रह्मतत्वमेव—ब्रह्मतत्वमेव शब्दरूपेण भासते । ब्रह्म स्वरूपतया इत्यस्य विवरण प्रसङ्गे दर्पण कारेण श्रुतिः आत्मायस्य स श्रुत्यात्मकश्शब्दः तद्रूप-

है, क्योंकि—वहाँ व्यासज्यवृत्ति = वर्णसमुदाय या पदसमुदाय का धर्मिग्राहक प्रमाण से (धर्म = जाति) वह जिसमें हो उसे धर्मी कहते हैं, जो पदसमुदाय है या वर्णसमुदाय है, जिसमें जाति का रहना प्रमाण-सिद्ध है) कोई महाशय व्यक्ति वर्ण नहीं अपितु ध्वनि है, परन्तु ध्वनि और वर्ण में किसी भेद का अभाव स्वीकार किया गया है । यही शेष = समन्वित अर्थ है । काव्य प्रकाश में भी कहा गया है—शिष्ट एवं प्रशस्त विद्वान् वैयाकरण ने प्रधान रूप से प्रसिद्ध स्फोटरूप व्यंगार्थ के लिये व्यञ्जक = प्रकाशक या द्योतक शब्द को ध्वनि का व्यवहार किए हैं ॥७२॥

जातिरूप स्फोटात्मा कौन है इसकी प्रबल जिज्ञासा शान्ति के लिये बोले कि—किसी भी पदार्थ में सत्य और असत्य दो भाग, व्यवस्था के अनुसार माने जाते हैं। इनमें जो सत्य भाग है वह 'जाति' है क्योंकि वह नित्य है । जो असत्य भाग है वह

प्रतिभावं प्रतिपदार्थं सत्यांशोजातिः, असत्या व्यक्तयः तत्तद्व्यक्ति-विशिष्टं ब्रह्म न जातिरिति भावः। उक्तं च कैयटेन—"असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यामित्यर्थः" इति। "ब्रह्मदर्शने च गोत्वादिजातेरप्य-सत्त्वादनित्यत्वम्, "आत्मैवेदं सर्वम्" इति श्रुतिवचनात्" इति कैयटः संगच्छ-ताम्? अविद्याऽऽविद्यको धर्मविशेषो वेति पक्षान्तरमादायेति द्रष्टव्यम्॥
तया स्फोटः भाति—प्रतीतिविषयो भवति। श्रुतिरप्युच्यते—द्वे ब्रह्मणी वेदितव्य एक उपादान रूपो द्वितीय उपादेयरूपश्च यथा—मृत्तिका सूत्रञ्चो-पादानरूपम्। घटः पटश्चोपादानरूपः। उपादानरूपेण ब्रह्मसदस्ति 'सदेव सोम्येदमग्र आसीत्' इति श्रुतेः 'एकोऽहं बहुस्याम्', तस्मादे तस्मादाकाशः सभूत इति तैत्तिरीयकश्रुतिः तेन जगतः उपादानकारणं ब्रह्म एव तेनो पादानं ब्रह्म उपादेयादभिन्नमित्यस्थ लोक प्रसिद्धत्वात्। यत् सद्रूपात्मकं ब्रह्म स्वो-पादानं तस्य यदुपादेयरूपं तत् प्रतीयमान जगत शक्ति ग्रहो बोधव्यः। यदि पदे न शक्तिः तर्हि वाक्येऽपि न शक्तिः यदि पदेऽन्वयांशेशक्तिस्तर्हि वाक्येऽप्य-न्वयांशे शक्तिः तदाह—शक्तिग्रहासम्भवात्तुल्य इति—तस्याः शक्तेः यो ग्रहः—ज्ञानं तस्यासम्भवे तुल्यं साम्यम्। यदि पदस्य शक्तिः पदार्थांशे ज्ञाता तथा चान्वयांशेऽज्ञाता—अबोधिताउपयुज्यते—अनुमोद्यते तदा कुब्ज शक्तिवादः यथा कुब्जः पुरुषः केनचिदङ्गेन विकलः अन्यांगशक्तिसम्पन्नः सन् तिष्ठत्येवं ममापि-वैयाकरण मतेऽपि वाक्यस्य वाक्यार्थेशक्तिः स्वीकर्त्तव्या। अन्वयांशे-ऽज्ञाताशक्तिरनुमोद्यताम्। उभय वादे योऽभ्युपगमः—सद् असद् विवेकेन स्वीकृतिस्तुल्यावुभयौ।

व्यक्ति है जो अनित्य है। यह सर्वसम्मत विषय है। अर्थात् प्रत्येक पदार्थों में सत्यांश जाति (अविनाशी ब्रह्म) है असत्य=कल्पित अध्यारोपित अंश व्यक्ति है। विनाशिनी अविद्या है। इसलिये अविद्या जीव विशिष्ट ब्रह्म की तरह समस्त व्यक्तियों से विशिष्ट ब्रह्म ही जाति है। इस सम्बन्ध में कैयट ने कहा कि—"असत्य (व्यक्ति) रूप उपाधि से अवच्छिन्न, आच्छादित', विशिष्ट ब्रह्मतत्व ही द्रव्य शब्द का वाच्यार्थ है। श्रुति प्रमाण—ब्रह्मतत्व (जातिस्फोट) ही व्यापक रूप से शब्द ब्रह्म स्वरूप में भासित हो रहा है। शंका—यदि ब्रह्मतत्व के पूर्ण आभास सिद्ध है, अखण्ड है, एक है तो उसमें गोत्व, मनुष्यत्व, पशुत्व इत्यादि जातियाँ नहीं भासित होनी चाहिये। इसलिये उक्त जातियाँ आनित्य हो जायेंगी तो नहीं सम्पूर्ण जगत् आत्मा (द्रव्य) रूप है। इस श्रुति वचन से गोत्वादि जाति भी नित्य सिद्ध होती हैं और कैयट कथन भी संगत होता है। अथवा सत्ता जाति ब्रह्मरूपा है, गोत्वादि विभिन्न जातियाँ अविद्याजन्य भेद से प्रतीय-मान हैं। विद्या अविद्या भेदवती माया की तरह नित्य जाति अनित्य जाति भी एक दूसरा पक्ष मानकर स्वीकृत है॥७३॥

कुब्जलक्षणम्—हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् ।
क्रुद्धो वायुर्यदाकुर्यात् तदा तं कुब्जमादिशेत् ।।

यथा विकृताङ्गेन किञ्चित् कर्त्तुमशक्तः कुब्जो अविकृतेनांगेन कार्यं कर्तुं समर्थश्च शाब्दबोधात्पूर्वं अन्वयांशे शक्तिरज्ञाता सत्यनुपकारिका पदार्थांशे ज्ञाता सति शाब्द बोधोपकारिका भवति ।

कार्यं स्वरूपेण उपादानकारणभूता या न सद् नाप्यसदिति वक्तुं शक्यते अतः सदसद्भ्यामनिर्वचनीया स्वप्न इव मिथ्या ज्ञानभूतातज्जन्य संस्कार रूपा च सा अविद्या अनित्या परन्तु जातिः नित्या । ननु आधारे नष्टे आधेयोऽपि नङ्क्ष्यतीति आधार भूता अविद्या सा नाशवती आकाशादि प्रपञ्च भूतादि रूपा तत्र पृथिवीत्व जलत्वादि जातयोऽ सम्भव ।

नामार्थ रूपैव नाम—शब्द रूपः—अर्थश्च ब्रह्मणा ऽभिन्नः परस्परम भिन्नश्च । अस्यां स्थितौ पृथक् प्रतीयमानस्य जगतः नेह नानास्ति किञ्चन इति दृढ़े बाधेऽपि ( कार्यरूपेण प्रतीयमानस्य जगतः वाधेऽपि यदा बाधितार्थस्य प्रतीतिः तदा मुख्यरूपेण अधिष्ठानसत्ता मात्रं तिष्ठति । तस्याः सत्तायाः (सद्रूपस्य ब्रह्मणः) साक्षात् ज्ञातुंमसम्भवमेव । निर्गुण ब्रह्म ज्ञानाय उपलक्षणीभूत रूपनामनिरूपणद्वारा शास्त्रस्योपयोगिता ज्ञायताम् शंका यदा उपादान भूतस्थ निर्विकल्पकस्य निराकारस्य ब्रह्मणो दर्शनं तदा न कश्चन विशेषो, धर्मः जातिर्वा दृश्यते तदा गोत्वादि जातिरपि न तिष्ठति तेन तस्या अनित्यता प्रति भाति ब्रह्म ज्ञाने चाकृतिरनित्या इति । इदं सर्वमात्मैवेति संगच्छतां—बोध्यताम् तेन जातिरपि आत्मैव । न च नेह नानास्ति किञ्चन इति श्रुत्या विरोधस्तदाह अविद्या इति न विद्यते ज्ञानं सत्यं मनन्तं यस्यां साऽविद्या । ब्रह्मणो रूप द्वयम विद्यारूपंमविद्यारूपञ्च शक्तिग्रहो बोधव्यः । यदि पदेन शक्ति र्तहि वाक्येऽपि न शक्तिः यदि पदेऽन्वयांशे शक्ति स्तर्हि वाक्येऽप्यन्वयांशे शक्तिः तदाह यदा विद्यारूपं तदा आत्मैवेदं सर्वम् । यदा अविद्यामयं तदा नेह नानास्ति इति श्रुतिः संच्छते एवं विरोधस्य परिहारः कर्तव्यः । अविद्यया आगतभाविद्यकम् । घटपटादयः सर्वंभविद्यायाः धर्मः कर्म फलञ्च । पक्षान्तरम्=मतभेदेन पक्षद्वयमपि भाष्ये स्थितभ्वर्तते । न पूर्वापरविरोधः । वस्तुतः तासुतासु व्यक्तिषु विद्यमानासत्ता ( जतिः ) एव वास्तविकी जन्या गोत्वादि जातिरस्तु उपाधिरूपा यतः उपाधि जन्या अतो उपहितस्य=उपाधिविशिष्टस्य ब्रह्मणो जन्यत्वमनित्यत्वोक्तिर्नंविरुद्धा । योऽनुपहितं ब्रह्म तस्यैव नित्यत्वम् ।।७३।।

तमेव सत्यांशं स्पष्टयति—

इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम् ।
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः ।।१४।। छान्दोग्योपनिषद् में

अयं भावः—"नामरूपे व्याकरवाणि" इति श्रुतिसिद्धा द्वयी सृष्टिस्तत्र रूपस्येव नाम्नोऽपि तदेव तत्वम् । प्रक्रियांशस्त्वविद्याविजृम्भणमात्रम् ।

o

व्याकरणशास्त्रमखण्डं वाक्यस्फोटपक्षे परम्परया मोक्षसाधकम् वाक्य जाति स्फोटपक्षं साक्षान्मोक्षसाधकम् । इति स्फष्टयितुमाह—तमेवेति सत्यं यत्तत्र सा जातिसत्या व्यक्तयोमता इति पूर्वमुक्तम् । आयमात्मा प्रवचनेन लभ्यः यत्सत्यंमित्यादि श्रुतिसमर्थितं यत्सत्यं सा जातिः तामेव सत्यांशे=सत्य-स्वरूपेण स्पष्टयति=विष्कलितज्ञानविषयीकरोति । इत्थमिति—इत्थंनिष्कृष्य-माणं=पूवोक्तप्रकारे निष्कर्षरूपेण । निश्च्यूतरूपेन वोध्यमानं प्रकृतिप्रत्यया-दिषु=अध्यस्तं=अभेदेन प्रतीयमानं तेभ्यः पृथक्क्रियंमाणं सत्ताख्यां जाति विहायान्यजात्यादिसम्बन्ध साहित्यमखण्डम् । अत एव निरञ्जनं=अञ्ज-नात्=नानाजातिव्यक्तयुपाधेः निर्गतं=विनिर्मुक्तंमतएवाक्षरम्=अवि-नाशि अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।

यः सर्वेषु भूतेषु नश्यत्सु न विनश्यति । सोपाधिकस्य सगुणस्य ब्रह्मणो विनाशप्रतियोगित्वम् । एतादृशं यद्ब्रह्म तदेव शब्दतत्वं=शब्दस्योपादान कारणम् । इत्थ निष्कर्षभूतं जात्यात्मकं निरञ्जनमक्षरं ब्रह्मैय शब्दत्वम् । सर्वं खल्विदं ब्रह्म इत्यादिना शब्दब्रह्मएव सर्वस्य स्थावरजंगमात्मकस्य जगतोऽधिष्ठान ( आधार ) भूतम् । इति प्राहुः=प्रकर्षेण हयंदयो विद्वांस कथयन्ति । ब्रह्माभेदेन जानन्ति ।

ननु नैयायिका शब्दगुणकमाकाशं ब्रूवन्ति ते शब्दस्य गगनमुपादान कारणमस्ति न तु ब्रह्म तस्योपादानम संगतम् इत्याशङ्कां समूलमुन्मूलयितु-माह अयमर्थं इति—अनेन जीवेन आत्मानाऽनुप्रविश्य नामरूपे व्याकरवाणि इति श्रुति सिद्धाः नामात्मिका रूपात्मिका द्वयी सृष्टिद्वयवयवकसमुदाय-रूपा । तत्र सृष्टिद्वयमध्ये या रूपात्मिका आकाशाद्यात्मिका तस्याः कारणं ब्रह्म तथैव नाम्नोऽपि=शब्दस्यापि तदेव=ब्रह्मैव तत्त्वम्=उपादानम् । द्वयोः सृष्ट्योरुपादानं ब्रह्मैव । अतएव तयोः नामरूपयोः परस्परमभेदसिद्धिः सोपादानादभिन्नत्वात् ।

ननु नानात्वस्य सर्वथा मिथ्यात्वे—कथं सृष्टेः ज्ञानं तदाह—प्रक्रियांश-स्त्विति—। सर्वेषां शब्दानां प्रकृतिप्रत्ययादीनाम्, अर्थानाम्=अन्नप्राण

उक्तं च वाक्यपदीये—"शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।
समारम्भस्तु भावानामनादि ब्रह्म शाश्वतम्॥
वास्तव में अनादि ब्रह्म ही है।

मनोविज्ञानानन्दादिकोशानामाकाशादीनाञ्च सृष्टिरूपेण व्यवहारस्तु अविद्या विजृम्भणमात्रं = मलिनसत्त्व प्रधानज्ञानविलाशः रज्जूरगवत्। रज्जौ सर्प इव अविद्यायाः विलाशः = विजृम्भणमेवानुभूयते ब्रह्मणो-विवर्त्तनात्।

नन्वियं सृष्टिरविद्याविजृम्भणं विलाशमात्रं तर्हि तादृशब्रह्मज्ञाने कथं शास्त्रोपयोगो—अत आह—शास्त्रेत्विति—व्याकरणशास्त्रेषु प्रकृति प्रत्यय पदवाक्य तत्तदर्थभूतप्रक्रिया भेदैः यथा पञ्चकोशादिज्ञानंपरम्परया ब्रह्मज्ञानस्योपकारकम्। तथैवाविद्या प्रक्रिया भेदेन वर्ण्यते। तद् वर्णनं व्याकरणमेव एवं पञ्चकोशादिन्यायेन शास्त्राणामुपयोगः सिद्ध्यति। अविद्या असत्या सा ब्रह्मज्ञानसाधिका यथा—

उपायाः शिक्ष्यमाणानां वालानानुपलालना।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥

समारम्भस्तु = सभ्यगारम्भः जननं यस्मात् -भावानामाकाशादीनामनादि ब्रह्म शाश्वतम्। अनागम विकल्पात्तु स्वयं विद्या प्रकाशते। यदा विद्यया उपमर्दनं प्रक्रियाप्रपञ्चसमाप्तिस्तया विद्या ज्ञानस्वरूपं ब्रह्मैव प्रकाशते।

ननु ध्वनावपि ब्रह्म शब्दव्यवहारस्य प्रायशो दर्शनात् परमार्थानुपयोगि तद् भेद ज्ञान प्रतिपादनं व्यर्थम्। तदाह ब्रह्मैवेति—परब्रह्म स्वप्रकाशरूपः अत्र प्रमाणम् (अत्रायं पुरुषः ज्योतिः) स्वयं प्रकाश रूपः। तमेव भान्तं ब्रह्म

उन्हीं भागों में सत्य अंश को विशेष्य प्रमाण से स्पष्ट कर रहे हैं पूर्वकारिका में उक्त रीति से वाचक रूप अध्यस्त तत्व को पृथक् किया गया जाति आदि सम्बन्ध से शून्य प्रमेय रूप शब्द तत्व जो निरञ्जन उपाधि नाम प्रपञ्च से रहित है उसी अविनाशी को ब्रह्म कहा गया है। ऐसे पूर्ण ब्रह्मस्फोट को प्रणाम है। भाव यह है कि श्रुति से दो सृष्टि नाम रूप शब्दात्म अर्थात्मक सिद्ध है वहाँ रूप (अर्थात्मक) जगत की तरह नाम शब्दात्मक भी वही ब्रह्म है उसी शब्द ब्रह्म प्रतिपादन के लिये अविद्या वर्णन की तरह प्रक्रियांश का विवेचन स्फोट का प्रतिपादक है इसलिये प्रक्रियात्मक व्याकरण को स्फोट का साधन माना गया है। यहाँ प्रक्रियांश को अविद्या का जमहाई अंगड़ाई तंद्रा क्रियाशीलता मात्र की तरह माना गया है। जिस साधन का साध्य शब्द तत्व है। वाक्यपदीय से इस विषय से प्रमाणित करते हैं कि शास्त्रों में जितनी प्रक्रियायें हैं वे

ब्रह्मैवेत्यनेन "अत्रायं पुरुषः स्वयञ्ज्योतिः" "तमेव भान्तमनुभाति सर्वम्" "तस्य भाषा सर्वमिदं विभाति" इतिश्रुतिसिद्धं स्वपरप्रकाशत्वं सूचयन् स्फुटत्यर्थोऽस्मादिति स्फोट इति यौगिकं स्फोटशब्दाभिधेयत्वं सूचयति। निर्विघ्नप्रचयान्ते मङ्गलं स्तुतिनतिरूपमाह—पूर्णात्मन इत्यादिना।

अशेषफलदातारमपि सर्वेश्वरं गुरुम्।
श्रीमद्भूषणसारेण भूषये शेषभूषणम्।१४।

इतिरङ्गोजिभट्टात्मजकौण्टभट्टविरचिते वैयाकरणभूषणसारे
पदादिस्फोटनिरूपणं समाप्तम्। १३-८-२० - बृहस्पति वार

एव यदा प्रकाशते तदा सर्वं जगत् अनुभाति प्रकाशत इत्यर्थः। न तत्र सूर्यो भाति न चन्द्र तारकम्। नियमा विद्युतो भान्ति कुतोऽग्निः।

तथाच। यदादित्य गतं तेजो जगद् भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥ (गी०)

तस्य भाषा सर्वमिदं विभातीति श्रुत्या सिद्धं स्व पर प्रकाशत्वं पर प्रकाशत्वे तु प्रमाणमुक्तं—स्व प्रकाशकत्वञ्च स्व भिन्न प्रकाश्यत्वे सति स्व प्रकाश कत्वम्। नित्यं विज्ञानमानन्दं ब्रह्म इति श्रुत्या नित्य ज्ञानानंन्द स्वरूपत्वं ब्रह्मणः सिद्धम्। स्वयमेवात्मनाऽऽत्मानं वेत्सि त्वं पुरुषोत्तम्। इति स्मृतिः स्व प्रकाश्यत्वे प्रमाणम्। पराप्रकाश्यत्वे च न तद् भासयते सूर्यं इति स्मृतिः प्रमाणम्। भावानां घटादीनां समारम्भा उत्पादात् शाश्वतं —कालत्रयाबाधितमपि ब्रह्मलोके व्यवहृयते। इति सूचयन—सम्बोधयन्. स्फुटत्यर्थो यस्मादिति यौगिक स्फोट शब्दाभिध्येयत्वं सूचयति। व्युत्पत्या लभ्यो यः स्फोटः स एव ब्रह्म पदेनाभिधीयते। तत्रैव व्याकरणस्योपयोगः। प्रकृति प्रत्यय वर्णं पदादि—उपाधि निराश द्वारा पुरूषार्थोपयोगिनि ज्ञाने स्व प्रकाशश्च रूपेणोपयोगः। ग्रन्थस्य निर्विघ्न प्रचारार्थं ग्रन्थान्ते स्तुति नति रूपं मङ्गलम् आचरति यतोहि मङ्गलादिनी मंगल मध्यानि मङ्गला—

अविद्या रूप से है। मानों उन्हीं का वर्णन किया जा रहा है। पदार्थों का प्रारम्भ अनादिकालिक ब्रह्म की तरह वे शाश्वत हैं पूर्णात्मा हैं। यहाँ ब्रह्म शब्द कहने से श्रुति का समर्थन भी प्राप्त करते हैं अयं पुरुषः (स्फोटात्मा) यह स्वयं ज्योति है प्रकाश रूप है ज्ञानमय है आनन्द रूप ब्रह्म है। तमेव उसी ही ब्रह्म के प्रकाश से सारा जगत दीप्तिमान हो रहा है। परन्तु श्रुति से स्वप्रकाशत्व पर सूचित करने के लिये उस विकसित हो अर्थ। जिससे उसे स्फोट कहते हैं इस यौगिक स्फोट से शब्द को अभिधेय वाच्य यथार्थ ज्ञान का विषय सूचित होता है। ग्रन्थ के निर्विघ्न रूप से प्रचार के लिये अन्त में भी नमस्कारात्मक मंगल प्रस्तुत करते हैं कि "पूर्णात्मने नमः" इति॥७४॥

न्तानि च शास्त्रा णि प्रथन्ते। इति भाष्य कारोक्तेः। 'पूर्णात्मने नम' इति अत्र पूर्णत्वमखण्डानन्दस्वरूपं विघ्न रहितेच्छा रूपं स्व ग्रन्थ प्रचारेच्छा स्वरूपश्च वोध्यम्।

प्रभाकरीभावविकाशकर्त्री, जाड्यापहर्तृ स्फोट विकाशयित्री
मनोरमा शब्दरसज्ञ सम्विदां सारस्य व्याख्या शिवप्रतियोऽस्तु।

ग्रन्थकार इस ग्रंथ को सम्पूर्ण फलों का दाता होने पर भी सर्वेश्वर गुरु को समर्पण करते हैं। शेष भूषणादिक या विष्णु को प्रसन्न करने के लिये ॥१॥ समस्त शास्त्रों में निष्णात सर्वश्रेष्ठ भट्टोजी दीक्षित से बनाई गई ज्ञानदायिनी कारिकायें कोण्डभट्ट के द्वारा विस्तारपूर्वक व्याख्या का विषय बनी।

इति प्राभाकरी टीकायां स्फोटप्रकरणम्।



यह १० वां पाठ है पुनरावृत्ति में सुधार होगा।

भू० सा देवताप्रत्ययार्थस्य

# ॥ देवता प्रत्ययार्थ निर्णयः ॥

पूर्वं प्रकरणे भावप्रत्ययार्थकतद्धितानाम् त्वतलादीनामर्थनिर्णयो विरुद्ध मतिनिराकरणपूर्वकं कृतः। तेन स्मृतो देवतार्थकतद्धितप्रत्ययः यत्र मीमांसकादीनां वैमत्यमस्ति तन्निर्णयः स्मृतिविषयोजातः। स्मृतोविषयोयस्य स उपेक्षानर्हः। प्रसंगसंगतिमनुसन्धाय त्वतलादि तद्धित प्रत्ययार्थ निर्णयानन्तरं, देवतार्थकप्रत्ययार्थंनिर्णेतुमाह, अथेति=यद्यपि अपत्याद्यर्थबोधकाः तद्धितप्रत्ययाः, प्रथममुपस्थापयितु योग्याः,। तेषां निर्णयमकृत्वा देवत-प्रत्ययार्थनिर्णयपर्यन्तानुधावनस्य **प्रयोजनमिदम्** यदपत्याद्यर्थेषु नास्ति विप्रतिपत्तिः विरुद्धमतिः विवादो वा। अतस्ते अपत्याद्यर्था उपेक्षिता। देवतार्थक प्रत्ययेषु नाना पक्षदर्शनात् परस्पर विवादसम्भवात् तेषां निर्णय आवश्यकं समजनि,

कोलः कमलतड़ागे कर्द्रममात्रं गवेषयति।
भ्रमरः उपरिष्टात् कमलेषु परागसौरभ्यमन्वेषयति॥

अथ शब्द आनन्तर्यवाची। त्वतलोरर्थयोरनन्तरं मतभेदेन प्रस्तुतेषु देवतार्थक प्रत्ययेषु कः सिद्धान्तपक्षः तत्समर्थयितुमाह, सास्यदेवता इति।

